भैरव: सच्चिदानन्द: कृतीश: करुणाकर:। श्रीकरो वेदमूर्तिश्च सर्वेशो दुर्लभो वशी।। १५३।।
नागदेव: क्षमानाथो भावेश:[1] केशवस्तत:। नन्दीशो गणपो वीरो दुर्ज्ञेयो[2] मिहिर: प्रिय:।। १५४।।
गौडादिशङ्करान्ताश्च सप्तैते प्रागुदीरिता:। चतु:सप्ततिसंख्यास्ते गुरव: सिद्धिदायका:।। १५५।।
स्मरणात् पूजनाच्चैवोपासकानां न संशय:। अथ विविधविद्यानां मते वै कादिसंज्ञके।। १५६।।
कुलविद्यावतारार्णदीक्षाणां गुरुसन्ततौ। गुरुपङ्क्तित्रयं ज्ञात्वा विद्यासिद्ध्यै भजेत्सुधी:।। १५७।।
सर्वज्ञस्तत ईशानो भूतेशो दिव्यसंज्ञका:। दिव्य: सर्वश्च भव्यश्च सिद्धा श्रीपूर्वका इमे।। १५८।।
प्रशस्तश्च प्रकामश्च सुधामो मानवा: स्मृता:। चतुर्भुजास्त्रिनयना रक्तमाल्याम्बरावृता:।। १५९।।
अक्षस्रक्पुस्तकाभीतिवरोद्यत्करपङ्कजा:। कुलाख्या गुरवश्चैते स्मर्तव्यास्तत्र वै तथा[3]।। १६०।।
प्रकाशश्च विमर्शश्चाप्यानन्दो दिव्यरूपिण:। ज्ञान: सत्यश्च पूर्णश्च सिद्धा: श्रीपूर्वका इमे।। १६१।।
स्वभाव: प्रतिभश्चैव सुभगो मानवा मता:। विद्यावतारगुरवो ध्येया: पूज्याश्च सिद्धये।। १६२।।
उद्द्योतश्च प्रभावश्च कुलेशो दिव्यरूपिण:। भैरवो गणपश्चैव कुमार: सिद्धसंज्ञका:।। १६३।।
उद्भटो वाग्भटश्चैव कमनो मानवा: स्मृता:। सर्वे त्रित्र्यक्षरव्याप्ता[4] मायाश्रीबीजपूर्वका:।। २६४।।
आनन्दनाथशब्दान्ता: पादुकां पूजयामि च। पूजायां तर्पणे चैव पादुकां तर्पयामि च।। २६५।।
मार्जने मार्जयाम्यत्र तत्तच्छब्दं प्रयोजयेत्। पूजाङ्गहवने चैव पूजयाम्यग्निसुन्दरी।। १६६।।
तथैव तर्पणान्ते तु तर्पयाम्यग्निवल्लभा। मार्जने मार्जयाम्यग्निदयिता क्रम ईदृश:।। २६७।।
दीक्षाया गुरवश्चैते नवपङ्क्तिक्रमाद्यजेत्। कमनान्ते च कपिलाद्व्यासान्ते चैकविंशति:।। १६८।।
अव्ययश्च विशेषश्च सङ्ग्राहो[5] देवलस्तथा। प्रकाण्डो गहनश्चैव दुर्लभो दुर्जयस्तथा।। २६९।।
विश्वेश उदयश्चैव त्वरित: सुन्दरस्तत:। भरतो धिषणश्चैव श्रीकण्ठ: शङ्करस्तत:।। १७०।।
अनलो वासवश्चैव सुनेत्र: सुभगस्तत:। वीरेशो विरहश्चैव क्लिन्नेशो विजयस्तत:।। १७१।।
कर्षकश्च प्रगल्भश्च विनयो वरदस्तथा। शान्तनश्चित्रकश्चैवाद्भुतो निपुण एव च।। १७२।।
विपुलो विमलश्चैव सोमेश: कुशलस्तत:। सुमन्त्रश्च सुतन्त्रश्च विद्येशो विनतस्तथा।। १७३।।
विभवो वर्धनश्चैवानिन्द्य: सुप्रिय एव च। सारङ्गो वारुणश्चैव सत्येच्छुरिहा तथा।। १७४।।
वाग्यत: कामनश्चैव वाङ्मय: सुकृतस्तत:। विशाखो मञ्जुलश्चैव कामेशो वाग्भवस्तत:।। १७५।।
गौडादिशङ्करान्ताश्च सप्तसंख्या: समीरिता:। अशीतिसंख्यकाश्चैव गुरवचतुरुत्तरा: ।। १७६।।
एतेषां स्मरणान्मर्त्य: शिवतुल्यो भवेत् क्षणात्। कादिशक्तिमतेऽप्येते सर्वत्र गुरव: संमृता:।। १७७।।
कालीमते मन्त्रभेदाद् गुरुभेदस्त्वनेकधा । पूर्वदक्षिणपाश्चात्यमध्यसिंहासनस्थिता: ।। १७८।।
बालादिभैरवीभेदा द्वात्रिंशत्संख्यका: स्मृता:। नित्या: षोडशिका: षड् वा दर्शना: पञ्चपञ्चिका:।।१७९।।
चतु:समयविद्याश्च नवावरणशक्तय: । मन्त्रपारायणे प्रोक्ता विद्या श्रीचक्रशक्तय: ।। १८०।।

---

१. 'भाषेश: क.। २ 'दुर्लेयो' ख.। ३ 'तद्बुधैस्तथा' ख.। ४. 'राख्यास्ते' क. ख.। ५. 'संग्रहो' क. पाठ:।

भजनीयाः प्रयत्नेन प्रतिपद्य गुरुक्रमम्। प्रह्लादानन्दनाथाद्याः कुलीना गुरवो नव॥ १८१॥
समयः कक्कुटश्चैव प्रधानो दिव्यसंज्ञकाः। बुधेशः कुथर[1]श्चैव भार्गवः सिद्धरूपिणः॥ १८२॥
कन्दलस्तपनश्चैवाप्यदीनश्चैव मानवाः। एते विद्यावताराख्या गुरवो नवसंख्यकाः॥ १८३॥
परप्रकाशः परमेशानः परशिवस्ततः। कामेश्वरी च मोक्षश्च कामश्चामृतसंज्ञकः॥ १८४॥
एते दिव्यास्तु सप्तैव ईशानश्च ततः परम्। ज्ञेयस्तत्पुरुषश्चैव ह्यघोरस्तदनन्तरम्॥ १८५॥
वामदेवस्ततः सद्योजातः सिद्धाः स्मृता अमी। पञ्चोत्तरश्च परमः सर्वज्ञः सर्व एव च॥ १८६॥
सिद्धो गोविन्दनामा च शङ्करः सप्त मानवाः। दीक्षाया गुरवश्चैते पूजनीया विशेषतः॥ १८७॥
कपिलाद्व्यासपर्यन्तमेकविंशतिसंख्यकाः। गणेशश्च कुमारश्च विक्रमो विजयस्ततः॥ १८८॥
रन्तिदेवः[2] सुदेवश्च भोजो रामो गुणस्ततः। भैरवो भ्रामणश्चैव रमणो विमलस्ततः॥ १८९॥
वैनतेयो वासवश्चानलः सङ्कर्षणस्ततः। वीरभद्रो विशालश्च विद्याधरविशारदौ॥ १९०॥
वैश्वानरश्च यज्ञेशो महीधरकुलान्तकौ। अनन्तौ वरदश्चैव कामो जालन्धरस्ततः॥ १९१॥
शैवः सदाशिवो भद्रो रुद्रः कन्दर्पसुव्रतौ। सत्यव्रतः सत्यनिधिर्बोधो मौद्गल्य एव च॥ १९२॥
ईशानो गौडपादादिशङ्करान्तः सप्तसंख्यकाः। अष्टषष्टिः स्मृता एते मानवान्ते तु पूजने॥ १९३॥
ततो गुरुक्रमं ज्ञात्वा पूजयेद्भक्तिभावतः। पूर्वाम्नायादिदेवीनामयमेव गुरुक्रमः॥ १९४॥
तथैव दक्षिणाम्नायदेवता ये ह्युपासते। तत्तत्सिद्धचै च तैर्ज्ञेयस्तत्तन्मन्त्रगुरुक्रमः॥ १९५॥
तारको रुचकश्चैव भद्रको दिव्यरूपिणः। अमरः सत्यगश्चैव भास्वरः सिद्धसंज्ञकाः॥ १९६॥
अमृतो बोधपूर्णौ च मानवाः कुलरूपिणः। तत्तत्समयतत्स्थानतत्तेजसि विचिन्तयेत्॥ १९७॥
प्रदीपश्च प्रभासश्च प्रगल्भो दिव्यसंज्ञकाः। प्रभावो विनयश्चैव कुमुदः सिद्धसंज्ञकाः॥ १९८॥
चिदाभासश्च चिद्रूपः प्रकामो मानवाः स्मृताः। एते विद्यावताराख्या गुरवो भुवि दुर्लभाः॥ १९९॥
प्रभावश्चादिनाथश्च विमलः समयः शिवः। एते पञ्चैव दिव्यौघा निर्वाणो गणपो हरः॥ २००॥
परशम्भुश्चिदंशश्च[3] पञ्चैते सिद्धसंज्ञकाः। कुलनाथो विशुद्धिश्च[4] कुशलः कुन्तशेखरः॥ २०१॥
सुडिम्भः सुन्दरः केशः सप्तैते मानवाः स्मृताः। दीक्षागुरुक्रमो देव्याः पृष्ठदेशे प्रयत्नतः॥ २०२॥
पूजनीया[5] विशेषेण स्वसिद्धचै नव पङ्क्तितः। वाङ्मायाकमलासिद्धगुरुशब्दमुखास्त्विमे॥ २०३॥
कपिलाद्व्यासपर्यन्तमेकविंशतिसंख्यकाः। वीरभद्रो महासेनो गिरीशो गुणवर्धनः॥ २०४॥
वाङ्मयो वरदो वीरः सुभव्यो नन्दिनायकौ। विजयो विश्वविनतौ वीरेशो गिरिनन्दनः॥ १०५॥
प्रमदो व्यययोगौ च नित्यानन्दो गुणातिगः। गुणानन्दो गुणारामो निरीहो निर्मलो विभुः॥ २०६॥
सुभगो निर्विकल्पश्च महाकारोऽचलोऽरुणः। तूणीशस्त्वरितो धर्मो निराकारो निरिन्द्रियः॥ २०७॥
हंसेश्वरो रुचिग्रीवौ द्रोणो विश्वम्भरो बलः। सुदक्षिणो विरूपाक्षो गुरुभक्तो गुरुप्रियः॥ २०८॥

---

१. 'कुथन' क.। २. रतीदेव क.। 'रविदेवः' ख.। ३ 'चिनन्दश्च' क.। चिदानन्दः' ख.। ४. विशुद्धश्च' ग.। ५. 'यो' ग. पाठः।

गौडादिशङ्करान्ताश्च सप्तसंख्याः प्रकीर्तिताः। त्रिसप्ततिमिता एते मानवौघास्तु पूजने।। २०९।।
एतेषां पूजनाद्देव्यो दक्षिणाम्नायकीर्तिताः। प्रसन्नाः स्युरतः पूज्या विद्यासिद्ध्यै गुरूत्तमा।। २१०।।
पश्चिमाम्नायदेवीनां प्रतिपद्य गुरुक्रमम्। विदध्याद्भजनं सिद्ध्यै गुरुतः शास्त्रतोऽपि वा।। २११।।
भैरवो भैरवी चैव महादेवो गणेश्वरः। विरूपाक्षो महासेनो वीरभद्रो धनाधिपः ।। २१२।।
बोधश्चानन्दनाथान्ता गुरवः कुलसंज्ञकाः। अघोरो घोरसंज्ञश्च घोरघोरतरस्तथा ।। २१३।।
दिव्यौघास्तत्परः शर्वः सर्वो रुद्रश्च सिद्धगाः। हाङ्कारश्चैव हीङ्कारो हूङ्कारश्चैव मानवा।। २१४।।
एते विद्यावताराख्या गुरवः सिद्धिदायकाः। ईशस्तत्पुरुषाघोरवामदेवास्ततः परम् ।। १२५।।
सद्योजातश्च पञ्चैते दिव्यौघाश्च समारसः। भूतेशो ललितः स्वस्थः कौलेशः सिद्धसंज्ञकाः।। २१६।।
आलस्यश्च प्रभानन्दो रागिणी वक्त्ररागिणी। अतीतः कुब्जसंज्ञश्च कुलकौलेश्वरस्ततः।। २१७।।
मानवौघाश्च सप्तैते दीक्षाया गुरवः स्मृताः। देव्याश्च पृष्ठभागे तु नवपङ्क्तिक्रमाद्यजेत्।।२१८।।
कुलकौलेश्वरस्यान्ते प्रयजेत् स्वगुरुक्रमम्। कपिलाद्व्यासपर्यन्तमेकविंशतिसंख्यकाः।। २१९।।
अनन्तः शङ्करश्चैव पिङ्गलश्च करालकः। सिद्धो रत्नः शिवो मेही समयश्च खगेश्वरः।। २२०।।
भद्रः कूर्मश्च घोरश्च गोपो मीनश्च कौलिकः। तीव्रश्च डामरश्चैव रामः कामश्च[१] शाकिनी।।२२१।।
महामायो महानन्द आधारेशश्च चक्रकः। कुरुः समयः श्रीशः कुब्जिका कुलदीपिका।। २२२।।
शिवेशः शर्वरी धर्मी कामी[२] कामकला शिवः। गौडादिशङ्करान्ताश्च सप्तसंख्याः समीरिताः।।२२३।।
चतुःषष्टिः स्मृताश्चैव गुरवः सिद्धिदायकाः। ततः सम्पूजयेद् भक्त्या ज्ञात्वा स्वगुरुसन्ततिम्।।२२४।।
उत्तराम्नायदेवीनां कुर्याद्भजनमादरात्। विशेषेण गुरून् ज्ञात्वा विद्यासिद्ध्यै प्रयत्नतः।। २२५।।
प्रह्लादानन्दनाथाद्याः प्राक्प्रोक्ता गुरवः कुले। उड्डीशश्च कुलेशश्च पूर्णेशो दिव्यसंज्ञकाः।। २२६।।
कामेश्वरश्च श्रीकण्ठः शङ्करः सिद्धसंज्ञकाः। अनन्तः पिङ्गलो नादो मानवौघाः स्मृता अमी।।२२७।।
विद्यावतारगुरवः सिद्धिदाः पूजिता[३]श्च ते। महादेवी महादेवस्त्रिपुरश्चापि भैरवः।। २२८।।
दिव्यौघा गुरवः प्रोक्ता ब्रह्मानन्दस्ततः परम्। पूर्णदेवोऽद्वितीयश्च चलचित्तश्चलाचलः।। २२९।।
कुमारः क्रोधनश्चैव वरदः स्मरदीपनः। माया मायावती चैव सिद्धौघाः सम्प्रकीर्तिताः। २३०।।
विमलः कुशलश्चैव भीमसेनः सुधाकरः। मीनो गोरक्षकश्चैव भोजदेवः प्रजापतिः।। २३१।।
मूलदेवो रतीदेवो विघ्नेश्वरहुताशनौ। समयानन्दसन्तोषौ मानवौघाः स्मृता अमी।। २३२।।
देव्यास्तु पृष्ठभागे तु नवपङ्क्तिक्रमाद्यजेत्। सन्तोषानन्दपरतः प्रयजेद् गुरुसन्ततिम्।। २३३।।
कपिलाद् व्यासपर्यन्तमेकविंशतिसंख्यकाः। शम्बरो ह्रदयो भोगो नाभसः कौलिको धरः।। २३४।।
अभयः शम्बरो भद्रो मोहोऽघोरो मनोमयः। भैरवः शबरः कालो मतो[४] ब्रह्मा महाकुलः।। २३५।।
वाहनः[५] खेचरो व्योमः[६] श्वसनो ज्वलनो ह्यजः। ईशस्तातः[७] कुलातीतो वायुः संहारकौटिलौ।।२३६।।

१.'कालश्च' क. पाठः। २.'काम' क. पाठ। ३ 'पूरिता' क. पाठ। ४. 'मनो' ग. पाठः। ५. 'आह्नः' ग. पाठः।
६. 'म' ग. पाठ ७. 'स्नात' ग. पाठः।

विरोध: परमो गोप्ता षट्चक्र: परम: पर:। मुक्तो ज्ञान: कुल: सत्यो वर्गाजो[1] मन्त्रविग्रह:।। २३७।।
स्वच्छन्दो भैरवो भीमो वर्णाढ्य: शब्दशब्दजौ। गौडादिशङ्करान्तास्तु सप्तसंख्या: समीरिता:।। २३८।।
षट्सप्ततिमिता ह्येते गुरव: सिद्धिदायका:। एतेषां स्मरणान्मर्त्य: शिवतुल्यो न संशय:।। २३९।।
शङ्करादिगुरून् ज्ञात्वा पूजयेद्भक्तिभावत: । पञ्चायतनपूजायां पृथग्यजनकेऽपि वा ।। २४०।।
गणेशादिमनूनां च ज्ञेयस्तत्तद्गुरुक्रम: । गुरूणां कुलमज्ञात्वा नष्टमार्गो भविष्यति ।। २४१।।
नष्टमार्गान्मिन्त्रविद्ये न तादृक्फलगोचरे। गुरूणां शिष्यभूतानां नास्ति चेत् सन्ततिक्रम:।। २४२।।
तत्र मन्त्राश्च विद्याश्च निष्फला नात्र संशय:। विंशति: पुरुषा[2] वापि नव सप्त त्रयोऽपि वा।।२४३।।
न ज्ञाता[3] गुरुवंशानां शिष्यश्चेन्नष्टसन्तति:। स्ववंशादधिको ज्ञेयो गुरुवंशो महाशुभ: ।। २४४।।
जनकादधिको ज्ञेयो मन्त्रदस्तु महेश्वर:। तस्मात् सर्वत्र विज्ञेय: पूजनीयो गुरुक्रम: ।। २४५।।
आदौ सर्वत्र विज्ञेयो मन्त्रद: परमो गुरु:। परापरगुरु: शक्ति: परमेष्ठी गुरु: शिव:।। २४६।।
सर्वमन्त्रेषु[4] विद्यासु स्वयं प्रकृतिरूपिणी। तत: पुरुषरूपश्च ततश्च गुरुसन्तति:।। २४७।।
तेनैव हि शिवांशाश्च शिवभक्ता विशेषत:। सर्वमन्त्रेषु गुरव: सर्वज्ञा: सिद्धिदायका:[5] ।।२४८।।
शिवा: शैव्यश्च[6] या विद्यास्तासां सर्वत्र देशिका:। गणेशो गाणपत्यानां गणदीक्षाप्रभुर्मत:।।२४९।।
वैष्णवानां स्वयं विष्णु: सौराणां सूर्य एव च। दिव्यौघा गुरवश्चैव सिद्धौघा गुरवस्तथा।। २५०।।
मानवौघाश्च गुरवो ज्ञेया: सर्वत्र देशिकै:। गणेश्वरो गणक्रीडो विकटो विघ्ननायक:।। २५१ ।।
दुर्मुख: सुमुखो बुद्धो विघ्नराजो गणाधिप:। ऐते कुलाख्या गुरवस्तत्तेजसि विभावयेत्।। २५२।।
सुरानन्द: प्रमोदश्च हेरम्बश्च महोत्कट:। शङ्करो लम्बकर्णश्च मेघनादो महाबल:।। २५३।।
गणञ्जयो नवैते तद्विद्यानामवतारका:। विनायको विरूपाक्षो बुद्ध: शूरो वरप्रद:।। २५४।।
एते पञ्चैव दिव्यौघा विजयो दुर्जयो जय:। कवीश्वरश्च ब्रह्मण्यो निधीश: सिद्धसंज्ञका:।।२५५।।
गजाधिराजो दु:खारि: सद्योजात: सुखावह:। परात्मा सर्वभूतात्मा महानाद: शुभानन:।। २५६।।
बालचन्द्रो नवैते च मानवौघा: प्रकीर्तिता:। दीक्षाया गुरव: प्रोक्ता पूजिता: सिद्धिदायका:।। २५७।।
ततश्च बालचन्द्रान्ते पूजयेत् गुरुसन्ततिम्। कपिलाद्व्यासपर्यन्तमेकविंशतिसंख्यका:।। २५८।।
गणक:[7] सुभगो नित्यो नित्यालम्बश्च शाश्वत:। पूर्णानन्द: परानन्द: सुभक्त: पद्मलोचन:।।२५९।।
कामपालो बुध: श्रेष्ठो गजवक्त्रो गणप्रिय:। भूतेशो बाललीलश्च कुमारो बोधनो हर:।। २६०।।
सत्यलील: सुलीलश्च विकटो धूम्रवर्णक:। नन्दिप्रियो नन्दिहासो देवीपुत्रो धनेश्वर:।। २६१।
विश्वम्भरो विशालाक्षो विघ्नहर्ता विनायक:। कूष्माण्डेश: कपर्दी च शिव: कालो महीधर:।।२६२।।
गौडादिशङ्करान्ताश्च सप्त प्रागीरिताश्च ते। त्रिषष्टिसम्मिता ह्येते गुरव: सिद्धिदायका:।। २६३।।
पूजिता: संस्मृता नित्यं सर्वेप्सितफलप्रदा:। श्रीमायास्मरबीजाद्या: सिद्धाचार्यनमोन्तका:।। २६४।।
वैष्णवेषु तथा ज्ञेया गुरवो मन्त्रसिद्धये। प्रह्लादश्च वसिष्ठश्च पुण्डरीक: पराशर:।। २६५।।

१ 'वर्णभ:' ख. पाठ:। २ 'षान्' ग. पाठ:। ३ 'त्वा' ग. पाठ:। ४ 'तन्त्रेषु' क. पाठ:। ५ 'सर्वज्ञसिद्धि' ख. पाठ:।
६.'शैवाश्च' ग.पाठ। ७. 'गणप:' ग. पाठ:।

शुकश्च शौनकश्चैव नारदो दाल्भ्य एव च। व्यासश्चैव नव प्रोक्ता गुरवः कुलरूपिणः॥ २६६॥
सरस्वती ततो ज्ञेयौ विनायकशुकौ ततः। सुमन्तुर्जैमनिश्चैव वैशम्पायन एव च ॥ २६७॥
नारदः पुण्डरीकश्च सुचेलो नवसंख्यकाः। विद्यावतारगुरवो ध्येयाः पूज्याश्च सिद्धये ॥ २६८॥
महादेवो महादेवी परमेष्ठी समीरणः। वरुणो वामदेवश्च कश्यपश्चाङ्गिराः क्रतुः ॥ २६९॥
दीक्षाया गुरवश्चैते नव पङ्क्तिक्रमाद्यजेत्। कपिलाद्व्यासपर्यन्तमेकविंशतिसंख्यकाः ॥ २७०॥
नृसिंहो वामनः सत्यो बलो बालो धनुर्धरः। शङ्खी चक्री हली खड्गी मुसली रमणोऽजितः॥ २७१॥
पुरुषो भूधरो विश्वो गोविन्दो गोविवर्धनः। गोपीश्वरो जितक्रोधो मीनाख्यो मीनकेतनः॥ २७२॥
मनोहरः सात्वतश्च केशवोऽच्युतवामनौ। नारसिंहोऽव्ययो विष्णुर्नारायणमहीधरौ ॥ २७३॥
चिदंशश्चित्प्रकाशश्च माधवो मधुसूदनः। पुरुषोत्तमपद्माक्षौ[१] घनश्यामो धराधवः ॥ २७४॥
गौडादिशङ्करान्ताश्च सप्त प्रागुदिताश्च ते। अष्टषष्टिमिता ह्येते गुरवः सिद्धिदायकाः ॥ २७५॥
एतेषां स्मरणान्मन्त्राः सिध्यन्त्येव हि तत्क्षणात्। एते मन्मथबीजाद्याः श्रीपादेभ्यो नमोन्तकाः[२] ॥२७६॥
अथवाचार्यपादेभ्यो नमोन्ताः सम्प्रकीर्तिताः। शैवानां मन्त्रविद्यानां सिद्ध्यै तत्तद्गुरुक्रमम्॥ २७७॥
ज्ञात्वा तद्भजनं कुर्यादन्यथा[३] फलदा नहि। विश्वेश्वरश्च भगवान्महादेवस्त्रियम्बकः ॥ २७८॥
त्रिपुरान्तश्च कालाग्निरुद्रः कालस्ततः परम्। सर्वेश्वरो नीलकण्ठो दिक्पतिश्च सदाशिवः ॥ २७९॥
एकादश स्मृता ह्येते गुरवः कुलरूपिणः। वीरभद्रो गणाध्यक्षस्ततः शूलायुधः शिवः॥ २८०॥
ईशानः प्रमथाधीशो नन्दी भृङ्गिः प्रचण्डकः। महिषो मदनारातिर्विद्यानामवतारके॥ २८१॥
गुरवो रुद्रसंख्याश्च स्मृताः सिद्धिप्रदायकाः। अघोरोऽप्यथ घोरश्च घोरघोरतरस्ततः॥ २८२॥
सर्वः शर्वश्च रुद्रश्च ततस्तत्पुरुषस्ततः। महादेवो विरूपाक्षः सद्योजातो भवस्तथा॥ २८३॥
एकादशैते दिव्यौघा भवोद्भवविनायकौ। चण्डीशो वामदेवश्च शङ्करो विश्वनायकः॥ २८४॥
ज्येष्ठः श्रेष्ठश्च कालश्च भूतेशः प्रमथेश्वरः। एकादशैते सिद्धौघाः कलविकरणस्ततः॥ २८५॥
बलविकरणश्चैव बलप्रथमनस्तथा। ततश्च सर्वभूतान्ते दमनश्च मनोन्मनः ॥ २८६॥
उग्रो भीमः पशुपतिर्नीलग्रीवस्त्रिलोचनः। वीरेश्वरश्च सम्प्रोक्ता मानवा रुद्रसम्मिताः॥ २८७॥
पूजनीयाः प्रयत्नेन विद्यासिद्ध्यै च देशिकैः। दीक्षाया गुरवश्चैते वीरेशान्ते गुरुक्रमः॥ २८८॥
ज्ञातव्यः कपिलाद्व्यासपर्यन्तेऽप्येकविंशतिः। कामेशः कालकण्ठश्च कालघ्नः कालरूपधृक्॥२८९॥
कामान्तको विशालाक्षो वीरभद्रो विनायकः। शूलायुधो गिरीशश्च कैलासो वाङ्मयो हरः॥२९०॥
बुधेशश्चामरेशश्च चण्डीश्वरकुमारकौ। महेश्वरो महादेवो विश्वनाथः प्रजापतिः॥ २९१॥
आत्मेश्वरश्च संवर्तः क्रमेशश्च प्रकाशनः। ललितः स्पर्शभूतेशौ चानन्दश्च प्रमेश्वरः॥२९२॥
रागेशश्च करालेशः सिद्धेशसमयेश्वरौ। ज्ञानानन्दः प्रियानन्दः कलानन्दोऽमृतेश्वरः ॥२९३॥

---

१ 'पुष्करोत्तम' ग. पाठः। २ 'न्तिकाः' क. पाठःफ। ३ 'न्यदा' क. पाठः।

गुह्येश्वरश्चिदानन्दः कुलेशश्चण्डकौलिकौ। गौडादिशङ्करान्ताश्च सप्त प्रागीरिताश्च ते॥ २९४॥
एकसप्ततिसंख्याश्च गुरवः सिद्धिदायकाः। प्रासादाद्याश्च आराध्यचरणेभ्यो नमोन्तकाः॥ २९५॥
पूजिताः संस्मृता नित्यं मन्त्रसिद्धिप्रदाश्च ते। सौरास्तथैव यष्टव्याः प्रतिपद्य गुरुक्रमम्॥ २९६॥
मिहिरश्च सुगुप्तश्च प्रभेशो दिव्यसंज्ञकाः। अरुणश्च मरीचिश्च मयूखः सिद्धसंज्ञकाः॥ २९७॥
कात्यायनो घृणीशश्च मार्तण्डो मानवाः स्मृताः। एते कुलाख्याः गुरवश्चिन्तनीया महौजसि॥२९८॥
वेदात्मा भास्करो ब्रघ्नो दिव्यो भास्वाप् प्रभाकरः। नारायणः कपर्दी च सिद्धाश्चार्कस्त्रयीमयः॥२९९॥
ईशानो मानवाः प्रोक्ता विद्यानामवतारके। आनन्दः समयश्चैव विमलो ज्ञानदीपनः॥ ३००॥
चिद्घनः सोमनाथश्च सविता पोषणोऽरुणः। महेशो विजयश्चैव भूतेशो देवभागकः॥ ३०१॥
दीक्षाया गुरवश्चैते त्रयोदश समीरिताः। पूजनीयाः प्रयत्नेन नव पङ्क्तिक्रमाद् बुधैः॥ ३०२॥
ततश्च देवभागान्ते कपिलादेकविंशतिः। व्यासान्ते जैमिनिश्चैव सुमन्तुर्ज्ञानवर्धनः॥ ३०३॥
चिदानन्दश्चिदाभासश्चिन्मयो योगविद्गुरुः। सत्यव्रतश्च चिद्रूपो भैरवोऽम्बरनायकः॥ ३०४॥
विश्वेश्वरो मित्रकरः शुभङ्करदिवाकरौ। गणेश्वरश्च मार्तण्डभैरवो द्युमणी रविः॥ ३०५॥
त्रिविक्रमो वासुदेवः शङ्करो रविलोचनः। पुण्डरीको रमेशश्च गुणारामो धनेश्वरः॥ ३०६॥
देवेन्द्रो गोपनाथश्च पुरुषश्च महाशयः। आचार्यसिंहो गोविन्दो वेदज्ञो मित्रविन्दकः॥३०७॥
गौडादिशङ्करान्ताश्च चतुष्षष्टिमिताः स्मृताः। एतेषां स्मरणात्सौरा मन्त्राः सिध्यन्ति तत्क्षणात्॥२०८॥
शङ्करात् स्वगुरूव् ज्ञात्वा पूजयेद्भक्तिभावतः। एते मायादिकाः सर्वे पादुकाभ्यो नमोन्तकाः[१]॥२०९॥
ये प्रोक्ता उत्तराम्नाये गुरवः सिद्धिदायकाः। ते ज्ञातव्या अधः[२]संज्ञकाम्नाये भैरवान्तकाः॥ ३१०॥
श्रीविद्या भेदसहिता बाला च त्रिपुरा च या। भगमाला तथा नित्यक्लिन्ना चैव स्वयंवरा॥ ३११॥
मधुमत्युन्मनी भेडा शारिका सुरसुन्दरी। अश्वारूढा महामाया कुरुकुल्ला सुरेश्वरी॥ ३१२॥
भुवनेश्यन्नपूर्णा च पूर्वाम्नायाधिदेवताः। बगला वशिनीभेदास्त्वरिता फलदा तथा॥ ३१३॥
वाराही भेदसहिता भोगिनी भेदसंयुता। कामेश्वरी च भेरुण्डा वज्रेशी वह्निवासिनी॥ ३१४॥
शिवदूती विचित्रा च विजया सर्वमङ्गला। महिषार्दी महालक्ष्मीर्दक्षिणाम्नायदेवताः॥ ३१५॥
महासरस्वती देवी तथा वाग्वादिनी मता। तथा नीलपताका च भैरवी भेदसंयुता॥ ३१६॥
चामुण्डा रक्तचामुण्डा ब्राह्म्यादिदशदेवताः। प्रत्यङ्गिरा भवानी च पश्चिमाम्नायदेवताः॥ ३१७॥
कालिका भेदसहिता तारा भेदैश्च संयुता। मातङ्गी भैरवी छिन्ना तथा धूमावती मता॥ ३१८॥
उत्तराम्नायकथिताः शीघ्रकाल[३]फलप्रदाः। नागशक्त्यादयो विद्या अध[४]आम्नायदेवताः॥ ३१९॥
तत्तद्भेदांस्तथा ज्ञात्वा भजेत्तत्तद्गुरुक्रमम्। कालीशक्तिमते सम्यक् प्रोक्तपर्वसु चादरात्॥ ३२०॥
गुरूणां मण्डलं भूमौ विधाय गुरुसन्ततिम्। पूजयेत् परया भक्त्या सम्प्रदायप्रसिद्धये॥ ३२१॥

---

१. न्तिकाः' क. पाठः। २. 'घोरं' क. पाठ। ३. 'काम' ग. पाठः। ४. 'घोआ' क. पाठः।

असम्प्रदायात् फलदा न भवन्ति हि देवताः। सम्प्रदायमविज्ञाय मोहादज्ञानतोऽपि वा।। ३२२।।
मन्त्रं दद्यात् प्रयत्नाद्यो देवतां वा समर्चयेत्। आचरेत् तर्पणं होमं पौरश्चरणकं विधिम्।। ३२३।।
यद्यत्तत्तद् भवेन्नित्यमभिचाराय निश्चयात्। आद्यं गणपतेश्चक्रं तद्बहिर्भैरवं ततः ।। ३२४।।
तद्बहिर्वटुकं चक्रं सिद्धचक्रं च तद्बहिः। चरणाख्यं तदुपरि शाम्भवं तदनन्तरम् ।। ३२५।।
तदूर्ध्वं मालिनीचक्रं सप्तचक्रात्मकं भवेत्। आदौ त्रिकोणं विन्यस्य तद्बहिस्त्र्यस्र[१]मुद्धरेत्।। ३२६।।
त्रिकोणं तद्बहिर्न्यस्येन्नवकोणं च तद्बहिः। तद्बहिर्वसुपत्राब्जं तद्बहिर्वलयत्रयम् ।। ३२७।।
चतुरस्रत्रयं न्यस्य तद्बहिः पूजयेद् बुधः। प्रणवं वाग्भवं मायां कमलां खेचरीं ततः।। ३२८।।
तत्प्रासादपराबीजमुद्धृत्य शिवशक्तिके। संवर्तश्च महाकालशक्राम्ब्वग्निसमीरणान् ।। ३२९।।
उद्धरेदन्त्यवर्णस्तु अर्घीशार्धेन्दुसंयुतः । ततश्च श्रीगुरोर्नामानन्दनाथान्तमुद्धरेत् ।। ३३०।।
श्रीपादुकापदं चोक्त्वा पूजयामि नमो वदेत्। अनेन मन्त्रराजेन मध्ये श्रीगुरुमर्चयेत्।। ३३१।।
अस्मिन्मन्त्रे पराद्यं तु कृत्वा सर्वत्र देशिकः। देशिकाख्यस्थले तस्य पत्न्या नाम नियोज्य च।।३३२।।
देव्यम्बाश्रीपदं चोक्त्वा पादुकां पूजयामि च। नमोन्तविद्यया नाथवामे तत्सुन्दरीं यजेत्।। ३३३।।
स्वाग्राद्यस्रत्रये पूज्यं श्रीनाथादिगुरुत्रयम् ।श्रीचक्रनाथ[२]पार्श्वे तु चक्राधिष्ठानदैवतम्।। ३३४।।
गणनाथं सुसम्पूज्य द्वितीयावरणं यजेत्। प्रथमं कामरूपाख्यं जालन्धरमतः परम्।। ३३५।।
तृतीयं पूर्णगिर्याख्यं स्वाग्राद्यस्रत्रये यजेत्। वक्ष्यमाणविशिष्टं तु चोड्याणं[३] मध्यदेशतः।। ३३६।।
भैरवं पूजयेत् तस्य मनुना साधकोत्तमः। द्वितीयचक्राधिष्ठाता यतः कामाख्यदक्षिणे।। ३३७।।
वटुकं योगिनीं चैव क्षेत्रपालं तु साधकः। तत्तन्मन्त्रेण सम्पूज्य स्वाग्रादित्र्यस्रके बुधः।। ३३८।।
आद्यस्य दक्षिणे भागे बटुकं चक्रनायकम्। ततश्च नवकोणे तु स्वाग्रादेश्च प्रदक्षिणम्।। ३३९।।
विद्यावतारगुरवो यष्टव्या निजसिद्धये। तत आद्यस्य दक्षे तु सिद्धेभ्यो नम उच्चरन्।। ३४०।।
सिद्धं सम्पूजयेद् भक्त्या चक्राधिष्ठानदैवतम्। ततश्चाष्टदले स्वाग्राद् यजेद् दूत्यष्टकं बुधः।।३४१।।
आद्याया दक्षवामे तु रक्तशुक्लपदद्वयम्। तत्तन्मन्त्रेण सम्पूज्य पूजयेद् वलयत्रये।। ३४२।।
वामावर्तक्रमात् पङ्क्त्याकारेण निजसिद्धये। षट्सप्तत्युत्तरशतपञ्चवीरेशमण्डलम् ।। ३४३।।
प्रागुक्तबीजषट्कं च आदिवर्णं द्विरुच्चरेत्। रूपवीरेश चोच्चार्य पादुकां पूजयामि च।। ३४४।।
एवं मन्त्रास्तु कथितास्तावत्संख्यास्तु पूजने। स्वराश्च प्रथमे वृत्ते स्पर्शवर्णा द्वितीयके।। ३४५।।
तृतीये व्यापका वर्णा मध्यवृत्ते निजाग्रके। शाम्भवं पूजयेद् भक्त्या तन्मन्त्रेण प्रयत्नतः।।३४६।।
सप्तमे मालिनीचक्रे चतुरस्रत्रयात्मके। पूजयेदाद्यरेखायां ब्रह्माण्याद्यष्टमातृकाः।। ३४७।।
ततो द्वितीयरेखायां कृतायां पञ्चभागशः। पूजयेत् पञ्च भूतानि तत्तन्मन्त्रेण साधकः।। ३४८।।
तत्तच्चतुर्विंशतिभिर्वर्णदिवैः कृतावृतिः । ततस्तृतीयरेखायामिन्द्राद्यस्त्राणि तद्बहिः ।। ३४९।।

---

१. 'स्र' क. पाठः। २. 'श्रीनाथदत्तपार्श्वे' ग. पाठः। 'श्रीचक्रराजपार्श्वे' ख. पाठः। ३. 'नं' ग. पाठः।

स्वाग्रे सम्पूजयेत् भक्त्या मालिनीं विश्वविग्रहाम्। तद्विद्यया साधकेन्द्रः पीठिकां च ततो बहिः॥३५०॥
एवं पूजयितुर्वेदी प्रसन्ना भवति ध्रुवम्। समे तिथौ समर्क्षाणां भृगौ भौमस्य वा पुनः॥ ३५१॥
योगे रात्रौ यजेद् भक्त्या स्वसिद्ध्यै गुरुमण्डलम्। यस्तु सम्पूजयेद्भक्त्या कुलेषु गुरुमण्डलम्॥३५२॥
स देशिकवरः प्रोक्तस्तस्माद् दीक्षा ह्यनुत्तमा। स सम्प्रदायी स गुरुः स तु देवीस्वरूपधृत्[१]॥ ३५३॥
तस्माद् दीक्षा शुभा प्रोक्ता चान्यथा निष्फला भवेत्। प्रत्युतैव गुरुः शिष्यं निहन्त्येव न चान्यथा॥३५४॥
तस्माद् कुलेषु तिथिषु पूजनीयं[२] सुसाधकैः। सुन्दरी सुमुखी चैव विरूपा विमला तथा॥ ३५५॥
अन्तरी बदरी चैव दूतरी पुष्पभद्रिका[३]। दूतीनामष्टकं प्रोक्तं गुरुमडलपूजने ॥ ३५६॥
उपास्या या महाविद्या तन्त्रोक्ताः पीठशक्तयः। गुरुमण्डलपूजायां ज्ञेयाः पीठस्य शक्तयः॥ ३५७॥
वाङ्माया कमला चैव खेचरी ऋद्धिवर्जिता। ततः प्रेतं समालिख्य बीजं वै नादिनेन्दुयुक्॥ ३५८॥
रौद्रवनन्तयुता सेन्दुरनन्तानलचन्द्रयुक्। नकुलीशोऽथ माया च विद्योक्ता मालिनी परा॥ ३५९॥
पूर्वोक्तगुरुविद्यायामाद्यं यद् बीजषट्ककम्। अन्ते दद्याद् विलोमेन प्रोक्तं शाम्भवमुत्तमम्॥ ३६०॥
ज्ञातव्यं मन्त्रजालं तु वक्ष्यमाणेन वर्त्मना। अथ कादिमते ज्ञेयं गुरुमण्डलपूजनम्॥ ३६१॥
श्रीपर्णीसम्भवे पीठे फलकायां स्थलेऽपि वा। स्थले तु सुसमे शुद्धे दृढे तु सुमनोहरे॥ ३६२॥
प्राक्प्रत्यग्दक्षिणोदक् च दश सूत्राणि विन्यसेत्। एकाशीतिपदोपेतं मण्डलं तत्र जायते॥ ३६३॥
समसूत्रे[४] मनोरम्ये पदे पञ्चाङ्गुलान्तरे। प्राक्प्रत्यग्दक्षिणोदक् च सूत्रद्वयनिपातनात्॥ ३६४॥
नव कोष्ठानि जायन्ते सम्भूय च पदे पदे। मध्यस्थपदमध्यस्थनवकोष्ठेषु मध्यतः ॥ ३६५॥
प्रागादि विलिखेद् वर्णान् प्रतिकोष्ठं नवैकशः। मायाश्रीबीजपूर्वं च प्रकाशानन्दसंज्ञकम्॥ ३६६॥
नाथं तत्र सुसम्बोध्य नवार्णान् नवकोष्ठके। एवं तत्पूर्वनवके द्वितीयं नाथनाम च॥ ३६७॥
प्रादक्षिण्यक्रमेणैव नवके नवके लिखेत्। एवं तु नवनाथानां मण्डलानि नवैव हि॥ ३६८॥
जायन्ते वर्णविन्यासात् तत्र पूजां तु कारयेत्। नाथावृत्तिक्रमेणैव नाथनाम तु यद् दिने॥ ३६९॥
तदारभ्य यजेद् धीमांस्तद्दिने तत्र तत्र च। गन्धैः पुष्पैश्च धूपैश्च दीपैर्नैवेद्यकैस्तथा॥ ३७०॥
ताम्बूलैश्च नमस्कारैः स्तोत्रैश्चापि समाहितः। ऐक्यभावनया नाथान् सन्तोष्य च पुनः पुनः॥३७१॥
मध्यनाथस्य पुरतः श्रीगुरुं पूजयेद् बुधः। नामादिक्रमतो विद्वान् नवाग्रेषु यजेन्नव ॥ ७२॥
तद्बहिः पङ्क्तितो विद्वान् शिवादिगुरुमण्डलम्। प्रादक्षिण्यक्रमेणैव पूजयेद् भक्तिभावतः॥ ३७३॥
एवं पर्वस्ववहितः पूजां रात्रौ च कारयेत्। पादुकां पूजयामीति प्रोच्चार्य सुसमाहितः॥ ३७४॥
पूर्णापर्वसु तेष्वेव पदेषु षोडशैव हि। कोष्ठानि गुणसूत्राणां पातनाद् विदधीत वै॥ ३७५॥
षोडशार्णाल्लिखेत्[५] प्राग्वत् पूजां प्राग्वत् समाचरेत्। एवं पूजा प्रकर्तव्या गुरौ जीवति साधकैः॥३७६॥
मृते नाथपदं हित्वा शिवेति पदमुन्नयेत्। एवं यः पूजयेन्नित्यं विशेषदिवसेषु तु ॥ ३७७॥

---

१. 'धृक्' क. पाठः। २. 'यः' क. पाठः। ३. 'मर्दिना' ग. पाठः। ४. 'सूत्रं मनोरम्ये पदप' ख. पाठः। ५. 'र्णं' ग. पाठः।

तस्माद् दीक्षा शुभा प्रोक्ता चान्यथाप्यशुभा भवेत्। पूर्णाभिषेकयुक्तैस्तु पदेषु कमलानि वै॥ ३७८॥
कृत्वा पूजा विधातव्या पूर्णापर्वातिरिक्तके। पूर्णापर्वसु तेष्वेव षोडशीकृत्य पूर्ववत्॥ ३७९॥
चन्द्रचन्दनकाश्मीरैरुशीरैर्मृगनाभिकैः। सुगन्धपञ्चकेनैव विदध्याद् गुरुमण्डलम् ॥ ३८०॥
पूजान्ते लेपयेद् भाले तत्पङ्कं भक्तिभावतः। सम्पद्विजयसिध्यर्थमायुरारोग्यसिद्धये ॥ ३८१॥
पूजादौ च तदन्ते च गुरुस्तोत्रं पठेद् बुधः। सन्ध्यात्रये सुसिद्ध्यर्थं रात्रौ चैव समाहितः ॥ ३८२॥
नमस्ते नाथ भगवन शिवाय गुरुरूपिणे। विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह ॥ ३८३॥
नवाय नवरूपाय परमार्थैकरूपिणे। सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥ ३८४॥
स्वतन्त्राय दयाक्लृप्तविग्रहाय परात्मने[1]। परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे॥ ३८५॥
विवेकिनां विवेकाय विमर्शाय विमर्शिनाम्। प्रकाशिनां[2] प्रकाशाय ज्ञानिनां ज्ञानरूपिणे॥ ३८६॥
पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः। सदा मच्चित्त[3]रूपेण विधेहि भवदासनम् ॥ ३८७॥
इदं स्तोत्रं पठेन्नित्यं विद्यासिद्ध्यै प्रयत्नतः। चक्रे देव्यास्तु शक्त्यन्ता नाथान्ता गुरुमण्डले।।३८८॥
गुरौ मृते शिवान्ताश्च गुरूणां त्रिविधा स्थितिः। गुरुमण्डलमेतद्धि पारम्पर्य्यमिति स्मृतम्॥ ३८९॥
पारम्पर्य्यपरिज्ञानात्[4] सम्प्रदायः स्थिरो भवेत्। सम्प्रदाये स्थिरे जाते सम्प्रदायव्रती भेवत्॥ ३९०॥
देवता तेन विद्याश्च मन्त्राः सिद्ध्यन्ति तत्क्षणात्। पुरश्चर्यासु नित्यं हि पूजयेद् गुरुमण्डलम्।।३९१॥
सम्प्रदायपरिज्ञानं मन्त्रवीर्यस्य संस्मृतिः। एतद्द्वयं न जानाति साधकस्तु कथं भवेत्॥ ३९२॥
नित्यं नैमित्तिकञ्चैव चाद्यं काम्यं च तद्द्वयम्। प्राप्तं कालाच्च पर्यायात् प्रसिद्धं त्रीण्यनुक्रमात्।।३९३॥
नामानि साधकेन्द्रस्य सम्प्रदायप्रसिद्धये। भवेयुस्तानि यत्नेन ज्ञेयानि श्रीगुरोरपि ॥ ३९४॥
पारम्पर्य्यं तथा ज्ञात्वा स्वशिष्येभ्यो निवेदयेत्। गुर्वात्मदेवताणूनामैक्यं सम्भावयन् सदा ॥ ३९५॥
तदाज्ञापालनोद्युक्तश्चोत्तमः शिष्य उच्यते॥

गुरुमण्डलपूजायां विशेषदिनानि तन्त्रराजे —

गुरोस्तु जन्मदिवसं विद्याप्राप्तिदिनं तथा। स्वजन्मदिवसं नाथव्याप्तिवासरमेव च॥ १॥
अक्षरत्रयसम्पातदिनं पूर्णादिनं तथा। षट् पर्वाणि विशिष्यानि सदर्शं सप्तपर्वकम्॥ २॥
मासतो वर्षतो वापि कुर्यादितेषु पूजनम्॥ इति॥
अथ कादिमते प्रोक्तं लक्षणं गुरुशिष्ययोः। तत्तन्त्रस्थं वदिष्यामि साधकानां हिताय च॥ ३॥
सुन्दरः सुमुखः स्वच्छः सुलभो बहुमन्त्रवित्। असंशयः संशयच्छिन्निरपेक्षो गुरुर्मतः॥ ४॥
सौन्दर्य्यमनवद्यत्वं रूपे सौमुख्यता पुनः। स्मेरपूर्वाभिभाषित्वं स्वच्छताऽजिह्मचित्तता॥ ५॥
सौलभ्यमप्यगर्वित्वं सन्तोषी बहुतन्त्रता। असंशयस्तत्त्वबोधे तच्छिष्ये प्रतिपादनात्॥ ६॥
नैरपेक्ष्यमवित्तेच्छा गुरुत्वं हितवादिता। एवंविधो गुरुर्ज्ञेयस्त्वितरः शिष्यदुःखदः ॥ ७॥

---

१. 'शिवात्मने' क. पाठः। २. 'प्रकाशानां' क. पाठः। ३. 'सच्चित्त' ग. पाठः। ४. 'यमिति ज्ञानात्' क. पाठः।

चतुर्भिराद्यैः संयुक्तः श्रद्धावान् सुस्थिराशयः। अलुब्धः स्थिरगात्रश्च प्रेक्षाकारी जितेन्द्रियः॥ ८॥
आस्तिको दृढबुद्धिश्च गुरौ मन्त्रे सदैवते। एवंविधो भवेच्छिष्यस्त्वितरो दुःखकृद् गुरोः॥ ९॥
गुरूच्यमाने वचने दद्यादित्थं वचस्तदा। प्रसीद नाथ देवेति तथेति च कृतादरम्॥ १०॥
प्रणम्योपविशेत् पार्श्वे तथा गच्छेदनुज्ञया । मुखावलोकी सेवेत कुर्यादादिष्टमादरात्॥ ११॥
असत्यं न वदेदग्रे न बहु प्रलपेदपि। कामं क्रोधं तथा लोभं मानं प्रहसनं स्तुतिम्॥ १२॥
चापलानि च जिह्मानि कार्याणि परिदेवनम्। ऋणादानं तथा दानं वस्तूनां क्रयविक्रयम्॥ १३॥
न कुर्याद् गुरुणा सार्धं शिष्यो भूष्णुः कदाचन। यतो गुरुः शिवः साक्षात् तं स्तुवन् प्रणमन् भजेत्॥१४॥
यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ। यथा गुरौ तथा स्वात्मन्येवं भक्तिक्रमः[१] प्रिये॥ १७॥
गुरोस्तु जन्मदिवसे कुर्यादुत्सवमादरात्[२]। विशेषपूजां योगिभ्यो भोजनं तत्पदार्चनम्॥ १६॥
व्याप्ते प्रेते दूरगते पूजयेदग्रजादिषु। एकदेशे नित्यपूजा दूरस्थे योजनक्रमात् ॥ १७॥
एकादिऋतुसंवृद्ध्या वर्षे षट्योजनान्तरे । ततो दूरगते सेवा तदाज्ञापरिपालनम् ॥ १८॥
आसनं शयनं वस्त्रं भूषणं पादुकां तथा। छायां कलत्रमन्यच्च यत् स्पृष्टं तत्तु पूजयेत्॥ १९॥
एकग्रामे पृथक्पूजां न कुर्यादननुज्ञया। पूजामध्ये समायाते पूज्ये नत्वा स्थितिं वदेत्॥ २०॥
विधेहि शेषमित्यु (क्त्वा?क्तः) कुर्यान्नो चेत्तदाज्ञया। वर्तेत सोऽपि तच्छेषं कुर्यान्निश्चलमानसः॥२१॥
पूजामध्ये गुरौ पूज्ये त्वन्ते[३] वापि समागते। कृतमेवेति संभाषेद्मौनं तैर्न समाचरेत् ॥ २२॥
गुरुं न मर्त्यं बुध्येत यदि बुध्येत तस्य तु। न कदाचिद् भवेत् सिद्धिर्मन्त्रैर्वा देवतार्चनैः॥ २३॥
मन्त्रेण तस्य नियतं पूजां कुर्याद्यथोदिताम्। तां तत्पटले सम्यग् ज्ञात्वा भक्तिपरायणः॥ २४॥
इति कालीमते प्रोक्तं लक्षणं गुरुशिष्ययोः। तत्तन्त्रोक्तविधानेन साधकानां हिताय च॥ २५॥
तत्तन्त्रे कुलार्णवे।
श्रीगुरुः परमेशानि शुद्धवेशो मनोहरः। सर्वलक्षणसंयुक्तः सर्वावयवशोभितः ॥ १॥
सर्वागमार्थतत्त्वज्ञः सर्वमन्त्रविधानवित्। लोकसम्मोहनाकारो देववत् प्रियदर्शनः ॥ २॥
सुमुखः सुलभः स्वच्छःशुद्धान्तश्छिन्नसंशयः। इङ्गिताकारचेष्टाविद् दूरतः कृतदुर्जनः॥३॥
अन्तर्मुखो बहिर्दृष्टिः सर्वज्ञो देशकालवित्। आज्ञासिद्धः[४]स्त्रिकालज्ञो निग्रहानुग्रहक्षमः॥ ४॥
वेदवेदाङ्गविच्छान्तः सर्वजीवदयापर :। स्वाधीनेन्द्रियसंचारः षड्वर्गविजयक्षमः॥ ५॥
अग्रगण्योऽतिगम्भीरः पात्रापात्रविशेषवित्। निर्ममो नित्यसन्तुष्टो निर्द्वन्द्वोऽनन्तशक्तिमान्॥ ६॥
सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्ववाक्। भक्तप्रियः सर्वसमो दयालुः शिष्यशासिता॥७॥
श्रेष्ठनिष्ठो गुरुः प्राज्ञो वनितापूजनोत्सुकः। नित्ये नैमित्तिके काम्ये रतः कर्मण्यनिन्दिते॥८॥
अलोलुपोऽहिंसकश्च पक्षपाती विचक्षणः। वित्तविद्यादिभिः पूर्णो मन्त्रयन्त्रादिपारगः॥ ९॥

१. 'क्रमं' क. पाठः। २. 'दादरमादरात्' क. पाठः। ३. 'त्वन्ये' क. ख. ग. पाठः। ४. 'सिद्धिः' क. पाठः।

निःसङ्कल्पविकल्पश्च निर्णीतार्थविधायकः। तुल्यनिन्दास्तुतिर्मौनी निरपेक्षो नियामकः॥ १०॥
इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये॥

इति श्रीगुरुलक्षणानि॥ अथ सच्छिष्यलक्षणानि —

सच्छिष्यं तं कुलेशानि सर्वलक्षणसम्युतम्। शमादिसाधनोपेतं गुणशीलसमन्वितम्॥ १॥
शुद्धदेहानुबन्धाङ्गं धार्मिकं शुद्धमानसम्। दृढव्रतं सदाचारं श्रद्धाभक्तिसमन्वितम्॥ २॥
कृतज्ञं पापभीतं च साधुसज्जनसंमतम्। आस्तिकं दानशीलं च सर्वभूतहिते रतम्॥ ३॥
विश्वासविनयोपेतं वित्तशाठ्यविवर्जितम्। असाध्यसाधकं शूरं बलकान्तिसमन्वितम्॥ ४॥
अनुकूलक्रियायुक्तमप्रमत्तं विचक्षणम्। हितसत्यमितस्निग्धभाषणं मुक्तदूषणम्॥ ५॥
सकृदुक्तगृहीतार्थं चतुरं बुद्धिविस्तरम्। गृहतल्पासनोच्छ्रेङ्ग[1]निर्विकारमसेवकम्॥ ६॥
विमृश्यकारिणं वीरं मनोदारिद्र्यवर्जितम्। सर्वकार्यातिकुशलं धीरं सर्वोपकारकम्॥ ७॥
स्वस्वार्थे[2] परनिन्दायां विमुखं सुमुखं प्रिये। जितेन्द्रियं सुसन्तुष्टं धीमन्तं ब्रह्मचारिणम्॥ ८॥
त्यक्ताधिव्याधिचापल्यं दुःशङ्कातङ्कवर्जितम्। गुरुध्यानस्तुतिकथासेवनाभजनोत्सुकम्॥ ९॥
गुरुदैवतभक्तं च कामिनीभजनोत्सुकम्। नित्यं गुरुसमीपस्थं गुरुसन्तोषकारिणम्॥ १०॥
वाङ्मनःकर्मभिर्नित्यं गुरुकार्यसमुत्सुकम्। गुर्वाज्ञापालकं देवि गुरुकीर्तिप्रकाशकम्॥ ११॥
गुरुवाक्यप्रमाणज्ञं गुरुशुश्रूषणे रतम्। चित्तानुवर्तिनं प्रेक्ष्यकारिणं कुलनायिके॥ १२॥
लज्जाभिमानगर्वादिवर्जितं गुरुसन्निधौ। निरपेक्षं गुरुद्रव्ये तत्प्रसादादिकाङ्क्षिणम्॥ १३॥
कुलधर्मकथायोगियोगिनीकौलिकप्रियम्। कुलार्चनादिनिरतं मोक्षमार्गानुगामिनम्॥ १४॥
इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत्।

अथासच्छिष्यलक्षणानि कुलार्णवे —

दुष्टान्ववायजं दुष्टं गुणहीन[3]मरूपिणम्। परशिष्यं च पाषाण्डं धूर्तं पण्डितमानिनम्॥ १॥
हीनाधिकविकाराङ्गं विकलावयवान्वितम्। पङ्गुमन्धं च बधिरं मलिनं व्याधिपीडितम्॥ २॥
उच्छिष्टं दुर्मुखं चापि स्वेच्छावेशधरं विटम्। दुर्विदग्धं कुचेष्टं च कुटिलं भीमवीक्षणम्॥३॥
निद्रालस्ययुतं तन्द्राद्यूतादिव्यसनान्वितम्। कपाटकुड्यस्तम्भादौ तिरोहिततनुं सदा॥ ४॥
शून्ययुक्तकरं क्षुद्रं गुरुभक्तिविवर्जितम्। किमेकवादिनं स्तब्धं प्रेषकं चलपं शठम्॥ ५॥
धनस्त्रीशुद्धिरहितं निषेधविधिवर्जितम्। रहस्यभेदकं चापि देवीकार्यार्थघातकम्॥ ६॥
मार्जारबकवृत्तिं च रन्ध्रान्वेषणतत्परम्। मायान्वितं कृतघ्नं च प्रच्छन्नान्तरदायकम्॥ ७॥
विश्वासघातकं देवद्रोहिणं पापकारिणम्। अविश्वासमवद्याङ्गमनर्थसिद्धिकाङ्क्षिणम्॥ ८॥
आततायिनमादित्सुं कुत्सितं कूटसाक्षिकम्। सर्वत्र याचकं देवि सर्वाकृष्याभिगामिनम्॥ ९॥

१ 'नोछ्ङ्ग' क. पाठः। २ 'र्थपर' क. पाठः। 'स्वतुतौ' इति सुपाठः ३ 'ननिरू' ख. पाठः। ४ 'सर्वोत्कृष्याभिमानिनम्'। असत्यनिष्ठरासक्रम' ख. पाठः।

असत्यनिष्ठं चासक्तं ग्राम्यादिबहुभाषिणम्। दुर्विचारकुतर्कादिकारकं कलहप्रियम् ॥ १०॥
वृथाक्षेपकरं भ्रान्तं भ्रामकं वाग्विडम्बकम्। परोक्षे दूषणकरं प्रत्यक्षे प्रियवादिनम् ॥ ११॥
वाग्रूक्षवादिनं विद्याचौरमात्मप्रशंसकम् । गुणासहिष्णु सद्भीतमार्तिक्रोधसमन्वितम् ॥ १२॥
चार्वाकं दुर्जनसखं सर्वलोकविगर्हितम्। पिशुनं परसन्तापं सर्वप्राणिभयङ्करम् ॥ १३॥
स्वक्लेशवादिनं मित्रद्रोहिणं भ्रातृवञ्चकम्। जिह्वोपस्थपरं देवि तस्करं पशुचेष्टितम्॥ १४॥
अकारणद्वेषहासक्लेशक्रोधादिकारिणम् । अतिहास्यसुकर्माणं[1] मर्मान्तःपरिहासकम् ॥ १५॥
कामुकं चापि निर्लज्जं मिथ्यादुश्चेष्टसूचकम्। असूयामदमात्सर्यदम्भाहङ्कारसंयुतम् ॥ १६॥
ईर्ष्यापैशुन्यपारुष्यकार्पण्यक्रोधमानिनम् । अधीरं दुःखितं द्वेष्यमशक्तं तत्त्ववर्जितम्॥ १७॥
अप्रसन्नमतिं मूढं चिन्ताकुलि[2]तमानसम्। तृष्णालोभयुतं दीनमतुष्टं सर्वयाचकम् ॥ १८॥
बह्वशिनं कपटिनं भ्रामकं कुटिलं प्रिये। भक्तिश्रद्धादयाशान्तिधर्माचारविवर्जितम् ॥ १९॥
माता[3]पितृगुरुप्राज्ञमहतां हास्यकारकम् । कुलद्रव्यादिबीभत्सुं गुरुसेवाभिमानिनम् ॥ २०॥
स्त्रीद्विष्टं समयभ्रष्टं गुरुशप्तं कुलेश्वरि। इत्यादिविगुणोपेतं गुरुः शिष्यं परित्यजेत्॥ २१॥
स्नेहाद्वा लोभतो वापि यदि गृह्णाति दीक्षयेत्। तस्मिन् गुरौ सशिष्ये तु देवताशाप आपतेत्॥२२॥
तस्मादेवंविधं शिष्यं न गृह्णीयात् कथञ्चन। यदि गृह्णाति मोहेन तत्पापैर्व्याप्यते गुरुः॥ २३॥
मन्त्रिपापं च राजानं पतिं जायाकृतं यथा। तथा शिष्यकृतं पापं प्रायो गुरुमपि[4] स्पृशेत् ॥ २४॥
वर्णाश्रमाणां सर्वेषामाचारः सद्गतिप्रदः । गुरुस्त्रिवारमाचारं बोधयेत् कुलनायिके ॥ २५॥
न गृह्णाति हि शिष्यश्चेत् तदा पापं गुरोर्नहि॥

इति गुरुशिष्यलक्षणानि। अथ श्रीगुरुपादुकामाहात्म्यं कुलार्णवे —

वागुरा मूलवलये सूत्राद्याः कवलीकृताः। एवं कुलागमज्ञानं पादुकायां प्रतिष्ठितम्॥ १॥
कोटिकोटिमहादानात् कोटिकोटिमहाव्रतात्। कोटिकोटिमहायज्ञात् परा श्रीपादुकास्मृतिः॥ २॥
कोटिमन्त्रजपात् कोटिपुण्यतीर्थावगाहनात्। कोटिदेवार्चनाद् देवि परा श्रीपादुकास्मृतिः॥ ३॥
महारोगे महोत्पाते महादुःखे महाभये। महापदि महापापे स्मृता रक्षति पादुका॥ ४॥
तेनाधीतं श्रुतं ज्ञातं दत्तमिष्टं च पूजितम्। जिह्वाग्रे वर्तते यस्य सदा श्रीपादुका प्रिये॥ ५॥
सकृच्छ्रीपादुकां देवि यो वा जपति भक्तितः। स सर्वपापरहितः प्राप्नोति परमां गतिम्॥ ६॥
शुचिर्वाप्यशुचिर्वा यो भक्त्या स्मरति पादुकाम्। अनायासेन धर्मार्थकाममोक्षाँल्लभेत सः॥ ७॥
श्रीनाथचरणाम्भोजं यस्यां दिशि विराजते। तस्यां दिशि नमस्कुर्याद् भक्त्या प्रतिदिनं प्रिये॥८॥
न पादुकापरो मन्त्रो न देवः श्रीगुरोः परः। नहि शाक्तात् परो मार्गो न पुण्यं कुलपूजनात्॥९॥
ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम्। शास्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा॥ १०॥

१. 'सकर्माणं' क. पाठः। 'स्वकर्माणं' ख. पाठः। २. 'कुत्सित' क. पाठः। ३. 'मातृ' क. पाठः। ४. 'मति' क. पाठः। 'मपि' ख. पाठः।

गुरुमूलाः क्रियाः सर्वाः लोकेऽस्मिन् कुलनायिके। तस्मात् सेव्यो गुरुर्नित्यं सिद्ध्यर्थं भक्तिसंयुतैः।। ११ ।।
तावदार्तिर्भयं[1] दुःखं मोहशोकभ्रमादयः । यावन्नायाति शरणं श्रीगुरुं भक्तवत्सलम् ।। १२ ।।
तावद् भ्रमति संसारे सर्वदुःखमलीमसः। यावन्न भजते भक्त्या श्रीगुरुं शिवरूपिणम्।। १३ ।।
सर्वसिद्धिफलोपेतो मन्त्रस्कन्धोऽतिशोभनः । गुरुप्रसादमूलोऽयं परतत्त्वमहाद्रुमः ।। १४ ।।
यथा ददाति सन्तुष्टः प्रसन्नो वरदो मनुम्। तथा भक्त्या धनैः प्राणैर्गुरुं यत्नेन तोषयेत्।। १५ ।।
यदा[2] दद्याच्छिवाय स्वमात्मानं देशिकोत्तमः। तदा मुक्तो भवेच्छिष्यो न ततोऽस्ति पुनर्भवः।। १६ ।।
तावदाराधयेच्छिष्यः सुप्रसन्नो यथा भवेत्। गुरौ प्रसन्ने शिष्यस्य सद्यः पापक्षयो भवेत्।। १७ ।।
मनसापि न काङ्क्षन्ते भक्ता मानानुजीविकाः। सम्पादयन्ति तत्सर्वं स्वामिनो भक्तवत्सलाः।। १८ ।।
ब्रह्मविष्णुमहेशानदेवतामुनियोगिनः । कुर्वन्त्यनुग्रहं तुष्टा गुरौ तुष्टे न संशयः ।। १९ ।।
भक्त्या सन्तुष्टगुरुणा योऽपदिष्टः कृपालुना। कर्ममुक्तो भवेच्छिष्यो भुक्तिमुक्त्योः स भाजनम्।।२० ।।
शिष्येणापि तदा ग्राह्यं यदा सन्तोषितो गुरुः। तस्माद् गुरोः प्रियं कुर्यान्मनोवाक्कायकर्मभिः।। २१ ।।
यदि वा परितुष्टेन गुरुणा यत्र कुत्रचित्। मुक्तोऽसीति समादिष्टः सोऽपि मुक्तो भवेत्प्रिये।। २२ ।।
अथवा निष्प्रपञ्चेन धाम्ना केनचिदीश्वरि। करोमि गुरुरूपेण पशुपाशविमोचनम् ।। २३ ।।
न मे प्रियश्चतुर्वेदी मद्भक्तः श्वपचोऽपि यः। तस्मै देयं ततो ग्राह्यं स तु पूज्यो ह्यहं यथा।। २४ ।।
विप्रोऽपि गुणयुक्तो वाप्यभक्तो न प्रशस्यते[3]। म्लेच्छोऽपि गुणहीनो वा भक्तिमान् स विशिष्यते।।२५ ।।
गुरुभक्तिविहीनस्य तपो विद्या व्रतं कुलम्। निष्फलं हि कुलेशानि केवलं लोकरञ्जनम्।। २६ ।।
गुरुभक्त्याख्यदहनदग्धदुर्जातिकल्मषः । श्वपचोऽप्यमरैः[4] पूज्यो न विद्वानपि नास्तिकः।। २७ ।।
धर्मार्थकामैः किं तस्य मोक्षस्तस्य करे स्थितः। सर्वार्थैः श्रीगुरौ देवि यस्य भक्तिः स्थिरा सदा।।२८ ।।

।। इति श्रीमहामहोपाध्यायभगवत्पूज्यपाद-श्रीगोविन्दाचार्यशिष्य-
श्रीभगवच्छङ्कराचार्यशिष्य-श्रीविष्णुशर्माचार्यशिष्य-
श्रीप्रगल्भाचार्यशिष्य-श्रीविद्यारण्ययतिविरचिते
विद्यार्णवाख्ये तन्त्रे प्रथमः श्वासः।। १ ।।



१. 'र्तिभयं' क. पाठः। २. 'यथा' क. पाठः। यदा यद्वत् स्वशिष्येभ्यः, ग. पाठः। ३ 'प्रकाश्यते' क. पाठः।
४. 'पि परैः' क. पाठः।

# अथ
# श्रीविद्यार्णवतन्त्रे
## द्वितीयः श्वासः

तथा —

स शिवो गुरुरूपेण भुक्तिमुक्तिप्रदो मम। इति भक्त्या स्मरेद् यस्तु तस्य सिद्धिरदूरतः॥ १॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते कुलेश्वरि॥ २॥
नारायणे महादेवे मातापित्रोश्च राजनि। यथा भक्तिर्भवेत् देवि तथा कार्या निजे गुरौ॥ ३॥
लक्ष्मीनारायणौ वाणीधातारौ गिरिजाशिवौ। श्रीगुरुं गुरुपत्नीं च पितराविति चिन्तयेत्॥ ४॥
गुरुभक्त्या यथा देवि प्राप्यन्ते सर्वसिद्धयः। यज्ञदानतपस्तीर्थव्रताद्यैर्न तथा प्रिये ॥ ५॥
श्रीगुरौ निश्चला भक्तिर्वर्द्धते हि यथा यथा। तथा तथास्य विज्ञानं वर्द्धते कुलनायिके॥ ६॥
किं तीर्थाद्यैर्महायासैः किं व्रतैः कायशोषणैः। निर्व्याजसेवा देवेशि भक्तिर्येषां हि सद्गुरौ॥ ७॥
कायक्लेशेन महता तपसा वापि यत्फलम्। तत्फलं लभते देवि सुखेन गुरुसेवया॥ ८॥
भोगमोक्षार्थिनां ब्रह्मविष्णवीशपदकाङ्क्षिणाम्। भक्तिरेव गुरौ देवि नान्यः पन्था इति श्रुतिः॥ ९॥
अशुभानि च सर्वाणि समहापातकानि च। भक्तिः क्षणेन दहति तूलराशिमिवानलः॥ १०॥
विश्वासाय नमस्तस्मै सर्वसिद्धिप्रदायिने। येन मृद्दारुदृषदः फलन्त्यविकलं फलम्॥ ११॥
न योगो न तपो नार्चाक्रमः कोऽपि निगद्यते[1]। अमाये कुलमार्गेऽस्मिन् भक्तिरेका[2] विशिष्यते॥ १२॥
साक्षाद् गुरुमये देवि सर्वस्मिन् भुवनान्तरे। किं न भक्तिमतां क्षेत्रं मन्त्रः क्वैषां न सिद्ध्यति॥ १३॥
गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धिकाम्[3]। प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत्॥ १४॥
गुरुं न मर्त्यं बुद्ध्येत यदि बुद्ध्येत तस्य तु। कदापि न भवेत् सिद्धिर्मन्त्रैर्वा देवतार्चनैः॥ १५॥
श्रीगुरुं प्राकृतैः सार्धं ये स्मरन्ति वदन्ति वा। तेषां च सुकृतं सर्वं पातकं भवति प्रिये॥ १६॥
जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः। गुरुर्विशेषतः पूज्यो धर्माधर्मप्रदर्शकः ॥ १७॥
गुरुः पिता गुरुर्माता गुरुर्देवं गुरुर्गतिः। शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन॥ १८॥
गुरौ[4] हितं हि कर्तव्यं वाङ्मनःकायकर्मभिः। अहिताचरणाद् देवि विष्ठायां जायते कृमिः॥ १९॥
शरीरवित्तप्राणैश्च श्रीगुरुं वञ्चयन्ति ये। कृमिकीटपतङ्गत्वं प्राप्नुवन्ति नराधमाः ॥ २०॥
गुरुत्यागाद् भवेन्मृत्युर्मन्त्रत्यागाद् दरिद्रता। गुरुमन्त्रपरित्यागाद् रौरवं नरकं व्रजेत्॥ २१॥
गुर्वर्थं धारयेद् देहं तदर्थं धनमर्जयेत्। निजप्राणान् परित्यज्य गुरुकार्यं समाचरेत्॥ २२॥
गुरूक्तं परुषं वाक्यमाशिषं चिन्तयेत् प्रिये। तेन सन्ताडितो वापि प्रसादमिति संस्मरेत्॥ २३॥

१. 'न गद्यते' क. पाठः। २. 'व' ग. पाठ। ३. 'बुद्धिमान्' ग. पाठः। ४. "रोर्हितं" ग. पाठः।

भोगयोग्यानि वस्तूनि गुरवे सर्वमर्पयेत्। तच्छेषमिति सञ्चिन्त्य चानु[1]भूयात् कुलेश्वरि।। २४।।
गुर्वग्रे न तपः कुर्यान् नोपवासादिकं व्रतम्। तीर्थयात्रां च नो कुर्यान्न स्नायादात्मशुद्धये।।२५।।
न नियोगं गुरोर्दद्याद् युष्मदा नैव भाषयेत्। ऋणादानं तथा दानं वस्तूनां क्रयविक्रयम्।।२६।।
न कुर्याद् गुरुभिः सार्धं शिष्यो भूष्णुः कदाचन। न कुर्यान्नास्तिकैर्वादं सम्भाषणमपीश्वरि।।२७।।
विलोक्य दूरतो गच्छेन्नासीत सह तैः क्वचित्। गुरौ सन्निहिते यस्तु पूजयेदन्यमन्तिके।।२८।।
स याति नरकं घोरं सा पूजा निष्फला भवेत्। शिरसा न वहेद् भारं गुरुपादाब्जधारिणा।।२९।।
तदाज्ञया तत्कर्तव्यमाज्ञारूपो गुरुः स्मृतः। मन्त्रागमाद्यमन्यत्र श्रुतं तस्मै निवेदयेत्।। ३०।।
गुर्वाज्ञया तद् गृह्णीयात् तदनिष्टं विवर्जयेत्। स्वशास्त्रोक्तं रहस्यार्थं न वदेद्यस्य कस्यचित्।।३१।।
यदि ब्रूयात् स समयाच्च्युत[2] एव न संशयः। अद्वैतं भावयेन्नित्यं नाद्वैतं गुरुणा सह।।३२।।
आत्मवत्सर्वभूतेषु हितं कुर्यात् कुलेश्वरि। आत्मस्थानाङ्गसद्भावैः शुश्रूषा स्याच्चतुर्विधा।।३३।।
शुश्रूषया तया देवि शिष्यः सन्तोषयेद् गुरुम्। पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम्।।३४।।
शुश्रूषणपरो यस्तु गुरुदेवमहात्मनाम्। केवलं गुरुशुश्रूषा तत्कृपाकारिणी प्रिये।। ३५।।
सद्भक्तिसहिता सा चेत् सर्वकामफलप्रदा। क्षीयन्ते सर्वपापानि वर्द्धन्ते पुण्यराशयः।।३६।।
सिद्ध्यन्ति सर्वकार्याणि गुरुशुश्रूषया प्रिये। यद्यदात्महितं वस्तु तत्तद्धितं न वञ्चयेत्।।३७।।
गुरुदेवार्चको यस्तु तस्य पुण्यं न गण्यते। भक्त्या वित्तानुसारेण गुरुमुद्दिश्य यत्कृतम्।।३८।।
स्वल्पं वा बहु वा पुण्यं तुल्यमाढ्यदरिद्रयोः। सर्वस्वमपि यो दद्याद् गुरवे भक्तिवर्जितः।।३९।।
शिष्यो न फलमाप्नोति भक्तिरेव हि कारणम्। यस्मिन् द्रव्ये गुरोरस्ति स्पृहा नानुभवेच्च तत्।।४०।।
अवश्यं यदि वाञ्छा स्यादनुभूयात्तदाज्ञया। यस्तिलार्धं तदर्धं वा गुरुस्वमुपजीवति।।४१।।
लोभान्मोहात् स पच्येत नरके च त्रिसप्तके। अल्पादल्पं गुरुद्रव्यमदत्तं स्वीकरोति यः।। ४२।।
तिरश्चां योनिमापन्नः क्रव्यादैर्भक्ष्यते प्रिये। गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः।।४३।।
पतितस्य क्षुल्लकस्य प्रायश्चित्तं न विद्यते। आज्ञाभङ्गोऽर्थग्रहणं गुरोरप्रियवर्तनम्[3] ।।४४।।
गुरुद्रोहमिदं प्राहुर्यः करोति स पातकी। स्वद्रव्यविनियोगञ्च नानिवेद्य गुरोश्चरेत्।। ४५।।
अनिवेद्य तु यः कुर्यात् स भवेद् ब्रह्मघातकः। गुरुस्थानं सम्प्रदायं तद्धर्मं यो विनाशयेत्।।४६।।
गुरुभिः स बहिष्कार्यो दण्ड्यो वध्यश्च पातकी। गुरुकोपान्न नाशोऽन्यो गुरुद्रोहान्न पातकम्।।४७।।
न मृतिर्गुरुनिन्दाया गुर्वनिष्टान्न चापदः। जीवेदग्निप्रविष्टो वा नरः पीतविषोऽपि वा।।४८।।
मृत्युहस्तगतो वापि नापराधकरो गुरोः। यत्र श्रीगुरुनिन्दा स्यात् पिधाय श्रवणे स्वके।।४९।।
सद्यस्तस्मादपक्रामेद् दूरं न शृणुयाद्यथा। गुरोर्नाम जपेत् पश्चाच्छ्रवणे सा प्रतिक्रिया।।५०।।
गुरुमित्रसुहृद्दासीदासाद्यान् नापमानयेत्। न निन्देद् दृश्यसमयान् वेदशास्त्रागमादिकान्।।५१।।

---

१. 'चारु' क. पाठः। २. 'यच्युत' ख. पाठः। ३. 'दर्शनम्' क. पाठः।

श्रीगुरोः पादुका भूषा[1]गुरुनामस्मृतिर्जपः। गुर्वाज्ञाकरणं कृत्यं शुश्रूषा भजनं गुरोः ॥ ५२॥
विविक्षुर्देशिकावासं शान्तचित्तोऽतिभक्तिमान्। व्यजनं पादुकां छत्रं चामरं वाहनादिकम्॥ ५३॥
ताम्बूलमुल्वणं वेशमुत्सृज्य प्रविशेच्छनैः। वाहनं पादुकां छत्रमासनं वसनादिकम्॥ ५४॥
दृष्ट्वा गुरोर्नमस्कुर्यान्नात्मभोगाय कारयेत्। पादप्रक्षालनं स्नानमभ्यङ्गं दन्तधावनम्॥ ५५॥
मूत्रं निष्ठीवनं[2] क्षौरं शयनं स्त्रीनिवेषणम्। वीरासनं च दुर्वाक्यमासनं हास्यरोदने॥ ५६॥
केशमोचनमुष्णीषं कञ्चुकं नग्नतां तथा। पादप्रसारणं वादं कलहं दूषणं प्रिये॥ ५७॥
अङ्गभङ्गाङ्गवाद्यादि करास्फालनधूननम्। द्यूतकुक्कुटमल्लादियुद्धमित्यादि चाम्बिके॥ ५८॥
गुरुयोगिमहासिद्धपीठक्षेत्राश्रमेषु च। नाचरेदाचरन्[3] मोहाद् देवताशापमाप्नुयात् ॥ ५९॥
उपचारं विना तिष्ठेद् गुर्वग्रे नेच्छया विशेत्। मुखावलोकी सेवेत तदुक्तं च समाचरेत्॥ ६०॥
गुरूक्तानुक्तकार्येषु नोपेक्षां कारयेत्[4] प्रिये। सदसद्यद् गुरुर्ब्रूयात् तत्कार्यमविशङ्कया॥ ६१॥
निग्रहेऽनुग्रहे वापि गुरुः सर्वस्य कारणम्। निर्गतं यद् गुरोर्वक्त्रात् सर्वं शास्त्रं तदुच्यते॥ ६२॥
गुरुकार्ये स्वयं शक्तो नापरं प्रेषयेत् प्रिये। बहुत्वे तत्परैर्भृत्यैः सहितोऽप्यतिभक्तिमान्॥ ६३॥
गच्छंस्तिष्ठन् स्वपञ्जाग्रज्जल्पञ्जुह्वन् प्रपूजने[5]। गुर्वाज्ञामेव कुर्वीत तद्गतेनान्तरात्मना॥ ६४॥
अभिमानो न कर्तव्यो जातिविद्याधनादिभिः। सर्वदा सेवयेन्नित्यं शिष्यः श्रीगुरुसन्निधौ॥ ६५॥
छायाभूमिपरित्यागी विनीतस्त्वतिभक्तिमान्। देवि गुर्वग्रतस्तिष्ठेद् गुरुकार्यसमुत्सुकः॥ ६६॥
स्वकार्यमन्यकार्यं वा शिष्यः श्रीगुरुचित्तवित्। गुरुपार्श्वगतो नम्रः प्रच्छन्नास्यो मितं वदेत्॥ ६७॥
सामान्यतो निषेध[6]श्चेत् सद्गुरोर्यदि सन्निधौ। आचारे यदि मूढात्मा दोषं कोटिगुणं भवेत्॥ ६८॥
अनादृत्य गुरोर्वाक्यं शृणुयाद् यः पराङ्मुखः। अहितं वा हितं वापि रौरवं नरकं व्रजेत्॥ ६९॥
गोब्राह्मणवधं कृत्वा यत्पापं समवाप्नुयात्। तत्पापं समवाप्नोति गुर्वग्रेऽनृतभाषणात्॥ ७०॥
स्थानान्तरगतं चार्थव्यसने[7] विषमे स्थितम्। श्रीगुरुं न त्यजेत् क्वापि तदादिष्टो व्रजेत् प्रिये॥ ७१॥
अधःस्थिते गुरावूर्ध्वे न तिष्ठेत कदाचन। न गच्छेदग्रतस्तस्य न विशेदुत्थिते गुरौ॥ ७२॥
शक्तिच्छायां गुरुच्छायां देवच्छायां न लङ्घयेत्। स्वच्छायां तेषु नो कुर्यान्न स्वपेद्गुरुसन्निधौ॥ ७३॥
भाषणं पठनं गानं भोजनं शयनादिकम्। अनादिष्टो न कुर्वीत न चावन्दनपूर्वकम्॥ ७४॥
ब्रह्महत्याशतं कुर्याद् गुर्वाज्ञां परिपालयन्। विना गुर्वाज्ञया शिष्यो निःश्वसेन्नातिशासनात्॥ ७५॥
सर्वं[8] गुर्वाज्ञया कुर्यान्नालिङ्गेत्तस्त्रियं प्रिये। भक्त्या प्रणम्य चोत्तिष्ठेद् बद्धाञ्जलिपुटः प्रिये॥ ७६॥
पश्चात्पादेन निर्गच्छेन्नमस्कृत्य गुरोर्गृहात्। एकासने नोपविशेद् गुरुणा तत्समैः सह॥ ७७॥
न विशेदासनं देवि देवतागुरुसन्निधौ। गुरौ सिंहासनं देयं ज्येष्ठानामुत्तमासनम् ॥ ७८॥
देश्यासनं कनिष्ठानामितरेषां समासनम्। जातिविद्याधनाढ्यो वा दूरे दृष्ट्वा गुरुं सदा॥ ७९॥

---

१. 'पूज्या' ग.पाठः। २. 'सूतनि' क पाः। ३. 'चरेन्मो' क.पाठः। ४. 'बाकरणं' क पाठः। ५. 'जपन् ध्यायंश्च पूजयन्' क. पाठः। 'जपन् ध्यायत्प्रपूजने' ख. पाठः। ६. 'व' क. पाठः। ७. चार्थविषये क. पाठः 'वार्थविषये' ख. पाठः। ८. पूर्व.क. ख.पाठः।

दण्डप्रणामं कुर्वीत त्रिःप्रदक्षिणमाचरेत्। ततस्त्रिः षट् द्वादश वा ज्येष्ठादिष्वेकमेव च॥ ८०॥
गुरुतद्गुरुयोगे तु वन्देत परमं गुरुम्। ततो नमेद् गुरुं योऽपि गुर्वग्रे तं निवारयेत्॥ ८१॥
प्रगुरोः सन्निधौ शिष्यः स्वगुरुं मनसा नमेत्। गुरुबुद्ध्या नमेत्सर्वं दैवतं तृणमेव च॥ ८२॥
न नमेद् देवबुद्ध्या तु प्रतिमां लोहमृण्मयीम्। गुरोः प्रणामत्रितयं ज्येष्ठानामेकमेव च॥ ८३॥
पूज्यानामञ्जलिस्तद्वदन्येषां वाक्यवन्दनम्। देवान् गुरून् कुलाचार्याञ्ज्ञानवृद्धांस्तपोधनान्॥ ८४॥
विद्याधिकान् स्वकर्मस्थान् प्रणमेत् कुलनायिके। स्त्रीद्विष्टं गुरुभिः शप्तं पाखण्डं पतितं शठम्॥८५॥
विकर्माणं कृतघ्नं वा नाश्रमिणं च नो[१] नमेत्। अनिवेद्य गुरुं भुङ्क्ते यस्त्वेकगृहसंस्थितः॥८६॥
अमेध्यं तेन भुक्तं स्यात् सूकरो जायते मृतः। एकग्रामस्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद् गुरुम्॥८७॥
क्रोशमात्रस्थितो भक्त्या गुरुं प्रतिदिनं नमेत्। अर्धयोजनतः शिष्यः प्रणमेत् पञ्चपर्वसु॥८८॥
एकयोजनमारभ्य योजनद्वादशावधि। तत्तद्योजनसंख्यातमासैर्गत्वा नमेद् गुरुम्॥ ८९॥
दूरदेशस्थितः शिष्यो भक्त्या तत्सन्निधिं गतः। अतिदूरस्थितः शिष्यो यदेच्छा[२] स्यात्तदा व्रजेत्॥९०॥
रिक्तहस्तस्तु नोपेयाद् राजानं दैवतं गुरुम्। फलपुष्पाम्बरादीनि यथाशक्त्या समर्पयेत्॥ ९१॥
एवं यो नाचरेद् देवि ब्रह्मराक्षसतां व्रजेत्। गुरुशक्तिश्च तत्पुत्रो ज्येष्ठभ्राता गुरोः समः॥ ९२॥
आत्मवच्च कनीयांसः पुत्रवत् कुलपालकाः। लोकाचार्यस्य देवेशि गुरुज्येष्ठकनिष्ठयोः॥ ९३॥
गुरुकुल्यस्य कुर्वीत प्रणामं स्वगुरोर्यथा। स्वज्येष्ठश्च[४]क्रमज्येष्ठः कुलज्येष्ठस्तृतीयकः॥ ९४॥
गुरोर्ज्येष्ठस्तु देवेशि इति ज्येष्ठचतुष्टयम्। यावज्ज्येष्ठाभिवादे तु क्रमज्येष्ठाज्ञ ईरितः॥ ९५॥
गुरोश्च कुलवृद्धस्य वन्दनादि विधानतः। पितृमात्रादिसर्वेषु पूज्यकोटिषु बन्धुषु॥ ९६॥
अभ्युत्थानप्रणामाद्यैरव्यक्तदोषलाघवः। यदा त्वा[५]चार्यरूपेण स्वात्मानं सम्प्रकाशयेत्॥ ९७॥
अभ्युत्थानप्रणामाद्यैर्दोषदः स्यात्तदा प्रिये। पतिर्भूत्वा पशुभ्यस्तु प्रणामं यः करिष्यति॥ ९८॥
स महापशुरित्युक्तो देवताशापमाप्नुयात्। यो गुरुस्थानकं प्राप्तः पादुकापरिसंख्यया॥ ९९॥
गुरुवत्स तु मन्तव्यो ज्येष्ठैर्वन्द्यो न च प्रिये।

इति पादुकामाहात्म्यतदाचारविधिः॥ अथ समयाचारः। तत्र श्रीकुलार्णवे —

श्रीगुरुं कुलशास्त्राणि पूज्यस्थानानि यानि तु। भक्त्या श्रीपूर्वकं देवि प्रणम्य परिकीर्तयेत्॥ १॥
ब्रह्मादिस्तम्बपर्यन्तं यस्य मे गुरुसन्ततिः। तस्य मे सर्वशिष्यस्य को न पूज्यो महीतले॥ २॥
गुरुं नाम्ना न भाषेत जपकालादृते प्रिये। श्रीनाथदेवस्वामीति विवादे बोधने वदेत्॥ ३॥
श्रीगुरोः पादुकां मुद्रां मूलमन्त्रं स्वपादुकाम्। शिष्यादन्यत्र देवेशि न वदेद्यस्य कस्यचित्॥ ४॥
पारम्पर्य्यागमाम्नायमन्त्राचारादिकं प्रिये। सर्वं गुरुमुखाल्लब्धं सफलं स्यान्न चान्यथा॥ ५॥
श्रीशास्त्राश्रयसम्भूतं पुस्तकं देववत्प्रिये। नित्यं समर्चयेद् भक्त्या पशुहस्ते न निक्षिपेत्॥ ६॥

---

१. 'विकर्मिणं कृतघ्नं नाश्रमिणं नैव नो' क. पाठः। २. 'यनेच्छा' क. पाठः। ३. 'पुत्रा वा' ख. पाठः।
४. 'स्वक्रम' ख पाठः। ५. 'वाचार्यं' ग. पाठः। ६. 'द्वेषभाक्' ग. पाठः।

स्वदारवन्निषेवेत कुलशास्त्राणि पार्वति। पशुशास्त्राणि सर्वाणि वर्जयेत् परदारवत्॥ ७॥
श्वचर्मस्थं यथा क्षीरमपेयं स्याद् द्विजोत्तमैः। तथा पशुमुखाद् धर्मो न श्रोतव्यश्च कौलिकैः॥८॥
यः शृणोति कुलाचारं यथाशास्त्रं च यो वदेत्। तावुभौ गच्छतः साक्षाद् योगिनीवीरमेलनम्॥९॥
अश्रद्दधाना ये चात्र कुलधर्मान् कुलेश्वरि। नरकान्न निवर्तन्ते यावदाभूतसंप्लवम्॥ १०॥
ऊढा धृता यथाप्रीता मू (ले?ल्ये) न च समाहृता। सकृत्कामगता चापि पञ्चधा गुरुयोषितः॥ ११॥
अलङ्घ्याः पूजनीयाः स्युर्गुरुवद् गुरुयोषितः। कृष्णांशुकां कृष्णवर्णां कुमारीं च कृशोदरीम्॥ १२॥
मनोहरां यौवनस्थामर्चयेद् देवताधिया। आममांसं सुराकुम्भं मत्तेभं सिद्धलिङ्गिनम्॥ १३॥
सहकारमशोकं च क्रीडालोलां कुमारिकाम्। एकवृक्षं श्मशानं च समूहं योषितामपि॥ १४॥
नारीञ्च रक्तवसनां दृष्ट्वा वन्देत भक्तितः[१]। गुरुशक्तिसुतज्येष्ठकनिष्ठकुलदेशिकान्॥ १५॥
कुलदर्शनशास्त्राणि कुलद्रव्याणि कौलिकान्। प्रेरकान् सूचकाँश्चापि वाचकान् दर्शकांस्तथा॥१६॥
शिक्षकान् बोधकान् योगियोगिनीसिद्धपूरुषान्। कन्याकुमारकान्नग्नानुन्मत्तामपि योषितम्॥ १७॥
न निन्देन जुगुप्सेत न हसेन्नापमानयेत्। नाप्रियं नानृतं ब्रूयात् कस्यापि कुलयोगिनः॥ १८॥
कुरूपेत्यतिकृष्णेति न वदेत् कुलयोषितम्। परीक्षयेन्न भक्तानां वीराणां च कृताकृतम्॥ १९॥
न पश्येद्वनितां नग्नामुन्मत्तां प्रकटस्तनीम्। न दिवा सेवयेन्नारीं तद्योनिं न निरीक्षयेत्॥२०॥
या काचिदङ्गना लोके सा मातृकुलसम्भवा। कुप्यन्ति कुलयोगिन्यो वनितानामतिक्रमात्॥२१॥
शतापराधां वनितां पुष्पेणापि न ताडयेत्। दोषान्न गणयेत् स्त्रीणां गुणानेव प्रकाशयेत्॥२२॥
तिष्ठन्ति कुलयोगिन्यः कुलवृक्षेषु सर्वदा। तत्पत्रेषु न भोक्तव्यं मर्कपत्रे विशेषतः॥ २३॥
न स्वपेत् कुलवृक्षाधो न चोपद्रवमाचरेत्। दृष्ट्वा भक्त्या नमस्कुर्याच्छेदयेन्न कदाचन॥२४॥
श्लेष्मान्तककरञ्जाक्षनिम्बाश्वत्थकदम्बकाः। बिल्वो वटोदुम्बरौ च कुलवृक्षा नव स्मृताः॥२५॥
देवतागुरुशास्त्रादिसिद्धाचारविडम्बकः। विद्याचौरो गुरुद्रोही ब्रह्मराक्षसतां व्रजेत्॥ २६॥
गुरुं मोहादनादृत्य निर्भर्त्स्य वीरपूरुषान्। विकल्प्य कुलशास्त्राणि भवन्ति ब्रह्मराक्षसाः॥२७॥
एकाक्षरप्रदातारं यो गुरुं नैव मन्यते। शुनां योनिशतं गत्वा चण्डालत्वमवाप्नुयात्॥२८॥
गुरुं प्रकाशयेद्धीमान् मन्त्रं नैव प्रकाशयेत्। अप्रकाशप्रकाशाभ्यां क्षीयेते सम्पदायुषी॥२९॥
कुलधर्मान् समाश्रित्य आचारं यो न पालयेत्। यथेष्टचारिणस्तस्य महापातकिनः प्रिये॥३०॥
आपदो दुरितं रोगा दारिद्र्यं कलहो भयम्। योगिनीनां प्रकोपश्च स्खलितं[४] च पदे पदे॥३१॥
भ्रष्टमानः[५] प्रनष्टश्च तेजोहीनोऽतिदुःखितः। निन्दितः सर्वविद्विष्टो विह्वलः सङ्गवर्जितः॥३२॥
देशाद् देशान्तरं याति कार्यहानिश्च सर्वदा। तत्रापि कुलमार्गस्थाः शाकिन्यः कुलपालिकाः॥३३॥
भक्षयन्ति पुरा तासां वरो दत्तो मयैव तु। तस्मादाचारवान् देवि योगिनीनां प्रियो भवेत्॥३४॥

१. 'मान्' ग. पाठः। २. 'रिक्ता नग्ना उन्मत्ता वापि योषितं' ग. पाठः। ३. 'मनुक्रमात्' क. पाठः। 'मविक्रमात्' ख. पाठः। 'व्याधि' ग. पाठः। ४. 'तानि' ग. पाठः। ५. 'भ्रममाणः' क. पाठः।

सदाचारेण देवत्वं योगिनीवीरमेलनम्। सम्प्राप्नुवन्ति तिर्यक्त्वं कौलिकास्तद्विपर्ययात्।। ३५।।
संस्कारेण विहीनत्वाद् गुरुवाक्यस्य लङ्घनात्। आचारलङ्घनाद् देवि कौलिक: पतितो भवेत्।।३६।।
नित्यं नैमित्तिकं काम्यं मन्त्रतन्त्रादिलोपजम्। अनर्हपशुदु:सङ्गमन्त्रसाङ्कर्यसम्भवम् ।। ३७।।
गुप्तप्रकटसम्भूतं ज्ञानाज्ञानकृतं प्रिये। एवमादिषु दोषेषु पापस्य गुरुलाघवम्।। ३८।।
देशं कालं वयो वित्तं सम्यग् ज्ञात्वा यथाविधि। प्रायश्चित्तं गुरुर्दद्यात् सर्वपापविशुद्धये।।३९।।
शिष्योऽपि च तथा प्रोक्तं प्रायश्चित्तं समाचरेत्। अथवा सर्वपापानां गुरुनामजपस्मृति:।।४०।।
जाम्बूनदस्य कालुष्यं परिशुद्धं यथाग्निना। अनाचारस्य मालिन्यं प्रायश्चित्ताग्निना दहेत्।।४१।।
बहुनात्र किमुक्तेन रहस्यं शृणु पार्वति। वर्णाश्रमाणां सर्वेषामाचार: सद्गतिप्रद: ।।४२।।
गुरुस्त्विवारमाचारं कथयेत् कुलनायिके। तन्न गृह्णाति शिष्यश्चेत्तदा पापं गुरोर्न हि।।४३।।
मन्त्रिदोषश्च राजानं भार्यादोष: पतिं यथा। तथा प्राप्नोत्यसन्देहं शिष्यपापं गुरु: प्रिये।।४४।। इति

अन्यत्र प्रयोगसारे —

देवस्थाने गुरुस्थाने श्मशाने वा चतुष्पथे। पादुकासनविण्मूत्रमैथुनादि विवर्जयेत् ।। १।।
देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवता:। सिद्धं सिद्धाधिवासांश्च श्रीपूर्वं समुदीरयेत्।। २।।
प्रमत्तामन्त्यजां कन्यां पुष्पितां पतितस्तनीम्। विरूपां मुक्तकेशीं च कामार्ता च न[1] निन्दयेत्।।३।।
कन्यायोनिं पशुक्रीडां दिग्वस्त्रां प्रकटस्तनीम्। नालोकयेत् पद्रव्यं परदारांश्च वर्जयेत्।।४।।
धान्यगोगुरुविप्राग्निविद्याकोशगृहान्[3] प्रति। नैव प्रसारयेत् पादौ नैतानपि च लङ्घयेत्।।५।।
आलस्यमदसम्मोहशाठ्यपैशुन्यविग्रहान्। असूयामात्मसम्मानं परनिन्दां च वर्जयेत् ।।६।।
लिङ्गिनं व्रतिनं विप्रं वेदवेदाङ्गसंहिता:। पुराणागमशास्त्राणि कल्पांश्चापि न दूषयेत् ।।७।।
युगं मुसलमश्मानं दाम चुल्लीमुलूखलम्। शूर्पं सम्मार्जनीं दण्डं ध्वजं वैडूर्यमायुधम्।।८।।
कलशं चामरं छत्रं दर्पणं भूषणं तथा। भोगयोग्यानि चान्यानि योग[4]द्रव्याणि यानि च।।९।।
महास्थानेषु वस्तूनि यानि वा देवतालये। दिव्योक्तानि पदार्थानि भूताविष्टानि यानि वै।। १०।।
लङ्घयेज्जातु नैतानि नैतानि च पदा स्पृशेत्। या गोष्ठी लोकविद्विष्टा या च स्वैरं विसर्पिणी।।११।।
परहिंसात्मिका या च न तामवतरेत् क्वचित्। प्रतिग्रहं न गृह्णीयादात्मभोगविधित्सया।। १२।।
देवतागुरुपूजार्थं यत्नतोऽप्यर्जयेद्धनम्। धारयेदार्जवं सत्यं सौशील्यं समतां धृतिम्।। १३।।
क्षान्तिं दयामनास्थां च दिव्यां शक्तिं च सर्वदा। विभीतकार्ककारञ्जस्नुहिच्छायां न संश्रयेत्।। १४।।
स्तम्भदीपमनुष्याणामन्येषां प्राणिनां तथा । नखाग्रकेशनिर्धूतस्नानवस्त्रघटोदकम् ।। १५।।
एतत्सर्वं त्यजेद् दूरं खरश्वाजरजस्तथा। न निन्देत् कारणं देवं न शास्त्रं देवनिर्मितम्।। १६।।
न गुरुं साधकं चैव लिङ्गच्छायां न लङ्घयेत्। नाद्यान्न लङ्घेन्निर्माल्यं तदद्याच्छिवदीक्षित:।। १७।।

---

१. 'कामाश्च' ख. पाठ:। २. 'न निवेदयेत्' क. पाठ:। ३. 'नराग' क. ख. पाठ:। ४. 'यावद्व' क. पाठ:।

न लङ्घयेद् गुरोराज्ञामुत्तरं न वदेत्तथा। रात्रौ दिवा च तस्याज्ञां दासवत् परिपालयेत्।। १८।।
असत्यमशुभं तद्वद् बहुवादं परित्यजेत्। अप्रियं च तथालस्यं कामक्रोधौ विशेषतः।। १९।।
अप्रच्छन्नमुखो ब्रूयाद् गुरोरग्रे कदाचन। अभिमानं न कुर्वीत धनधान्याश्रमादिभिः ।। २०।।
गुरुद्रव्यं न भोक्तव्यं तेनादत्तं कदाचन। दत्तं प्रसादवद् ग्राह्यं लोभतो न कदाचन।। २१।।
अद्वैतं देवपूजां च गुरोरग्रे परित्यजेत्। पादुकायोगपट्टादिगुरुचिह्नानि सादरम् ।। २२।।
न लङ्घयेत् स्पृशेन्नैव पादाभ्यां प्रणमेत् सदा। पर्यङ्कशयनं तद्वत्तथा पादप्रसारणम्।। २३।।
अङ्गभङ्गं च लीलां च न कुर्याद् गुरुसन्निधौ। गमनागमने कुर्यात् प्रणम्य गुरुपादुकाम्।। २४।।
छायां न लङ्घयेत्तद्वन्न गच्छेत् पुरतो गुरोः। पश्चात् पादेन निर्गच्छेत् प्रणम्य च गुरोर्गृहात्।। २५।।
गुरोरग्रे न कुर्वीत प्रभावं शिष्यसङ्ग्रहम्। अहङ्कारं न कुर्वीत नोल्वणं धारयेद्वपुः।। २६।।
प्रगुरोः संनिधौ नैव स्वगुरुं प्रणमेद् बुधः। नमस्काराय चोद्युक्तं गुरुर्दृष्ट्वा निवारयेत्।। २७।।
नाभियोगं गुरोर्दद्याद् युष्मदा नैव भाषयेत्। उपयुक्तं परेणैव यदि वा दीक्षितेन तु।। २८।।
छत्रोपानहवस्त्राद्यं नोपयुञ्जीत कर्हिचित्। असम्पत्तावथापत्सु न दोषः क्षालिते सति।। २९।।
स्वकुले दीक्षितानां च आचार्याणां तथैव च। उपयुक्तौ न दोषः स्यात्तद्दत्तादरितावपि(?)।। ३०।।
मन्त्रोपभुक्तमन्नाद्यं तथा यन्मन्त्रसंस्कृतम्। प्राप्तमायतनाद् देव्याः शिरसा प्रणतो वहेत्।। ३१।।
निक्षिपेदम्भसि ततो न पतेदवनौ यथा। जातायामापदि भ्रंशे शपथं (कु?गु) रुसंज्ञकम्।। ३२।।
न कुर्याद् भगवत्संज्ञं प्रमादेन क्रियेत चेत्। तदर्थं निर्वहेद्यत्नादन्ते पूजाजपाहुतीः।। ३३।।
अनिर्वाहे तु कार्यस्य यदर्थं शपथः कृतः। प्रायश्चित्तजपो देवि सहस्रं स्वमनोस्ततः।। ३४।।
लोकोद्वेगकरी या च या च मर्मनिकृन्तनी। स्थित्युद्वेगकरी या च तां गिरं नैव भाषयेत्।। ३५।।
रम्यमप्युज्ज्वलमपि मनसोऽपि समीप्सितम्। लोकविद्वेषणं वेषं न गृह्णीयात् कथञ्चन।। ३६।।
अत्रोक्तान् यः सदा ह्येतानैहिकामुष्मिकोचितान्। आचारानादृतः[१] शान्तिं दीक्षितः सोऽधिगच्छति।।३७।।
स्त्रीणां विशेषतो दद्यात्समयांश्चामलाशयः। पालनात् समयानां तु सिद्धिरुत्पद्यतेऽचिरात्।। ३८।।
मन्त्रः साम्मुख्यमायाति समयस्थस्य सर्वदा। सिद्धयः समयस्थस्य सर्वाः स्युर्मोक्षपश्चिमाः।। ३९।।
अयने विषुवे चैव ग्रहणे सूर्यचन्द्रयोः। अष्टम्यां पूर्णिमायां च तेषु नैमित्तिको जपः।। ४०।।
नित्यात् त्रिगुणितः सोऽथ पूजां चैव समाचरेत्। न्यायार्जितैः साधनैश्च दानहोमार्चनादिकम्।। ४१।।
कुर्यान्न चेदधो याति भक्त्या कुर्वन्नपीश्वरि।। इति समयाचारः।।

नारदपाञ्चरात्रे –

ब्राह्मणः सर्वकालज्ञः कुर्यात् सर्वेष्वनुग्रहम्। तदभावाद् द्विजश्रेष्ठ शान्तात्मा भगवन्मयः।। १।।
भावितात्मा च सर्वज्ञः शास्त्रज्ञः सत्क्रियापरः। सिद्धित्रयसमायुक्त आचार्यत्वेऽभिषेचितः।। २।।

१. 'नाश्रितः' ख. पाठः। 'नावृतः' ग. पाठः।

क्षत्रविट्शूद्रजातीनां क्षत्रियोऽनुग्रहक्षमः। क्षत्रियस्यापि च गुरोरभावादीदृशो यदि ॥ ३॥
वैश्यः स्या(त्तैः?त्ते) न कार्यः स्याद् द्वये नित्यमनुग्रहः। सजातीयेन शूद्रेण तादृशेन महामते॥४॥
अनुग्रहाभिषेकौ च कार्यौ शूद्रस्य सर्वदा। वर्णोत्तमेऽथ च गुरौ सति वा वि[1]श्रुतेऽपि वा॥ ५॥
सदेशतो[2]ऽथवान्यत्र नेदं कार्यं शुभार्थिना। विद्यमाने तु यः कुर्याद्यत्र तत्र विपर्ययम्॥ ६॥
तस्येहामुत्र नाशः स्यात्तस्माच्छास्त्रोक्तमाचरेत्। क्षत्रविट्शूद्रजातीयः प्रातिलोम्येन दीक्षयेत्॥७॥
बह्वाशी दीर्घसूत्री च विषयादिषु लोलुपः। हेतुवादरतो दुष्टो वाग्वादी गुणनिन्दकः॥ ८॥
अरोमा बहुरोमा च निन्दिताश्रमसेवकः। कालदन्तोऽसितोष्ठश्च दुर्गन्धिश्वासवाहकः॥ ९॥
दुष्टलक्षणसम्पन्नो यद्यपि स्वयमीश्वरः। बहुप्रतिग्रहासक्त आचार्यः श्रीवहावहः॥ १०॥ इति।

ज्ञानोन्नयमते —

निर्वीर्यं च पितुर्मन्त्रं तथा मातामहस्य च। सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च॥ १॥
भिक्षुभ्यश्च वनस्थेभ्यो वर्णिभ्यश्च महेश्वरि। गृहस्थो भोगमोक्षार्थी मन्त्रदीक्षां न चाचरेत्॥ २॥
त्यक्ताग्नयः क्रियाहीना यतयो ह्यपरिग्रहाः। वनस्थास्तादृशश्चैव वर्णी[3]न्यूना अमी यतः॥ ३॥
अतस्तेषां नाधिकारो दीक्षादाने महेश्वरि॥ इति।

भैरवीतन्त्रे —

तपस्वी सत्यवादी च गृहस्थः स्वस्थमानसः। दीक्षायां न गुरुत्वेन यतीन् वैखानसान् प्रिये॥ १॥
वृणुयाद् भोगमोक्षार्थी गृहस्थो वर्णिनं तथा। इति।

गुरुशिष्यपरीक्षा तु श्रीकुलार्णवे—

ज्ञानेन क्रियया वापि गुरुः शिष्यं परीक्षयेत्। संवत्सरं तदर्धं वा तदर्धं वापि यत्नतः॥ १॥
उत्तमानधमे कार्ये नीचानुत्तमकर्मणि। प्राणद्रव्यप्रदानाद्यैरादेशैश्च समासमैः॥ २॥
तन्मर्मसूचनैर्वाक्यैर्मायाभिः क्रूरचेष्टितैः। पक्षपातैरुदासीनैरनेकैश्च मुहुर्मुहुः॥ ३॥
आकृष्टस्ताडितश्चापि यो विषादं न याति च। गुरुः कृपां करोतीति मुदा सन्चिन्तयेत् सदा॥४॥
श्रीगुरोः स्मरणे वापि कीर्तने दर्शनेऽपि वा। वन्दने परिचर्य्यायामाह्वाने प्रेषणे प्रिये॥ ५॥
आनन्दकम्परोमाञ्चस्वरनेत्रादिविक्रियाः। येषां स्युस्तेऽत्र योग्याः स्युः दीक्षासंस्कारकर्मसु॥६॥
शिष्योऽपि लक्षणैरेतैः कुर्याद् गुरुपरीक्षणम्। आनन्दाद्यैर्जपैः स्तोत्रैर्ध्यानहोमार्चनादिभिः॥ ७॥
ज्ञानोपदेशसामर्थ्यं मन्त्रसिद्धिमपीश्वरि। बोधकत्वं च विज्ञाय शिष्यो भूयान्न चान्यथा॥८॥ इति।

अथ शिष्याणामधममध्यमोत्तमत्वं तत्रैव —

आदिमध्यावसानेषु योग्या भक्तिनिपाततः। अधमाः मध्यमाः श्रेष्ठाः शिष्या अपि प्रकीर्तिताः॥९॥
आदौ भक्तिर्भवेद् देवि दीक्षायां संवदन्ति ये। पुनर्विध्वस्तभक्तास्त आदिमक्तः प्रकीर्तिताः॥ १०॥

---

१. 'पि' क. पाठः। २. 'स्वदेशेऽप्यथ' ख. पाठः। ३. 'वर्ण' ख. पाठः।

दीक्षासमयसम्प्राप्ता ज्ञानविज्ञानवर्जिताः। भक्त्या प्रध्वस्तजाड्या ये मध्ययोग्याः प्रकीर्तिताः॥ ११॥

आदौ भक्तिविहीनो[1] यो मध्ये भक्तोऽस्ति वा न वा। अन्ते प्रभूतभक्तश्चाप्य[2]न्तयोग्या भवन्ति ते।१२।इति।

अथ वर्णविभागेन योग्यताकालविशेषस्तत्र शारदायाम् —

एकाब्देन भवेद्योग्यो ब्राह्मणस्तद्द्वयान्नृपः। वैश्यो वर्षैस्त्रिभिः शूद्रश्चतुर्भिर्वत्सरैर्गुरौ॥ १॥

सुशुश्रूषुः[3] परिग्राह्यो दीक्षायागव्रतादिषु। इति।

अत्र शूद्राणां मन्त्रेष्वनधिकारः श्रूयते। यथा महाकपिलपञ्चरात्रे—

न वेदप्रणवं त्यक्त्वा मन्त्रो वेदसमुद्भवः। तस्माद् वेदः परो मन्त्रो वेदाङ्गश्चागमः स्मृतः॥ १॥

वश्याकर्षादिकं कर्म दृष्टादृष्टफलप्रदम्। वेदेन साध्यते सर्वं ग्रहयज्ञादिभिः कलौ॥ २॥

न वेदेन विना यज्ञा न वेदा यज्ञवर्जिताः। तस्माद्वेदः परो मन्त्रो न मन्त्रो वेद उज्झितः॥३॥

न मन्त्रे चाधिकारोऽस्ति शूद्राणां नियमं परम्[4]। मन्त्राभावादमन्त्रेण भासितं सर्वकर्म हि।४।इति।

तथा शातातपसंहितायाम् —

यावन्त्यर्णानि मन्त्राणां शूद्राय प्रतिपादयेत्। तावत्यो ब्रह्महत्याः स्युः स्वयमाह प्रजापतिः॥ १॥ इति।

कुत्रचिदनिषेधोऽपि श्रूयते, भविष्ये —

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये शुचयोऽमलाः। तेषां मन्त्राः प्रदेया वै न तु सङ्कीर्णधर्मिणाम्॥ १॥

ब्रह्मक्षत्रविशः शूद्रा अर्चायां शुद्धबुद्धयः। गुरुदेवद्विजार्चासु रताः स्युरधिकारिणः॥ २॥

योगिनीतन्त्रवचनात्।

वैदिको मिश्रिको वापि विप्रादीनां विधीयते। तान्त्रिको विप्रभक्तस्य शूद्रस्यापि प्रकीर्तितः॥ १॥

स्वागमोक्तेन विधिना शूद्रैश्चापि प्रपूजनम्। कर्तव्यं श्रद्धया विष्णोश्चिन्तयित्वा पतिं हृदि॥२॥

स्त्रीणामप्यधिकारोऽस्ति विष्णोराराधनादिषु। पतिप्रियरतानां च श्रुतिरेषा सनातनी ॥ ३॥

इति पद्मपुराणात्। पतिप्रियेति सधवापरम्। चिन्तयित्वेति मृतभर्तृकापरमिति ज्ञेयम्। तथा चोक्तं तन्त्रराजे —

द्विजातीनां तु संस्कारं वेदोक्तं समुदाहृतम्। तेषां च तत्र तत्रापि विद्यया विधिमाचरेत्॥ १॥

सविद्यास्मरणं कुर्यात् क्रियां सर्वत्र चोदिताम्। तेन तन्मयतासिद्धिः सर्वत्र भवति ध्रुवम्॥ २॥

अन्येषामपि वर्णानां विद्यया समुपाचरेत्। इति।

भविष्योत्तरे —

या स्त्री भर्त्रा वियुक्ता च शुभा स्वातन्त्र्यसंयुता[5]। सा च मन्त्राणि गृह्णातु सभर्त्री तद (व?नु) ज्ञया।१॥

विना स्वधर्मं यत्किञ्चिद् देवताराधनादिकम्। परिभ्रश्येत तद्यस्मात् क्षणात् सैकतहर्म्यवत्॥२।इति।

कुलार्णवे —

---

१. 'ना ये मध्यभक्तास्तु ये मताः' ग. पाठः। २. 'अन्ते भक्ताः प्रबुद्धाः स्युरन्त' ग. पाठः। ३. 'स' ख. पाठः।
४. 'तं पुरा' ख. पाठः। ५. 'स्वान्तरसंयुता' क. पाठः।

विधवायाः सुतादेशात् कन्यायाः पितुराज्ञया। नाधिकारः स्वतो नार्या भार्याया भर्तुराज्ञया।।१।।
स्त्रीशूद्राणामयं मन्त्रो नमोन्तश्च शुभावहः। एतज्ज्ञात्वा महासेन चण्डालानपि दीक्षयेत्।।२।।

इति रुद्रयामलात्। अयं प्रासादमन्त्रः। तथा च—

शुचिव्रततमाः शूद्रा धार्मिका द्विजसेवकाः। स्त्रियः पतिव्रताश्चान्ये प्रतिलोमानुलोमजाः।। १ ।।
लोकाश्चण्डालपर्यन्ताः सर्वेऽप्यत्राधिकारिणः। स्वजातिधर्मनिरताः भक्ताः सर्वेश्वरस्य च।।२।।
उपदेशमशेषाणां तत्तज्जात्यनुसारतः। न वैदिकं जपेच्छूद्रः स्त्रियश्चैव कदाचन।।३।।
नमोऽन्तं शिवमन्त्रं वा वैष्णवं चोच्यते[1] बुधैः। इति।

याज्ञवल्क्योऽपि —

स्वाहाप्रणवसंयुक्तं मन्त्रं शूद्रे ददद्द्विजः। शूद्रो निरयगामी स्याद्विप्रः शूद्रत्वमाप्नुयात्।। १ ।। इति।

यामले —

एकद्वित्रिचतुष्पञ्चवर्षाण्यालोच्य योग्यताम्। भक्तियुक्त[2]गुणांश्चापि क्रमाद्वर्णे स[3]सङ्करे।। १ ।। इति।

अथ मन्त्राणां ब्रह्मक्षत्रादिभेदः कुलार्णवे —

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो भवति वै मनुः। अनुलोमेन देयः स्यात् प्रतिलोमेन वै क्वचित्।। १ ।। इति।

वामकेश्वरे —

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः पौरस्त्यजातयः। चतुर्विधास्ते मनवः क्रमाद्वर्णे ससङ्करे।। १ ।। इति।

सौत्रामणीतन्त्रे —

मायाबीजं ब्राह्मणः स्याच्छ्रीबीजं क्षत्रियः स्मृतः। कामबीजं भवेद् वैश्यो वाग्भवं शूद्र ईरितः।। १ ।।
चतुर्बीजपरित्यक्तो मन्त्रः पौरस्त्यसंज्ञकः। चतुर्बीजं ब्राह्मणानां क्षत्रियाणां त्रिबीजकम्।। २ ।।
बीजद्वयं तु वैश्यानां शूद्राणां त्वेकबीजकम्। इति।

कुलमूलावतारे— श्रीदेव्युवाच—

शाक्तशाम्भवसौराणां गाणेशे वैष्णवेषु च। ब्रह्मक्षत्रियवर्णानां सङ्कराणां विशेषतः।। १ ।।
प्रवृत्तिं श्रोतुमिच्छामि साधकानां हिताय च। येषु येषु च ये मन्त्रास्तद्भेदं ब्रूहि शङ्कर।। २ ।।

ईश्वर उवाच—

उमामहेश्वरं चैव दक्षिणामूर्त्यघोरकम्। हयग्रीवं च वाराहमष्टाक्षरमतः परम्।। ३ ।।
प्रणवाद्यं वासुदेवं लक्ष्मीनारायणं तथा। वर्णत्रये तु दातव्यं नान्यवर्णे कदाचन।। ४ ।।
पाशुपतं नारसिंहं तथा चैव सुदर्शनम्। वर्णद्वये च दातव्यं नान्ययोश्चैव कर्हिचित्।। ५ ।।
अग्निमन्त्राश्च ये केचित् सूर्यमन्त्राश्च ये तथा। तारादिघृणिमन्त्राश्च दातव्याश्च त्रिवर्णके।।६।।
आनुष्टुभं शक्तिमन्त्रास्तथा विन्ध्यनिवासिनी। नीलसारस्वतं चापि दातव्याश्चादिवर्णके।। ७ ।।

---

१. 'चेष्यते' क. ख. पाठः। २. 'युक्तान्' ख. पाठः। ३. 'सुसं' ग. पाठः।

मातङ्गीत्युग्रतारा च कालिका श्यामला तथा। छिन्नमस्ता च बाला च दातव्या सर्ववर्णके।।८।।
तारादिस्तु गणेशश्च हरिद्रासंज्ञकस्तथा। त्रिवर्णेष्वेव दातव्यः कथितः सर्वसिद्धिदः।। ९।।
त्रिपुराया(ञ्च?श्च)ये मन्त्रा ये मन्त्रा वटुकादयः। सर्ववर्णेषु दातव्याः पुरन्ध्रीणां विशेषतः।। १०।।
मायां लक्ष्मीं च प्रणवं वाग्भवं चान्यबीजकम्। एतद्बीजेन संयुक्तं दातव्यं चादिवर्णके।। ११।।
मायां लक्ष्मीं वाग्भवं च दातव्यं क्षत्रियेष्वपि। लक्ष्मीं च वाग्भवं चैव कथितं वैश्यवर्णके।। १२।।
वाग्भवं चान्यबीजं च शूद्राणां समुदीरितम्। हृदादि हुंफट्कारादि सङ्कराणां प्रशस्यते।। १३।।

इति। कुलप्रकाशतन्त्रे —

उत्पन्ना मनवः सर्वे पञ्चाशद्वर्णभेदतः। द्विविधास्ते च सम्प्रोक्ता मन्त्रविद्याविभागतः।। १।।
स्त्रीमन्त्रा वह्निजायान्ता हृदयान्ता नपुंसकाः। शेषाः पुमांस इत्युक्ताः स्त्रीमन्त्राश्चापि शान्तिके।।२।।
नपुंसकाः स्मृता मन्त्रा विद्वेषे चाभिचारके। पुमांसः स्युः स्मृताः सर्वे वश्योच्चाटनकर्मसु।। ३।।
अग्नीषोमस्वरूपाः स्युर्मनवः सर्व एव हि। रेफौङ्कारवियत्प्राया आग्नेयाः क्रूरकर्मणि।।४।। इति।

नारायणीयेऽपि—

तारान्त्याग्निवियत्प्रायो मन्त्र आग्नेय इष्यते। शिष्टः[1] सौम्यः प्रशस्येते[2] कर्मणोः क्रूरसौम्ययोः।।१।।
आग्नेयमन्त्रः सौम्यः स्यात् प्रायशोऽन्ते नमोऽन्वितः। सौम्यमन्त्रस्तथा ज्ञेयः फट्कारेणान्वितस्ततः।।२।।
पिङ्गलायां गते वायौ प्रबुद्धा ह्यग्निरूपिणः। इडां गते तु पवने बुध्यन्ते सोमरूपिणः।। ३।।
पिङ्गलेडागते वायौ प्रबुद्धाः सर्व एव हि। प्रबुद्धाः मनवः सर्वे साधकानां फलन्त्युमे।।४।। इति।

बृहन्नारायणीयेऽपि—

सुप्तः प्रबुद्धमात्रो वा मन्त्रः सिद्धिं न यच्छति। स्वापकालो वामवहो जागरो दक्षिणावहः।। १।।
आग्नेयस्य मनोः सौम्यमन्त्रस्यैतद्विपर्ययः। प्रबोधकालं जानीयादुभयोरुभयावहः ।। २।।
स्वाप[3]काले तु मन्त्रस्य जपोऽनर्थफलप्रदः। इति।

शिवयामले—

सम्पुटीकृत्य यत्नेन लान्तानाद्यान् सबिन्दुकान्। पुनश्च सविसर्गांस्तान् क्षकारं केवलं पठेत्।।१।।
एवं जप्तोपदिष्टश्चेत्[4] प्रबुद्धः शीघ्रसिद्धिदः। इति।
अथ कालीमते प्रोक्तं मन्त्राणां दोषसञ्चयम्। तत्र तत्परिहारं च बाह्याभ्यन्तरभेदतः।। १।।
वक्ष्यामि तत्तत्तन्त्रोक्तं साधकानां हिताय च।। इति।

तत्र शारदायाम् —

छिन्नादिदुष्टमन्त्रास्ते पालयन्ति न साधकम्। छिन्नो रुद्धः शक्तिहीनः पराङ्मुख इतीरितः।। १।।
बधिरो नेत्रहीनश्च कीलितः स्तम्भितस्तथा। दग्धस्त्रस्तश्च भीतश्च मलिनश्च तिरस्कृतः।। २।।

---
१. 'शेषः' ख. पाठः २. प्रशस्तौ तौ, क. ख. पाठः। ३. 'सायंकाले' ग. पाठः। ४. 'मनूपदिष्टः' ख. पाठः।

भेदितश्च सुषुप्तश्च मदोन्मत्त उदाहृतः। मूर्च्छितो हृतवीर्यश्च हीनः प्रध्वस्तबालकौ॥ ३॥
कुमारस्तु युवा प्रौढो वृद्धो निस्त्रिंशकस्तथा। निर्बीजः सिद्धिहीनश्च म (त्रक्रूर?न्दःकूट)स्तथा पुनः॥४॥
निरंशकः सत्त्वहीनः केकरो बीजहीनकः। धूमितालिङ्गितौ स्यातां मोहितश्च क्षुधार्तकः॥ ५॥
अतिदृप्तोऽङ्गहीनश्चाप्यतिक्रुद्धः समीरितः। अतिक्रूरश्च सव्रीडः शान्तमानस एव च॥ ६॥
स्थानभ्रष्टश्च विकलश्चातिवृद्धः प्रकीर्तितः। निस्नेहः पीडितश्चापि वक्ष्याम्येषां च लक्षणम्॥७॥इति।

अथैतेषां दोषाणां लक्षणानि तत्रैव —

मनोर्यस्यादिमध्यान्तेष्वानिलं बीजमुच्यते। संयुक्तं वा वियुक्तं वा स्वराक्रान्तं त्रिधा पुनः॥ ८॥
चतुर्धा पञ्चधा वाथ स मन्त्रश्छिन्नसंज्ञकः। आदिमध्यावसानेषु भूबीजद्वन्द्वलाञ्छितम् ॥ ९॥
रुद्धमन्त्रः स विज्ञेयो भुक्तिमुक्तिविवर्जितः। मायात्रितत्त्वश्रीबीजरावहीनस्तु यो मनुः ॥ १०॥
शक्तिहीनस्तु कथितो यस्य मध्ये न विद्यते। कामबीजं मुखे माया शिरस्यङ्कुशमेव च॥ ११॥
असौ पराङ्मुखः प्रोक्तो हकारो बिन्दुसंयुतः। आद्यन्तमध्येष्विन्दुर्वा न भवेद्बधिरः स्मृतः॥१२॥
पञ्चवर्णो मनुर्य (:) स्याद्रेफार्केन्दुविवर्जितः। नेत्रहीनः स विज्ञेयो दुःखशोकामयप्रदः॥ १३॥
आदिमध्यावसानेषु हंसः प्रासादवाग्भवौ। हकारो बिन्दुमाञ्जीवो[१]रावश्चापि चतुष्कलः॥ १४॥
माया नमामि च पदं नास्ति यस्मिन् स कीलितः। एकं मध्ये द्वयं मूर्ध्नि यस्मिन्नस्त्रपुरन्दरौ॥१५॥
विद्येते स तु मन्त्रः स्यात् स्तम्भितः सिद्धिरोधनः। बह्निर्वायुसमायुक्तो यस्य मन्त्रस्य मूर्धनि॥१६॥
सप्तधा दृश्यते तं तु दग्धं मन्येत[२] मन्त्रवित्। अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टाभिर्दृश्यतेऽक्षरैः॥१७॥
त्रस्तः सोऽभिहितो यस्य मुखे न प्रणवः स्थितः। शिवो वा शक्तिरथवा भीताख्यः स प्रकीर्तितः॥१८॥
आदिमध्यावसानेषु भवेन्मार्णचतुष्टयम्। यस्य मन्त्रस्य मलिनो मन्त्रवित्तं विवर्जयेत्॥ १९॥
यस्य मध्ये दकारो वा क्रोधो वा मूर्धनि द्विधा। अस्त्रं तिष्ठति मन्त्रस्य स तिरस्कृत ईरितः॥२०॥
ओंद्वयं प्रमुखे शीर्षे वषडस्त्रं च मध्यतः। यस्यासौ भेदितो मन्त्रस्त्याज्यः सिद्धिषु सूरिभिः॥२१॥
त्रिवर्णो हंसहीनो यः सुषुप्तः स उदाहृतः। मन्त्रो वाप्यथवा विद्या सप्ताधिकदशाक्षरा[३]॥२२॥
फट्कारपञ्चकादिर्यो मदोन्मत्त उदाहृतः। तद्वदस्त्रं स्थितं मध्ये यस्य मन्त्रः स मूर्च्छितः॥२३॥
विरामस्थानगं यस्य हृतवीर्यः स कथ्यते। आदौ मध्ये तथा मूर्ध्नि चतुरस्त्रयुते मनुः॥ २४॥
ज्ञातव्यो हीन इत्येष यः स्यादष्टादशाक्षरः। एकोनविंशत्यर्णो वा यो मन्त्रस्तारसंयुतः॥२५॥
हृल्लेखाङ्कुशबीजाढ्यस्तं प्रध्वस्तं प्रचक्षते। सप्तवर्णो मनुर्बालः कुमारोऽष्टाक्षरः स्मृतः॥२६॥
षोडशार्णो युवा प्रौढश्चत्वारिंशल्लिपिर्मनुः। त्रिंशद्वर्णश्चतुःषष्टिवर्णो मन्त्रः शताक्षरः॥२७॥
चतुःशताक्षरश्चापि वृद्ध इत्यभिधीयते। नवाक्षरो ध्रुवयुतो मनुर्निस्त्रिंश ईरितः ॥२८॥
यस्यावसाने हृदयं शिरोमन्त्रस्तु मध्यतः। शिखा वर्म च न स्यातां वौषट् फट्कार एव च॥२९॥

---

१. 'रावं चापि चतुष्कलम्' ग. पाठः। २. 'मन्वीत तन्त्रवित्' ग. पाठः। ३. 'शताक्षरा' क. पाठः।

शिवशक्त्यर्णहीनो वा स निर्बीज इतीरितः। एषु[1] स्थानेषु फट्कारः षोढा यस्मिन् प्रदृश्यते।।३०।।
स मन्त्रः सिद्धिहीनः स्यान्मन्दः पङ्क्त्यक्षरो मनुः। कूट एकाक्षरो मन्त्रः स एवोक्तो निरंशकः।।३१।।
द्विवर्णः सत्त्वहीनः स्याच्चतुर्वर्णस्तु केकरः। षडक्षरो बीजहीनस्त्वर्धसप्ताक्षरो मनुः।। ३२।।
सार्धद्वादशवर्णो वा धूमितः स तु निन्दितः। सार्धबीजत्रयस्तद्वदेकविंशतिवर्णकः ।। ३३।।
विंशत्यर्णस्त्रिंशद्वर्णो यः स्यादालिङ्गितस्तु सः। द्वा[2]विंशत्यक्षरो मन्त्रो मोहितः परिकीर्तितः।।३४।।
चतुर्विंशतिवर्णो यः सप्तविंशतिवर्णकः। क्षुधार्तः स तु विज्ञेयश्चतुर्विंशतिवर्णकः।। ३५।।
एकादशाक्षरो वापि पञ्चविंशतिवर्णकः। त्रयोविंशतिवर्णो वा मन्त्रो दृप्त उदाहृतः।। ३६।।
षड्विंशत्यक्षरो मन्त्रः षट्त्रिंशद्वर्णकस्तथा। त्रिंशदेकोनवर्णो वाप्यङ्गहीनोऽभिधीयते।। ३७।।
अष्टावि[3]शत्यक्षरो य एकत्रिंशदथापि वा। अतिक्रुद्धः स कथितो निन्दितः सर्वकर्मसु।। ३८।।
त्रिंशदक्षरको मन्त्रस्त्रयस्त्रिंशदथापि वा। अतिक्रूरः स गदितो निन्दितः सर्वकर्मसु।। ३९।।
चत्वारिंशतमारभ्य त्रि[4]षष्टिर्यावदक्षरम्। तावत्संख्या निगदिता मन्त्राः सव्रीडसंज्ञकाः।। ४०।।
पञ्चषष्ट्यक्षरा ये स्युर्मन्त्रास्ते शान्तमानसाः। एकोनशतपर्यन्तं पञ्चषष्ट्यक्षरादितः।। ४१।।
ये मन्त्रास्ते निगदिताः स्थानभ्रष्टाह्वया बुधैः। त्रयोदशाक्षरा ये स्युर्मन्त्राः पञ्चदशाक्षराः।। ४२।।
विकलास्तेऽभिधीयन्ते शतं सार्धशतं तथा। शतद्वयं द्विनवतिरेकहीनाथवापि सा[5] ।। ४३।।
शतत्रयं वा यत्संख्या[6] निस्नेहास्ते समीरिताः। चतुःशतान्यथारभ्य यावद्वर्णसहस्रकम्।। ४४।।
अतिवृद्धः प्रयोगेषु परित्याज्यः सदा बुधैः। सहस्राणाधिका मन्त्रा दण्डकाः पीडिताह्वयाः।।४५।।
द्विसहस्राक्षरा मन्त्राः खण्डशः शतधा[7] कृता। ज्ञातव्यास्तोत्ररूपास्ते मन्त्रा एते यथा स्थिताः।।४६।।
तथा विद्याश्च बोद्धव्या मन्त्रिभिः काम्यकर्मसु। दोषानिमानविज्ञाय यो मन्त्रं भजते जडः।।४७।।
सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि। इति।

अथैतेषां श्लोकानां श्रीमदाराध्यमुखादवगतोऽर्थो लिख्यते—तत्र मनोरिति—आदिमध्यान्तेष्विति समुच्चयः। आनिलं यकारबीजं मायाबीजमिति सम्प्रदायः। "मायाबीजस्यनामानि मालिनी शिववल्लरी। वातावर्तिफला वाणीबीजं। शक्ति कुण्डली" इति शैवागमोक्तेः। वायुबीजं संयुक्तमक्षरान्तरयुक्तं वियुक्तं तद्रहितं, मायाबीजं तु दीर्घस्वराक्रान्तम्। उक्तं च लक्षसागरे— "आदिमध्यावसानेषु यस्य मन्त्रस्य दृश्यते। चतुर्धा पञ्चधा द्वेधा चैकवीरं स्वरान्वितम्। वायुबीजमसौ मन्त्रो भेदितः परिकीर्तितः" इति वायुबीजं यकारः, एकवीरः हः स्वराक्रान्तो दीर्घस्वरयुक्तः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति। तदुदाहरणं तु अघोरेभ्योऽथ ह्रां घोरभ्यो ह्रीं घोरघोरतरेभ्यो ह्रूं सर्वतः सर्वशर्वेभ्यो ह्रैं नमस्ते रुद्ररूपेभ्यः ह्रौ इति। आदिमध्यावसानेष्विति— भूबीजं लकारः। अत्र तु स्थानत्रयेऽपि प्रतिस्थानं लकारद्वयमित्युक्तं तत्रान्तरदर्शनादाद्यन्तयोर्द्वयं मध्ये त्रयमिति ज्ञेयम्। तदुक्तं लक्षसागरे— 'द्विधा पूर्वं त्रिधा मध्ये द्विधान्ते च पुनः प्रिये। वज्रियुक्तस्तु यो मन्त्रः स निरुद्ध(:) प्रकीतितः''इति।। वज्री लकारः। पिङ्गलामते—आदौ द्विधा त्रिधा मध्ये पुनश्चान्ते द्विधा भवेत्। इन्द्रबीजमसौ मन्त्रो रुद्ध इत्यभिधीयते" इति।

---

१. 'यस्य' क. पाठः। २. 'द्वात्रिंशद' ग. पाठः। ३. 'अष्टात्रिं' क. पाठः। ४. 'द्विष' ग. पाठः। ५. 'वा' क. पाठः। ६. 'यावत्संख्या' ग. पाठः। ६. 'सप्तधा' क. ख. पाठः।

मायेति—माया भुवनेश्वरीबीजं त्रितत्त्वं प्रणवो हुङ्कारो वा, रावः, क्रोङ्कारः, एकत्रेति सर्वे नापेक्षिताः।

मायाबीजं न यत्रास्ति त्रितत्त्वं रावमेव च। श्रीगृहं वापि मन्त्रोऽसौ शक्तिहीनः प्रकीर्तितः।।

इति तन्त्रान्तरवचनात्।

"मायाबीजं त्रितत्त्वं वा श्रीगृहं यत्र नास्ति चेत्। शक्तिहीन इति ख्यातः सामर्थ्यं हन्ति मन्त्रिणः।"

इति पिङ्गलामताच्च।। यस्येति—मुखे आदौ, शिरस्यान्ते। चकारः समुच्चये। उक्तं च लक्षसागरे—

"यस्य कामकलाबीजं मध्यस्थाने न विद्यते। आदौ मायाङ्कुशश्चान्ते विज्ञेयोऽसौ पराङ्मुखः।।"इति। पिङ्गलामतेऽपि —

"कामबीजं न यन्मध्ये मायाद्यवन्तिमोऽङ्कुशः। पराङ्मुख इति प्रोक्तो गर्हितः सर्वकर्मसु।।"

इति। हकार इति—इन्दुः सकारः बिन्दुयुक्तत्वमस्यापि आद्यन्तमध्येष्विति स्थानत्रयेऽपि नापेक्षितः। उक्तं च लक्षसागरे —

"शून्यबिन्दुसमायुक्तमाद्यन्ते चापि मध्यतः। न भवेज्जीवबीजं वा यस्यासौ बधिरः स्मृतः"।।

इति। पञ्चवर्ण इति—अर्को हकारः इ (न्द्रः?न्दुः) सकारः वह्न्यर्केन्दूनां देवतानेत्रत्वेन मन्त्राणामपि नेत्रत्वात्। पिङ्गलामते —

"पञ्चाक्षरस्तु यो मन्त्रः पावकेन्द्वर्कवर्जितः। नेत्रहीन इति ज्ञेयो दुःखशोकभयावहः"।।

इति। आदीति—हंसः स्वरूपं, प्रासादो हौं, वाग्भवः ऐं, जीवः सकारः। स कीदृशो हकारोबिन्दुमान् हकारौकारबिन्दुभिर्युक्त इत्यर्थः। तेन च स्हौं, इति बीजम्। तथा च पिङ्गलामते—

"अष्टमस्वरसंयुक्तो जीवारूढः सबिन्दुकः। यस्यात्मा दृश्यते नैव किं वा एव चतुष्कलः।।

प्रासादो वाग्भवो हंसं माया वा यत्र दृश्यते। आदिमध्यान्तदेशेषु कीलितं तत्प्रचक्षते"।।

इति। आत्मा हकारः अष्टमस्वरः ओकारस्याष्टमस्वरत्वं ह्रस्वदीर्घयोरेकत्वात् यथा अकडमचक्रे। रावः क्रौं चतुष्कलः हूं। एकमिति—मूर्ध्नि अन्ते। अत्र यथाश्रुतोऽर्थो न भवति किन्तु मध्ये एको लकारोऽन्ते लद्वयम्। यद्वा मध्ये एकः फट्कारः, अन्ते द्विस्त्रिर्वा यत्र दृश्यते स स्तम्भित इत्यर्थः। तथा च पिङ्गलामते—

"सकृन्मध्ये द्विधा प्रान्ते शक्तिबीजं भवेद्यदि। स्तम्भितं तं वदन्तीत्थं मन्त्रं मन्त्रविदो बुधाः" इति।

अन्यत्रापि —

"द्विधा त्रिधा वा षोढा वा मन्त्रान्ते यत्र दृश्यते। महास्त्रं स्तम्भितो मन्त्रः श्रीशिवेन प्रकीर्तितः"।

इति। अत्र मूलश्लोकादेव मध्येऽपीति ज्ञेयः। वह्निरिति—वह्नी रेफः, वायुर्यकारः तद्युक्तः, मूर्धनि आदौ। उक्तं च पिङ्गलामते —

"आदिस्थैः सप्तभिर्बीजैर्मरुतैः पावकाक्षरम्। दीपितं यत्र तं मन्त्रं मायादग्धं प्रचक्षते"।।

इति। अस्त्रमिति—उक्तसंख्याक्षरैरन्तरितः फट्कारो दृश्यत इत्यर्थः।। यस्येति—मुखे आदौ शिवो हकारः, शक्तिः सकारः। एतादृशदोषयुक्तस्य[2] मातृकाहीन इति नामान्तरं वदन्ति। तथा च पिङ्गलामते—

"शिवः शक्तिस्तथौङ्कारो यस्यादौ नास्ति तं मनुम्। वदन्ति मातृकाहीनं हीनसिद्धिप्रदायकम्"।।

इति। आदीति— स्थानत्रयेऽपि मिलित्वा मकारचतुष्कं यत्र दृश्यते इत्यर्थः।

---

१.'ह्रौं' ख. पाठः। २. 'दृशं' दोषयुक्तमात्' क. पाठः।

"आदिमध्यान्तदेशे च चतुर्द्धा यत्र दृश्यते। मार्णो मन्त्रो महेशेन मलिनः स इतीरितः"॥

इति तन्त्रान्तरवचनात्। लक्षसागरेऽपि–

"आदौ मध्ये च शिखरे त्रिधा यत्र तु दृश्यते। मकारो मलिनं विद्यात्तं मन्त्रं मन्त्रवित्सदा"॥

इति। एतयोर्विकल्पः। यस्येति–क्रोधो हुँबीजं, मूर्धनि अन्ते क्रोधदकारयोर्विकल्पः। मूर्धनि द्विधास्त्रमित्यन्वयः। मध्ये दकारहुँकारयोरेकमन्ते फट्द्वयमित्यर्थः। तथा च पिङ्गलामते–

"दकारः क्रोधबीजं वा यस्य मध्ये व्यवस्थितम्। फट्द्वयं च स्थितं प्रान्ते यस्यार्णः स तिरस्कृतः"॥

इति। अन्यत्रापि –

"यस्य मध्ये दकारश्च क्रोधबीजं हृदि स्थितम्। द्विधा चान्ते च फट्कारः स्याद्यस्य स तिरस्कृतः"॥

इति। चकारो विकल्पार्थकः॥ ओमिति–प्रमुखे आदौ ओङ्कारः, शीर्षेऽन्ते वषट्, मध्येऽस्त्रमिति चकाराद् द्वयमित्यत्रापि सम्बध्यते। तथा च पिङ्गलामते–

"अस्त्रमन्त्रद्वयं मध्ये वषडन्ते तथादितः। अउमाः स्युरसौ मन्त्रो भेदितः परिकीर्तितः"।

इति। अस्त्रं हः, अउमाः ओंकारः॥ त्रिवर्ण इति–त्रिवर्ण एवं हंस इति वर्णद्वयरहितः॥ तथा च भैरवीतन्त्रे–

"वर्णत्रयात्मको मन्त्रो यस्तु हंसविवर्जितः। सुषुप्तः स तु विज्ञेयः सर्वसिद्धिफलापहः।"

इति। सप्त च अधिकं च दश अक्षराणि यस्य सः अष्टादशाक्षरस्येत्यर्थः॥ फट्कारेति–फट्कारपञ्चकमादौ यस्मिन्निति। उक्तं च लक्षसागरे–

"विद्या वा यदि वा मन्त्रो यद्यष्टादशवर्णकः। पञ्चफट्कारपूर्वः स्यान्मदोन्मत्तः स उच्यते"॥

इति। पिङ्गलामतेऽपि–

"विद्या वा मन्त्रराजो वा यः स्यात्सप्तदशाधिकः। फट्कारपञ्चपूर्वश्चेदुन्मत्तः स प्रकीर्तितः"॥

इति। अत्र विशेषणद्वयविशिष्ट एव दुष्टः। तद्वदिति–विरामे (ति) च–विरामस्थानगं मन्त्रान्तर्गतम्। पञ्चेत्युभयत्र। उक्तं च पिङ्गलामते–

"अस्त्रमन्त्रो भवेद्यस्य मध्ये प्रान्ते च शम्भुना। हीनवीर्य इति ख्यातः स मन्त्रो नैव सिद्धिदः"॥

इति। आदावित–स्थानत्रये मिलित्वास्त्रचतुष्टयमित्यर्थः। अष्टादशाक्षर इत्यनुवर्तते। तन्त्रान्तरेऽपि एतादृशो मन्त्रो भीत इति नाम्ना उक्तः। यथा–

"आदावन्ते तथा मध्ये चतुर्द्धास्त्रेण संयुतम्। अष्टादशाक्षरं मन्त्रं भीतं तं भैरवोऽब्रवीत्"॥

इति। यः स्यादिति[1]–तारः प्रणवः, केचित् तारः फ्रें इति वदन्ति, तन्न ग्रन्थान्तरविरोधात्। तथा च भैरवीतन्त्रे–

"एकोनविंशत्यर्णो यो यो मन्त्रः प्रणवान्वितः। महामायाङ्कुशैर्युक्तस्तं प्रध्वस्तं वदन्ति ह"॥

इति। पिङ्गलामतेऽपि– "यदि सोऽष्टादशाक्षरः।

विंशत्येकोनवर्णश्च मायौङ्काराङ्कुशान्वितः। प्रध्वस्त इत्यसौ मन्त्रः शम्भुदेवेन कीर्तितः"॥

इति। अत्र विशेषणद्वयम्॥ सप्तवर्ण इति– चत्वारिंशल्लिपिश्चत्वारिंशद्वर्णः। भैरवीतन्त्रे –

"सप्ताक्षरो भवेद्बालः कुमारश्चाष्टवर्णकः। चत्वारिंशाक्षरः प्रौढस्तरुणः षोडशाक्षरः"॥

इति। त्रिंशद्वर्ण इति– चतुःशताक्षरः चतुरधिकशताक्षरः। उक्तं च भैरवीतन्त्रे–

१. 'मन्त्रा' ख. ग. पाठः।

"त्रिंशद्वर्णं शतार्णं वा चतुःषष्टयक्षरं तथा। चतुरूर्ध्वशतार्णं वा वृद्ध इत्यभिधीयते"॥

इति। नवाक्षरे इति—ध्रुवयुतः प्रणवयुक्तो नवाक्षरो निस्त्रिंश इत्यर्थः। "नवाक्षरोऽथ निस्त्रिंशो ध्रुवयुक्तोऽथ मृत्युदः" इति भैरवीतन्त्रवचनात्॥ यस्येति—हृदयं नमः, शिरोमन्त्रः स्वाहाकारः, एतद्द्वयमन्ते यस्य नास्ति। शिखा वषट् वर्म हुंकारः, एतद्द्वयं च वौषट् फट्कारो वा, शिवा शिवो हकारः शक्त्यर्णः सकारः, एतद्द्वयं वा मध्ये नास्ति स निर्बीज इत्यर्थः। तदुक्तं भैरवीतन्त्रे—

"हृच्छिरोऽन्ते[1] शिखा वर्म मध्ये नेत्रास्त्रकेऽथवा। शिवशक्त्यात्मकौ वर्णौ न स्तो यस्य स मन्त्रराट्[2]। निर्बीज इति सम्प्रोक्तः सर्वकर्मसु गर्हितः"॥

इति। एष्विति—अत्र पूर्वश्लोके स्थानद्वयस्योक्तत्वादेष्विति बहुवचनप्रयोगः कथमिति चेत्? सत्यम्। तन्त्रान्तरे निर्बीजलक्षणवचने आदावपि तद्दोषप्रतिपादकाक्षरमस्तीत्यभिप्रायेण बहुवचनप्रयोगः कृतो ग्रन्थकर्त्रा। तथा च लक्षसागरे— "निर्बीजस्तु समाख्यात आदौ ओङ्कारवर्जितः" इति। एषु आदिमध्यावसानेषु। अत्रापि स्थानत्रयेऽपि मिलित्वैव फट्कारषट्कं ज्ञेयम्॥ मन्द इति—पङ्क्त्यक्षरो दशाक्षरः। उक्तं च भैरवीतन्त्रे— "दशाक्षरो भवेत् मन्दः" इति॥ कूट इति—वह्न्यक्षरात्मकं बीजं कूटः। स वह्न्यक्षरोऽपि एकाक्षर ऐवति ज्ञेयो निरंशकः। द्विवर्णः सत्त्वहीनो बलवर्जितः। चतुर्वर्णः केकरः। पिङ्गलामतेऽपि— "ध्रुवहीनश्चतुर्वीजैः षड्भिर्वा केकरो मतः।" इति विशेष उक्तः॥ षडक्षर इति— वीजहीन[3] ओंकारादिरहितः— अत्रार्धसप्ताक्षरतार्धद्वादशाक्षरता वा अन्ते व्यञ्जनयोगेन ज्ञेयं सार्धवीजत्रयत्वं च, एते धूमिताः इत्यर्थः। लक्षसागरे—

"अर्धसप्ताक्षरो मन्त्रः सार्धद्वादशवर्णकः। धूमितः स समाख्यातः सार्धवर्णत्रयोऽथवा"॥

इति। एकविंशतीति स्पष्टार्थः॥ द्वाविंशतीत्यपि स्पष्टार्थः॥ चतुर्विंशतीति—क्षुधार्त—इति स्पष्टार्थः॥ पुनश्चतुर्विंशतीति दृप्तप्रतिपादकः स्पष्टः। षड्विंशत्यक्षर इत्यपि। त्रिंशदेकोनवर्णो वेति एकोनत्रिंशद्वर्णः "एकोनत्रिंशद्वर्णश्चाप्यङ्गहीन उदाहृतः"। इति भैरवीतन्त्रात्। लक्षसागरे तु अष्टत्रिंशाक्षरश्चेति चतुर्थः प्रकारोऽप्युक्तः। अष्टाविंशत्यक्षर इत्यादि च॥ चत्वारिंशतमिति—चत्वारिंशद्वर्णमारभ्य त्रिषष्टयक्षरपर्यन्ता मन्त्रा एकैकाक्षरवृद्धया। चतुर्विंशतिविधाः सव्रीडा इति॥ पञ्चषष्ट्यक्षरा इति स्पष्टः। एकोनेति—पञ्चषष्ट्यक्षर आदिर्येषां पञ्चषष्ट्यक्षरादीनि स्थानभ्रष्टा इति॥ त्रयोदश—इति स्पष्टार्थः। शतमिति शतद्वयं द्विनवतिश्चेति एक एव भेदः, द्विनवत्यधिकं शतद्वयमित्यर्थः। सार्धशतद्वयं, द्विनवतिरेकहीना एकनवत्यधिकशतद्वयमित्यर्थः। तेन शतसंख्यावर्णाः सार्धशतवर्णा द्विनवतिशतवर्णा एकनवत्यधिकशतद्वयवर्णाः शतत्रयवर्णाश्चेति पञ्च प्रकाराः निःस्नेहदोषेषु स्पष्टाः स्युरित्यर्थः। अत्र केचित् शतद्वयं त्वेकः प्रकारः द्विनवतिरन्यः, एकनवतिरपरः। इति वदन्ति तदसङ्गतम्। षट्षष्टयक्षरमारभ्यैकोनशतवर्णपर्यन्तानां स्थानभ्रष्टा इत्युक्तेः। अत एव यत्संख्या इत्युक्तं, येषां मन्त्राणां वर्णसंख्या शताधिका ते निःस्नेहा इत्यन्वयः॥ चतुःशतानीति सुगमः। सहस्रार्णा इति—ये दण्डकाः स्तोत्ररूपास्ते पीडिताह्वयाः ज्ञातव्याः॥ तथेति— यथैते मन्त्रास्तद्दोषास्तथैव विद्या अपि सदोषा एव ज्ञेयाः। उक्तं च भैरवीतन्त्रे—

"यथा मन्त्रास्तथा विद्या भेदभिन्नास्ततः परम्। ज्ञातव्या देशिकेन्द्रैस्तु नानातन्त्रेषु भाषिताः"॥

---

१. 'यत्' ग. पाठः। २ 'वर्णराट्' ग. पाठः। ३ 'बीजवर्जितः' क. पाठः।

इति। काम्यकर्मस्वित्युक्तेर्निष्कामानां नैते दोषा मन्त्रजपे बाधका इति भाति।।

अथोक्तदोषदुष्टानां मन्त्राणां तद्दोषनिरसनोपायः शारदायाम्—

"इत्यादिदोषदुष्टांस्तान्मन्त्रानात्मनि योजयेत्। शोधयेद्बद्धपवनो बद्ध्या योनिमुद्रया"।।

इति। योनिमुद्रालक्षणं तूक्तं रुद्रयामले भैरवीपटले—

पश्चिमाभिमुखं लिङ्गं योनिस्थं परिकीर्तितम्। हृद्ग्रन्थि ब्रह्म[1]संस्थानं स्वयम्भूर्वामवाचकः।।
इतरं चान्तरालस्थं चिद्ग्रन्थिस्थं तथा परम्। महापद्मवनं यत्तद्योगपीठं प्रकीर्तितम्।।
कदम्बगोलकैवे[2]षद्वक्त्रं (?) तं बिन्दुरूपिणम्। ब्रह्मरूपं तु तत्रैव सुषुम्नाधारमण्डलम्।।
पृथिव्यादीनि तत्त्वानि मन्त्राणां वाचकानि तु। पूर्णाख्यं बैन्दवं तत्त्वं कोदण्डद्वयमध्यगम्।।
तदूर्ध्वं नादनाम्ना तु उड्यानं च भवेत्ततः। कामरूपं भवेच्छक्तिः शिवाख्यमकुलं प्रिये।।
सहस्रारं महापद्मं रक्तकिञ्जल्कशोभितम्। तत्रस्थो लभते सम्यग् वर्षन्तं रक्तबिन्दुकान्।।
तव व्यापकयोगेन स्वाधारे योजयेन्मनः। गुदमेढ्रान्तरे योनिस्तामाकुञ्च्य प्रबन्धयेत्।।
प्रमद्योनिगतं ध्यात्वा कामं बन्धूकसन्निभम्। ज्वलत्कालानलप्रख्यं तडित्कोटिसमप्रभम्।।
तस्योर्ध्वे तु शिखा सूक्ष्मा बिन्दुस्था परमा कला। तया सह तमात्मानमेकीभूतं विचिन्तयेत्।।
गच्छन्तीं ब्रह्ममार्गेण लिङ्गभेदक्रमेण तु। अमृतं यद्विसर्गस्थं परमानन्दलक्षणम्।।
रक्तांशु जायते तस्य[3] धारापातप्रवर्षिणीम्। पीत्वा कुलामृतं दिव्यं पुनरेव विशेत् कुलम्।।
पुनरेवाकुलं गच्छेत् मात्रायोगेन नान्यथा। सा च प्राणः समाख्याता तन्त्रेऽस्मिन् परमेश्वरि।।
उद्घातः प्रोच्यतेऽसौ हि प्राणोऽन्तर्विशते यदा। एवमभ्यस्यतस्तस्य अहन्यहनि निश्चयात्।।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात्। उद्भिज्जादिश्च या सृष्टिरस्यां योनौ प्रवर्तते।।
पुनः प्रलीयते तस्यां कालाग्न्यादिशिवान्तका। योनिमुद्रासमभ्यासात्तव बन्धः प्रकीर्तितः।।

इति। अस्यार्थः— तत्र गुरुः सिद्धासनस्थो वामपार्ष्णिना गुदमेढ्रान्तरं निष्पीड्य, तदुपरि दक्षिणापादाङ्गुल्यग्रयोरन्योन्यसम्मर्दो यथा भवति तथा दक्षिणपार्ष्णिना लिङ्गमूलं निष्पीड्य, स्थिरकायः समुपविश्य गुदमाकुञ्च्यापानवायुमुत्थाप्य, समवरुद्धप्राणापानयोः सङ्घट्टं कुर्वन् एकचित्तो मूलाधारगतचित्स्वरूपे[4] कुण्डल्यात्मके परमात्मनि स्वसाध्यमन्त्रं ज्ञातदोषं सञ्चिन्त्य, तन्मन्त्राक्षराण्येकैकशः सुषुम्नामार्गेण मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यषट्चक्रभेदनक्रमेण ब्रह्मरन्ध्रं प्रापय्य आज्ञाविशुद्धानाहतमणिपूरकस्वाधिष्ठानचक्रभेदक्रमेण मूलाधारं प्रापयेदिति तत्तन्मन्त्रमृष्यादिन्यासपूर्वकं यथोक्तभावनयाष्टोत्तरसहस्रं जपेदित्यान्तरो[5] मन्त्रसंस्कारः।। अथ बाह्यक्रियारूपा मन्त्रदोषनिरासाय दशविधसंस्काराः। तत्र शारदायाम्—

मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः। जननं जीवनं पश्चात्ताडनं बोधनं तथा।।
अथाभिषेकोविमलीकरणाप्यायने पुनः। तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः।।
मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम्। प्रणवान्तरितान् कृत्वा मन्त्रवर्णाञ्जपेत् सुधीः।।

---

१. 'बिन्दुसंस्थानं' क. पाठः। २. 'कं वेष' ख. पाठः। ३. भूतरक्तांशुतेजाह्या (?) क. पाठः। ४. 'चिन्मये' ख. पाठः।
५. 'न्तरितो' ग. पाठः।

एतज्जीवनमित्याहुर्मन्त्रतत्त्वविशारदाः। भूर्जे विलिख्य मन्त्राणांस्ताडयेच्चन्दनाम्भसा।।
प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम्। विलिख्य मन्त्रं तं मन्त्री प्रसूनैः करवीरजैः।।
तन्मन्त्राक्षरसंख्यातैर्हन्याद्यान्तेन बोधनम्। स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया।।
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद् विशुद्धये। सञ्चिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत्।।
मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम्। तारं व्योमाग्निमनुयुक् दण्डी ज्योतिर्मनुर्मतः।।
कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः। तेन मन्त्रेण विधिवद् एतदाप्यायनं मतम्।।
मन्त्रेण वारिणा पात्रे तर्पणं तर्पणं स्मृतम्। तारमायारमायोगे मनोर्दीपनमुच्यते ।।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम्। संस्कारा दश सम्प्रोक्ताः सर्वतन्त्रेषु गोपिताः।।
यान् कृत्वा सम्प्रदायेन मन्त्री वाञ्छितमश्नुते।।

इति। अथाष्टश्लोकानामयमर्थः। मन्त्राणामिति—तत्र क्वचित् श्रीपर्णे चन्दनादिपीठे कुङ्कुमादिना वक्ष्यमाण-पाञ्चभौतिकचक्रं विलिख्य तत्र लिखितक्रमेणाकारादिक्षकारान्तां मातृकां विलिख्य तत्र मातृकासरस्वतीमावाह्य सम्पूज्याष्टोत्तरशतं मातृकां जपित्वा तन्मध्यात्स्वाभीष्टं मन्त्रं स्वरव्यञ्जनबिन्दुविसर्गसंयोगाक्षराणि पृथक् पृथगुद्धृत्यैकीकृत्य स्वगुरूपदेशेन ज्ञातं मन्त्रं जनयेदिति जननम्।। प्रणवेत्यादि—प्रागुद्धृतस्य मन्त्रस्य एकैकमक्षरं प्रणवान्तरितं कृत्वाष्टोत्तरशतं जपेत् यथा "नमः शिवाय" इत्यत्र ॐनंॐमंः ॐमित्यादि प्रत्यक्षरं योजयित्वा जपेदित्यर्थः। इति जीवनम्।। भूर्जे इति—भूर्जपत्रे कुङ्कुमादिद्रव्यैस्तं मन्त्रं विलिख्य चन्दनमिश्रितजलेन यमिति वायुबीजमुच्चरन् प्रक्षरं शतत्यवारं ताडयेदिति ताडनम्।। विलिख्येति—तत्र प्राग्वत्पीठे मन्त्रं विलिख्य तन्मन्त्राक्षरसंख्यातानि करवीरपुष्पाण्यादाय रमिति वह्निबीजमुच्चरन् प्रत्यक्षरं तैः पुष्पैः शतवारं हन्यादिति बोधनम्।। स्वतन्त्रेति—तत्र प्राग्वत् पीठे कुङ्कुमगोरोचनादिभिरष्टदल-कमलं कृत्वा तत्कर्णिकां कुङ्कुमादिद्रव्यैर्मालतीकलिकाभिस्तन्मन्त्राक्षरसंख्याभिरेकया कलिकया वा "अमुकमन्त्रमभिषिञ्चामि नमः" इत्यभिषेकं सुगन्धिजलेनैकैकपल्लवेनाष्टोत्तरशतवारं कुर्यादित्यभिषेकः।। सञ्चिन्त्येति-तत्र स्वमूलाधारे वह्निमण्डले वक्ष्यमाणज्योतिर्मन्त्रं सञ्चिन्त्य तदूर्ध्वे[1] संस्कर्तव्यमन्त्रं विभाव्य, ज्योतिर्मन्त्रस्य तेजसा संस्कर्तव्यं मन्त्रमाणवकार्ममायीयमलत्रयं सहजागन्तुकमायाख्यं मनसा पुनः पुनरेकमेकं निर्दह्य तं मन्त्रं विगतमलत्रयं ध्यायेदिति विमलीकरणम्।। ज्योतिर्मन्त्रमाह—तार इति। तारः प्रणवः व्योम हकारः, अग्नी रेफः मनुरौकारः, दण्डी अनुस्वारः।। कुशोदकेनेति—तत्र प्राग्वत्पीठादौ तन्मन्त्रं कुङ्कुमादिभिर्विलिख्य ताम्रादिपात्रे कर्पूरादिवासितं शुद्धजलमापूर्य लिखितमन्त्रेणैवाष्टोत्तरशतवारमभिमन्त्र्य तेनैव तज्जलबिन्दुभिः कुशैः प्रत्यक्षरं त्रिस्त्रिः प्रोक्षयेदित्याप्यायनम्।। मन्त्रेणेति-तत्र ताम्रादिपात्रे प्राग्वत् मन्त्रं विलिख्य पात्रान्तरे कर्पूरादिवासितं शुद्धजलमानीय तमेव मन्त्रं पठन् अन्ते "अमुकमन्त्रं तर्पयामि नमः" इति अष्टोत्तरशतवारं लिखितमन्त्रस्योपरि अञ्जलिदानेन तर्पयेदिति तर्पणम्।। तारमिति—तारं प्रणवः, माया भुवनेश्वरी, रमा श्रीबीजम्। योगलक्षणं तु "आदौ योगो भवेदि"त्युक्तम्। अयमर्थः— प्रणवभुवनेश्वरीश्रीबीजान्ते साध्यं मन्त्रं कृत्वाष्टोत्तरशतवारं जपेदिति दीपनम्।। तदनन्तरश्लोकस्यार्थः स्पष्टः इति दश संस्काराः।।

अथ कादिमते प्रोक्तं मन्त्राणां दोषसञ्चयम्। वक्ष्ये तत्परिहाराय साधकानां हिताय च।।

---

१. 'र्ध्वं' क. पाठः।

तत्र श्रीतन्त्रराजे —

मन्त्रदोषांस्तु विज्ञाय गुरुः परिहरेत् क्रमात्। अन्यथा स गुरुः शिष्यं निहन्त्येवाचिराद् ध्रुवम्।।
तेन तत्परिहारं च शृणु देवि समाहिता। परिहारप्रकारं तु वक्ष्ये योगेषु तत्त्वतः ।।
दग्धः षट्कर्णको मन्त्रस्त्रस्तः स्यादधिकैर्जपात्। गर्जितस्त्वविधिप्राप्तः शत्रवो वैरिकोष्ठगाः।।
बाला लघ्वक्षरप्राया वृद्धा गुर्वक्षरान्विताः। निर्जिता कर्मबाहुल्यादसहाः[२] सत्त्ववर्जिताः।।
अपूर्णरूपाश्छिन्नाः स्युः स्तम्भिताः सानुनासिकाः। अकालविनियोगेनाप्रबोधः स्वापगाक्षपात्।।
मन्त्राः पत्रेषु पठनादन्यवर्णैस्तु कीलिताः। रुद्धा विसन्धिकाः प्राप्तदुःखा वैरिसमन्विताः।।
खण्डीभूतास्त्ववंशजपादङ्गहीनास्त्वसंवृताः । अपूर्णेनोपदिष्टा ये हीनवीर्यास्तु ते मताः ।।
सदा प्रयोगात् कुण्ठत्वं क्लिष्टतातिविलम्बनात्। रुष्टाः प्रलपनैर्जापादन्यमन्त्रैः सहाविलाः।।
उपेक्षावस्थया जापाद्वैषम्यादवमानिताः। पञ्चविंशतिरुद्दिष्टा दोषांस्ताञ्शमयेद् गुरुः।।
बन्धनं योनिमुद्राया मन्त्राणां वीर्ययोजनम्[३]। उभयं बोधयन् शिष्यं संरक्षेद् गुरुरात्मवान्।।
गुरोर्लक्षणमेतावदादिमान्त्यं तु वेदयेत्। आदिमान्त्यविहीनास्तु वर्णाः स्युः शरदभ्रवत्।।
तस्मादादित एवासौ ब्रूयात्तत्तदहङ्कृतिम्[४]। यदहङ्कारविज्ञानान्मत्समो जायते नरः।।
अनादिक्रमसंसिद्धमातृकाद्यन्तयोजनात्। तादात्म्यसिद्धिस्तां विद्धि सर्वमन्त्रार्थविग्रहाम्।।

दग्ध इति स्पष्टोऽर्थः। अथवा यस्मिन् मन्त्रे आदिमध्यान्तेषु कूर्चबीजषट्कं दृश्यते स मन्त्रो दग्ध इत्यर्थः।। तदुक्तं त्रिपुरार्णवे—

आदौ कूर्चद्वयं मध्ये कूर्चबीजद्वयं तथा। अन्ते कूर्चद्वयं यस्मिन् मन्त्रराजे प्रदृश्यते।। १।।
स तु षट्कर्णको मन्त्रो दग्ध इत्यभिधीयते। जपतां सिद्धिरोधः स्यात् त्याज्यः सर्वैः सदा बुधैः।।२।।

अत्र कर्णः कूर्चबीजम्। तदुक्तं तत्रैव —

हुङ्कारस्यैव नामानि कूर्चं माया सरस्वती। जलं नीरं तथा कर्णं तटं कूलं महेश्वरि।।

इति। अधिकैर्जपात् त्रस्त इति— यस्मिन् मन्त्रेऽधिकाक्षरयोगः कृतः स मन्त्रः त्रस्त इत्यर्थः।। तदुक्तं त्रिपुरार्णवे —

आदावन्ते च मध्ये वाप्यधिकाक्षरयोगतः। त्रस्तः सोऽभिहितो मन्त्रो जपतामशुभप्रदः।। १।।

इति। यद्यपि

वर्षत्रयं जपित्वा (तु) लोपामुद्रां शुभोदयाम्। ततश्च हंसं संयोज्य मन्त्राद्ये प्रजपेद् बुधः।। २।।
ततो वर्षत्रये जाते मध्यादावपि योजयेत्। ततो वर्षत्रये जाते शक्त्यादावपि योजयेत्।। ३।।
एवं यो भजते विद्यां फलमाप्नुत्तरोत्तरम्। अन्यथा हन्ति सा विद्या साधकं नात्र संशयः।। ४।।

इति त्रिपुरार्णवोक्तविरुद्धं तथाप्यादावेवाधिकाक्षरयोगस्य निषेध्यत्वं बोध्यम्।। गर्जित इति— उपदेशस्य शास्त्रे यो विधिरभिहितस्तं विना प्राप्तो[५] मन्त्रो गर्जित इत्यर्थः। तदुक्तं त्रिपुरार्णवे —

---

१. 'क्षणात्' क. पाठः। २. 'दहसाः' क. पाठः। ३. बीजयोजनम् ख. पाठः। ४. 'कुर्यात्' ख. पाठः। ५. 'प्तमन्त्रो' ख. पाठः।

"मोहाद्वा लोभतो वापि विधिमुत्सृज्य यो जडैः। दीयते स तु मन्त्रस्तु गर्जितो गर्हितः सदा"॥

इति। शत्रव इति— वैरिकोष्ठगा इति स्पष्टोऽर्थः॥ बाला इति—वृद्धा इति—लघ्वक्षरप्राया बालाः गुर्वक्षरप्राया वृद्धा इत्यर्थः॥ लघ्वक्षरलक्षणं गुर्वक्षरलक्षणं च मातृकाश्वासे ज्ञेयम्॥ निर्जिता इति— कर्मबाहुल्यान्निर्जिता इत्यर्थः॥ तदुक्तं त्रिपुरार्णवे —

स्वतन्त्रोक्तं परित्यज्य ज्ञात्वा वाऽतृप्तितोऽपि वा। स्वगुरुप्रोक्तो वापि मन्त्राः सिद्धिप्रमादपि।१॥

जपतर्पणहोमार्चामार्जनानि पुनः पुनः। कुर्वतो मन्त्रराजः स्यान्निर्जितो गर्हितः सदा॥ २॥

न यच्छति फलं तस्मै कल्पकोटिशतैरपि। तस्मात् सर्वप्रयत्नेन स्वतन्त्रोक्तं समाचरेत्।३॥

इति। असह्य इति— अनियमेन जप्तो मन्त्रोऽसह इत्यर्थः। तदुक्तं त्रिपुरार्णवे— "नियमस्य च भङ्गेन मन्त्रः स्यादसहः सदा" इति॥ सत्त्ववर्जिता इति— पुरश्चरणवर्जिता इत्यर्थः। तदुक्तं त्रिपुरार्णवे—

"वीर्यहीनो यथा देही सर्वकर्मसु न क्षमः। पुनश्चरणहीनो यो तथा मन्त्रः प्रकीर्तितः॥ १॥

नित्यनैमित्तिकाद्यैश्च पुरश्चर्यादिभिर्मनुः। भवेत् सत्त्वगुणोपेतः सेवया नृपतिर्यथा।२॥

सत्त्वं गुणं समापन्नो मन्त्रः कल्पलतासमः"॥

इति अपूर्णरूपा इति— स्वरवर्णपल्लवरहिता इत्यर्थः॥ तदुक्तं त्रिपुरार्णवे—

पल्लवाद्यैर्विलोपेन स्वरवर्णविलोपतः। अपूर्णत्वं समापन्नः स मन्त्रश्छिन्नसंज्ञकः॥ १॥

इति। त्रैलोक्यडामरतन्त्रे —

मन्त्राणां पल्लवो न्यासो मन्त्राणां प्रणवः शिरः। शिरः पल्लवसंयुक्तो मन्त्रः कामदुघाफलः।१॥

न्यासं विना भवेन्मूकः सुप्तः स्यादासनं विना। पल्लवेन विना मन्त्रो नग्नः स परिकीर्तितः।२॥

शिरोहीनो मृतः प्रोक्तो वृथा मन्त्रो गुरुं विना। हतो दुष्ठ्य दत्तो यो निर्वीर्यश्चाधिकाक्षरः।३॥

अन्तरान्येन बीजेन व्याप्तः कीलित उच्यते। यस्य जाप्यं शृणोत्यन्यः स मन्त्रः शून्य उच्यते।४॥

ऋषि[1] दैवतच्छन्दोभिः परित्यक्तो भुजङ्गमः। मूकः सुप्तो मृतो नग्नो वीर्यहीनो वृथा हतः।५॥

भुजङ्गः कीलितः शून्य ईदृङ्मन्त्रो वृथाफलः। यत्नाद् विवर्जयेन्मन्त्रं यदि तत्सिद्धिमिच्छति।६॥

नमोन्तः शान्तिके पुष्टौ प्रणिपाते च कीर्तितः। वश्याकर्षणहोमेषु स्वाहान्तः सिद्धिदायकः।७॥

वौषट्पल्लवसंयुक्तो मन्त्रः पुष्ट्यादिसाधकः। हुङ्कारपल्लवोपेतो मारणे ब्राह्मणं विना॥ ८॥

मन्त्रभजन[2]कार्ये च सुघोरभयनाशने। वषडन्तो महाकालग्रहमालाविनाशकः॥ ९॥

खण्डनोच्चाटने वेधे मन्त्रः फट्[3] पल्लवान्वितः। ॐकारमुखरौ मन्त्रौ वेदागमसमुद्भवौ॥ १०॥

पल्लवोऽस्त्यागमे मन्त्रे वैदिके नास्ति पल्लवः। पल्लवेन विना जाप्यो मन्त्रो वेदसमुद्भवः।११॥

न नग्नः कीर्त्यते यस्मादैश्वर्यपरिधानवान्॥

इति। स्तम्भिता इति—अनुनासिकाक्षरसहिता इत्यर्थः। सानुनासिकनिरनुनासिकलक्षणं तु मातृकाश्वासे ज्ञेयम्। त्रिपुरार्णवेऽपि—"सानुनासिकवर्णेन संयुक्ताः स्तम्भिता मताः"। इति अकालविनियोगेनेति—प्रमत्ता

---

१. 'दैवता' ग. पाठः। २. 'मज्ञन' ग. पाठः। ३. 'षट्' ग. पाठः।

इति पूरणीयम्। तदुक्तं त्रिपुरार्णवे —

स्वप्नाप्ते ऋणप्राप्ते कालेषु विनियुज्यते। अन्यदा विनियुक्तश्चेन्मन्त्रो मत्त उदाहृतः।। १ ।। इति।

काललक्षणं तु काम्याश्वासे बोद्धव्यम्। अप्रबोध इति स्वापकालजपादित्यर्थः। तदुक्तं त्रिपुरार्णवे—

स्वापकालो वामवहो जागरो दक्षिणावहः। स्वापकालजपान्मन्त्रोऽप्रबुद्धो हन्ति मन्त्रिणम्।। १ ।।

इति मन्त्रा इति—पत्रेषु पठनाज्जपनात् क्रुद्धा इति पूरणीयम्। तदुक्तं त्रिपुरार्णवे —

पुस्तके लिखितं दृष्ट्वा जपेद् यः साधकाधमः। चत्वारि तस्य नश्यन्ति आयुः कीर्तिर्यशः श्रियः।।१ ।।

जपात्पत्रेषु मन्त्रः स्यात् क्रुद्धः सन् हन्ति साधकम्। इति।

यस्मिन्मन्त्रे यो वर्णः कीलत्वेनाभिमतस्तं विहायेत्यर्थः।। तदुक्तं योगिनीहृदये—

बीजं मन्त्रस्यादिमं स्यान्मन्त्रमध्यं तु कीलकम्। मन्त्रान्ते शक्तिरुद्दिष्टा बीजकीलकशक्तयः।।१ ।।

यद्वर्णः कीलकत्वेन कीलितः सिद्धिरोधकृत्।

इति। रुद्धा इति— सन्धिरहिता रुद्धा इत्यर्थः। "विसन्धिको भवेद् रुद्धः सर्वकर्मसु गर्हितः"। इति योगिनीहृदयवचनात्।। दुःखा इति— वैर्यक्षरसमन्विता दुःखिता इत्यर्थः। तदुक्तं त्रिपुरार्णवे— "दुःखितास्ते समुद्दिष्टा वैरिवर्णैश्च संयुताः।" इति। खण्डीभूता इति— अंशजपात् खण्डीभूता इत्यर्थः। तदुक्तं त्रिपुरार्णवे— "खण्डिता वर्णलोपेनेति।। अङ्गहीना इति— असंवृताः कवचादिरहिता इत्यर्थः। तदुक्तं योगिनीहृदये—

"अङ्गप्रत्यङ्गकवचस्तोत्रपाठैर्विना मनुः। असंवृतः समाख्यातः सिद्धिं नैव प्रयच्छति"।।

इति। अपूर्णेनेति— अपूर्णेनोपदिष्टा हीनवीर्या इत्यर्थः। तथा च —

'द्वितीयेनाभिषेकेन पूर्णत्वं याति तन्मनुः। अन्यथा हीनवीर्यः स्यात्सर्वकर्मबहिष्कृतः''।।

इति। योगिनीतन्त्रवचनात्। सदा प्रयोगादिति— सर्वदा काम्यप्रयोगात् मन्त्रस्य कुण्ठता भवतीत्यर्थः। तदुक्तं त्रिपुरार्णवे —

"प्रयुज्यन्ते सदा मन्त्रास्तत्तच्छान्तिं विना नरैः। ते मन्त्राः कुण्ठतां यान्ति तस्माच्छान्तिं समाचरेत्"।

इति। अत्र शान्तिस्त्वयुतसावित्रीजपसहितायुतमूलमन्त्रजपः। तद्विधिं प्रयोगपटले वक्ष्यामः।। क्लिष्टेति— दीर्घाक्षरस्य प्लुतत्वेनोच्चारणेन ह्रस्वस्य दीर्घत्वेनोच्चारणेन च मन्त्रस्य क्लेशो भवतीत्यर्थः। तथा च तन्त्रान्तरे—

"एकमात्रो लघुश्चैव द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेय इत्येतत्स्वरलक्षणम्।। १ ।।

ह्रस्वत्वेन च दीर्घस्य दीर्घत्वेन प्लुतस्य च। प्लुतत्वेन च दीर्घस्य ह्रस्वे दीर्घतया पुनः।। २ ।।

उच्चारणवशान्मन्त्रः क्लिष्टो भवति नान्यथा। यो मन्त्रः क्लिष्टतां प्राप्तः स मन्त्रः सिद्धिरोधकृत्।।३ ।।

रुष्ट इति— प्रलपनजपाद् रुष्टा भवन्तीत्यर्थः। तदुक्तं त्रिपुरार्णवे—

"मौनं विना जपेन्मन्त्रं राक्षसैर्गृह्यते जपः। मन्त्रोऽपि रुष्टतां याति सिद्धिं नैव प्रयच्छति"।।

---

१. 'विने' क. पाठः।

इति। अन्यमन्त्रैरिति— अन्यदेवतामन्त्रैः सह मूलमन्त्रजपादित्यर्थः। तदुक्तं योगिनीहृदये—

मन्त्रान्तरं न गृह्णीयाद् वर्जयेद् देवतान्तरम्। प्रयोजनान्तरं[1] चैव वर्जयेत् साधनान्तरम्[2]॥
तदा मन्त्रो भवेन्नूनं क्षिप्रं कामदुघाफलः। चतुर्भिः संयुतो मन्त्रो भवेन्मलिनसंज्ञकः॥

इति। उपेक्षेति—उपेक्षा देवतागुरुमन्त्रान्यतमेषु, अवस्थातुरता, वैषम्यं मन्त्रग्रहणोत्तरमदृष्टवशात् किञ्चिद्र दुःखं चेत्प्राप्यते तदायं मन्त्रः किमर्थं गृहीत इति मनसि निधाय जपोऽपि क्रियते स एव वैषम्यजपः इत्यर्थः। तदुक्तं त्रिपुरार्णवे—

"मन्त्रे गुरौ देवतायामुपेक्षा क्रियते यदि। अवस्थया वा वैषम्यान्मन्त्रः स्यादवमानितः"।

इति। बन्धनमिति— योनिमुद्राबन्धनेन सर्वे दोषा गच्छन्तीत्यर्थः। तत्प्रागुक्तमुभयमतसाधारणम्। बाह्यसंस्कारे विशेषः। अनादीति— मातृकाद्यन्तयोजनं प्रत्यर्णस्य॥

अथ मन्त्रमेलनप्रकारः। तदुक्तं तन्त्रराजे —

नित्यानां त्रैपुराणां च नावेक्ष्यास्त्वंशकादयः। तथाप्यत्रोच्यते किञ्चिदाभिचारादिसिद्धये॥ १॥
अश्विन्यादिषु ऋक्षेषु बिन्दुसर्गान्त्यवर्जितम्। चतुरो योजयेदाद्यान् बिन्दुसर्गौ तु सर्वगौ॥ २॥
तेन मन्त्रादिवर्णेन नाम्नश्चाद्यक्षरेण च। गणयेद्यत्तु षष्ठं वाप्यष्टमं द्वादशं तु वा॥ ३॥
रिपोर्मन्त्रादिवर्णः स्यात्तं न तस्य हितं वदेत्। राशिष्वन्येषु ऋक्षेषु सप्तपञ्चतृतीयगैः॥ ४॥
साध्यानामपि विज्ञेयमंशकाद्यमनुग्रहे । यतस्ते तत्त्वविज्ञानरहितास्तेन चोदितम्॥ ५॥

इति। नित्यानामिति— यावन्तो नित्या मन्त्रा यावन्तस्त्रिपुरामन्त्रास्तेषामंशकादयो मन्त्रमेलनप्रकारा नावेक्षणीया इत्यर्थः॥ तथापीति— आभिचारादीति। अयमर्थः— नित्ये नैमित्तिके नावेक्षणीया इत्यर्थः। काम्येऽवेक्षणीया इत्यर्थः। अश्विन्यादिष्विति—ऋक्षेषु राशिचक्रेषु बिन्दुसर्गान्त्यवर्जितं कृत्वा चत्वारि चत्वार्यक्षराणि विलिखेत्, अश्विन्यादिषु नक्षत्रचक्रेषु बिन्दुसर्गौ सर्वगौ कृत्वा त्रीणि त्रीण्यक्षराणि लिखेदित्यर्थः। तदुक्तं मातृकार्णवे—

प्राक्प्रत्यग्दक्षिणोदक् च चतुःसूत्राणि पातयेत्। एकैकं कोणदेशेषु चतुःसूत्राणि विन्यसेत्॥ १॥
तेन खण्डानि जायन्ते रविसंख्यानि नान्यथा। तेषु पूर्वादितो लेख्यं प्रादक्षिण्यक्रमेण तु॥२॥
बिन्दुसर्गौ सकारं च हित्वा वर्णचतुष्टयम्। तथाष्टचत्वारिंशानां वर्णानां परमेश्वरि॥३॥
तेन क्रमेण मेषादीन् राशींश्चैव प्रकल्पयेत्। जायते राशिचक्रं हि साधकोऽत्र विचारयेत्॥४॥

इति। नक्षत्रचक्रमपि तत्रैव —

रविखण्डात्मकं चक्रं प्रागुक्तविधिना लिखेत्। तेषु खण्डेषु पूर्वादि न्यसेद्वर्णांस्त्रिशः क्रमात्॥५॥
देवीं मधुमतीनाम्नीं षट्त्रिंशद्व्यञ्जनात्मिकाम्। तथैव बिन्दुयुक्तां च सर्गयुक्तां तथैव च॥ ६॥
खण्डे खण्डे च जायन्ते वर्णा नव नव क्रमात्। सप्तविंशतिऋक्षाणामष्टोत्तरशताङ्घ्रिषु॥ ७॥
एकस्यैकस्य राशेस्तु नवांशक्रमभेदतः । विचारयेन्महाचक्रे साधक ऋक्षसंज्ञके॥ ८॥

इति। योगिनीहृदये —

---

१. 'रै' क. पाठः। २. 'रै' क. पाठः।

षट्त्रिंशद्व्यञ्जनाकारा प्रोक्ता मधुमती च सा। पञ्चाशद्वर्णनिष्पन्ना मालिनी कालिकामते।। १।।
कालीमते तु पञ्चाशद्वर्णम (व्यैव?व्यौ च) ते उभे। तत्तन्मते तथा प्रोक्तं तत्तदाद्यं सुरेश्वरि।।२।।

इति। तेनेति—द्वादशखण्डात्मके चक्रे राशिमये ऋक्षमये च प्रादक्षिण्यक्रमेण गणयेत्, यस्मिन् खण्डे मन्त्राद्यक्षवर्णस्तिष्ठति तमारभ्य नामाद्यक्षरं यस्मिन् खण्डे तिष्ठति तत्पर्यन्तम्। अथवा नामाद्यक्षरमारभ्य मन्त्राद्यक्षरपर्यन्तं गणयेत्। तदा षष्ठं चाष्टमं द्वादशं तु वा मन्त्रादितो नामाद्यक्षरं नामादितो मन्त्राद्यक्षरं वा भवति स मन्त्रो रिपोरहितं भवतीत्यर्थः। अभिचारेषु प्रशस्तः इत्यर्थः।। राशिष्विति— तथैव सप्तमपञ्चमतृतीयं चेद्भवति अनुग्रहे प्रशस्त इत्यर्थः। सिद्धारिचक्रमाह—

प्राक्प्रत्यगुदक्षिणोदक् च सूत्रपञ्चकयोगतः। कोष्ठानि षोडशात्र स्युस्तेषु वर्णान् क्रमाल्लिखेत्।।१।।
चतुश्चतुर्विभागेन कल्पयेत्तानि वै क्रमात्। प्रथमप्रथमे त्वाद्यं द्वितीयप्रथमे तथा।। २।।
द्वितीयमन्यतश्चान्यत् तथान्यदपि कल्पयेत्। तत्तत्कोष्ठेषु विलिखेत् तत्तत्पञ्चममक्षरम्।। ३।।
एवं चतुर्षु कोष्ठेषु क्षान्तावधि समालिखेत्। स्वनामाद्यक्षरं यत्र कोष्ठे संदृश्यते ततः।। ४।।
सिद्धादीन् गणयेद्यावन्मन्त्राद्यक्षरदर्शनि। सिद्धसिद्धो जपात्सिध्येद् द्विगुणात्सिद्धसाध्यकः।। ५।।
सिद्धे सुसिद्धे सम्प्राप्त्या सिद्धारिर्हन्ति गोत्रजान्[१]। साध्यसिद्धोऽतिसङ्क्लेशात् साध्यासाध्योऽतिःखकृत्।।६।।
साध्ये सुसिद्धो भजनात् सिद्धो भवति शाङ्करि। साध्यारिः कन्यकां हन्ति तस्मात्तं परिवर्जयेत्।।७।।
सुसिद्धासिद्धोऽध्ययनात्फलं दद्याद्यथेप्सितम्। सुसिद्धसिद्धो जाप्याद्यैः सिद्धये स्याद्यतोऽन्यथा।।८।।
सुसिद्धे तु सुसिद्धस्तु पूर्वजन्मकृतश्रमः। तस्मात्तं सर्वसिद्धीनां साधने योजयेन्मनुम्।। ९।।
आभिचारे रिपोरेवं यदि स्वात्मविपर्यये। सुसिद्धारिरशेषेण स्वकुल्यान् नाशयेद् ध्रुवम्।। १०।।
अरिसिद्धः सुतं हन्यादरिसाध्यस्तु योषितम्।। अरेः सुसिद्धो मन्त्रस्तु कुलोत्सादनकृद्भवेद्।।११।।
अर्यरिः स्वात्महा मन्त्रः सम्प्राप्त्यैव सुनिश्चयः।

स्पष्टोऽर्थः। ऋणधनशोधनप्रकारमाह श्रीतन्त्रराजे —

नामाद्यक्षरमारभ्य यावन्मन्त्रादिवर्णकम् । त्रिधा कृत्वा स्वरैर्भिन्द्यात्तदन्यद्विपरीतकम् ।। १।।
कृत्याधिको ऋणी ज्ञेयो ऋणी चेन्मन्त्र उत्तमः। स्वयं ऋणी चेत्तन्मन्त्रं त्यजेत् पूर्वं ऋणी यतः।।२।।

इति। अत्र पञ्चाशद्वर्णात्ममातृकायां नामाद्यक्षरमारभ्येत्यादि विचारणीयम्। षट्त्रिंशद्व्यञ्जनेषु वा पूर्ण— मण्डलरूपमातृकायां वा। तदुक्तं त्रिपुरार्णवे—

मधुमत्यां महादेव्यां ऋणशोधो विशिष्यते। कालीमते तु मालिन्यामंशकाद्यं प्रशस्यते।।

इति। अत्र मधुमती षट्त्रिंशद्व्यञ्जनात्मिका महामधुमती पूर्णमण्डलवर्णरूपा, मालिनी पञ्चाशद्वर्णरूपा। तथा च—

कथं ऋणित्वं मन्त्राणां साधकानां च मे वद। पूर्वजन्मकृताभ्यासे पापादस्याफलाप्तिकृत्।।१।।
पापे नष्टे फलावाप्तिः काले[२] देहक्षयाद्धणी। मन्त्रः सम्प्राप्तिमात्रेण प्राक्तनः सिद्धये भवेत्।।२।।

१. 'जम्' ग. पाठः। २. 'पापे' क. पाठः।

सिद्धमन्त्राद् गुरोर्लब्धमन्त्रो यः सिद्धिभाङ्नरः। लक्ष्मीमदादनादृत्य मन्त्रभोगमवाप्नुयात्।।३।।
स मन्त्रस्य ऋणी ज्ञेयो भजनं तस्य पूर्वगम्। तस्माद्गणविशुद्धिस्तु कार्या सर्वैस्तु सर्वतः।।४।।इति।
अथ कालीमते मन्त्रमेलनप्रकारः। तत्रादौ नक्षत्रचक्रं, तत्र श्रीरुद्रयामले—

"राज्यलाभोपकाराय प्रारभ्याविखरः कुरून्। गोपालान् कुकुटीप्रायान् फुल्लावित्युदिता लिपिः"।

अथैतच्चक्ररचनाप्रकारः। तत्र दक्षिणोत्तरायताश्चतस्रो रेखाः प्राक्प्रत्यगायताश्च दश रेखाश्च विलिख्य सप्तविंशतिकोष्ठानि कृत्वा, कादि नव यादि नव पादि पञ्च याद्यष्टौ एतत्संज्ञवर्गाङ्क[1]संख्याप्रकारेण सर्वोर्ध्वपङ्क्तेः प्रथमकोष्ठमारभ्य पङ्क्तिपङ्क्तिक्रमेणाक्षराणि विलिख्य तथैवाश्विन्यादिनक्षत्राणि विलिख्य विचारयेत्। तत्र यस्मिन् कोष्ठे साधकनामाद्यक्षरं[2] तिष्ठति तत्रस्थमङ्कवर्णं च विज्ञाय तत्र यन्नक्षत्रमायाति तत्साधकस्य जन्मनक्षत्रं परिकल्प्य तदारभ्य यस्मिन् कोष्ठे मन्त्राद्यक्षरं[3] तिष्ठति तावत्पर्यन्तं गणयित्वा तन्नक्षत्रं मन्त्रनक्षत्रं विज्ञाय साधकनक्षत्रपर्यन्तम्।।

"नामाद्यक्षरमारभ्य यावन्मन्त्राद्यमक्षरम्। जन्म सम्पद्विपत्क्षेमं प्रत्यरिः साधको वधः।।
मैत्रं परममैत्रं च जन्मादीनि पुनः पुनः"।।

इति कुलार्णवोक्तप्रकारेण जन्मादिनवकं पर्यायेण च विज्ञाय फलानि निर्दिशेत्[4]। तत्र कुलार्णवे—

जनुषस्तारया मृत्युरायुर्नाशस्तृतीयया। मृत्युः पञ्चमतारायां सप्तमो घातको मतः।। १ ।।
द्विचतुःषष्ठनवमगतास्ताराः शुभा मताः। इति ताराफलं ज्ञात्वा मन्त्रं दद्याद् विशालधीः।।२।।

अथ नक्षत्राणां गणभेदः कुलमूलावतारे —

अश्विनी मृगशीर्षं च तथा पुष्यपुनर्वसू। हस्तः स्वातिरनूराधा रेवती विष्णु दैवतम्।। १ ।।
भरणी रोहिणी चैव आर्द्रा पूर्वोत्तरा तथा। पूर्वाषाढोत्तराषाढा पूर्वाभाद्रोत्तरा नृजः।। २ ।।
कृत्तिकाहिर्मघा चित्रा विशाखा ज्येष्ठका तथा। मूलं धनिष्ठा शतभिषा च रक्षोगणः प्रिये।।३।।

विष्णुः श्रवणनक्षत्रं, दैवतं देवगणः। अत्र विसर्गलोपश्छान्दसः। रुद्रयामले—

"स्वगणे चोत्तमा प्रीतिर्मध्यमा दैवमानुषे। अधमा रक्षसा दैवे मृत्युर्मानवराक्षसे"।।

अत्र राशिचक्रम्। तत्र श्रीकुलार्णवे—

बालं गौरं खुरं शोणं शमीशोभेति राशिषु। क्रमेण भेदिता वर्णाः कन्यायां शादयः स्मृताः।।१।।

अक्षरसङ्केतस्तु प्रागुक्त एव। चक्रं तु प्राक्प्रत्यगायतं रेखाद्वयं मध्ये चतुरस्रं यथा भवति तथा विलिख्य, बहिश्चतुष्कोणेषु एकैकां रेखां कृत्वा द्वादश खण्डानि निष्पाद्य, तेषु खण्डेषु प्रागादिप्रादक्षिण्येन वर्णान् विलिख्य कन्यायां तु अंअःशषसहलक्षेति विलिखेत्। ततस्तेषु प्रागादिषु द्वादशखण्डेषु एकादिद्वादशाङ्कान् विलिख्य तेषु मेषादिद्वादशराशीन् परिकल्प्य विचारयेत्।।

नामाद्यक्षरमारभ्य यावन्मन्त्रादिवर्णकम्। लग्नं धनं भ्रातृबन्धुपुत्रशत्रुकलत्रकाः।।
मरणं धर्मकर्मायव्यया द्वादशराशयः।।

---

१, संज्ञकवर्गाकसंख्या क. पाठः। २. 'नामाक्षरं' क. पाठः। ३ नामाक्षरं क. पाठः। ४. 'दर्शयेत्' क. पाठः।

अथ तेषां फलानि लक्षसागरे —

एको वाप्यथ पञ्चमोऽथ नवमो राशेस्तु सद्बान्धवो
राशिः स्याद्दशमो द्वितीयसहितः षष्ठो भवेत् सेवकः।
रुद्राग्निस्वरसंस्थया यदि मतो मन्त्रो भवेत् पोषकः।
स स्याद् द्वादशकोऽष्टकः श्रुतिमितो मन्त्रः स्मृतो घातकः।।

इति। अथ राशीनां वर्णभेदः —

स्युः कर्कटो वृश्चिकमीनराशिर्विप्रा नृपाः सिंहधनुश्च मेषः।
तुला सकुम्भो मिथुनश्च वैश्याः कन्या वृषोऽजो मकरश्च शूद्राः।।

इति।। अथ पाञ्चभौतिकचक्रम्। तत्र दक्षिणामूर्तिसंहितायाम्—

उऊओगजडा वर्णा दबला लश्च पार्थिवाः। ऋॠऔघझढा वर्णा धभवाः सस्तु नीरजाः।। १।।
ईईऐखछठा वर्णास्थफराः क्षश्च वह्निकाः। अआएकचटा वर्णास्तपयाः षस्तु वायुजाः।। २।।
लृॡअंङञणा वर्णा नमशा हस्तु नाभसाः।।

इति। श्रीकुलार्णवे —

महीसलिलयोर्मैत्री अनिलानलयोरपि। सामान्यमग्निभूम्योस्तु सलिलानिलयोस्तथा।। १।।
शात्रवं वैपरीत्येन मित्रं सर्वत्र चापरम्। परस्परविरुद्धानां मन्त्राणां यत्र सङ्गतिः।।
वर्जयेत्तादृशं मन्त्रं नाशकृत्तं कुलश्वरि।।२।।

इति।। अथ सिद्धसाध्यादिशोधनप्रकारः। तत्रादौ द्वादशारचक्रम्, तत्र कुलमूलावतारे—

द्वादशारे तथा चक्रे कूटषण्डविवर्जितान्। आदिहान्तााँल्लिखेद् वर्णान् पूर्वतो यावदीश्वरम्।।१।।
अङ्कानेकादिमान्वन्ताँल्लिखेत् पूर्वादितः क्रमात्। सिद्धः साध्यः सुसिद्धोऽरिश्चतुर्वर्गः स्फुटो भवेत्।।२।।

एतेषां फलानि कुलमूलावतारे —

नवैकपञ्चमः सिद्धः साध्यः षड्दशयुग्मकः। सुसिद्धो मुनिरुद्राग्नि स्तुर्याष्टद्वादशो रिपुः।।
इति ज्ञात्वा वरारोहे मन्त्रं दद्याद्विशालधीः।।
तेषां फलानि सिद्धारिचक्रोक्तानि ज्ञेयानि।।

।। इति श्रीमहामहोपाध्यायभगवत्पूज्यपाद-श्रीगोविन्दाचार्यशिष्य-
श्रीभगवच्छङ्कराचार्यशिष्य-श्रीविष्णुशर्माचार्यशिष्य-
श्रीप्रगल्भाचार्यशिष्य-श्रीविद्यारण्ययतिविरचिते
विद्यार्णवाख्ये तन्त्रे द्वितीयः श्वासः।। २।।



## अथ
# श्रीविद्यार्णवतन्त्रे
## तृतीयः श्वासः



अथ षोडशारचक्रम्। तत्र कुलमूलावतारे —

"चतुरस्त्रां भुवं भित्त्वा कोष्ठानां षोडशालिखेत्। अकारादिक्षकारान्तां मातृकामपि विन्यसेत्॥१॥
ईशानकोणादारम्य[१] वायव्यान्तं लिखेत् सुधीः। प्रादक्षिण्यक्रमेणैव"॥ इति।

तल्लेखनप्रकारमाह लक्ष्मीकुलार्णवे—

"एकत्रिरुद्रनववनेत्रयुगार्कपङ्क्तिषण्णा[२]गषोडशचतुर्दशपञ्चकेषु।
कोष्ठे लिखेद् मुनितिथीषु तथावशिष्टे वर्णान् हुताशनमितान् क्रमशोऽम्बिकायाः"॥ १॥ इति।
"सिद्धः सिद्ध्यति कालेन साध्यः सिद्ध्यति वा न वा। सुसिद्धस्तत्क्षणादेव अरिर्मूलं निकृन्तति"॥२॥

इति। भैरवीतन्त्रे—

दुष्टर्क्षराशिभूतादिवर्णप्रचुरमन्त्रकम्। सम्यक् परीक्ष्य तं यत्नाद् वर्जयेन्मतिमान्नरः॥ १॥
सिद्धसाध्यादियोगेषु मन्त्रदाने विशेषतः। प्रसिद्धं नाम गृह्णीयात् सुषुप्तो येन जागृयात्[३]॥२॥
आदौ सिद्धस्तथान्ते च सर्वसिद्धिफलप्रदः। आदावन्ते भवेत्साध्यः कृच्छ्रसाध्य उदाहृतः॥३॥
आदावन्ते सुसिद्धस्तु क्षिप्रमेव प्रसिद्ध्यति। आदावन्ते रिपुर्यस्तु साधकं स निकृन्तयेत्॥४॥
आदौ सिद्धोऽन्त्यसाध्ये यो द्विगुणेन स सिद्ध्यति। आदौ साध्यः सुसिद्धोऽन्ते[४] प्रोक्तमार्गेण सिध्यति॥५॥
सुसिद्धादिस्तु साध्यान्तश्चतुर्गणमपेक्षते। आद्यन्तयोर्यदा सिद्धो मध्ये साध्यः प्रजायते॥६॥
आद्यन्तयोर्यदा साध्यो मध्ये सिद्धः प्रजायते। तावुभौ साध्यसिद्धौ हि जपाधिक्येन सिद्ध्यतः॥७॥
आदौ सिद्धेन संयुक्तः सुसिद्धेन तथान्ततः। श्रवणादेव सिद्ध्येत साधकस्य न संशयः॥८॥
सिद्धान्तरितसाध्यस्तु सुसिद्धान्तरितोऽथवा। शीघ्रं सिद्ध्यति मन्त्रो वै यच्चोक्तं[५] मन्त्रवित्तमैः॥९॥
सिद्धेनान्तरितः शत्रुः सुसिद्धेनापि चेद्भवेत्। नासौ रिपुर्भवेन्मन्त्रः किन्तु कृच्छ्रेण सिद्ध्यति॥१०॥
साध्येनान्तरितः सिद्धः सुसिद्धोऽपि तथा यदि। सिद्ध्यत्यतीव कष्टेन साधकस्य न चान्यथा॥११॥
रिपुणान्तरितं सिद्धं सुसिद्धं च तथा त्यजेत्। रिपुणा दूषितो मन्त्रो नैव ग्राह्यः कथञ्चन॥१२॥
अल्पदोषा बहुगुणा मन्त्रा देया विचक्षणैः[६]। सिद्धादिकोष्ठकं ज्ञात्वा ततः सिद्धिः प्रजायते॥१३॥
एकाक्षरे तथा कूटे त्रैपुरे मन्त्रनायके। स्त्रीदत्ते स्वप्नदत्ते च सिद्धादीन्नैव शोधयेत्॥ १४॥

---

१. 'णमा' क. पाठः। २. 'वर्णा' क. पाठः। ३. 'जागयात्' क. पाठः। ४. 'न्त्यः' ख. पाठः। ५. 'यथोक्तं' क. पाठः।
६. 'विचारणैः' क. पाठः।

नृसिंहार्कवराहाणां प्रासादप्रणवस्य च। सपिण्डाक्षरमन्त्राणां सिद्धादीन्नैव शोधयेत्।। १५।।
पाशाद्यं त्र्यक्षरं मन्त्रं त्रैपुरं चण्डनायकम्। सौरं मृत्युञ्जयं शाक्तं शाम्भवं विनतासुतम्।। १६।।
सौरमन्त्रास्तु येऽपि स्युर्वैष्णवा नारसिंहकाः। सिद्धसाध्यसुसिद्धारिविचारपरिवर्जिताः।। १७।।
प्रणवं त्र्यक्षरं मायां व्योमव्याप्यं षडक्षरम्। मालामन्त्रेषु सर्वेषु सिद्धादीन् नैव शोधयेत्।। १८।।

इति। रत्नसागरे –

हंसस्याष्टाक्षरस्यापि तथा पञ्चाक्षरस्य च। एकद्वित्र्यादिबीजस्य सिद्धादीन्नैव शोधयेत्।। १।।
नृसिंहार्कवराहाणां कालिका सिद्धकालिका। श्यामला च तथा चण्डी सिद्धादिपरिवर्जनम्।।२।।

इति। रुद्रयामले –

अघोरमन्त्रे देवेशि मालामन्त्रस्य पार्वति। नपुंसकस्य मन्त्रस्य सिद्धादीन्नैव शोधयेत्।। १।।

इति। कुलमूलावतारे –

स्वप्नोपदिष्टमन्त्रस्य न विधिर्नैव च क्रिया। उद्दिष्टदेवतां ध्यात्वा जपेच्छुभकरं भवेत्।। १।।

इति। अगस्त्यसंहितायाम् –

राममन्त्रेषु सर्वेषु शृणुष्व मुनिपुङ्गव। तारकत्वान्मन्त्रराजे सिद्धादीन्नैव शोधयेत्।। १।।

इति। सिद्धान्तशेखरे –

एकत्रिपञ्चसप्तार्णनवरुद्राक्षरान्विते। द्वात्रिंशदक्षरे मन्त्रे सिद्धादीन् नैव शोधयेत्।। १।।
ये च बौद्धाश्च जैनाश्च गोपाला वैष्णवाश्च ये। सिद्धसाध्यसुसिद्धारिविचारपरिवर्जिताः।।२।।
व्योमव्यापी षडर्णश्च मातृका हरवल्लभा। बहुरूपाह्वया मन्त्राः पञ्च साधारणा मताः।।३।।

इति। अथ षड्दल[1]चक्रम्। तत्र कुलमूलावतारे –

षड्दलं पद्ममालिख्य प्रागादिषु दलेषु च। अकाराद्यर्णनिकैकौँल्लिखेत् विषण्डकूटकान्।। १।।
स्वनामाद्यक्षरं यत्र तदारभ्य विचारयेत्। प्रथमे सम्पदुद्दिष्टा द्वितीये सम्पदः क्षयः।। २।।
तृतीये तु धृतिं विद्याच्चतुर्थे बन्धुविग्रहम्। पञ्चमे संशयं विद्यात् षष्ठे सर्वविनाशनम्।।३।।

इति। अथ ऋणधनशोधनचक्रम्। तत्र कुलमूलावतारे–

इन्द्र[2]र्क्षनेत्ररविपञ्चदशर्तुवेदवह्न्यायुधाष्टनवभिर्गुणितांश्च साध्यान्।
दिग्भूगिरिश्रुतिगजाग्निमुनीषुवेदषड्वह्निभिश्च गुणितानथ साधकार्णान्।।
नामाक्षरादकठबाद्गजभक्तशेषं ज्ञात्वोभयोरधिकशेषमृणं धनं स्यात्।।

[3]अथैतच्चक्रनिर्माणप्रकारः– तत्र दक्षिणोत्तरायताः सप्त रेखाः प्राक्प्रत्यगायता द्वादश रेखाश्च विलिख्य षट्षष्टिकोष्ठानि कृत्वा तत्र सर्वोपरिगतैकादशकोष्ठात्मकप्रथमपङ्क्तौ स्ववामादिदक्षिणान्तं प्रथमकोष्ठे १४ द्वितीये २७ तृतीये २ चतुर्थे १२ पञ्चमे १५ षष्ठे ६ सप्तमे ४ अष्टमे ३ नवमे ५ दशमे ८ एकादशे ९ इत्येकादशभेदानङ्कान्

१. 'पद' क. पाठः २. 'नेत्र' ग. पाठः। ३ 'तथै' ग. पाठः।

विलिख्य, तदधो द्वितीयपङ्क्तौ स्ववामादिदक्षिणान्तं "अइउऋलृएऐओऔअं अः" इत्येकादश स्वरानेकादशकोष्ठेषु विलिख्य, तदधः पङ्क्तौ ककारादिटकारान्तान् तदधः पङ्क्तौ ठकारादिककारान्तान् तदधः पङ्क्तौ बकारादिहकारान्तान् वर्णान् विलिख्य तदधःपङ्क्तौः १०। १।७।४।८।३।७।५।४।६।३ इत्येकादशविधानङ्कानेकादशसु कोष्ठेषु विलिख्य इति अकठवचकं निर्माय विचारयेत्। तत्र स्वेष्टमन्त्रस्थवर्णान् स्वरव्यञ्जनबिन्दुविसर्गान् पृथक्कृत्य सर्वोपरिगतस्थाङ्केन यस्य यस्य वर्णस्य यो योऽङ्कस्तं तं वर्णं तेन तेनाङ्केन (ग?गु) णयित्वा सञ्जातसंख्यासमुदायमष्टभिराहृत्यावशिष्टमङ्कं पृथक् संस्थाप्य, शिष्यनामाक्षराणि[1] च तथैव स्वरव्यञ्जनबिन्दुविसर्गैः पृथक्कृत्य सर्वाधःपङ्क्तिस्थाङ्केषु यस्य यस्याङ्कस्य यो योऽङ्कस्तं तं तेन तेनाङ्केन (ग?गु) णयित्वा सञ्जाताङ्कसमुदायमष्टभिराहृत्यावशिष्टमङ्कं पृथक्संस्थाप्य मन्त्रसाधकयोरवशिष्टाङ्कमध्ये योऽङ्कस्तद[2]धिकसंख्याकः स ऋणी ज्ञेयः। मन्त्रश्चेदृणी तदा स मन्त्रो ग्राह्यः। यस्य मन्त्रस्य साधको ऋणी भवति स मन्त्रस्त्याज्य इति॥

अथ श्रीविद्यामधिकृत्य मातृकानिरूपणम्।

अथ वक्ष्ये जगद्धात्री मातृकां मन्त्रविग्रहाम्। सौकर्यार्थं हि मन्त्राणां न्यासपूजाजपस्य च ॥१॥
उद्धारे साधकानां च विशेषात् कालिकामते। तारस्य पञ्चभेदेभ्यः पञ्चाशद्वर्णगाः कलाः ॥२॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरनन्तरम्। इन्धिका दीपिका चैव रेचिका मोचिका परा॥३॥
सूक्ष्माऽसूक्ष्माऽमृता ज्ञाना[3] मृता चाप्यायिनी तथा। व्यापिनी व्योमरूपा स्युरन्ता स्वरजाः कलाः॥४॥
सृष्टिर्ऋद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः[4] स्थिरा। स्थितिः सिद्धिरिति प्रोक्ताः क्रमाच्च कचवर्गजाः[5]॥५॥
ततश्चापि जरा चैव पालिनी शान्तिरेव च। ऐश्वर्या च रतिश्चैव कामिका वरदा तथा॥६॥
ह्लादिनी प्रीतिर्दीर्घा च क्रमात् स्युः टतवर्गजाः। तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुत्क्रोधिनी क्रिया॥७॥
उत्कारी मृत्युरेताः स्युः क्रमाच्च पयवर्गजाः। षवर्गोत्थकलाः प्रोक्ताः पीता श्वेतारुणाऽसिता॥८॥
अनन्ता च तथा प्रोक्ताः पञ्चाशद्वर्णसम्भवाः। अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः॥९॥
शशिनी चन्द्रिका ज्योत्स्ना कान्तिः श्रीः प्रीतिरङ्गदा। पूर्णा पूर्णामृता कामदायिन्यः स्वरजाः कलाः॥१०॥
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी शुचिः[7]। सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा॥११॥
कभाद्या वसुदाः सौराष्ठडान्ता द्वादशेरिताः। धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी॥१२॥
सुश्रीः सुरूपा कपिला हव्यकव्यवहे[8] अपि। यादीनां दशवर्णानां कला धर्मप्रदा इमाः॥१३॥
सोमसूर्याग्निरूपण्यिः साधकानां फलप्रदाः। श्रीकण्ठोऽनन्तसूक्ष्मौ च त्रिमूर्तिरमरेश्वरः ॥१४॥
अर्घीशो भारभूतिश्च तिथीशः स्थाणुको हरः। झिण्टीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः॥१५॥
अक्रूरश्च महासेनः षोडश स्वरमूर्तयः। पश्चात् क्रोधीशचण्डीशपञ्चान्तकशिवोत्तमाः ॥१६॥
अथैकरुद्रकूर्मैकनेत्राह्वचतुराननाः । अजेशः सर्वसौमेशौ तथा लाङ्गलिदारुकौ ॥१७॥
अर्द्धनारीश्वरश्चोमाकान्तश्चाषाढिदण्डिनौ । स्युरद्रिमीनमेषाख्यलोहिताश्च शिखी तथा ॥१८॥
छगलाण्डद्विरण्डौ च[9] महाकालकपालिनौ। भुजङ्गेशः पिनाकी च खड्गीशाख्यो बक[10]स्तथा।१९॥
श्वेतो भृगुश्च नकुली शिवः संवर्तकः स्मृतः। पूर्णोदरी स्याद्विरजा शाल्मली तदनन्तरम्॥ २०॥

---

१. 'ध्रुवराणि' ग. पाठः। २.'स्त्वधि' ख.पाठः। ३.'तीता' ग. पाठः। ४.'धृति' ग. पाठः। ५. 'का:' क. पाठः। ६. 'रोधिनी' ग. पाठः। ७. 'रुचिः' ग. पाठः। ८. 'हा अपि' ख. पाठः। ९. 'मढेशौ' ग. पाठः। १०. 'शपिनाकीशखड्गीशाख्यबकाः' ग. पाठः।

लोलाक्षी वर्तुलाक्षी च दीर्घघोणा ततः परम्। सुदीर्घमुखिगोमुख्यौ दीर्घजिह्वा ततः परम्॥ २१॥
कुण्डोदर्यूर्ध्वकेशी च तथा विकृतमुख्यपि। ज्वालामुखी ततश्चोल्कामुखी च श्रीमुखी तथा॥ २२॥
विद्यामुखी च कथिताः रुद्राणां स्वरशक्तयः। महाकालीसरस्वत्यौ सर्वसिद्धिस्ततः परम्॥ २३॥
गौरी त्रैलोक्यविद्या स्यान्मन्त्रशक्तिस्ततः परम्। आत्मशक्तिर्भूतमाता ततो लम्बोदरी तथा॥ २४॥
द्राविणी नागरी भूयः खेचरी चापि मञ्जरी। रूपिणी वीरिणी[1] पश्चात् काकोदर्यपि पूतना॥ २५॥
स्याद्भद्रकलीयोगिन्यौ शङ्खिनी गर्जिनी तथा। कालरात्रिश्च कुर्दिन्या कपर्दिन्यपि वज्रिका[2]॥ २६॥
जया च सुमुखी चैव रेवती माधवी तथा। वारुणी वायवी चैव तथा रक्षोविदारिणी॥ २७॥
ततश्च सहजा लक्ष्मीर्व्यापिनी च ततः परम्। महामाया च कथिताः क्रमात्ताः रुद्रशक्तयः॥ २८॥
अत्र रुद्राः स्मृता रक्ता धृतशूलकपालकाः। शक्तयो रुद्रपीठस्थाः सिन्दूरारुणविग्रहाः॥ २९॥
रक्तोत्पलकपालाभ्यामलङ्कृतकराम्बुजाः। केशवो नारायणो माधवगोविन्दविष्णवः॥ ३०॥
मधुसूदनसंज्ञोऽन्यः स्यात् त्रिविक्रमवामनौ। श्रीधरश्च हृषीकेशः पद्मनाभस्ततः परम्॥ ३१॥
दामोदरो वासुदेवः सङ्कर्षण इतीरितः। प्रद्युम्नश्चानिरुद्धश्च क्रमात् स्युः स्वरमूर्तयः॥ ३२॥
पश्चाच्चक्री गदी शार्ङ्गी खड्गी शङ्खी हली पुनः। मुसली शूलभृत्[3] पाशी अङ्कुशी च ततः परम्॥३३॥
मुकुन्दो नन्दजो नन्दी नरो नरकजिद्धरिः। कृष्णः सत्यः सात्त्वताख्यः[4] शौरिः शूरो जनार्दनः॥ ३४॥
भूधरो विश्वमूर्तिश्च वैकुण्ठः पुरुषोत्तमः। बली बलानुजो बालो वृषघ्नो वृषभस्तथा॥ ३५॥
हंसो वराहो विमलो नृसिंहो मूर्तयो हलाम्[5]। कीर्तिः कान्तिस्तथा तुष्टिः पुष्टिश्चैव धृतिस्ततः॥ ३६॥
शान्तिः[6] क्रिया दया मेधा हर्षा श्रद्धा ततः परम्। लज्जा लक्ष्मीसरस्वत्यौ प्रीती रतिरिमाः क्रमात्॥३७॥
जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी। विजया विरजा विश्वा विनदा सुनदा[7] स्मृतिः॥३८॥
ऋद्धिः समृद्धिः शुद्धिश्च भुक्तिर्बुद्धि[8]र्मतिः क्षमा। रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधा परा॥ ३९॥
परायणा च सूक्ष्मा च सन्ध्या प्रज्ञा प्रभा[10] निशा। अमोघा विद्युता चेति कादीनां मूर्तयो हरेः॥ ४०॥
केशवाद्या इमे श्यामाः शङ्खचक्रलसत्कराः। शक्तयस्तु प्रियाङ्केषु निषण्णाः सस्मिताननाः॥ ४१॥
विद्युद्दामसमानाङ्ग्यः पङ्कजाभयबाहवः। रविः प्रभाकरो भास्वान् द्युमणिः पूषणो भगः॥ ४२॥
आदित्योऽर्को वेदमूर्तिः कर्मसाक्षी दिवाकरः। मित्रोऽर्यमोष्णरश्मिश्च द्वादशात्मा विभाकरः॥ ४३॥
स्वराणां मूर्तयश्चैते सूरः सूर्यो विभावसुः। अहस्करोऽरुणो ब्रध्नो[11] भास्वान् सप्ततुरङ्गमः॥४४॥
हरिदश्वो ग्रहाधीशो मार्तण्डो भानुरव्ययः। विकर्तनः सहस्रांशुर्मिहिरो मित्रमाठरौ॥ ४५॥
कर्मसाक्षी जगन्नेत्रस्तरणिः पद्मिनीप्रियः। चण्डांशुः पिङ्गलो दण्डी गभस्ती घृणिरंशुमान्॥ ४६॥
प्रद्योतनो जगच्चक्षुस्तपनो लोकबान्धवः। हंसस्तमोपहन्ता च त्रयीमूर्तिश्च मूर्तयः॥ ४७॥

---

१ 'विरणी' क. ख. पाठः। २ 'चर्च्चिका' ग. पाठः। ३ 'भृत्' क. पाठः। ४ 'शाश्वताख्यः' ग. पाठः। ५ 'हरेः' ग. पाठः। ६ 'शान्तिः' ग. पाठः। ७ 'सुतदा' ग. पाठः। ८ 'सिद्धिश्च भुक्तिमुक्तिः' ग. पाठः। ९ 'परा' ख. पाठः। १० 'परा' ग. पाठः॥

विद्याह्रीपुष्टयः प्रज्ञा सिनीवाली कुहूः पुनः। रुद्रवीर्या प्रभानन्दा स्यात्पोष[१]ण्यृद्धिदा शुभा॥ ४८॥
कालरात्रिर्महारात्रिर्भद्रकाली कपालिनी। विकृतिर्दण्डमुण्डिन्यौ सेन्दुखण्डा शिखण्डिनी॥ ४९॥
निशुम्भशुम्भमथनी महिषासुरमर्दिनी । इन्द्राणी चैव रुद्राणी शङ्करार्धशरीरिणी ॥ ५०॥
नारी नारायणी चैव त्रिशूलिन्यपि पालिनी। अम्बिका ह्लादिनी चैव समृद्धिर्वृद्धिरेव च॥ ५१॥
पिङ्गलाक्षी विशालाक्षी माया संज्ञा वसुन्धरा। श्रद्धा स्वाहा सुधा भिक्षा देवकी कमलासना॥ ५२॥
त्रिलोकधात्री सावित्री गायत्री त्रिदशेश्वरी। सुरूपा बहुरूपा च पञ्चाशच्छक्तयो रवेः॥ ५३॥

इति। अथ काममातृका—

कामेशः कामदः कान्तः[२] कान्तिमान् कामगस्तथा। कामाचार[३]श्च कामी च कामुकः कामवर्द्धनः॥५४॥
वामो रामश्च[४] रमणो रतिनाथो रतिप्रियः। रात्रिनाथो[५] रमाकान्तो, रममाणो निशाचरः॥५५॥
नन्दको नन्दनो नन्दी ततो नन्दयिता ततः। पञ्चबाणो रतिसखः पुष्पधन्वा महाधनुः॥५६॥
भ्रामणो भ्रमणश्चैव भ्रममाणो भ्रमस्तथा। भ्रान्तो भ्रामकभृङ्गौ च भ्रान्तचारो भ्रमावहः॥५७॥
मोहनो मोहको मोहो मोहवर्द्धन एव च। मदनो मन्मथश्चैव मातङ्गो भृङ्गनायकः॥५८॥
गायकश्चैव गीती च नर्तकः[६] खेलकस्ततः। उन्मत्तो मत्तकश्चैव विलासी लोभ[७]वर्द्धनः॥५९॥
कामस्य मूर्तयः प्रोक्ता अकाराद्यर्णसञ्चये। रतिः प्रीतिश्च तदनु कामिनी मोहिनी ततः॥६०॥
कमलासुविलासिन्यौ ततः कल्पलता तथा। श्यामा शुचिस्मिमा चैव विस्मिता तदनन्तरम्॥६१॥
विशालाक्षी लेलिहाना ततश्चैव दिगम्बरा। वामा च कुब्जिका कान्ता, नित्या कुल्या[८] च भोगिनी॥६२॥
कामदा चैव तत्पश्चात् प्रोच्यते च सुलोचना[९]। सुलापिनी मर्दिनी च ततश्च कलहप्रिया॥६३॥
वराक्षी[१०] सुमुखी चैव नलिनी जटिनी तथा। पालिनी च शिवा मुग्धा ततश्चैव रमा प्रमा॥६४॥
लोला च चञ्चला चैव दीर्घजिह्वा रतिप्रिया। लोलाक्षी भङ्गिनी चैव पाटला मदना तथा॥६५॥
माला च हंसिनी चैव ततः स्याद्विश्वतोमुखी। जगदानन्दिनी चैव रमणी कान्ति[११]रेव च॥६६॥
ततः स्याच्च कलङ्घ्नी वृकोदर्यपि सा तथा। मेघश्यामा तथा लोभवर्द्धनी[१२] शक्तयस्तथा॥६७॥
ततः कामान् स्मरेन्मर्त्यो दाडिमीकुसुमोपमान्। वामाङ्कशक्तिसहितान् पुष्पबाणेक्षुकार्मुकान्॥६८॥
शक्तयः कुङ्कुमनिभाः सर्वाभरणभूषिताः। नीलोत्पलकरा ध्येयास्त्रैलोक्याकर्षणक्षमाः॥ ६९॥

इति। अथ त्रिपुरमातृका —

कामिनी मोदिनी चैव मदनोन्मादिनी ततः। द्राविणी खेचरी चैव घण्टिका च कलावती॥ १॥
क्लेदिनी शिवदूती च ततश्च सुभगा भगा। विद्येशी च महालक्ष्मीः कौलिनी च सुरेश्वरी॥२॥
स्वराणां शक्तयः प्रोक्तास्ततश्च कुलमालिनी। व्यापिनी च भगा चैव वागीशी तदनन्तरम्॥३॥
वषट्कारी पिङ्गला च भगसर्पिण्यतः परम्। सुन्दरी च ततो नीलपताका त्रिपुरा ततः॥४॥

---

१. 'षावृ'ग. पाठः। २. 'कामकामदकान्ताश्च' ग. पाठः। ३. 'कामचार' क. पाठः। ४. 'वामश्चः' ख. पाठः। ५.'रतिनाथः' ग. पाठः। ६. 'गीतिश्चवर्तकः' क. पाठः। ७.'काम' ग. पाठः। ८. 'कल्या च मोहिनी' ग. पाठः। ९. 'सुरत्तमा' ग. पाठः। १०. 'एकाक्षी' ग. पाठः। 'वाराहा' ख. पाठः। ११. 'कीर्ति' ग. पाठः। १२. 'ना' ग. पाठः।

सिद्धेश्वरी ह्यमोघा च रत्नमालिन्यतः परम्। मङ्गला भगमाला च नित्या रौद्री ततः परम्॥ ५॥
व्योमेश्वरी अम्बिका चाप्यट्टहासा ततः परम्। आप्यायिनी च वज्रेशी क्षोभिणी शाम्भवी तथा॥ ६॥
स्तम्भिनी चा'प्यनामा च रक्ता शुक्लापराजिता। संवर्तिका च विमला अघोरा घोरया युता॥ ७॥
बिम्बा'दिभैरवी चैव सर्वाकर्षिणिका तथा। एताःपञ्चाशदाख्याताः पञ्चाशद्वर्णविग्रहाः॥ ८॥

इति। अथ गणेशमातृका –

विघ्नेश्वरो विघ्नराजो विनायकशिवोत्तमौ। विघ्नकृद्विघ्नहर्ता च विघ्नराड् गणनायकः॥ १॥
एकदन्तो द्विदन्तश्च गजवक्त्रो निरञ्जनः। कपर्दी दर्घवक्त्रश्च. शङ्कु'कर्णो वृषध्वजः॥ २॥
गणनाथो गजेन्द्रश्च शूर्पकर्णस्त्रिलोचनः। लम्बोदरमहानादौ चतुमूर्तिः सदाशिवः ॥ ३॥
आमोदो दुर्मुखश्चैव सुमुखश्च प्रमोदकः। एकपादो द्विजिह्वश्च शूरो वीरश्च षण्मुखः॥ ४॥
वरदो वामदेवश्च वक्रतुण्डो द्विरण्डकः। सेनानीर्ग्रामणीर्मत्तो विमत्तो मत्त'वाहनः ॥ ५॥
जटी मुण्डी च खड्गी च वेरण्यो वृषकेतनः। भक्ष्यप्रियो मेघनादो गणपश्च गणेश्वरः॥ ६॥
एते पञ्चाशदाख्याता मूर्तयो गणपस्य तु। श्रीः ह्रीस्तुष्टि'श्च शान्तिश्च पुष्टिश्चैव सरस्वती॥७॥
रतिर्मेधा च कान्तिश्च कामिनी मोहिनी' जटा। तीव्रा च ज्वालिनी नन्दा सुरसा कामरूपिणी॥८॥
उग्रा च जयनी सत्या विघ्नेशी च स्वरूपिणी। कामदा च ततः प्रोक्ता तथा च मदविह्वला॥९॥
विकटा च ततो घूम्रा भूतिर्भूमिः सती रमा। ततश्च मानुषी' चैव ततश्च मकरध्वजा ॥१०॥
विकर्णा भ्रुकुटी लज्जा घोणा' चैव धनुर्धरा। ततश्च यामिनी' रात्रिश्चन्द्रिका'' च शशिप्रभा॥११॥
लोला च चञ्चलाक्षी च तथा ऋद्धिश्च दुर्भगा। सुभगा च शिवा दुर्गा कालिकालकजिह्विका॥ १२॥
विघ्नहारिणिका चैव शक्तयः स्युर्गणेशितुः॥ इति।

अथ योगिनीमातृका –

अमृताकर्षिणीन्द्राणी चेशान्यु''मोर्ध्वकेशिनी। ''ऋद्धिका च तथा ऋषा लृकारा लृषिका तथा॥ १॥
एकपादा तथैश्वर्या ओकारा चौषधात्मिका। अम्बिका चाक्षरात्मा च स्वराणां शक्तयः क्रमात्॥२॥
कालरात्रिश्च खातीता गायत्री तदनन्तरम्। घण्टाधारिणिका चैव ततो ङार्णात्मिका तथा॥३॥
चामुण्डा चैव च्छाया च जया झङ्कारिणी तथा। ञार्णात्मिका टङ्कहस्ता ततठङ्कारिणी तथा॥४॥
डामरी चैव ढङ्कारी णङ्कारी तामसी ततः। स्थानदेवी च दाक्षायण्यथ धात्री च नन्दिका॥५॥
पार्वती चैव फट्कारी बन्धिनी भद्रकालिका। महामायायशस्विन्यौ रमा लम्बोष्ठिका ततः॥६॥
वरदा शशिनी षण्डा तथा चैव सरस्वती। ततो हंसवती चैव ततः प्रोक्ता क्षमावती॥७॥ इति।

अथ पीठमातृका –

कामरूपं च काशीकं नेपालं पौण्ड्रवर्धनम्। पुरस्थिरं कान्यकुब्जं पूर्णगिर्यर्बुदे ततः॥ १॥

---

१. 'व्यापि' ग. पाठः। २. 'विद्यादि' ग. पाठः। ३. 'शङ्ख' ग. पाठः। ४. 'मद' ख. पाठः। ५.'पुष्टिः' ग. पाठः। ६. 'मोदिन' ग. पाठः। ७.'माहिषी' ग. पाठः। ८. 'दीर्घघोणः' ग. पाठः। ९. 'ग्रामिणी' क. पाठः। १०.'कामान्धा' ग. पाठः। ११. 'कर्षिणीशानी' ततक्षोमो' ग. पाठः। १२. 'ऋषाचैव' ग. पाठः।

आम्रातकेश्वरं चैव एकाग्रं तदनन्तरम्। त्रिस्रोतः[1] कामकोटं च कैलासं भृगुपत्तनम्[2]।।२।।
केदारं चन्द्रनगरं श्रीपुरोङ्कारके ततः[3]। जालन्धरं मालवञ्च कुलान्तं देविकोटकम्।। ३।।
गोकर्णं मारुतेशं च अट्टहासं ततः परम्। विरजं राजगेहं च महापथमतः परम् ।। ४।।
कोल्हमेलापुरं[4] चैव कौलेश्वरमतः परम्। जयन्तिका चोज्जयिनी चरित्रं क्षीरकं ततः।। ५।।
हस्तिनापुरमुड्डीशं प्रयागं तदनन्तरम्। षष्ठीशमायानगरे जलेश्वरमतः परम्।। ६।।
मलयं च महीपीठं[5] श्रीशैलं मरुपीठकम्। ततो गिरिवरं चैव महेन्द्रं वामनं ततः।। ७।।
हिरण्यकं महालक्ष्मीपुरमुड्यानमेव च। छायाच्छत्रं महापीठं पञ्चाशद्वर्णगान्यथ।। ८।। इति।

अथ कामाकर्षिण्यादिमातृका —

कामाकर्षिणिका चैव बुद्ध्याकर्षिणिका तथा। अहङ्काराकर्षिणी च शब्दाकर्षिणिका तथा।। १।।
स्पर्शाकर्षिणिका[6] चैव रूपाकर्षिणिका तथा। रसाकर्षिणिका चैव गन्धाकर्षिणिका ततः।। २।।
चित्तधैर्याकर्षिणिके स्मृत्याकर्षिणिका तथा। नामाकर्षिणिका चैव बीजाकर्षिणिका ततः।। ३।।
आत्माकर्षिणिका चैवामृताकर्षिणिका तथा। शरीराकर्षिणी चैव षोडशस्वरगाः क्रमात्।। ४।।
सर्वसङ्क्षोभिणी शक्तिः सर्वविद्राविणी ततः। सर्वाकर्षिणिका चैव सर्वाह्लादिनिका ततः।। ५।।
सर्वसम्मोहिनी सर्वस्तम्भिनी सर्वजृम्भिणी[7]। ततः सर्ववशङ्करी[8] सर्वरञ्जनिका तथा।। ६।।
सर्वोन्मादनकारी च ततः सर्वार्थसाधिनी। सर्वसम्पत्प्रपूरा च सर्वमन्त्रमयी तथा ।। ७।।
सर्वद्वन्द्वक्षयङ्करी सर्वसिद्धिप्रदा ततः । सर्वसम्पत्प्रदा चैव सर्वप्रियकरी ततः ।। ८।।
सर्वमङ्गलकारी च सर्वकामप्रदा ततः । सर्वदुःखविमोचिनी[9] सम्प्रोक्ता तदनन्तरम् ।। ९।।
सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी । सर्वाङ्गसुन्दरी चैव सर्वसौभाग्यदा तथा ।।१०।।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यफलप्रदा। सर्वज्ञानमयी चैव सर्वव्याधिविनाशिनी ।।११।।
सर्वाधारस्वरूपा च सर्वपापहरा तथा। सर्वानन्दमयी चैव सर्वरक्षास्वरूपिणी ।।१२।।
ततः सम्प्रोच्यते चैव सर्वेप्सितफलप्रदा। इति।

अथ त्रिशक्ति (प्रपञ्च) मातृका, प्रत्यक्षरं नामद्वयम् —

प्रपञ्चरूपा श्रीर्द्वीपरूपा मायाब्धि[10]रूपिणी। कमला गिरिरूपा च ततो वै विष्णुवल्लभा।। १।।
ततः पत्तनरूपा[11] च ततो वै पद्मधारिणी। पीठरूपा समुद्रादितनया क्षेत्ररूपिणी ।। २।।
लोकमाता वनरूपा ततः कमलवासिनी। ततश्चाश्रम[12]रूपा च इन्दिरा च ततः परम् ।। ३।।
गुहारूपा ततो माया[13] नदीरूपा रमा ततः। तथा चतुररूपा च पद्मोद्भिज्जस्वरूपिणी।। ४।।
नरायणप्रिया चैव ततः स्वेदजरूपिणी। सिद्धलक्ष्मीस्तथा प्रोक्ता ततश्चाण्डजरूपिणी।। ५।।

---

१ 'तिस्रोता' क. पाठः। २ 'इनम्' ख. पाठः। ३ 'श्रीरेकवीरके' ग. पाठः। ४ 'कोल्हाफलापुरं' ग. पाठः। ५ 'चित्रकं हारिद्रं' चेति ग. पाठः। ६ 'महापीटं' ग. पाठः। ७ 'जिम्भनी' ग. पाठः। ८ 'करि' क. पाठः। ९ 'न्या' क. पाठः। १० 'द्विरूपिणी' ग. पाठः। ११ 'ततश्च पद्मरूपा' ग. पाठः। १२ 'श्रय' ग. पाठः। १३. 'मा च' क. पाठः।

जरायुजस्वरूपा च महालक्ष्मीस्ततः परम्। ततश्च लवरूपार्या त्रुटिरूपा ह्युमा तथा॥ ६॥
कलारूपा चण्डिका च काष्ठरूपा च दुर्गिका। निमेषरूपा च शिवा श्वासरूपा ततः परम्॥७॥
अपर्णा घटिकारूपा ह्यम्बिका च ततः परम्। मुहूर्तरूपा च सती ततः प्रहररूपिणी॥ ८॥
ईश्वरी दिनरूपा च शाम्भवी च ततः परम्। सन्ध्यारूपा तथेशानी रात्रिरूपा च पार्वती॥ ९॥
तिथिरूपा मङ्गला च वाररूपा ततः परम्। दाक्षायणी च नक्षत्ररूपा हैमवती ततः॥ १०॥
योगरूपा महामाया ततः करणरूपिणी। माहेश्वरी[1] पक्षरूपा मृडानी मासरूपिणी॥ ११॥
रुद्राणी शशिरूपा च शर्वाणी[2] ऋतुरूपिणी। परमेश्वर्ययनरूपा काली वत्सररूपिणी॥ १२॥
कात्यायनी युगादिश्च रूपा गौरी तथैव च। ततः प्रलयरूपा च भवानी तदनन्तरम्॥ १३॥
पञ्चभूतस्वरूपा च ब्राह्मी च तदनन्तरम्। तथा च पञ्चतन्मात्ररूपा वागीश्वरी ततः॥ १४॥
कर्मेन्द्रियस्वरूपा च वाणी चैव ततः परम्। ज्ञानेन्द्रियस्वरूपा च सावित्री प्राणरूपिणी॥ १५॥
सरस्वती च तत्पश्चाद् गुणत्रयस्वरूपिणी। गायत्र्यन्तःकरणरूपा वाक्प्रदा च ततः परम्॥ १६॥
अवस्थात्रयरूपा च शारदा च ततः परम्। सप्तधातुस्वरूपा च भारती तदनन्तरम्॥ १७॥
दोषत्रयस्वरूपा च ततो विद्यात्मिका तथा। प्रपञ्चमातृका ख्याता सर्वसिद्धिप्रदा स्मृता॥ १८॥

इति प्रपञ्चमातृका॥ अथ कालीमातृका —

काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी। विप्रचित्ता तथोग्रोग्रप्रभा दीप्ता तथैव च॥ १॥
नीला घना बलाका च मात्रा मुद्रा मिता तथा। ब्राह्मी तथैव सम्प्रोक्ताः षोडश स्वरशक्तयः॥ २॥
नारायणी च माहेशी चामुण्डा च ततः परम्। कौमारी च तथैवोक्ता पञ्चमी चापराजिता॥ ३॥
वाराही नारसिंही च भैरवी तदनन्तरम्। महदाद्या भैरवी च प्रोक्ता सा सिंहभैरवी॥ ४॥
तथा धूम्राभैरवी च सम्प्रोक्ता भीमभैरवी। उन्मत्तभैरवी चैव वशीकरणभैरवी॥ ५॥
मोहनाद्या भैरवी च ऐन्द्र्याग्नेयी ततः परम्। याम्या च राक्षसी चैव वारुणी वायवी तथा॥ ६॥
कौवेरी च तथेशानी[3] ब्रह्माणी वैष्णवी तथा। वज्रिणी शक्तिनी चैव दण्डिनी खड्गिनी तथा॥७॥
पाशिन्यङ्कुशिनी चैव गदिनी शूलिनी तथा। मालिनी चक्रिणी चैव प्रोक्ता व्यञ्जनशक्तयः॥८॥इति।

अथ तारमातृका त्रिषष्ट्यक्षराणाम् —

कुलेशी कुलनन्दा च वागीशी भैरवी तथा। उमाः श्रीः शान्तिका चण्डा धूम्रा काली कपालिनी॥१॥
(................................) कपालिनी। वाग्वादिनी च नकुली भद्रकाली शशिप्रभा॥ २॥
प्रत्यङ्गिरा सिद्धलक्ष्मीरमृतेशी च चण्डिका। खेचरी भूचरी सिद्धा कामाक्षी[4] हिङ्गुला वसा॥ ३॥
जया च विजया चाथाजिता नित्यापराजिता। विलासिनी तथा घोरा चित्रा मुग्धा धनेश्वरी॥ ४॥
सोमेश्वरी महाचण्डा विद्या हंसी विनायिका। वेदगर्भा तथा भीमा उग्रा वैद्या च सद्गतिः॥ ५॥

---

१. 'महे' क. पाठः। २. 'पार्वती' क. पाठः। ३. 'शाना' क. पाठः। ४. 'ख्या' ग. पाठः।

उग्रेश्वरी चन्द्रगर्भा ज्योत्स्ना सत्या यशोवती। कुलिका कामिनी काम्या ज्ञानवत्यथ डाकिनी।।६।।
राकिणी लाकिनी चाथ काकिनी शाकिनीत्यपि। हाकिनी च चतु:षष्टि: शक्तय: सिद्धिदायिका:।।७।।

इति तारामातृका। अथ षोडशीमातृका —

कामेशी भगमाला च नित्यक्लिन्ना तत: परम्। भेरुण्डावह्निवासिन्यौ वज्रेशी तदनन्तरम्।। १ ।।
शिवदूती च त्वरिता ततश्च कुलसुन्दरी। नित्या नीलपताका च विजया सर्वमङ्गला।।२।।
ज्वालामालिनि[1] चित्रे[2] च महात्रिपुरसुन्दरी। षोडशीमातृकायाश्च सम्प्रोक्ता: स्वरशक्तय:।।३।।
ग्रसिनी[3] प्रियवादिन्यौ कराली च कपालिनी। शिवा घोषा च दंष्ट्रा च वीरोमा वाक्प्रदा तथा।।४।।
नारायणी मोहिनी च प्रज्ञा च शिखिवाहिनी। भीषणा वायुवेगा च भीमा चैव विनायिका[4]।।५।।
पूर्णा शक्तिश्च कङ्काली[5] कुर्दिनी कालिका तथा। दीपनी च जयन्तिन्या[6] पाविनी[7] लम्बिनी तथा।।६।।
संहारिणी छागली च पूतना मोदिका तथा। परशक्तिस्तथाम्बा च इच्छाशक्तिस्तत: परम्।।७।।
महाकाली च सम्प्रोक्ता व्यञ्जनानां च शक्तय:। इति षोडशीमातृका।।

अथ भुवनेशी मातृका —

जया च विजया चैव अजिता चापराजिता। नित्या विलासिनी दोग्ध्री अघोरा मङ्गला तथा।। १ ।।
डाकिनी राकिणी चैव लाकिनी काकिनी तथा। शाकिनी हाकिनी चैव याकिनी स्वरशक्तय:।।२।।
मङ्गला च महाकाली कुण्डली कुलसुन्दरी। कपाली कमलावत्या चामुण्डा मेरुवासिनी।।३।।
भुवनेशीसरस्वत्यौ कपिला कुलमालिनी। विनायिका[9] जया नन्दा महालक्ष्मीश्च भैरवी।।४।।
ब्रह्माणी च तथा ज्वालावली लिङ्गप्रभा तथा। मुण्डिनी च महावेगा उद्भवा[10] वैष्णवी शिवा।।५।।
महामाया तु चक्राङ्गी एकपादा सुरेश्वरी। कौवेरी मण्डली चैव वाराही च जलन्धरी।।६।।
कामाख्या काममध्यस्था व्यञ्जनानां तु शक्तय:। इति भुवनेशी[11]मातृका।।

अथ भैरवीमातृका—

त्रिपुरा त्रिपुरेशी च तथा त्रिपुरसुन्दरी । त्रिपुराद्या वासिनी च त्रिपुराश्रीस्तत: परम्।। १ ।।
त्रिपुरामालिनी चैव त्रिपुर[12]सिद्धा तत: परम्। त्रिपुराम्बा ततश्चैव महात्रिपुरभैरवी ।। २।।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च तथेन्द्राणी चामुण्डा स्वरशक्तय:।। ३।।
विशाला च विशालाक्षी निर्मला मलवर्जिता। काली च कालकल्पा च कालरात्रिर्निशाचरी।। ४।।
ऊर्ध्वकेशी मुक्तकेशी वीरा[13]चैव महाभया। जयदा मानिनी माया प्रचण्डा बिन्दुमालिनी।। ५।।
विरूपा च विरूपाक्षी खट्वाङ्गी विश्व[14]रूपिणी। रौद्री माया च प्रेताक्षी फेत्कारी[15] भयनादिनी।।६।।
धूम्राक्षी योगिनी घोरा विश्वरूपा भयङ्करी। भैरवी भीषणीया च लम्बौष्ठी च महाबला।। ७।।

---

१. 'तोतला' क. पाठ:। २. 'माला वि' ग. पाठ:। ३. 'असिनी' क. पाठ:। ४. 'यकी' क. पाठ:। ५. 'कंकारी' क. पाठ:। ६. 'नी' ग. पाठ:। ७. 'पावनी' ख. पाठ:। ८. 'श्वरी' क. पाठ:। ९. 'यकी' क. पाठ:। १०. 'टा' क. पाठ:। ११. 'श्वरी' क. पाठ:। १२. 'रा' क. पाठ:। १३. 'धीरा' ग. पाठ:। १४. 'विष्णु' ग. पाठ:। १५. 'फेट्' क. पाठ:।

व्यञ्जनानां विशेषेण सम्प्रोक्ताः क्रमात्। इति। भैरवीमातृका।।

अथ छिन्नमस्तामातृका –

लक्ष्मीर्लज्जा शिवा माया वाणी ब्राह्मी च वैष्णवी। रौद्रीश्वरी जया पद्मा वर्णिनी डाकिनी तथा।। १।।
कराली विकराली च घोरा च स्वरशक्तयः। काली[1] च खड्गिनी चण्डा भैरवी पिङ्गला तथा।। २।।
इन्द्राणी चैव फट्कारी हारिणी योगिनी तथा। प्रकाशिनी[2] वज्रिणी च सिता पीता रमा तथा।।३।।
दिगम्बरी महाघोरा मुक्तकेशी चिदाश्रया। चामुण्डा छिन्नमस्ता च भीमा हुङ्कारिणी[3] सिता।।४।।
पद्मानना पद्मगर्भा पुष्पिणी चारुहासिनी। विजया मङ्गला कान्तिर्मालिनी तारिणी तथा।। ५।।
महोदर्य[4]स्थिमाला च नागयज्ञोपवीतिनी। व्यञ्जनानां च सम्प्रोक्ताः शक्तयः सर्वकामदाः।। ६।।

इति छिन्नमस्तामातृका।। अथ धूमावतीमातृका–

धूमावती धूमनेत्रा घर्मटी मर्कटी तथा। घोररूपा च लम्बोष्ठी श्यामा श्याममुखी शिवा।। १।।
काकध्वजा कोटराक्षी धूमा धूमान्धकारिणी। मुक्तकेशी महाघोरा तथा लम्बपयोधरा।। २।।
स्वराणां शक्तयः प्रोक्ताः सर्वसिद्धिप्रदायिकाः। कोटरा कोटराक्षी च ऊर्ध्वकेशी दिगम्बरी।। ३।।
तमिस्रा तामसी चोग्रा विवर्णा मलिनाम्बरा। लम्बस्तनी च विरल[5]द्विजा दीर्घा कृशोदरी।। ४।।
विधवा शूर्पहस्ता च रूक्षा रूक्षशिरोधरा। चलहस्ता चञ्चलाक्षी जटिला कुटिलेक्षणा।। ५।।
क्षुधातुरा पिपासार्ता तीक्ष्णा रौद्रा भयानका। उत्कारी क्रोधिनी मृत्युः क्रिया रिपुविमर्दिनी।। ६।।
सत्वरा काकजङ्घा च श्मशानालयवासिनी। महाकाली च गदिताः[6] सिद्धा व्यञ्जनशक्तयः।। ७।।

इति धूमावतीमातृका।। अथ बगलामातृका–

बगला स्तम्भिनी चैव जम्भिनी मोहिनी तथा। वश्या चलाचला चैव दुर्द्धरा कल्मषा तथा।। १।।
धीरा च कल्पना कालकर्षिणी भ्रामका तथा। ततश्च मन्दगमना भोगिनी योगिनी तथा।। २।।
एतास्तु सिद्धिदायिन्यः षोडश स्वरमूर्तयः। भगाम्बा भगमाला च भगवाहा भगोदरी।। ३।।
भगिनी भगजिह्वा च भगस्था भगसर्पिणी। भगलोला भगाक्षी च शिवा भगनिपातिनी।। ४।।
जाया च विजया धात्री अजिता चापराजिता। जम्भिनी स्तम्भिनी चैव मोहिन्याकर्षिणी क्षुमा।।५।।
रम्भिणी जृम्भणी चैव कालिनी[7] वशिनी तथा। रम्भा माहेश्वरी चैव मङ्गला रूपिणी तथा।।६।।
पीता पीताम्बरा भव्या सुरूपा बहुभाषिणी। एतास्तु शक्तयः प्रोक्ता व्यञ्जनानां तु सिद्धिदाः।।७।।

इति बगलमातृका।। अथ मातङ्गीमातृका–

वामा ज्येष्ठा च रौद्री च शान्तिः श्रद्धा तथैव च। वागीश्वरी क्रिया लक्ष्मीः सृष्टिश्चैव तु मोहिनी।।१।।
प्रथमा भाविनी विद्युल्लता चिच्छक्तिरेव च। ततश्च सुन्दरानन्दा नागबुद्धिस्तथैव च।।२।।

---

१. 'बाली' ग. पाठः। २. 'शना' क. पाठः। ३. 'ह्रं' ग. पाठः। ४. 'दन्य' क. पाठः। ५. 'विमल' क. पाठः।
६. 'दिनी' ग. पाठः। ७. 'कालिनी' ख. पाठः।

एता: संसिद्धिदायिन्य: षोडश स्वरशक्तय:। सरस्वती रति: प्रीति: कीर्ति: कान्तिस्तथैव च॥ ३॥
पुष्टिस्तुष्टी रमा चैव मन्मथा मकरध्वजा। मदना पुष्पचापा च द्राविणी शोषिणी तथा॥ ४॥
बन्धिनी मोहिनी वश्या ततश्चाकर्षिणी तथा। हृल्लेखा गगना रक्ता महोच्छुष्मा करालिका॥ ५॥
अनङ्गकुसुमानङ्गमेखला च तत: परम्। अनङ्गमदना चैव अनङ्गमदनातुरा॥ ६॥
अनङ्गमदनानङ्गवेगानङ्गादिसम्भवा। अनङ्गभुवनपाला चानङ्गशशि[1]रेखिका॥ ७॥
मनोभवा च मातङ्गी कामा व्यञ्जनशक्तय:। इति मातङ्गीमातृका॥

अथ लक्ष्मीमातृका—

प्रकृतिर्विकृतिर्विद्या सर्वभूतादिभावना। श्रद्धा विभूति: सुरभिर्वाक्प्रदा कमलात्मिका[2]॥१॥
पद्मालया शची पद्मा शुद्धि: स्वाहा स्वधा तथा। धन्या चैव च सम्प्रोक्ता: षोडश स्वरशक्तय:॥२॥
हिरण्या च तथा लक्ष्मीर्नित्यपुष्टा विभावरी। अदितिश्च दितिश्चैव दीप्ता च वसुधा तथा॥३॥
करुणा धर्मनिलया पद्माक्षी भूतधारिणी। पद्मप्रभा वेदमाता पद्महस्ता तत: परम्॥४॥
पद्मोद्भवा पद्ममुखी पद्मसुन्दरिका तथा। पद्मनाभप्रिया पद्मगन्धिनी पद्मिनी रमा॥५॥
पद्ममालाधरा पद्मा सुप्रसन्ना प्रिया तथा। कान्ति: प्रिया[3] च कमला अनघा हरिवल्लभा॥६॥
अमोघा अमृता दिव्याशोका व्यञ्जनशक्तय:। इति लक्ष्मीमातृका:॥

अथ कामेश्वरीमातृका—

कामेश्वरी महामाया वागीशी ब्रह्मसंज्ञिता। अक्षरा च त्रिमात्रा च त्रिपदा त्रिगुणात्मिका॥ १॥
सुरसिद्धगणाध्यक्षा गणमाता गणेश्वरी। चण्डिका चण्डमुण्डा च चामुण्डी दंष्ट्रिणीष्टदा[4]॥ २॥
स्वराणां शक्तय: प्रोक्ता: सर्वसिद्धिप्रदायिका:। विश्वम्भरा विश्वयोनिर्विश्वमाता वसुप्रदा॥ ३॥
स्वाहा स्वधा तुष्टिऋद्धी गायत्री गोगणा खगा। वेदमाता वरिष्ठा[5] च सुप्रभा सिद्धवाहिनी॥ ४॥
आदित्यहृदया चन्द्रा चन्द्रभावानुमण्डला। ज्योत्स्ना हिरण्मयी भव्या भवदु:खभयापहा॥ ५॥
शिवतत्त्वा शिवा शान्ता शान्तिदा शान्तरूपिणी। सौभाग्यदा शुभा गौरी उमा हैमवती प्रिया॥६॥

इति कामेश्वरीमातृका॥ अथ भगमालिनीमातृका—

भगमाली[6] भगा भाग्या भगिनी च भगोदरी। गुह्या दाक्षायणी कन्या दक्षयज्ञविनाशिनी॥ १॥
जया च विजया चैव अजिता चापराजिता। सुदीप्ता लेलिहाना च कराला स्वरशक्तय:॥ २॥
आकाशनिलया ब्राह्मी बाला च ब्रह्मचारिणी। ब्रह्मास्यास्यरता प्रह्वी सावित्री ब्रह्मपूजिता॥ ३॥
प्रज्ञा माता[7] परा बुद्धिर्विश्वमाता[8] च शाश्वती। मैत्री कात्यायनी दुर्गा दुर्गसन्तारिणी परा॥ ४॥
मूलप्रकृतिरीशाना पुंस्प्रधानेश्वरेश्वरी। आप्यायनी पावनी च पवित्रा मङ्गला यमा॥ ५॥

---

१. 'शक्ति' ग. पाठ:। २. 'प्रणवात्मिका' क. ख. पाठ:। ३. 'प्रभा' क. पाठ:। ४. 'प्रदा' क. पाठ:। ५. 'वसिष्ठा' क. पाठ:।
६. 'ला' ग. पाठ:। ७. 'माना' ग. पाठ:। ८. 'पशुमाना' ग. पाठ:।

ज्योतिष्मती संहरिणी सृष्टिस्थित्यन्तकारिणी। अघोरा घोररूपा च व्यञ्जनानां च शक्तयः।। ६।।

इति भगमालामातृका।। अथ नित्यक्लिन्नामातृका—

नित्यक्लिन्ना नित्यमदद्रवोमा विश्वरूपिणी। योगेश्वरी योगगम्या योगमाता वसुन्धरा।। १।।
धन्या धनेश्वरी धान्या रत्नदा पशुवर्धिनी। कूष्माण्डी दारुणी चण्डी स्वराणां शक्तयः क्रमात्।।२।।
घोरा घोरस्वरूपा च मातृका माधवी दशा। एकाक्षरा विश्वमूर्तिर्बिम्वा विश्वेश्वरी[1] ध्रुवा।। ३।।
शर्वा क्षमादिर्भूतात्मा भूतिदा भूतिवर्धिनी[2]। भूतेश्वरप्रिया भूतिर्भूतमाला[3] च यौवनी।। ४।।
वैदेही पूजिता सीता मायावी भववाहिनी। सत्त्वस्था सत्त्वनिलया सत्त्वासत्त्वचिकीर्षणा।। ५।।
विश्वस्था विश्वनिलया श्रीफला श्रीनिकेतना। श्रीः शशाङ्कधरा नन्दा व्यञ्जनानां च शक्तयः।। ६।।

इति नित्यक्लिन्नामातृका।। अथ भेरुण्डामातृका—

भेरुण्डा भैरवी साध्वी नताख्यानन्तसम्भवा। त्रिगुणी घोषिणी घोषा लक्ष्मीः पुष्टा शुभालया।।१।।
धर्मोदया धर्मबुद्धिर्धर्माधर्मपुटद्वया। ज्येष्ठा यमस्य भगिनी चैला कौशेयवासिनी ।। २।।
भ्रमणा भ्रामिणी भ्राम्या भ्रमा ज्ञानापहारिणी। माहेन्द्री वारुणी सौम्या कौवेरी हव्यवाहिनी।। ३।।
वायवी नैर्ऋतीशानी लोकपालैकरूपिणी[4]। मोहिनी मोहजननी स्मृतिवृत्तान्तवाधिनी।। ४।।
यक्षाणां जननी यक्षी सिद्धिर्वैश्रवणालया। मेधा श्रद्धा धृतिः प्रज्ञा सर्वदेवनमस्कृता।। ५।।
आशावाञ्छा निरीहेच्छा तथा भूतानुवर्तिनी। शक्तयः कथिताश्चैकपञ्चाशद्वर्णगाः क्रमात्।। ६।।

इति भेरुण्डामातृका।। अथ वह्निवासिनीमातृका—

वह्निवासिनिका वह्निनिलया वह्निरूपिणी। यज्ञविद्या महाविद्या ब्रह्मविद्या गुहालया।। १।।
भूतेश्वरी ब्रह्मधात्री विमला कनकप्रभा। विरूपाक्षा विशालाक्षी हिरण्याक्षी शतानना।। २।।
त्र्यक्षा च कमला विद्या सिद्धविद्या धराधिपा। देवमाता दितिः पुण्या दनुः कद्रूः सुपर्णिका[5]।। ३।।
अपान्निधिर्महावेगा होर्मिर्वरुणालया। इष्टा[6] तुष्टिकरी च्छाया सामगा रुचिरा परा।। ४।।
ऋग्यजुःसामनिलया वेदोत्पत्तिः स्तुतिप्रिया। प्रद्युम्नदयिता साध्वी सुखसौभाग्यसिद्धिका।। ५।।
सर्वकामप्रदा भद्रा सुभद्रा सर्वमङ्गला। धामिनी धमनी माध्वी मधुकैटभमर्दिनी।। ६।।
बाणप्रहरिणी बाणा प्रोक्ता व्यञ्जनशक्तयः। इति वह्निवासिनीमातृका।।

अथ वज्रेश्वरीमातृका—

महावज्रेश्वरी नित्या विधिस्था चारुहासिनी। उषानिरुद्धपत्न्यौ च रेवती रैवतात्मजा।। १।।
हलायुधप्रिया माया गोकुला गोकुलालया। कृष्णानुजा कृष्णरजा नन्दस्य दुहिता सुता।। २।।
कंसविद्राविणी क्रुद्धा सिद्धचारणसेविता। गोक्षीराज्ञा घृतवती भव्या गोपजनप्रिया।। ३।।
शाकम्भरी सिद्धविद्या वृद्धा सिद्धिकरी क्रिया। दावाग्निर्विश्वरूपा च विश्वेशी दितिसम्भवा।। ४।।

१. 'भ्वरा' ग. पाठः। २ 'रूपिणी' क. पाठः। ३. 'माता' क. पाठः। ४. 'रक्षिणी' ग. पाठः। ५. 'सुवर्णिका' ग. पाठः। ६. 'इच्छा' ग. पाठः।

आधारचक्रनिलया द्वारशाला[1]वगाहिनी। सूक्ष्मा सूक्ष्मतरा स्थूला सप्रपञ्चा निरामया।। ५।।
निष्प्रपञ्चा क्रियातीता क्रियारूपा फलप्रदा। प्राणाख्या मन्त्रमाता च सोमसूर्यामृतप्रदा।। ६।।
छन्दःख्याता च चिद्रूपा परमानन्ददायिनी। निरानन्दा स्मृताश्चैकपञ्चाशच्छक्तयः क्रमात्।। ७।।

इति वज्रेश्वरीमातृका।। अथ शिवादूतीमातृका—

शिवादूती सुनन्दा चानन्दिनी विषपङ्क्तिनी। पातालखण्डमध्यस्था हृल्लेखा वनखेचरी।। १।।
कला सप्तदशी शुद्धा पूर्णचन्द्रनिभानना। आत्मज्योतिः स्वयंज्योतिरग्निज्योतिरनाहता।। २।।
प्राणशक्तिः क्रियाशक्तिरिच्छाशक्तिः सुखावहा। ज्ञानशक्तिः[2] सुखानन्दा वेदिनी महिमा प्रभा।।३।।
ऋजुर्यज्ञा यज्ञसाम्नी सामस्वरविनोदिनी। गीतिः सामध्वनिः स्त्रोता हुंकृतिः सामवेदिनी।। ४।।
अध्वरा गिरिजा क्षुद्रा निग्रहानुग्रहात्मिका। पुराणी शिल्पिजननी इतिहासावबोधिनी।। ५।।
वेदिका यज्ञजननी महावेदिः सदक्षिणा। आन्वीक्षिकी त्रयी वार्ता गोरक्षा गदिताः क्रमात्।। ६।।
शक्तयश्चैकपञ्चाशत् सर्वकामप्रदायिकाः। इति शिवदूतीमातृका।।

अथ त्वरितामातृका—

त्वरिता तोतुला धात्री किराती कृषिवाणिजे। सर्वेश्वरी ध्रुवा सर्वा सर्वज्ञानसमुद्भवा।। १।।
त्रिमात्री[3] त्रिपुरा सर्वाकारा मेया ततः परम्। ब्रह्माणी शान्तिकरका सम्प्रोक्ताः स्वरशक्तयः।। २।।
कौमारी विश्वजननी शूलहस्ता महेश्वरी। किङ्करी शक्तिहस्ता च दक्षयज्ञविनाशिनी।। ३।।
वरायुधा शङ्खरवा वैष्णव्यव्यक्तिरूपिणी । वराहमूर्तिर्वाराही नृसिंहा सिंहविक्रमा ।। ४।।
सहस्राक्षी सुराढ्या[4] च सर्वपापापहा शिवा। शिवदूती घोररवा क्षुरिपाशासिधारिणी ।। ५।।
विकराली महाकाली कापाली पापहारिणी। महालक्ष्मीर्महाकुक्षिर्योगिनी वृन्दवन्दिनी ।। ६।।
षट्चक्री चक्रनिलया चक्रगा योनिरूपिणी। गदिताः शक्तयस्त्वेताः व्यञ्जनां च शक्तयः ।। ७।।

इति त्वरितामातृका।। अथ कुलसुन्दरीमातृका—

बालोमा भैरवी शान्ता त्रिपुरा त्रिपुरेश्वरी। अहिंसा तिमिरघ्नी च भास्वरा सूर्यमण्डला।। १।।
वरायुधा वरारोहा वरेण्या विष्णुवल्लभा। श्रुतिर्निरन्तरा वेद्या सिद्धिः सर्वार्थसाधिनी।। २।।
पञ्चपञ्चात्मिका गुह्या गोनिवासा च गोधना। साङ्ख्ययोगोद्भवा शक्तिर्मात्रा काष्ठा कलात्मिका।।३।।
पीयूषा वाजिजिह्वा च रसाधारा इरंमदा। विद्युच्छतघ्नी सिंहाक्षी एकपिङ्गाङ्किता सदा[5]।। ४।।
कपाली वेद्या वेताली भूतसङ्घनमस्कृता। स्पृष्या स्पृष्टपदा भावा विभवा देशभाषिणी।। ५।।
सर्वारम्भा निरारम्भा आरम्भा भाववाहिनी। भारती भास्वरा चैव प्रोक्ता व्यञ्जनशक्तयः।। ६।।

इति कुलसुन्दरीमातृका।। अथ नित्यामातृका—

नित्या च भैरवी सूक्ष्मा प्रचण्डा सद्गतिप्रदा। प्रिया शुद्धा च शुष्का[6] च रक्ताङ्गी रक्तलोचना।।१।।

---

१ 'शान्ता' क. पाठः। २ 'ज्ञानज्योतिः' क. पाठः। ३ 'मात्रा' ग. पाठः। ४ 'सुराराध्या' क. पाठः। ५ 'तस्त्रा' क. पाठः। 'तासदा' ख. पाठः। ६ 'चण्डा च शुष्या' क. पाठः।

खट्वाङ्गधारिणी शङ्खा कङ्काला कालबर्हिणी। हिमघ्ननयना[1] वृत्ता[2] सम्प्रोक्ताः स्वरशक्तयः।। २।।
भूतनाथा भूतभाव्या दुर्वृत्तजनसम्मदा । पुण्योत्सवा पुण्यगन्धा पुण्यपापविवेकिनी ।। ३।।
दिग्वासा क्षौमवसना एकवस्त्रा जटाधरा। कपालमालिनी घण्टाधरा चैव धनुर्धरा ।। ४।।
टङ्कहस्ता चला ब्राह्मी हाकिनी शाकिनी रमा। ब्रह्माण्डपालितमुखा विष्णुमाया चतुर्भुजा।। ५।।
अष्टादशभुजा भीमा विचित्रा चित्ररूपिणी। पद्मासनापद्मवहा स्फुरत्कान्तिः शुभावहा।। ६।।
मौनिनी[3] मौलिनी मान्या मानदा मानवर्द्धिनी। जगत्प्रिया विष्णुगर्भा मङ्गला मङ्गलप्रिया।। ७।।
भूतिर्भूतिकरी भाग्या भोगीन्द्रशयना मिता। तप्तचामीकरी कृत्या आर्या वंशविवर्द्धिनी।। ८।।
अघौघशोषणी श्रावी कृतान्ता शक्तयस्त्विमाः। एकपञ्चाशदर्णानां सर्वसिद्धिप्रदायिकाः।। ९।।

इति नित्यामातृका।। अथ नीलपताकामातृका—

अथ नीलपताका च नीला माया जगत्प्रिया। सहस्रवक्त्रा पद्माक्षी पद्मिनी श्रीरनुत्तमा।। १।।
दिव्यक्रमा दिव्यभोगा दिव्यामाल्यानुलेपिनी। शुक्लाच्छवसना सौम्या सर्वर्तुकुसुमोचिता।। २।।
स्वराणां शक्तयस्त्वेताः साधकामीष्टदायिकाः। सर्वैश्वर्यगणोपेता प्रणवाग्रप्रसम्भवा[4]।। ३।।
व्यञ्जना व्यञ्जकी व्यक्ता सर्ववर्णानुवर्तिनी। जगन्माताभयकरी भूतधात्री सुदुर्लभा ।। ४।।
कामिनी दण्डिनी[5] दण्ड्या खड्गमुद्गरपाणिनी। शस्त्रास्त्रदर्शिनी बीजा विबीजा बीजिनी परा।। ५।।
वाचस्पतिप्रिया दीक्षा परीक्षा शिवसम्भवा। राजसी तामसी सत्या सत्त्वोद्रिक्ता विमोहिनी[6]।। ६।।
अतीतानागतज्ञाना वर्तमानापदेशिनी । आप्तोपदेशिनी संवित्सत्त्वबोधा धराधरा ।। ७।।
प्रकृतिर्विकृतिर्गङ्गा धूर्जटिर्विकृतानना। योगिप्रिया योगि[7]गम्या योगिध्येया परापरा ।। ८।।
वैष्णवी त्रिपदी दृष्टिरक्षया कादिशक्तयः।

इति नीलपताकामातृका।। अथ विजयामातृका—

विजया जयदा जैत्री अजिता वामलोचना। प्रतिष्ठान्तःस्थिता माता जिना माया कुलोद्भवा।। १।।
कृशाङ्गी वायवी क्षामा क्षामखण्डा त्रिलोचना। स्वराणां शक्तयस्त्वेताः कामा कामेश्वरी रमा।।२।।
काम्या कामप्रिया कामा कामचारविहारिणी। तुच्छराङ्गी[8] निरालस्या नीरुजा रुजनाशिनी ।।३।।
विशल्यकरणी श्रेष्ठा मृतसञ्जीवनी परा। सन्धिनी चक्रनमिता चन्द्ररेखा सुवर्णिका।। ४।।
रत्नमालाग्निलोकस्था[9] शाङ्खवयवाङ्किता। तारातीता तारयन्ती भूरी भूरिप्रभा स्वरा।। ५।।
क्षेत्रज्ञा भूरिशुद्धा च मन्त्रहुङ्काररूपिणी। ज्योतिर्ज्ञाना ग्रहगतिः सर्वप्राणभृतां वरा।। ६।।
कादीनां शक्तयः प्रोक्ताः साधकामीष्टसिद्धिदाः। इति विजयामातृका।।

अथ सर्वमङ्गलामातृका—

सर्वमङ्गलिका भव्या मङ्गला मङ्गलप्रभा। कान्तिः श्रीः प्रीतिरचला ज्योत्स्ना चैव विलासिनी।। १।।

१. 'घ्ना' क. पाठः। २. 'वृत्रा' क. पाठः। ३. 'मौतिनी' ख. पाठः। ४. 'प्राणबालाग्र' ग. पाठः। ५. 'दण्डकी' ग. पाठः। ६. 'विमोचनी' ग. पाठः। ७. 'योग' ग. पाठः। ८. 'तच्छरा' क. पाठः। ९. 'त्रिलोक' क. पाठः।

वरदा वारिजा व्यग्रा चारवी वास्तुदेवता। अनन्तशक्तिः सम्प्रोक्ताः स्वराणां शक्तयः क्रमात्॥ २॥
कामिकाशक्तिरतुला सर्वज्ञा ज्ञानदायिनी। युक्तिः सुयुक्तिरान्वीक्षी कुक्षिबोधा मदालसा॥ ३॥
ब्रह्मविद्या प्रभा वेश्या महायन्त्रा प्रवाहिणी। ध्याना ध्येया ध्यानगम्या योगिनी योगसिद्धिदा॥ ४॥
अक्षराक्षरसन्ताना ब्रह्मविद्या शिवप्रदा। पञ्चब्रह्मात्मिका रुद्रविद्या वेद्यस्वरूपिणी॥ ५॥
पञ्चतत्त्वात्मिका विद्या त्रिपुरा बीजतत्त्वगा। सर्वबीजात्मिका सिद्धिरज्ञानोपाधिगामिनी॥ ६॥
कल्पान्तदहनज्वाला सद्वृत्तिर्व्यालभूषणा। कादीनां शक्तयस्त्वेताः साधकाभीष्टदायिकाः॥ ७॥

इति सर्वमङ्गलामातृका॥ अथ ज्वालामालिनीमातृका—

ज्वालिनी च महाज्वाला ज्वालामाला महोज्ज्वला। द्विभुजा सौम्यवदना ज्ञानपुस्तकधारिणी॥ १॥
कपर्दिनी कृताभ्यासा ब्रह्माणी स्वात्मवेदिनी। आत्मज्ञानामृता नन्दा नन्दिनी रोमहर्षिणी॥ २॥
स्वराणां शक्तयस्त्वेताः कान्तिः काली द्युतिर्मतिः। विषयेच्छा विश्वगर्भा आधारी सर्वभाविनी॥३॥
कात्यायनी कालयाता कुटिला चानिमेषिकी[1]। नाडी मुहूर्ताहोरात्रित्रुटिः कालविभेदिनी॥ ४॥
सोमसूर्याग्निमध्यस्था मायातीता सुनिर्मला। केवला निष्कला शुद्धा व्यापिनी व्योमविग्रहा॥ ५॥
स्वच्छन्दभैरवी व्योमा व्योमातीता परेस्थिता। स्तुतिः स्तव्या नुतिः पूज्या पूजार्हा पूजकप्रिया॥६॥
कादीनां व्यञ्जनानां च सम्प्रोक्ताः शक्तयस्त्विमाः। इति ज्वालामालिनीमातृका॥

अथ विचित्रामातृका—

विचित्रा चित्रवसना चित्रिणी चित्रभूषणा। अनुलोमापसन्धिश्च मध्यमानामिकात्मिका॥ १॥
तेजोवती पद्मगर्भा मन्दरेखा घृणावलिः। विदुषी मौलिनी व्यक्ता सुकेशी स्वरशक्तयः॥ २॥
सोमपा सोमसङ्काशा वेताली तालसंज्ञिका। सोमप्रिया सोमवती मन्त्रपूता यजिक्रिया॥ ३॥
मृणाली ऋक्प्रदा शुक्तिर्विन्ध्याद्रिशिखरस्थिता। गदिनी चक्रिणी बिम्बा रक्तोष्ठी चारुहासिनी॥४॥
वाग्भवा चारुजा रक्ता सुप्रसादा सुलोचना। कौशिकी कन्दरा घोणा ककुब्री कामलोचना॥ ५॥
कामोत्सवा कामचारा अकामा पूजिता परा। तत्त्वावलोका पुरजिद्राज्ञी स्युः कादिशक्तयः॥ ६॥

इति विचित्रामातृका॥ अथ दुर्गामातृका—

दुर्गा च कौशिकी चोग्रा चण्डा माहेश्वरी शिवा। विश्वेश्वरी जगद्धात्री स्थितिसंहारकारिणी॥ १॥
योगनिद्रा भगवती देवी स्वाहा स्वधा सुधा। सृष्टिराहुतिरेवोक्ताः स्वराणां शक्तयः क्रमात्॥२॥
कला माया रमा ज्येष्ठाः स्तुतिः पुष्टिः स्थितिर्गतिः। रतिः प्रीतिर्धृतिनीतिर्विभूतिर्भूतिरुन्नतिः॥३॥
क्षितिः क्षान्तिः क्षतिः कान्तिः शान्तिः क्लान्तिर्महाद्युतिः[2]। क्षुत्पिपासा स्पृहा लज्जा निद्रा मुद्रा चिदात्मिका
गिरिजा भारतीर्लक्ष्मीः शची संज्ञा विभावरी[3]। कादीनां शक्तयः प्रोक्ताः सर्वसिद्धिप्रदायिकाः॥५॥

इति दुर्गामातृका॥ अथ सरस्वतीमातृका —

---

१. 'षकी' क. पाठः। २. 'मतिः' क. पाठः। ३.'वभावनी' क. पाठः।

सरस्वती मन्त्रशक्तिर्वेदमाता जगन्मयी। मानसी हंसगा हंसी सरागा क्षेमकारिणी ।। १ ।।
अक्षया विजया[1] प्रीतिर्लोमशा लोमहारिणी। विज्ञानदेहा सम्मूढा स्वराणां शक्तयः क्रमात्।।२।।
कामदा कामिनी कान्ता परमेष्ठी निभोत्तमा। पुण्यानुबन्धा श्रेयस्का दयासारानुकम्पिनी।।३।।
चतुःस्तना पञ्चयज्ञा सुरभिः सुरपूजिता। विश्वासजीविनी विश्वा कामधेनुः स्वकामदा ।।४।।
अविद्या दुहिता कान्ता कपिला मलवर्जिता। सुशीला जीववत्सा च शीलवत्सा सुवत्सला।।५।।
नन्दिनी जयदाऽजेया दुर्जया दुःखहारिणी। स्वस्तिदा स्वस्तिकृत् स्वतिस्वरूपा स्वस्तिदक्षिणा।।६।।
शक्तयः शुभ्रवर्णाश्च व्यञ्जनानां शुभप्रदाः।। इति सरस्वतीमातृका।।

अथ वाराहीमातृका—

वाराही भद्रिणी भद्रा वाताली[2] कोलवक्त्रका। जम्भिणी स्तम्भिनी विश्वा जम्भिनी मोहिनी शुभा।।१।।
रुन्धिनी वशिनी शक्ती रमोमा स्वरशक्तयः। खड्गिनी शूलिनी घोरा शङ्खिनी गदिनी तथा।।२।।
चक्रिणी वज्रिणी चैव पाशिन्यङ्कुशिनी शिवा। चापिनी भवबन्धघ्नी जयदा[3] जयदायिनी।।३।।
महाघोरा महाभीमा भैरवी चारुहासिनी। पद्मिनी वाणिनी चोग्रा मुसलिन्यपराजिता।। ४।।
जयप्रदा जया जैत्री रिपुहा भयवर्जिता। अभया मानिनी[4] पोत्री किटिनी[5] दंष्ट्रिणी रमा।। ५।।
अक्षया कादिवर्णानां शक्तयः सिद्धिदायिकाः। इति वाराहीमातृका।।

अथ त्रिमूर्तिमातृका—

केशवो नारायणो माधवगोविन्दविष्णवः । मधुसूदनसंज्ञोऽन्यः स्यात् त्रिविक्रमवामनौ।। १।।
श्रीधरश्च हृषीकेशः पद्मनाभस्तथैव च। दामोदरो वासुदेवः सङ्कर्षण इति स्मृतः।। २।।
प्रद्युम्नश्चानिरुद्धश्च स्वराणां मूर्तयः क्रमात्। ततश्चाक्षरशक्तिश्च आद्या चैवेष्टदा पुनः।। ३।।
ईशानोग्रोर्ध्वनयना ऋद्धिः स्याद्रूपिणी तथा। लुप्ता च लूनदोषा च ततश्चैककलापिका[6]।। ४।।
(ऐं) कारिण्योघवती चौर्वकन्या स्यादञ्जनप्रभा। अस्थितालाधरा[7] चैव स्वराणां शक्तयः क्रमात्।।५।।
भवः शर्वश्च रुद्रश्च ततः पशुपतिस्तथा। उग्रश्चैव महादेवो भीम ईशान एव च।। ६।।
ततस्तत्पुरुषोऽघोरः सद्योजातस्ततः परम्। वामदेवस्तु विज्ञेयाः कभादीनां[8] च मूर्तयः।। ७।।
करभद्रा खगबला[9] गरिमादिफलप्रदा। घोरपादा पङ्क्तिमासा[10] ततश्चन्द्रार्धधारिणी ।। ८।।
छन्दोमयी जगत्स्थाना (ञा) कृतिर्ज्ञानप्रभा तथा। टङ्कढङ्कधरा चैव ततश्च (ष्ठं) कृतिडामरी।। ९।।
कभादीनां च वर्णानां प्रोक्ता द्वादश शक्तयः। ब्रह्मा यज्ञपतिर्वेधाः परमेष्ठी पितामहः।। १०।।
विधाता च विरिञ्चिश्च स्रष्टा च चतुराननः। हिरण्यगर्भो विज्ञेया यादीनां दश मूर्तयः।। ११।।
यक्षिणी रञ्जिनी लक्ष्मीर्वज्रिणी शशिधारिणी। षडाधारालया सर्वनायिका हसिताननाः।। १२।।
ललिता च क्षमा चैव यादीनां दश शक्तयः। त्रिमूर्तिमातृका प्रोक्ता सर्वसिद्धप्रदा मता[11]।।१४३।

१ तिर्जया ग. पाठः। २ 'वारली' क. ख. पाठः। ३ 'विजया' क ख. पाठः। ४ 'मालिनी' ग. पाठः। ५ 'कटिनी' क.ख. पाठः। ६. 'कपालिका' ग. पाठः। ७ 'अस्थिरामाधवी' ग.पाठः। ८ 'कथादीनां' क. ख. पाठः। ९ 'च बगला' ग. पाठः। १०. 'मांसा' ग. पाठः। ११. 'दायिकाः' क. ख. पाठः।

इति त्रिमूर्तिमातृका।। अथ कामकलामातृका स्वराणामेव—

श्रद्धा प्रीतीरतिश्चैव धृतिः कान्तिर्मनोरमा। मनोहरा ततश्चैव प्रोक्ता सात्र मनोरथा।। १।।
मदनोन्मादिनी पश्चात् मोहिनी शंखिनी तथा। शोषिणी च वशङ्करी शिञ्जिनी सुभगा ततः।।२।।
कामस्यैताः कलाः प्रोक्ताः स्वराणां षोडशेष्टदाः। इति काममलामातृका।

अथ सोमकलामातृका—

पूषा चेद्धा सुमनसा रतिः प्रीतिर्धृतिस्तथा। ऋद्धिः[१] सौम्या मरीचिश्च परतस्त्वंशुमालिनी ।।१।।
शशिनी चाङ्गिराच्छाया ततः संपूर्णमण्डला। तुष्ट्य[२] मृताख्या कथिता कलाः स्युः सस्वरा विधोः।।२।।

इति सोमकलामातृका।। अथापराजितामातृका—

प्रत्यङ्गिरा सिंहमुखी तथा ज्वालामुखी शिवा। वैष्णवी नारसिंही च त्रिमात्रा शाङ्करी परा।। १।।
अर्द्धमात्रा भगवती शूलिनी शुम्भमर्दिनी। शशाङ्कधारिणी चैव भीषिका च कपालिनी।। २।।
स्वराणां शक्तयः प्रोक्ता धृतशूलकपालकाः। उग्रा वीरा महाज्वाला हाकिनी विश्वरूपिणी।।३।।
स्तुत्या च ज्वलिनी लक्ष्मीस्तमिस्रा सर्वतोमुखी। वरेण्या तोतुला मुख्या खातीता च ततः परम्।।४।।
नृमुण्डमाला सिंही च हन्त्री भीमा च खण्डिनी। तारिणी भयदा चैव द्राविणी मृत्युरूपिणी।।५।।
त्युत्कारी मृत्युहरिणी त्युन्नता च नतिप्रिया। मालिनी जार्णरूपा च हंसिनी[३] च शिखण्डिनी।।६।।
कुण्डिनी क्षान्तिरूपा च कादीनां शक्तयः क्रमात्। इति प्रत्यङ्गिरामातृका।

अथ भवानीमातृका—

भवान्यनन्ता शरभी चक्रिणी करुणाकरा। एकमात्रा द्विमात्रा च त्रिमात्रा चापरा जया।। १।।
अर्धमात्रा परा सूक्ष्मा षट्पदा च मनस्विनी। निष्कला शक्तयः प्रोक्ताः स्वराणां वसुधर्मदा।।२।।
स्वच्छन्दानन्दसन्दोहा व्योमाकारा निरूपिता। गद्यपद्यात्मिका चैव सर्वालङ्कारसंयुता।। ३।।
साधुबन्धपदन्यासा सर्वोक्तिघटनावली। षट्तर्क[४] कर्कशाकारा सर्वतर्कविवर्जिता ।। ४।।
आदित्यवर्णाऽवर्णा च तामसी पररूपिणी। ब्रह्माणी ब्रह्मसन्ताना वेदवाग्वादिनीश्वरी।। ५।।
पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिता। वेदा वेदवती सर्वा हंसविद्याधिदेवता ।। ६।।
विश्वेश्वरी जगद्धात्री विश्वनिर्माणकारिणी। वेदिका वेदरूपा च कालिका कालरूपिणी।। ७।।
नारायणी महादेवी सर्वसत्त्वप्रवर्तिका[५]। हिरण्यवर्णरूपा च कादीनां शक्तयः क्रमात्।। ८।।

इति दुर्गा (भसवानी) मातृका।। अथ खेचरीमातृका—

खेचरी शक्तिरतुला व्योमाम्बा व्योमरूपिणी। व्योमस्था व्योमरूपा च व्योमातीता जगन्मयी।। १।।
शाम्भवी शम्भुवनिता शरणार्तिप्रभेदिनी । जगन्माता जगद्धात्री परविद्या सुमङ्गला।। २।।
स्वराणां शक्तयस्त्वेता भवबन्धविमोचिकाः। परा परायणा भव्या मालिनी मदविह्वला।। ३।।
विद्या सूक्ष्मा प्रभा संध्या जगन्माया जगत्क्रिया। निशाचरी जया मायाऽमेया[६] मोहविवर्धिनी।।४।।

१ 'रतिः' क. पाठः। अतिसौम्या' ख. पाठः। २ 'तुष्ट्या' क. पाठः। ३ 'हसिनी' क,ख पाठः। ४ कर्म कख पाठः। ५. 'सर्वसत्यविवर्जिता' क. ख. पाठः। ६. 'मोघा' ग. पाठः।

मोहनी[१] रञ्जिनी वश्याऽवरा[२] मातृस्वरूपिणी। वेदविद्या महाविद्या यज्ञविद्या यमान्तकी।। ५।।
सुखिनी सुखदा भोग्या भोगिनी दण्डिनी रमा। विशारदा विशालाक्षी ह्लादिनी चाक्षया तथा।।६।।
कादीनां शक्तयः प्रोक्ताः साधकेष्टफलप्रदाः। इति खेचरीमातृका।।

अथ चामुण्डामातृका—

चामुण्डा चण्डिका चण्डा चण्डमुण्डविनाशिनी। नारायणी भद्रकाली विरजा[३] विश्वमातृका।। १।।
अजिता भार्गवी सौम्या दुर्गा दुर्गतिनाशिनी। आप्यायनी चण्डघण्टा मायोक्ताः स्वरशक्तयः।। २।।
कमला खड्गिनी चैव गदिनी घण्टिका परा। चरित्रा च्छत्रिणी जङ्घा झङ्कारी जयदा ततः।। ३।।
टङ्कहस्ता च ठङ्कारी डामरी ढक्किका शिवा। तमोपहन्त्री स्थानेशी दयारूपा धनप्रदा।। ४।।
नव्या परा च फट्कारी बन्धिनी भयवर्जिता। महामाया च योगीशी रङ्किणी लम्बकेशिनी।। ५।।
वरदा शाकिनी षण्डा सर्वेशी हलिनी तथा। ललिता च तथा क्षामोदरी स्यात् कादिशक्तयः।। ६।।
केवलं मातृकां न्यस्य चण्डाभक्तो भवेद्यदि। चामुण्डाशक्तिसहितां मातृकां विन्यसेद्बुधः।। ७।।

इति चामुण्डामातृका।। अथ परामातृका —

परा परायणा सूक्ष्मा विश्वा दाक्षायणी जया। विजया मानदा दक्षा योगिनी मानदा रतिः।। १।।
कौमारी पार्वती दुर्गा मानिनी स्वरशक्तयः। कलावती च करुणा कामिनी कान्तिदायिनी।।२।।
खातीता खेचरी गम्या गारुडी घनगर्जिनी। चारुहासा च चपला जगद्धात्री जया रमा।।३।।
विश्वोद्धारा विश्वमयी विशालाक्षी विशोकिनी। वरदा वासुकी बाला परमेष्ठिनुता धृतिः।।४।।
भास्वरा भावगम्यार्या[४] भानुमण्डलवर्तिनी। (फट्कारी लासिनी तारा हारिणी हव्यवाहिनी[५]।।५।।
ह्लादिनी क्लेदिनी क्लिन्ना गदिताः कादिशक्तयः। इति परामातृका।।

अथ कुरुकुल्लामातृका—

कुरुकुल्ला कुरङ्गाक्षी विषहन्त्री विषापहा। विश्वेश्वरी विशालाक्षी गारुडी गजगामिनी।। १।।
विनता विश्वजननी विश्वाख्या विश्वमातृका। राजसी तामसी सत्त्वा[६] रणत्काञ्चीविभूषणा।।२।।
स्वराणां शक्तयस्त्वेता धनधर्मसुखप्रदाः। कल्याणी कमला कान्ता सौपर्णी तार्क्ष्यशक्तिनी[७]।।३।।
नागहन्त्री नागमाता नागिनी नगजा प्रिया। नलिनी नन्दिनी भव्या सदापुष्पवती शिवा।।४।।
मदद्रवा मदवती मादिनी मन्मथालसा[८]। मोहिनी मुरजप्रीता मुनिमानसवासिनी।।५।।
पोतस्था पुरजित्कान्ता पोतशक्तिः पुरप्रिया। दिगम्बरा दितिः सौम्या दिनेशी दीनवल्लभा[९]।।६।।
दयावती दमप्रीता दारुणी लोकधारिणी। कादीनां शक्तयः प्रोक्ताः साधकेष्टफलप्रदाः।।७।।

इति कुरुकुल्लामातृका।। अथ पञ्चदशीमातृका—

सुन्दरी सुभगा भव्या महामाया मनोन्मनी। त्रिपुरा वशिनी बाला महात्रिपुरदेवता।। १।।
महाकामकला श्रेष्ठा नीला नीलसरस्वती। विश्वेशी विजया सौम्या सम्प्रोक्ताः स्वरशक्तयः।।२।।

---

१. 'मोदिनी' ग. पाठः। २. 'वश्या' ग. पाठः। ३. 'विजया' ग.पाठः। ४. 'र्घ्या' ग. पाठः। ५. 'इदं पद्यार्धं कखयोर्नास्ति।
६. 'सत्या' क. ख. पाठः। ७. 'शाकिनी' क. ख. पाठः। ८. 'लया' क. ख. पाठः। ९. दिनवत्सला' क. ख. पाठः।

कौलिनी कुलमार्गस्था कुलान्तकनिवासिनी। सर्वविद्येश्वरी[1] चैव सर्वमन्त्रेश्वरी तथा ।।३।।
सर्ववागीश्वरी सिद्धा सर्वसिद्धेश्वरी जया । सर्ववीरेश्वरी वीरा सर्वपीठेश्वरी शिवा ।।४।।
भैरवी भावनातीता भावगम्या महेश्वरी। महाविद्या महाजैत्री महात्रिपुरसुन्दरी ।।५।।
काली कात्यायनी दुर्गा वैष्णवी विष्णुवल्लभा। योगिनी योगमार्गस्था षट्चक्रपुरवासिनी।।६।।
विमला विश्वनिलया विश्वाख्या विश्वविग्रहा। शशिनी शारदा चैव चन्द्रमण्डलमध्यगा।।७।।
कादीनां शक्तयस्त्वेताः सम्प्रोक्ताः सिद्धिदायिकाः। इति सुन्दरीमातृका।।

अथ मालिन्यादिमातृका—

मालिनी नादिनी चैव ग्रसिनी प्रियदर्शिनी। निवृत्तिः सुप्रतिष्ठा च विद्या शान्तिस्ततः परम्।।१।।
चामुण्डा गुह्यशक्तिश्च वज्रिणी च करालिनी। कपालिनी[2] शिवा चैव ज्ञानशक्तिः क्रिया तथा।।२।।
स्वराणां शक्तयस्त्वेता[3] ज्ञानमोक्षफलप्रदाः। गायत्रीच्छा च सावित्री देहिनी[4] मुण्डमालिनी।।३।।
फट्कारी च वषट्कारी स्वधा स्वाहाहुतिप्रिया। वामा ज्येष्ठा च रौद्री च ब्रह्माणी ब्रह्मवादिनी।।४।।
जया वेदमयी दुर्गा जयन्ती रक्तदन्तिका। जगज्जैत्री च चैतन्यमयी विश्वप्रबोधिनी।।५।।
क्षमा शान्तिर्दया निद्रा रुद्रशक्तिः परायणा। हुङ्कारी खेचरी माया विश्वयोनिस्त्रयीमयी।।६।।
संसारभयहन्त्री च सम्प्रोक्ताः कादिशक्तयः। न्यस्तव्या मातृकास्त्वेता ऊर्ध्वाम्नायाणुदीक्षितैः।।७।।

इति मालिन्यादिमातृका।। अथ पञ्चभूतमातृका। तत्र शारदायाम्—

वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वा पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः।।१।।
पञ्चशः कादयः षक्षलसहान्तसमन्विताः। इति।

तन्त्रराजे—

प्राणाग्नीलाम्बुखात्मानः षड्क्तयः पञ्च कीर्तिताः। मायाशक्त्यभिधः सर्गः पञ्चभूतात्मकः प्रभुः।।१।।
तस्मात्तस्यात्र विन्यासो नैकदेशः शिवात्मनः। वातो मरुच्चरः प्राणो वायुर्नादो रयो जवी।।२।।
व्याप्तः स्पर्शश्च नामानि वर्णानां मरुतां क्रमात्। अग्निर्वह्निः शुचिस्तेजः प्रभा दावो शिखी द्युतिः।।३।।
दाहो ग्रासश्च नामानि वर्णानां तेजसामपि। धरा क्षमा भूः स्थिरा ज्या कुर्गोत्रा भूमी रसा इला।।४।।
नामान्येतानि वर्णानां भौमानां स्युः क्रमेण वै। जलं वारि वनं वाः कं पाथस्तोयं रसोऽम्बु हृत्।।५।।
नामान्येतानि वर्णानामाप्यानां स्युर्यथाक्रमम्। विभुः खं स्वं द्युरभ्रं च व्योम शून्यं नभो वियत्।।६।।
हंसश्च नामान्येतानि क्रमेण व्योमरूपिणाम्। इति पञ्चभूतमातृका।।

अथ भूतलिपिमातृका। तत्र सिद्धसारस्वते—

अथ वक्ष्ये महामन्त्रान् सरस्वत्याः सुकामदान्। तेष्वादौ भूतलिप्याख्यो मनुः सम्प्रोच्यते प्रिये।।१।।
सारस्वते महातन्त्रे गोपितश्चातिदुर्लभः। विष्णोः[5] सकाशाद्यं लब्ध्वा मुनयो वाञ्छितं फलम्।।२।।
लेभिरे सकलं देवि किं बहूक्तेन सर्वदा। ह्रस्वानां पञ्चकं वर्ग आदितः परिकीर्तितः।।३।।

---

१. 'विश्वे' ग. पाठः। २. 'का' क. पाठः। ३. 'प्रोक्ता' क.ख.पाठः। ४. 'दहिनी' क. दाहिनी ख. पाठः। ५. 'वसो' क. पाठः।

द्वितीयः कथितो देवि शिवाद्याश्चतुरक्षराः। खं वायुवह्न्यम्बुधरा तृतीयः सम्प्रकीर्तितः॥४॥
वर्गान्त्याद्यद्वितीयोपान्त्यतृतीयैः क्रमादमी। पञ्च वर्गा वान्तशान्तभृगुर्नवमो मतः ॥ ५॥
नववर्गात्मको मन्त्रो द्विचत्वारिंशदक्षरः। वर्गाणामादिमो वर्गः श्रीकण्ठोर्ध्वोष्ठखान्विताः॥ ६॥
वर्गान्त्या वान्तसंयुक्ताः क्रमेण कथिता अमी। खं वायुवह्न्यम्बुधरा वर्गवर्णा मताः क्रमात्॥ ७॥
वर्गो द्वितीयो भूहीनो वारिभूवियुतोऽन्तिमः। नवानामपि वर्गाणां देवताः कथिताः क्रमात्॥ ८॥
विरिञ्चिविष्णुरुद्राह्वा[१] अश्विनेयौ प्रजापतिः। लोकपालाः सक्रियादिशक्तयः परिकीर्तिताः॥ ९॥

इति भूतलिपिमातृका॥ अथ त्रिषष्ट्यक्षरमातृका मातृकार्णवे—

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः। प्राकृते संस्कृते वापि स्वयं प्रोक्ताः स्वयम्भुवा॥ १॥
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः। यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृता॥२॥
अनुस्वारो विसर्गश्च क पौ चापि पराश्रयौ। दुःस्पृष्टश्चेति विज्ञेय ऌकारः प्लुत एव च॥३॥

इति त्रिषष्ट्यक्षरमातृका॥ अथ शाम्भवीमातृका—ऊर्ध्वाम्नायदीक्षितैर्न्यासः कर्तव्यः।

शाम्भवी तामसी माया महामाया शिवोत्तमा। ऊर्ध्वकेशी विरूपाक्षी खेचरी शिववल्लभा॥ १॥
कुण्डोदरी च लोलाक्षी विष्णुमाया महोदरी। लम्बोष्ठी व्योमरूपा च विम्वी च स्वरशक्तयः॥२॥
कान्तिः श्रद्धा रतिः प्रीतिरम्बराप्राणरूपिणी[२]। शुचिः क्षितिश्च भुवना द्युतिः श्रीः परमा रमा॥३॥
राजसी ग्रसिनी[३] चण्डा राक्षसी च विशारदा। वाग्वादिनी जया मीमा शिवा शङ्करवल्लभा॥४॥
सन्ध्या प्रज्ञा प्रभा ज्योत्स्ना विनदा विश्वरूपिणी। अस्थिमालाधरा पञ्चवक्त्रोग्रा क्षोभिणी मतिः॥५॥
व्यापिनी च स्मृताः कादिवर्णानां शक्तयः क्रमात्। शाम्भवक्रमदीक्षायुक्साधकानां महेश्वरि॥ ६॥
शाम्भवी मातृका प्रोक्ता सर्वाभीष्टफलप्रदा। एतां विन्यस्य चादौ तु ततो रश्मिक्रमं न्यसेत्॥७॥

इति शाम्भवीमातृका॥ अथ कालरात्रिकातृका—

कालरात्रिर्महारात्रिः कटुका सुभगा शिवा। मोहिनी मोहरात्रिश्च विद्या कुटुकपत्रिका॥ १॥
आथर्वणस्य दुहिता रञ्जिनी विश्वमोहिनी। मोहनास्त्रा मोहरूपा सौभाग्या मोहवर्धिनी॥ २॥
स्वराणां शक्तयस्त्वेताः साधकामीष्टहेतवः। कामिनी कमनप्रीता द्राविणी क्षोभिणी परा॥ ३॥
मदनोन्मादिनी चैव मन्मथा च मनोन्मनी। मनस्विनी मनोवासिन्यरुणा मदनोत्सवा॥ ४॥
कामवर्धनिका मदसन्ताना मञ्जुवाणी मनोहरा। मनोरमा प्रिया क्रान्ता मञ्जुघोषा मदप्रिया॥५॥
कामवर्धनिका चैव दारुणा दमनप्रिया। दण्डिनी विश्वनटिनी नलिनी विश्वमालिनी॥ ६॥
हावा भावा भावगम्या भावातीता विनोदिनी। पञ्चबाणा परोत्साहा कादीनां शक्तयः क्रमात्॥७॥
इति कालरात्रिमातृका॥

॥ इति श्रीमहामहोपाध्यायभगवत्पूज्यपाद-श्रीगोविन्दाचार्यशिष्य-
श्रीभगवच्छङ्कराचार्यशिष्य-श्रीविष्णुशर्माचार्यशिष्य-
श्रीप्रगल्भाचार्यशिष्य-श्रीविद्यारण्ययतिविरचिते
विद्यार्णवाख्ये तन्त्रे तृतीयः श्वासः॥ ३॥



१. 'द्रार्का' ग. पाठः। २. 'प्राणवल्लभा' ग. पाठः। ३. 'ग्रासिनी' क, ख. पाठः।

अथ

# श्रीविद्यार्णवतन्त्रे

## चतुर्थः श्वासः



(अथ कालीमते त्रैपुररश्मिक्रमस्त्रिपुरामधिकृत्य[1]—)

मातृकावैभवं वक्ष्ये सर्वतन्त्रेषु गोपितम्। यं बुद्ध्वा सम्प्रदायेन साधको गतसंशयः॥ १॥
मन्त्रोद्धारं स्वयं कुर्यान्मातृकारश्मिबोधनात्। प्रथमं मातृकारश्मिक्रमो ज्ञेयः सदा बुधैः॥ २॥
रश्मिक्रममविज्ञाय मन्त्रोद्धारं करोति यः। अन्धकारे स्थितं वस्तु द्रष्टुमन्वेषयत्ययम्॥ ३॥
तस्मात् सर्वप्रयत्नेन गुरुतः शास्त्रतोऽपि वा। सम्यग् ज्ञात्वा विधानेन साधको गतसंशयः॥ ४॥
मन्त्रस्वरूपं जानीयान्मन्त्रवीर्यस्य सिद्धये। अनायासेन सिद्धिः स्यान्मन्त्रवीर्यप्रबोधनात्॥ ५॥
मन्त्रवीर्यमविज्ञाय यो मन्त्रं भजते नरः। कल्पकोटिसहस्रैस्तु मन्त्रसिद्धिर्न जायते॥ ६॥
वर्णानां रश्मयो ज्ञेयाः श्वासरूपा न संशयः। ते श्वासाः पूर्णरूपाः स्युः षट्शताधिकतोऽपि च॥ ७॥
गुणसप्तसहस्राणि ह्यपूर्णा द्विगुणीकृताः। ते श्वासा द्विविधाः प्रोक्ता बाह्याभ्यन्तरयोगतः॥ ८॥
सूर्यचन्द्रविभेदेन क्रूरसौम्यप्रभेदतः। पिङ्गलेडाविभेदेन ये श्वासाश्चार्धरूपिणः॥ ९॥
मूलाधारे नाभिपद्मे स्वाधिष्ठानेऽप्यनाहते। विशुद्धौ तु भ्रुवोर्मध्ये षट्चक्रेषु व्यवस्थिताः॥ १०॥
प्रतिचक्रं त्रिसाहस्रं षट्शताधिकमेव च। मूलाधारं क्षितेः स्थानं स्वाधिष्ठानं तु तेजसः॥ ११॥
मणिपूरमपां स्थानं वायोः स्थानमनाहतम्। विशुद्धं नभसः स्थानमाज्ञाचक्रं तु मानसम्॥ १२॥
मूलाधारे महापद्मं चतुर्दलसमन्वितम्। वादिसान्तचतुर्वर्णैर्दलमध्येषु संयुतम्॥ १३॥
एकस्यैकस्य वर्णस्य रश्मीनां नवशत्यपि। पार्थिवा रश्मयस्तेषु चतुर्दश चतुर्दश॥ १४॥
प्रत्यक्षरं तु विज्ञेया वादिसान्ते यथाक्रमम्। मणिपूरे दशदले डादिफान्तसमन्विते॥ १५॥
तत्राप्या रश्मयो ज्ञेया द्विपञ्चाशद्विभागशः। स्वाधिष्ठाने रसदले वादिलान्ताक्षरान्विते॥ १६॥
द्वाषष्टी रश्मयो ज्ञेयास्तैजसाश्चात्र भागशः। अनाहते रविदले कादिठान्ताक्षरान्विते॥ १७॥
वायव्या रश्मयो ज्ञेयाश्चतुष्पञ्चाशदत्र वै। विशुद्धे षोडशदले षोडशस्वरसंयुते॥ १८॥
नाभसा रश्मयो ज्ञेया द्विसप्ततिर्विभागशः। आज्ञाचक्रे तु द्विदले हक्षाभ्यां संयुते परे॥ १९॥
मानसा रश्मयो ज्ञेयाश्चतुःषष्टिर्यथाक्रमम्। षडाधारेषु सम्भूय त्रिशतं षष्टिरश्मयः॥२०॥
एकस्यैकस्य वर्णस्य रश्मयो ये समाश्रिताः। तेषु रश्मिषु सम्प्रोक्ताः षड्विधाः पार्थिवादयः॥२१॥

---

१ 'अथेत्यादि—अधिकृत्येत्यन्तं' कखयोर्नास्ति।

सङ्कीर्णा रश्मय इति तेषां नामानि च ब्रुवे। चतुर्दलात्मकाधारषट्पञ्चाशद्दलेषु च।। २२।।
पूर्वादिपार्थिवा ज्ञेया मयूखाः शुभदायकाः। सुन्दरी त्रिपुराद्या च सुन्दरस्त्रिपुरादिकः।। २३।।
ततो हृदयदेवी च देवोऽत्र हृदयादिकः। शिरोदेवी शिरोदेवः शिखादेवी ततः परम्।। २४।।
शिखादिदेवः कवचदेवी कवचदेवकः। नेत्रदेवी नेत्रदेवोऽस्त्रदेव्यस्त्रादिदेवकः ।। २५।।
कामेश्वरी च कामेशस्ततश्च भगमालिनी। भगमाली ततो नित्यक्लिन्ना नित्यादिक्लिन्नकः।।२६।।
भेरुण्डापि च भेरुण्डो बह्निवासिन्यतः परम्। वह्निवासी महावज्रेश्वरी वज्रेश्वरस्तथा।। २७।।
शिवादूती शिवादूतस्त्वरिता त्वरितस्ततः। कुलादिसुन्दरी चैव ततश्च कुलसुन्दरः।। २८।।
नित्या नित्यस्ततो नीलपताका तदनन्तरम्। नीलादिकपताकश्च विजया विजयस्ततः।। २९।।
सर्वमङ्गलनाम्नी च सर्वमङ्गलनामकः। ज्वालामालिनिका चैव ज्वालामाली ततः परम्।। ३०।।
चित्रा च चित्रः कथितो महानित्या ततः परम्। महानित्यस्ततश्चैव परमेशी ततः परम्।। ३१।।
परमेशस्तु मित्रेशमयी मित्रेशसंज्ञकः। ततस्तु षष्ठीशमयी तथा षष्ठीशसंज्ञकः ।। ३२।।
उड्डीशमय्यथोड्डीशमयश्चापि ततः परम्। चर्य्यानाथमयी चैव चर्य्यानाथमयस्तथा।। ३३।।
मयूखाः पार्थिवाः प्रोक्ताः साधकाभीष्टदायकाः। नाभिस्थाने द्विपञ्चाशद्दले दशदलात्मके।। ३४।।
तत्राप्या रश्मयो[1] ज्ञेया द्विपञ्चाशत् क्रमेण वै। लोपामुद्रामयी चैव लोपामुद्रामयस्ततः।। ३५।।
तथागस्त्यमयी चैव तथागस्त्यमयस्तथा। कालतापनशब्दादिमयी कालादितापनः।। ३६।।
मयः षष्ठश्च विज्ञेयो धर्माचार्यमयी तथा। धर्माचार्यमयो मुक्तकेश्वरादिमयी ततः।। ३७।।
मुक्तकेश्वरनामादिमयो दीपकलादिकः। नाथमय्यपि दीपादिकलानाथमयस्ततः[2]।। ३८।।
विष्णुदेवमयी चैव विष्णुदेवमयस्ततः। प्रभाकरादितो देवमयस्तेजोमयी[3] ततः।। ३९।।
तेजोदेवमयश्चैव मनोदेवमयी तथा। मनोदेवमयश्चैव कल्याणपदपूर्वकम्।। ४०।।
देवमय्यपि कल्याणदेवादिमयकस्तथा। रत्नदेवमयी चैव रत्नदेवमयस्ततः ।। ४१।।
वासुदेवमयी चैव वासुदेवमयस्तथा। रामानन्दमयी चैव रामानन्दमयस्तथा ।। ४२।।
अणिमासिद्धिरणिमासिद्धश्च लघिमादिका। सिद्धिश्च लघिमासिद्धो महिमासिद्धिरप्यथ।। ४३।।
महिमासिद्ध इत्येव ईशित्वादिस्ततः परम्। सिद्धिरीशित्वसिद्धः स्याद् वशित्वादिस्ततः परम्।।४४।।
सिद्धिर्वशित्वसिद्धः स्यात् प्राकम्यादिस्ततः परम्। सिद्धिः प्राकम्यसिद्धः स्यात् भुक्तिसिद्धिस्ततः परम्।।४५।।
भुक्तिसिद्धस्ततोऽपीच्छासिद्धिरिच्छादिसिद्धकः। प्राप्तिसिद्धिः प्राप्तिसिद्धः सर्वकामादिसिद्धिका।।४६।।
सर्वकामादिसिद्धश्च ब्राह्मी ब्रह्मा अतः परम्। माहेश्वरी च माहेशो ज्ञेया वै जलरश्मयः।।४७।।
द्वाषष्टिदलके पद्मे स्वाधिष्ठाने रसात्मके। पूर्वादिदलमारभ्य ज्ञेया तैजसरश्मयः ।।४८।।
कौमारी च कुमारश्च वैष्णवी विष्णुरेव च। वाराही च वराहश्च माहेन्द्री च महेन्द्रकः।।४९।।

१ 'शक्तयः' क.ख. पाठः। २ 'नाथस्ततः परम्' क. पाठः। ३ 'प्रभाकरादितोऽप्येवं तेजोदेवमयी इति सुपाठः।

चामुण्डा चैव चामुण्डो महालक्ष्मीस्ततः परम्। महालक्ष्मस्ततश्चैव सर्वसङ्क्षोभणी ततः॥ ५०॥
सर्वसङ्क्षोभणश्चैव सर्वविद्रावणी ततः। सर्वविद्रावणश्चैव सर्वाकर्षणिका ततः ॥ ५१॥
सर्वाकर्षणकश्चैव सर्ववशङ्करी ततः । सर्ववशङ्करश्चैव सर्वोन्मादनिका ततः ॥ ५२॥
सर्वोन्मादनकश्चैव सर्वादिकमहाङ्कुशा । तथा महाङ्कुशः सर्वखेचरी सर्वखेचरः॥ ५३॥
सर्वबीजा सर्वबीजः सर्वयोनिस्ततः परम्। सर्वयोनिस्त्रिखण्डा च त्रिखण्डस्तदनन्तरम्॥ ५४॥
त्रैलोक्यमोहनादिश्च चक्रस्वामिनिका ततः। तथैव चक्रस्वामी च प्रकटयोगिनी तथा॥ ५५॥
ततः प्रकटयोगी च कामाकर्षणिका ततः। कामाकर्षणकश्चैव बुद्ध्याकर्षणिका ततः॥ ५६॥
बुद्ध्याकर्षणकश्चैवाहङ्काराकर्षणी तथा। अहङ्काराकर्षणश्च शब्दाकर्षणिका ततः॥ ५७॥
शब्दाकर्षणकश्चैव स्पर्शाकर्षणिका ततः। स्पर्शाकर्षणकश्चैव रूपाकर्षणिका ततः॥ ५८॥
रूपाकर्षणकश्चैव रसाकर्षणिका ततः। रसाकर्षणकश्चैव गन्धाकर्षणिका ततः ॥ ५९॥
गन्धाकर्षणकश्चैव चित्ताकर्षणिका ततः। चित्ताकर्षणकश्चैव धैर्याकर्षणिका ततः।। ६०॥
धैर्याकर्षणकश्चैव स्मृत्याकर्षणिका ततः। स्मृत्याकर्षणकश्चैव नामाकर्षणिका ततः ॥ ६१॥
नामाकर्षणकश्चैव बीजाकर्षणिका ततः। बीजाकर्षणकश्चैव ततश्चानाहते तथा ॥ ६२॥
चतुरुत्तरपञ्चाशद्दले रविदलात्मके । वायव्या रश्मयो ज्ञेयाः पूर्वपत्रादितः क्रमात् ॥ ६३॥
आत्माकर्षणिका चैव आत्माकर्षणकस्तथा। अमृताकर्षणी शक्तिरमृताकर्षणस्तथा ॥ ६४॥
शरीराकर्षणी चैव शरीराकर्षणस्ततः । सर्वाशापरिपूरादिचक्रस्वामिन्यतः परम् ॥ ६५॥
तथैव चक्रस्वामीति गुप्तयोगिन्यतः परम्। गुप्तयोगी ततश्चैवानङ्गादिकुसुमा ततः॥ ६६॥
अनङ्गकुसुमोऽनङ्गमेखलानङ्गमेखलः। अनङ्गमदनानङ्गमदनोऽनङ्गशब्दतः॥ ६७॥
मदनातुरतोऽनङ्गमदनातुर एव च। अनङ्गरेखानङ्गादिरेखोऽनङ्गादिवेगिनी॥ ६८॥
अनङ्गवेग्यनङ्गाङ्कुशानङ्गाङ्कुश एव च। अनङ्गमालिनी चानङ्गादिमाली ततः परम्॥ ६९॥
सर्वसङ्क्षोभणादिश्च चक्रस्वामिनिका ततः। तथैव चक्रस्वामीति गुप्तादितरयोगिनी॥ ७०॥
तथैव योगी सर्वादिसङ्क्षोभण्यथ तत्परम्। सर्वसङ्क्षोभणश्चैव सर्वविद्रावणी ततः॥ ७१॥
सर्वविद्रावणश्चैव सर्वाकर्षणिका ततः। सर्वाकर्षणकश्चैव सर्वाह्लादनिका ततः॥ ७२॥
सर्वाह्लादनकश्चैव सर्वसम्मोहनी ततः। सर्वसम्मोहनः सर्वस्तम्भनी च ततः परम्॥ ७३॥
सर्वस्तम्भनकश्चैव सर्वजृम्भणिका ततः। सर्वजृम्भणकश्चैव सर्ववशङ्करी ततः ॥ ७४॥
सर्ववशङ्कर सर्वरञ्जनी सर्वरञ्जनः। सर्वोन्मादिनिका सर्वोन्मादनश्च ततः परम् ॥ ७५॥
सर्वार्थसाधनी चैव ततः सर्वार्थसाधनः। सर्वसम्पत्तिपूरणया सर्वसम्पत्तिपूरणः ॥ ७६॥
द्वासप्ततिदले कण्ठे षोडशच्छदकात्मके। नामसा रश्मयो ज्ञेयाः पूर्वादिदलतः क्रमात्॥ ७७॥

सर्वमन्त्रमयी चैव सर्वमन्त्रमयस्ततः। सर्वद्वन्द्वक्षयकरी सर्वद्वन्द्वक्षयङ्करः ॥ ७८॥
सर्वसौभाग्यदायादिकचक्रस्वामिनी ततः। तथैव चक्रस्वामीति सम्प्रदायादियोगिनी ॥ ७९॥
सम्प्रदायादियोगी च सर्वसिद्धिप्रदा तथा। सर्वसिद्धिप्रदश्चैव सर्वसम्पत्प्रदा ततः ॥ ८०॥
सर्वसम्पत्प्रदश्चैव सर्वप्रियकरी ततः। सर्वप्रियकरश्चैव सर्वमङ्गलकारिणी ॥ ८१॥
सर्वमङ्गलकारी च सर्वकामप्रदा ततः। सर्वकामप्रदश्चैव सर्वदुःखविमोचनी ॥ ८२॥
तथैव मोचनः सर्वमृत्युप्रशमनी ततः। सर्वमृत्युप्रशमनः सर्वविघ्ननिवारणी ॥ ८३॥
तथा निवारणश्चैव तथा सर्वाङ्गसुन्दरी। सर्वाङ्गसुन्दरश्चैव सर्वसौभाग्यदायिनी ॥ ८४॥
तथैव दायकश्चैव सर्वार्थसाधकादितः। चक्रस्वामिनिका चैव ततः स्वामी कुलादिका॥ ८५॥
उत्तीर्णयोगिनी चैव तथा योगी ततः परम्। सर्वज्ञा चाथ सर्वज्ञः सर्वशक्तिप्रदा परम्॥ ८६॥
सर्वशक्तिप्रदश्चैव सर्वैश्वर्य्यप्रदा ततः। सर्वैश्वर्यप्रदश्चैव सर्वज्ञानमयी ततः ॥ ८७॥
सर्वज्ञानमयश्चैव सर्वव्याधिविनाशिनी। सर्वव्याधिविनाशश्च सर्वाधारस्वरूपिणी ॥ ८८॥
सर्वाधारस्वरूपश्च सर्वपापहरा तथा। सर्वपापहरश्चैव सर्वानन्दमयी तथा ॥ ८९॥
सर्वानन्दमयश्चैव सर्वरक्षास्वरूपिणी। सर्वरक्षास्वरूपश्च सर्वेप्सितफलप्रदा ॥ ९०॥
तथा फलप्रदः सर्वरक्षाकरादितः[१] परम्। चक्रस्वामिनिका चैव तथा स्वामी ततः परम्॥ ९१॥
निगर्भयोगिनी चैव तथा योगी ततः परम्। वशिनी च वशी चैव ततः कामेश्वरी ततः॥ ९२॥
कामेश्वरो मोदिनी च मोदी च विमला ततः। विमलश्चारुणा चैवारुणश्च जयिनी जयी॥९३॥
सर्वेश्वरी च सर्वेशः कौलिनी कौलिकस्ततः। आज्ञाचक्रे द्विपत्रात्मचतुःषष्टिदलेऽब्जके॥ ९४॥
मानसा रश्मयो ज्ञेयाः सर्वरोगहरादितः। चक्रस्वामिनिका चैव तथा स्वामी ततः परम्॥ ९५॥
रहस्ययोगिनी चैव तथा योगी च बाणिनी। बाणी च चापिनी चापी पाशिनी पाशिकस्ततः॥९६॥
अङ्कुशिन्यङ्कुशी चैव महाकामेश्वरी ततः। महाकामेश्वरश्चैव महावज्रेश्वरी तथा॥९७॥
महावज्रेश्वरश्चैव तथैव भगमालिनी। भगमाली तथैवात्र महात्रिपुरसुन्दरी ॥ ९८॥
तथैव सुन्दरः सर्वसिद्धिप्रदादितः[२] परम्। चक्रस्वामिन्यथ तथा स्वामी चाप्यतिपूर्विका॥ ९९॥
रहस्ययोगिनी चैव तथा योगी ततः परम्। श्रीभट्टारकसंज्ञा च श्रीभट्टारकसंज्ञकः॥ १००॥
पूर्वानन्दमयादिश्च चक्रस्वामिन्यतः परम्। तथैव चक्रस्वामीति परापररहस्यतः ॥ १०१॥
योगिनी च तथा योगी त्रिपुरा त्रिपुरस्तथा। (त्रिपुरादीश्वरी चैव ततश्च त्रिपुरेश्वरः)॥ १०२॥
त्रिपुरादिसुन्दरी च ततः त्रिपुरसुन्दरः। त्रिपुरादिर्वासिनी च तथा त्रिपुरवासकः ॥ १०३॥
त्रिपुराश्रीस्तथा श्रीश्च ततस्त्रिपुरमालिनी। माली[३] त्रिपुरसिद्धा च तथा सिद्धस्ततः परम्॥ १०४॥
त्रिपुराम्बा तथैवाम्बो महात्रिपुरसुन्दरी। तथैव सुन्दरश्चाथ महामाहेश्वरी ततः॥ १०५॥

१. ततः सर्वार्थदायकः ग. पाठः। २. 'करस्ततः' ग. पाठः। ३. 'ततः' क. ग. पाठः।

तथा माहेश्वरश्चैव महाराज्ञी ततः परम्। महाराजो महाशक्तिर्महाशक्तस्ततः परम्।। १०६।।
महागुप्ता महागुप्तो महाज्ञप्ता ततः परम्। महाज्ञप्तो महादिश्च महानन्दा महादिकः।। १०७।।
महानन्दस्तथैवात्र महास्पन्दा ततः परम्। महामहास्पन्द इति तथैवानुमहाशया ।।१०८।।
महामहाशयश्चैव विज्ञेया रश्मयोऽत्र च। आरोहणक्रमः प्रोक्तस्त्ववरोहक्रमं ब्रुवे।। १०९।।
लोपापञ्चदशार्णानां मिथुनानि ततः परम्। नवात्मेश्वरवर्णानां षोडशस्वरयोगतः ।। ११०।।
चत्वारि चत्वारिंशच्च शतं तेषां तु युग्मकम्। पञ्चब्रह्मत्रिमूर्तीना ज्योतिषां च कलाश्च ये।। १११।।
मिथुनानि च। (त्वा?ता) रोत्थकलानां मिथुनानि वै। नवात्मेश्वरवर्णोत्थकलेतरकलाः पुनः।। ११२।।
षष्ट्युत्तरं गुणशतं विज्ञेया यत्र सन्धिषु। नवात्मेश्वरमन्त्रोत्थमिथुनानि गमागमे ।। ११३।।
तथा सप्तशती विंशत्युत्तरा च ततः परम्। सषट्त्रिंशत्सप्तशतं सहस्राणि च विंशतिः।। ११४।।
कालनित्याश्च विज्ञेया मूलसंख्या समीरिता। षट्शतोत्तरयुक्तानि सहस्राण्येकविंशतिः।। ११५।।
श्वासरूपाः समाख्याता रश्मयोऽत्र कुलागमे। सूर्याचन्द्रमसौ ज्ञेयौ मूलाङ्काद् द्विगुणीकृतात्।। ११६।।
सङ्कीर्णरश्मयो ज्ञेया मूलाङ्काद् बिन्दुहीनतः। मूलाधारादधस्ताच्च सहस्रदलकेषु च।। ११७।।
सहस्ररश्मयो भान्ति तथैव ब्रह्मरन्ध्रके। सन्धिषट्केऽध ऊर्ध्वे च त्रिशद्विंशतिसंख्यया।। ११८।।
ऊनविंशतिसाहस्रं चत्वारिंशच्चतुःशतम्। सहजा रश्मयो ज्ञेयाः सङ्कीर्णा द्विसहस्रकम्।। ११९।।
शतं षष्टिः समाख्याता विज्ञेयास्तेषु भागशः। वर्णानां क्रमशो ज्ञेयाः पार्थिवाश्चैव पाथसाः।। १२०।।
तैजसाश्चानिलाश्चैव नाभसा मानसास्तथा। अवर्णस्य त्रयं सार्धं सपादत्रयमेव च।। १२१।।
अष्टमांशविहीनं स्याच्चतुष्टयमतः परम्। अष्टमांशविहीनं स्यात् सार्धत्रयमतः परम्।। १२२।।
सार्धवेदं वेदसंख्यं रश्मयः क्रमतः स्मृताः। इकारादिस्वराणां तु क्रम एष उदाहृतः।। १२३।।
एकैकस्य स्वरस्यैव सार्धद्वाविंशतिक्रमः। सदलाब्धिः कवर्णस्य पादन्यूनं तु पञ्चकम्।। १२४।।
पञ्चकं सार्धवेदं च षट् सपादं च पञ्चकम्। स्वर्णस्याप्ययं ज्ञेयः क्रमः पञ्चान्तकस्य तु।। १२५।।
भूतं सपादवेदं च पञ्चकं सार्धवारिधिः। षट्कं सपादभूतं स्यादपि घाक्षरकस्य तु।। १२६।।
सार्धाब्धिश्च सपादाब्धिः सार्धपञ्चकमेव च। सार्धाम्भोधी रसाश्चैव सपादं पञ्चकं ततः।। १२७।।
ङकारस्य चकारस्य छकारस्याप्ययं क्रमः। जकारस्य तु पञ्चैव सपादं वेदमेव च।। १२८।।
पञ्चकं सार्धवेदं च षट्कं भूतं सपादकम्। झकारस्याम्बुधिसार्धं सपादाम्बुधिरेव च।। १२९।।
पञ्चकं सार्धवेदं च षट्कं पादविहीनकम्। षट्कं ञार्णस्य तु तथा टठयोश्च जकारवत्।। १३०।।
डार्णस्य पादहीनं स्यात् षट्कं पञ्च सपादकाः। सार्धषष्ट्कं पञ्चकं च सप्तकं सार्धषट्ककम्।। १३१।।
ढणतानामयं ज्ञेयः क्रमो देशिकसत्तमैः। थार्णस्य सार्धभूतं स्यात् सपादं भूतमेव च।। १३२।।
रसाश्च पादहीनं स्यात् षट्कं सप्तकमेव च। सार्धषट्कं तथा ज्ञेया दधनानां च देशिकैः।। १३३।।

पार्णस्य सार्धभूतं स्यात् पञ्चकं षट्कमेव च। सार्धभूतं गजाः षट्कं फकारस्याप्ययं क्रमः।।१३४।।
वार्णस्य दशकं सार्द्धा गजा दशकमेव च। नवकं रविसंख्याकं सार्धपङ्क्तिर्यथाक्रमम्।। १३५।।
भार्णस्य नवकं सार्धं नवकं पङ्क्तिरेव च। नवकं रविसंख्याकं सार्धपङ्क्तिः क्रमेण वै।। १३६।।
मार्णस्य नवकं सार्धं गजाश्चैकादशापि वा। नवकं रविसंख्याकं सार्धपङ्क्तिः क्रमेण च।। १३७।।
यार्णस्य नवकं सार्धंगजाः पङ्क्तिस्तथैव च। नवकं रविसंख्याकं सार्धैकादशकं ततः।। १३८।।
रार्णस्य नवकं सार्धंगजा एकादश ततः। नवकं रविसंख्याकं सार्धपङ्क्तिर्यथाक्रमम्।। १३९।।
लार्णस्य दशकं सार्धंगजा दशकमेव च। नवकं रविसंख्याकं सार्द्धपङ्क्तिस्तथैव च।। १४०।।
वार्णस्य मनुसंख्याकं विश्वेदेवास्तथैव च। सदलं तिथिसंख्याकं सदलं विश्वमेव च।। १४१।।
अष्टादश षोडश च शषसानां सपङ्क्तयः। हार्णस्याष्टाविंशतिश्च षड्विंशतिरतः परम्।। १४२।।
एकत्रिंशत्सप्तत्रिंशत्[1] षट्त्रिंशत्तदनन्तरम्। द्वात्रिंशच्च क्रमो ज्ञेयः क्षकारस्याप्ययं क्रमः।। १४३।।
ततः सङ्कीर्णरश्मीनां सहजानामशेषतः। ज्ञानेन वर्णवृन्दस्य ज्ञातुं वैभवमुत्तमम्।। १४४।।
शक्यतेऽत्र न सन्देहः सत्यं सत्यं न चान्यथा। ककाराद्यर्कवर्णानां त्रिंशत्रिंशत्तथैव च।। १४५।।
डकारस्य दशार्णानां षट्त्रिंशत्क्रम ईरितः। बकारादि (दशा?रसा) र्णानां षष्टिसंख्या समीरिता।१४६।।
वादीनां वेदवर्णानां नवत्येवमुदाहृता। हक्षयोश्च शतं प्रोक्तमशीत्युत्तरमेव च ।। १४७।।
अकारादिस्वराणां च प्रत्येकं च शतद्वयम्। पञ्चविंशतिरुद्दिष्टा मयूखा मूलतः क्रमात्।। १४८।।
सार्द्धद्वाविंशतिर्ज्ञेयाः सङ्कीर्णस्तु पृथक् पृथक्। द्विशतं सार्द्धयुग्मं च सहजा रश्मयः पृथक्।१४९।।
कादिठान्तार्कवर्णानां मूलभूतास्तु रश्मयः। शतत्रयं तु प्रत्येकं ज्ञातव्या देशिकोत्तमैः।। १५०।।
त्रिंशत्रिंशत्क्रमेणैव सङ्कीर्णा रश्मयः स्मृताः। द्विशतं सप्ततिश्चैव सहजास्तु पृथक् पृथक्।१५१।।
डादीनां दशवर्णानां त्रिशतं षष्टिरेव च। मूलभूतास्तु सङ्कीर्णाः षट्त्रिंशच्च पृथक् पृथक्।। १५२।।
सहजा द्विशतं षष्टिश्चतुरुत्तरमेव च। बादीनां रसवर्णानां मूलभूता हि रश्मयः।। १५३।।
शतषट्कं तु सङ्कीर्णा विज्ञेयाः षष्टिसंख्यया। निजाः पञ्चशतं चत्वारिंशच्च क्रमतः पृथक्।१५४।।
वादीनां वेदवर्णानां नवशत्या पृथक् पृथक्। मूलभूतांशवो ज्ञेयाः सङ्कीर्णा नवतिः पृथक्।। १५५।।
निजा दशोत्तराण्यष्टौ शतानि च ततः परम्। हक्षयोरष्टशत्यूर्ध्वसहस्रं मूलरश्मयः।। १५६।।
अशीत्युत्तरतो ज्ञेयाः शतं सङ्कीर्णरश्मयः। सहस्रं षट्शतं त्रिंशत्सहजा रश्मयः क्रमात्।। १५७।।
सर्वेषां पार्थिवा ज्ञेयाः सषट्त्रिंशच्छतत्रयम्। आप्याः सद्वादशं ज्ञेयास्त्रिशतं देशिकोत्तमैः।। १५८।।
द्विसप्तत्युत्तरं ज्ञेया[2] स्त्रिशतं तैजसांशवः। सचतुर्विंशति ज्ञेयास्त्रिशतं वायुरश्मयः।। १५९।।
चतुःशतं च द्वात्रिंशद्रश्मयो नाभसा मताः। त्रिशतं चाप्यशीतिश्च चत्वारो मानसाः स्मृताः।। १६०।।
एवं रश्मिक्रमज्ञानात् साक्षात्परशिवो भवेत्। नातः परतरं लोके मन्त्रवीर्यप्रकाशकम्।। १६१।।

१. 'सप्तविंशत्' ग. पाठः। २. 'त्युत्तरमेवं स्युः' ग. पाठः।

गुह्याद्गुह्यतरं चैव नादेयं यस्य कस्यचित्। दत्तं चेत्सिद्धिहानिः स्यादित्याज्ञा पारमेश्वरी॥ १६२॥
(स्तम्भने पार्थिवप्राया विज्ञेया मनवोऽत्र च)। आप्यप्रायाश्च मनवः शस्ताः स्युः शान्तिकर्मणि॥ १६३॥
तैजसास्तु वियत्प्रायाः कर्मणो वश्यकेऽपि च। उच्चाटने तु वायव्याः प्रशस्ता मनवोऽत्र च॥ १६४॥
मन्त्रास्तु मानसप्राया मुक्तिदा नात्र संशयः। प्रबुद्धा कुण्डलीशक्तिर्मन्त्रा बोधं प्रयान्ति च॥ १६५॥
ज्ञात्वा सम्यग्विधानेन गुरुतः शास्त्रतोऽपि वा। आरोहणक्रमेणैवाप्यवरोहक्रमेण च॥ १६६॥
रश्मिन्यासे कृते चैव मन्त्राः सिद्ध्यन्ति तत्क्षणात्। रश्मिन्यासं विना यस्तु मन्त्रवीर्यप्रयत्नवान्॥ १६७॥
सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि। कालीमते समुदिष्टा रश्मयः सिद्धिदायकाः॥ १६८॥

इति कालीमते श्रीविद्यारश्मयः॥

वक्ष्ये कादिमते सम्यग्रश्मयश्चक्रषट्कके। पार्थिवाः स्वरहीनाश्च सप्त ह्रस्वस्वरान्विताः॥ १॥
पञ्चत्रिंशत् समुद्दिष्य दीर्घयुक्तास्तु सप्ततिः। ते पुनः शुद्धतो बिन्दुसर्गाभ्यां दशपञ्च च। २॥
शतत्रयं समुद्दिष्टाः पार्थिवाः पञ्च युक्स्वराः। उदात्ताश्चानुदात्ताश्च स्वरितास्तिथिसंज्ञकाः॥ ३॥
ते पुनः शुद्धतो बिन्दुसर्गाभ्यां समुदाहृताः। पञ्चचत्वारिंशदिति त्रिशतं षष्टिसंख्यकाः॥ ४॥
मूलाधारे महीस्थाने विज्ञेया देशिकोत्तमैः। सङ्कीर्णा रश्मयः ख्याता मणिपूरे जलाश्रये॥ ५॥
स्वाधिष्ठानेऽनलावासेऽनाहतेऽनिलमन्दिरे। विशुद्धे व्योमनिलये तथा प्रोक्ताश्च रश्मयः॥ ६॥
आज्ञाचक्रे मनःस्थाने हलक्षास्त्रय एव हि। ह्रस्वदीर्घस्वरैर्युक्ताः पञ्चोत्तरमतः परम्॥ ७॥
चत्वारिंशत् समाख्यातास्ते पुनः सानुनासिकाः। ततस्तेऽननुनासाश्च तथा नवतिसंख्यकाः॥ ८॥
ते पुनः शुद्धतो बिन्दुसर्गाभ्यामुभयात्मना। षष्ट्युत्तरं त्रिशतकं सम्यक्ख्याताः स्युरंशवः॥ ९॥
स्वराणां भागशः प्रोक्ताः पार्थिवाद्याश्च षड्विधाः। एकस्यैकस्य वर्णस्य सार्द्धद्वाविंशतिः पृथक्॥ १०॥
कादीनां रविवर्णानां पार्थिवाद्याश्च षड्विधाः। एकस्यैकस्य वर्णस्य त्रिंशत् त्रिंशत् पृथक् पृथक्॥ ११॥
डादीनां दशवर्णानां पार्थिवाद्याश्च रश्मयः। एकस्यैकस्य वर्णस्य षट्त्रिंशत्क्रम ईरितः॥ १२॥
बादीनां रसवर्णानां पार्थिवांशादयः क्रमात्। एकस्यैकस्य वर्णस्य षष्टिः षष्टिरुदाहृताः॥ १३॥
बादीनां वेदवर्णानां पार्थिवाद्याश्च षड्विधाः। एकस्यैकस्य नवतिर्नवतिः प्रोक्तरूपतः॥ १४॥
हक्षयोः पार्थिवाद्याश्च षड्विधा रश्मयः क्रमात्। अशीत्युत्तरतो ज्ञेयाः शतमेकैकवर्णके॥ १५॥
एवं सहस्रद्वितयं शतं षष्टिश्च रश्मयः। चक्रे चक्रे विजृम्भन्ते सङ्कीर्णा रश्मयः पृथक्॥ १६॥
निखिला रश्मयो ज्ञेयाः सङ्कीर्णा द्वादशैव हि। सहस्राणि च षष्ट्यूर्ध्वनवशत्या युतानि वै॥ १७॥
सन्धिषट्केऽथ ऊर्ध्वे च चत्वारिंशच्च षट्शतम्। अष्टौ सहस्राण्येवं हि सङ्कीर्णा रश्मयोऽम्बिके॥ १८॥
षष्ट्युत्तरशतोर्ध्वं च द्विसहस्रमपास्य च (?)। त्रिचत्वारिंशदेवात्र सहस्राणि शतद्वयम्॥ १९॥
रश्मयो मूलभूता हि समुद्दिष्टा ह्यशेषतः। निजाश्च भागशो ज्ञेयाः सङ्कीर्णाः प्रागुदीरिताः॥ २०॥

अर्धं सूर्यस्वरूपाश्च अर्धं सोमस्वरूपिण:। इति।

तन्त्रान्तरे –

कण्ठदेशे स्वराणां च भूतवर्णत्रिके त्रिके। तत्तद्भूतांशवो ज्ञेया: शतत्रयविभागत: ॥ १॥
अन्येषां पञ्च पञ्चैव विसर्गस्य तु मानसा:। शतत्रयं समुद्दिष्टा अन्येषां तु चतुर्दश ॥ २॥
कादिष्वनिलवर्णानां पञ्चोत्तरशतक्रम:। अन्येषां पञ्च पञ्चैव नवानां वायुरश्मय: ॥ ३॥
आग्नेयानां त्रयाणां च पञ्चोत्तरशतांशव:। अन्येषां पञ्च पञ्चैव नवानामग्निरश्मय: ॥ ४॥
धरार्णयोरेकशती पञ्चविंशतिरुत्तरा:। अन्येषां रुद्रवर्णानां पार्थिवांशा दश क्रमात् ॥ ५॥
जलार्णयोरेकशती पञ्चविंशतिरुत्तरा:। अन्येषां रुद्रवर्णानां क्रमाद् दश जलांशव: ॥ ६॥
आकाशार्णद्वयस्यापि शतं वै पञ्चविंशति:। एकैकस्य तु विज्ञेया अन्येषां दश वै दश॥ ७॥
डादिफान्तदशार्णेशु तत्तद्भूतार्णयो: पृथक्। तत्तद्भूतांशवो ज्ञेया: सार्धं शतमिति स्फुटम्॥ ८॥
अन्येषां वसुवर्णानां सार्द्धद्वादश रश्मय:। बादिलान्तार्णषट्केषु धरावर्णद्वये पृथक्॥ ९॥
धरांशवस्तु विज्ञेया: षष्ट्युत्तरशतं तथा। अन्येषां पङ्क्तिसंख्याका विज्ञेया वीरवन्दिते॥ १०॥
तत्तद्भूतांशवो भादितत्तद्भूतार्णकेषु च। देशिकेन्द्रै: सुविज्ञेया एकैकस्य शतत्रयम्॥ ११॥
अन्येषां तु त्रिवर्णानां प्रत्येकं विंशतिक्रम:। वार्णादिवेदवर्णानां जलयोर्जलरश्मय:॥ १२॥
सार्द्धं शतं तु विज्ञेया अन्येषां विंशतिक्रम:। द्वितीयस्य शतं सार्धमन्येषां सप्ततिक्रम:॥ १३॥
नाभसाश्चात्र विज्ञेयास्तृतीयस्य तथैव च। वायव्या: क्रमतो ज्ञेया हकारस्य शतत्रयम्॥ १४॥
क्षार्णस्य षष्टिसंख्या स्यान्नाभसा नात्र संशय:। अग्न्यंशव: क्षकारस्य विज्ञेया वै शतत्रयम्।१५॥
हार्णस्य षष्टिसंख्या स्यादन्ये तुल्या न संशय:। एवं रश्मिक्रम: प्रोक्त: साधकानां हिताय च।१६॥
गोपनीय: प्रयत्नेन स्वयोनिरिव पार्वति। नाशिष्याय प्रदातव्यं नाभक्ताय कदाचन॥ १७॥
दत्ते न सिद्धिहानि: स्यादित्याज्ञा पारमेश्वरी। गुरुत: शास्त्रतो ज्ञात्वा साक्षात्परशिवो भवेत्।१८॥
स्वरा: षोडश विख्याता: स्पर्शास्ते पञ्चविंशति:। व्यापका दश सम्प्रोक्ता: सोमसूर्याग्निरूपिण:।१९॥
गुणत्रयात्मका: कामवसुधर्मप्रदा: क्रमात्[१]। तत्त्वत्रयात्मकाश्चैव भूर्भुव: स्व: स्वरूपिण:॥ २०॥
मूर्तित्रयात्मका: सृष्टिस्थितिसंहारकारिण:। धामत्रयात्मकाश्चैव ह्यादिमध्यान्तरूपिण: ॥ २१॥
एतेषां वैभवं वक्ष्ये शृणु देवि समाहिता। तिर्यगूर्ध्वमध:स्थानारोहणाद्यवरोहत: ॥ २२॥
समस्तव्यस्तरूपेण प्रतिलोमानुलोमत: । अवस्थात्रयरूपेण व्याप्यव्यापकभेदत: ॥ २३॥
तेजसां[२] शक्तिमूर्तीनां वर्णगुम्फितयोगत:। सूत्रप्रायात्मकत्वेन कुण्डलिन्या विधानत:॥ २४॥
अष्टात्रिंशत्कला ज्ञेया मन्त्रवीर्यार्थकारिण:। स्वराणां षोडश प्रोक्ता: पृथक् सोमकला: क्रमात्।२५॥
स्पर्शानां[३] मार्णराहित्ये षट्षट् सूर्यकला: पृथक्। व्यापकानां कला: वह्ने: पृथग् दश दशैव हि।२६॥

१ 'अग्नित्रयात्मकाश्चैव महाकालादिरूपिण:' ग. पाठ:। २ 'सां' क. ख. पाठ:। ३ 'नामा' क. ख. पाठ:।

आरोहणेऽर्धसंख्यास्तास्तथा स्युरवरोहणे। प्रकृतिस्था विजानीयाद्रवेरुभयथा[1] कलाः ॥ २७॥
अप्राकृताः सोमकला वह्नेश्चापि न संशयः। मार्णस्योभयथा[2] प्रोक्ताः षट्सप्ततिकला क्रमात्॥ २८॥
अष्टात्रिंशत्तथारोहेऽप्यवरोहे तथैव च । एता निजकलाः प्रोक्ताः पूर्णमण्डलरूपिणः॥ २९॥
तत्स्वरूपानुसन्धानसिद्धेः सम्यक्त्वयोगतः। अष्टोत्तरसहस्रं वाप्यष्टोत्तरशतं तु वा॥ ३०॥
अष्टाविंशतिसंख्यातो जपेन्मन्त्रं समाहितः। वीर्ययुक्तो भवेन्मन्त्रस्त्वनायासेन सिद्ध्यति॥ ३१॥
निजाः कलास्ते सम्प्रोक्ताः सङ्कीर्णाश्च शृणु प्रिये। ततोऽष्टात्रिंशदर्णानामष्टात्रिंशत् पृथक् पृथक्।३२॥
कभादिकठडान्ताश्च द्वादशार्णा रवेः स्मृताः। स्वराः षोडश सोमस्य वह्नेर्यादि दशैव हि॥ ३३॥
चतुश्चत्वारिंशदब्धिशतं सहस्रमेव च। सोमसूर्याग्निरूपिण्यः सङ्कीर्णाः स्यु कलास्तथा॥ ३४॥
असङ्कीर्णास्तथा प्रोक्ताः पूर्णमण्डलसंख्यकाः। सर्वाः कलास्ताः सम्प्रोक्ताः सहस्रे द्वे च विंशतिः।३५॥
कला मार्णस्य[3] सङ्कीर्णाः सहस्रं च चतुःशतम्। चतुश्चत्वारिंशदिति निःशेषं समुदाहृताः॥ ३६॥
ह्रस्वस्वरास्तु पुंरूपा दीर्घाः स्त्रीरूपिणः सदा। स्वराणां मध्यगं यत्तच्चतुष्कं तु नपुंसकम्॥ ३७॥
कादिवर्णाः स्मृताः केचित् पुंरूपाः स्त्रीस्वरूपकाः। केचिन्नपुंसकाः केचित्सर्वे ते ह्युभयात्मकाः।३८॥
मकारः केवलं प्रोक्तः पुरुषस्तु सदाशिवः। बिन्दुरूपी च सर्वात्मा साक्षी सर्वत्र सर्वदा॥ ३९॥
तथा च व्योमवर्णानां स्वरूपं शृणु पार्वति। हकारः परमं व्योम बिन्दुरूपी सदाशिवः॥ ४०॥
निर्गुणो निर्मलः शुद्धो नित्यरूपी निरञ्जनः। पुरुषस्तु गुणातीतो मकारः सगुणः पुमान्॥ ४१॥
शकारोऽम्ब्वात्मकं व्योम शब्दातीतं निरञ्जनम्[4]। नकारः शून्यरूपी स्यादनिलात्मकखं शिवे॥ ४२॥
णकारो धरणीयुक्तो व्योमरूपी च संस्फुटः[5]। ञकारोऽपि तथैवोक्तो ङकारो मरुदात्मकः॥ ४३॥
लृलॄकारौ व्योमवर्णौ पार्थिवानलसम्भवौ। स्वरूपं वायुवर्णानां शृणुष्व परमेश्वरि॥ ४४॥
यकारो निर्गुणो वायुरूपी प्राणमयः शिवः। षकारो जीवभूतश्च जीवनात्मा समीरणः॥ ४५॥
पकारो वह्निरूपी स्याद्वायुः स्पर्शात्मकः परः। तकारो व्योमरूपी स्याद्वायुः सर्वार्थतत्त्वगः॥ ४६॥
टकारः स्तम्भरूपी स्याद्वायुः क्षित्यात्मकः परः। चकारोऽग्न्यात्मको वायुः सौम्यरूपी महेश्वरः।४७॥
ककारः खात्मको वायुः सर्वलोकविमोहनः। एकारो रुद्ररूपी स्याद्वायुर्व्योमात्मकः परः।४८॥
आकारः शब्दरूपी[6] स्याद्वायुरग्न्यात्मकः परः। अकारः सगुणो वायुस्तेजसां निधिरव्ययः।४९॥
स्वरूपमग्निवर्णानां वक्ष्येऽहं शृणु पार्वति। रेफस्तु सर्ववीजानां[7] चैतन्यं निष्कलं परम्॥ ५०॥
आग्नेयमक्षरं शुद्धं[8]निर्मलीकरणार्थकम्। क्षकारो मारुतव्यापी सगुणानिलवर्णकः ॥ ५१॥
फकारोऽग्न्यात्मको वर्णो व्योमरूपी परात्परः। थकरो व्योमरूपी स्यादाग्नेयो व्यक्तविग्रहः।५२॥
ठकारोऽग्निश्चन्द्ररूपी सलिलात्मकमक्षरम्। छकारोऽम्ब्वात्मकोऽग्निश्च सर्वस्तम्भनकारकः।५३॥
खवर्णो मारुतव्यापी तेजोवर्णः परात्परः। ऐकारोऽग्निर्वायुरूपी सर्वमन्त्रार्थजीवनः ॥ ५४॥

१. 'दाः' ग. पाठः। २. 'प्रार्णस्योभयदा' ग. पाठः। ३. 'प्रार्णस्य' ग. पाठः। ४. 'पुनिर्मलम्' क.ख. पाठः। ५. 'संपुटः' ग. पाठः ६. 'एतत्पद्यार्धं' कखयोर्नास्ति। ७. 'शक्तिः' क. पाठः। ८. 'सर्ववर्णानां' ग. पाठः। ९. 'द्धवि' ग. पाठः।

तेजस्त्रयात्मको वह्निरिकारः शाक्तमक्षरम्। ईकारोऽग्निर्वायुरूपी सर्वबीजात्मकः परः।। ५५।।
स्वरूपं भूमिवर्णानां शृणुष्वैकमनाः प्रिये। (स?ल) कारः पृथिवीवर्णो निर्गुणः परमव्ययः।।५६।।
(ल?ळ) कारः सगुणो भूमिवर्णो वाय्वात्मकः परः। बकारोऽमृतरूपी स्यात् क्षितिवर्णोऽव्ययः परः।।५७।।
दकारोऽग्न्यात्मकः शम्भुर्भूमिवर्णो महान् प्रभुः। डकारः क्षितिवर्णः स्यात्................।।५८।।
जार्णोऽमृतात्मको ज्ञेयो भूमिवर्णोऽमृतप्रदः। गकारो वायुरूपी स्यात् क्षितिवर्णो निरोधकृत्।।५९।।
ओकारो व्योमरूपी स्याद्धरावर्णः परात्परः। ऊकारोऽग्न्यात्मकः शम्भुर्विश्वरूपी धरार्णकः।।६०।।
उकारोऽनिलरूपी स्याद्धरार्णो व्यापकः परः। स्वरूपं जलवर्णानां वक्ष्ये शृणु महेश्वरि।। ६१।।
वकारोऽमृतबीजं स्यान्निर्गुणः परमः शिवः। सकारश्चन्द्ररूपी स्याच्छाक्तार्णो जलरूपधृत्।।६२।।
धरात्मको भकारः स्याज्जलार्णः परमः शिवः। व्योमात्मको धकारः स्यात्पाथसार्णो महेश्वरः।।६३।।
ढकारो जलवर्णः स्याद्विश्वव्यापी धरात्मकः। वाय्वात्मको झकारः स्याज्जलार्णः पुरुषोऽव्ययः।।६४।।
घकारो वायुरूपी स्यात्सलिलार्णो महान् प्रभुः। औकारो व्योमरूपी स्याद्व्योमव्यापी जलार्णकः।।६५।।
ऋॠ वह्न्यात्मकौ ज्ञेयौ जलार्णौ शिवरूपिणौ। वैभवं मातृकार्णानां प्रोक्तं ते परमेश्वरि।। ६६।।
तेजस्त्रयविधानं ते प्रोक्तं यद्वर्णरूपतः। तेन रूपेण मन्त्राणा[१] भावनारूपतोऽनिशम्।। ६७।।
वीर्यप्रकाशनं विद्धि सर्वमन्त्रेषु गोपितम्। मन्त्रवीर्यं स्मरन् मन्त्री जपेन्मन्त्रं समाहितः।। ६८।।
अचिरेणैव कालेन मन्त्रसिद्धिः प्रजायते। इति।

श्रीतन्त्रराजे—

मन्त्रवीर्यं शृणु प्राज्ञे कथयामि सुखास्पदम्। येन विज्ञानमात्रेण[२] जीवन्मुक्तो भवेन्नरः।। १।।
तेजसां शक्तिमूर्तीनां प्रपञ्चस्यापि कारणम्। गुणत्रयममीषां च यत्कारणमुदाहृतम् ।। २।।
तत्स्वरूपानुसन्धानसिद्धिः सम्यक्त्वमीरितम्। तन्मन्त्रवीर्यमुद्दिष्टं मन्त्राणां जीव ईरितः।। ३।।
असम्यक्त्वे तु मन्त्राणामयोग्यकथनेन वै। सदा प्रयोगाद् भजनादकाले संशयाद् भवेत्।। ४।।
गुरोरवज्ञया पापान्निषिद्धाचारयोगतः। देवताद्रोहतः सर्वपरिवादानवस्थया।। ५।।
असम्प्रदायादज्ञानादनेकभजनादपि। तत्सम्यक्त्वं येन भवेद्वीर्यं तत्पूर्वमीरितम्।।६।। इति।

उत्तरतन्त्रे—

मन्त्रवीर्यं प्रवक्ष्यामि साधकानां हिताय च। यस्याज्ञानेन नियतं मन्त्रा निश्चेतनां गताः।। १।।
मूलादिब्रह्मरन्ध्रान्तं सूर्यकोटिसमप्रभाम्। विद्युत्कोटिनिभां देवीं चन्द्रकोटिप्रभामयीम् ।। २।।
जगदुत्पत्तिरक्षान्तकारिणीं ज्ञानचित्कलाम्। अष्टात्रिंशत्कलारूपां सर्वमन्त्रमयीं पराम्।। ३।।
सर्वतेजोमयीं दिव्यां परमामृतजृम्भिणीम्। षट्चक्रमार्गनिलयां व्योमषट्कावलम्बिनीम्।। ४।।
चिरं ध्यात्वा साधकेन्द्रः षट् चक्राणि विभाव्य च। तदन्तरष्टत्रिंशाब्जनिचयं च विभाव्य च।। ५।।

१. 'वर्णानां' ग. पाठः। २. 'येन ज्ञानानुभूतेन' क. पाठः। 'विज्ञानभूतेन' ख. पाठः। 'ज्ञानानुभूतेन' ख. पाठः।

तत्तदब्जस्थितान् वर्णान् कुण्डलीसूत्रगुम्फितान्। तेजस्त्रयात्मकान् ध्यात्वा सूर्याग्नीन्दुकलाः स्मरेत्॥६॥
गमागमविभेदेन तिर्यगूर्ध्वविभेदतः। अवस्थापञ्चकाङ्केन ह्यध ऊर्ध्वविभेदतः ॥७॥
समस्तव्यस्तरूपेण सर्वावस्थां गता यतः। ग्रथनादिक्रमेणैव षट्कर्मसु विशेषतः॥८॥
तेजस्त्रयात्मकैर्वर्णैर्मूलमन्त्रं सुयोज्य च। जपित्वा भावयेन्मन्त्री तत्तच्चक्रार्णकैः पृथक्॥९॥
ततस्तु ब्रह्मकङ्काले ध्यायेच्चक्रक्रमं सुधीः। आधारचक्रं प्रथमं कुलदीपमनन्तरम्॥१०॥
वज्रचक्रं ततः प्रोक्तं स्वाधिष्ठानात्मकं परम्। रौद्रं करालचक्रं च गह्वरात्मकमेव च॥११॥
विद्यापदं च त्रिमुखं त्रिपदं कालदण्डकम्। झङ्कारचक्रं च ततः कालोद्गारं करङ्ककम्[१]॥१२॥
दीपकं क्षोभकं झम्मकानन्दकलिकात्मकम्[३]। मणिपूरकसंज्ञं च लाकुलं कालभेदनम्॥१३॥
महोत्साहं[४] च परमं मादकं[५] पदमुच्यते। अनाहतान्तं चक्राणि छन्दः संख्यात्मकानि वै॥१४॥
ततस्तु वैष्णवं चक्रं षण्मुखं षट्पदं ततः। विशुद्धं लम्बिकान्तं च लम्बिकास्थानमेव च॥१५॥
इन्दुचक्रं बिन्दुचक्रं नादं नादान्तमेव च। शक्तिचक्रं सहस्रारमेतानि द्वादशैव तु ॥१६॥
अष्टात्रिंशत्कलास्थानानीति चक्रक्रमः प्रिये। आधाराद्दश (चक्राणि) वह्निस्थानानि सुन्दरि॥१७॥
ततो द्वादशचक्राणि रवेः स्थानानि वै प्रिये। तदूर्ध्वं षोडशान्यत्र चक्राणीन्दोः सुरेश्वरि॥१८॥
कुण्डलिन्या महाशक्तेः सर्वावस्थासु सर्वदा। सर्वाः कलास्ताश्चाग्नेय्यः सर्वाः सौराः महेश्वरि॥१९॥
सर्वा सौम्याः प्रजायन्ते भावनामात्रतः शिवे। अग्नित्रयं तथा सूर्यत्रयं सोमत्रयं तथा॥२०॥
नवधा भिद्यते देवि द्वावग्नौ सूर्य एव च। तथा सोमः प्रातिलोम्याद्द्वयमिन्द्वर्कयोस्तथा॥२१॥
एवं द्वादशधा देवि भिद्यते नात्र संशयः। अग्निसूर्येन्दवश्चैव इन्दुसूर्याग्नयस्ततः ॥२२॥
सूर्यसोमाग्नयश्चैव अग्नीन्द्वर्कास्तथैव च। सूर्यसोमाग्नयश्चैव अग्निसूर्येन्दवस्तथा (?) ॥२३॥
अष्टादश प्रभेदाः स्युः प्रतिलोमानुलोमतः। साङ्कर्यभेदाः[६] सञ्जाता नवैव परेश्वरि ॥२४॥
एवं भेदा भवन्त्यष्टचत्वारिंशत् क्रमेण वै। एतैर्भेदैर्मूलमन्त्रग्रथनादिरिहोच्यते ॥२५॥
मन्त्राः सर्वे महेशानि सकृदुच्चारमात्रतः। वीर्यवन्तो भवन्त्येव सत्यं सत्यं न संशयः॥२६॥
अथवान्यप्रकारेण मन्त्रवीर्यं शृणु प्रिये। अष्टात्रिंशत्कलारूपा माला सर्वार्थसाधिनी॥२७॥
मकारं[७] मेरुरूपं तु कृत्वाष्टात्रिंशदेव हि। एकस्यैकस्य संख्याङ्कं (?) जप्त्वा मन्त्रं प्रसिद्ध्यति॥२८॥
अथवान्यप्रकारेण मन्त्रवीर्यं शृणुष्व तत्। वाग्भवं ब्रह्मणो बीजं[८] श्रीबीजं विष्णुबीजकम्॥२९॥
मायाबीजं तु रुद्रस्य बीजत्रयमुदाहृतम्। तेजस्त्रयात्मकं चैव गुणत्रयमयं प्रिये ॥३०॥
त्रिमूर्तीनां कलादौ तु त्रिबीजं योजयेत् पृथक्। पूर्ववत् प्रजपेन्मन्त्रं ग्रथनादिविभेदतः ॥३१॥
मन्त्रवीर्यं तदुद्दिष्टं सत्यं सत्यं न चान्यथा। अथवान्यप्रकारेण मन्त्रवीर्यं शृणु प्रिये ॥३२॥
हकारः सूर्य आख्यातः सूर्यो वह्न्यात्मकः प्रिये। सकारः सोम आख्यात औकारः सोमरूपधृत्॥३३॥

---

१. 'विभेदतः' ग. पाठः। २. 'ङ्कदम्' क. पाठः। 'ङ्कम्' ख. पाठः। ३. 'कलिला' क.ख. पाठः। ४. 'मदो' क. पाठः। ५. 'गांदकं' ख. पाठः। ६. 'भेदात्' ग. पाठः। ७. 'सकारं' ग. पाठः। ८. 'रूपं' ग. पाठः।

बिन्दुस्तु गगनं देवि सर्वेषां समरूपधृत्। यो जपेत् प्राणदूतीनामादौ बीजं पृथक् पृथक्।।३४।।
सहस्रं प्रजपेद् देवि प्रथनादिविभेदतः। सर्वदोषानपास्यैवं वीर्यवाञ्जायते मनुः ।। ३५।।
एवं चतुर्धा यत्प्रोक्तं मन्त्रवीर्यप्रकाशनम्। गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति ।। ३६।।
मन्त्रवीर्यं शृणु प्राज्ञे प्रकारान्तरतो भृशम्। दीक्षाकाले तु यद्रूपं स्वस्यानुग्रहकर्मणि ।। ३७।।
श्रीगुरोः सावधानेन तद्रूपं परमेश्वरि । भावयन् व्योमचक्रेऽस्मिन् परमामृतजृम्भिते ।। ३८।।
सहस्रं प्रजपेन्मन्त्रं मातृकाक्षरमालया। श्रीगुरोः कृपया देवि वीर्यवाञ्जायते मनुः ।। ३९।।
सुगमोऽयं प्रकारः स्याद् दुर्लभो भुवनत्रये।। इति।।

दक्षिणामूर्तिसंहितायाम् —

अथ वक्ष्ये महेशानि मातृकां लोकमातरम्। अकारादिक्षकारान्तवर्णावयवदेवताम्।। १।।इति।।

उत्तरतन्त्रे—

अथ सम्यङ्मातृकाया विधानमभिधीयते। अशेषदुःखशमनं समस्तज्ञानदीपनम्।। १।।
प्रोक्तो ब्रह्मा मुनिश्छन्दो गायत्रं देवता मता। सरस्वती सर्वदेववन्दिताऽनिन्दितप्रभा।।२।।
समस्तमातृकायास्तु हलो बीजानि शक्तयः। स्वराः स्युः परमेशानि जात्या[1] व्यक्तिस्तु कीलकम्।।३।।

अनिर्वाच्यानां हलां स्वरसंयोगेन सुवाच्यत्वं, व्यक्तिस्तत्कीलकमित्यर्थः। "अनिर्वाच्या हलो वर्णाः शक्त्या व्यक्ता भवन्ति हि" इति तत्रैवोक्तत्वात्।। सिद्धसारस्वततन्त्रे—

दक्षहस्ततले पृष्ठे करभेऽङ्गुष्ठकादिषु। कनिष्ठान्तासु वामे च कनिष्ठादितलावधि।। १।।
स्वरान् षोडश देवेशि केवलान् विन्यसेत् प्रिये। दक्षहस्ततलान्तं तु न्यसेत् संहार ईरितः।। २।।
दक्षहस्ततलाद् देवि वामहस्ततलावधि। न्यसेद्विसर्गसंयुक्तान् सृष्टिरेषा प्रकीर्तिता ।। ३।।
वामहस्तनिष्ठादितत्तलावधि विन्यसेत् । बिन्दुसर्गयुतानष्टौ[2] लृकारादीन् स्वरान् पुनः।। ४।।
दक्षहस्ततलाद् देवि तत्कनिष्ठावधि प्रिये। अकारादिऋ[3]कारान्तान् स्थितिन्यास उदाहृतः।। ५।।
वामहस्तकनिष्ठादिपञ्चस्वङ्गुलिषु क्रमात्। तकारादिशकारान्तान् पर्वस्येकैकशो न्यसेत्।। ६।।
अङ्गुष्ठादिकनिष्ठान्तास्वङ्गुलीषु तथा न्यसेत्। दक्षहस्ते च देवेशि कादिणान्तान् स्थितिक्रमात्।।७।।
हकारादीन् पञ्चवर्णान् युगपत् करयोर्न्यसेत्। अङ्गुष्ठादिष्वङ्गुलीषु व्यापकत्वेन सुन्दरि।। ८।।
करशुद्धिं विधायेत्थं मातृकार्णैर्महेश्वरि। षडङ्गानि न्यसेत् पश्चाद्वक्ष्यमाणेन वर्त्मना।। ९।। इति।

भैरवीतन्त्रे—

ततश्चास्याः षडङ्गानि विन्यसेद् देशिकोत्तमः। अमांमध्ये कवर्गः स्यादिमीमध्ये चवर्गकः।। १।।
उमूंमध्ये टवर्गः स्यादेमैंमध्ये तवर्गकः। ओमौंमध्ये पवर्गः स्यादनुस्वारविसर्गयोः।। २।।
यशवर्गौ सळक्षौ स्तो जातियुक्तानिमान् न्यस्येत्।

चन्द्रार्धाङ्कितशेखरां त्रिनयनां पञ्चाशदर्णैः क्रमाद्
व्याप्ताङ्गीं शरदिन्दुकुन्दरुचिरां वक्षोजभारान्विताम्।

---

१. 'जाता' क. ख. पाठः। २. 'तान्य' क. पाठः। ३. 'षका' ग. पाठः।

दानं चाक्षवटीं सुधारसलसत्कुम्भं शुभं पुस्तकं
विभ्राणां करपङ्कजैर्भगवतीं पद्मासनस्थां भजे॥ १॥

आदावभ्यन्तरे न्यस्य षडाधारेषु मन्त्रवित्। अकारादिक्षकारान्तां ततो देहे बहिर्न्यसेत्॥२। इति।

दक्षिणामूर्तौ—

कलापत्राम्बुजे कण्ठे स्वरान् सम्यक् प्रविन्यसेत्। ह्यर्कपत्रे तद्वर्णान् नाभौ दशदले न्यसेत्॥ १॥
दशवर्णान् लिङ्गमूले षड्दले षट् तथेश्वरि। चतुर्दले तथाधारे चतुर्वर्णांस्तथेश्वरि॥ २॥
भ्रूमध्ये द्विदले हक्षावित्यन्तर्मातृका न्यसेत्। इति।

उत्तरतन्त्रे—

मस्तके मुखवृत्ते च नेत्रकर्णेषु विन्यसेत्। नसागण्डोष्ठदन्तेषु समूर्धास्येषु विन्यसेत्॥ १॥
पाणिपादयुगस्यापि सन्ध्यग्रेषु न्यसेत् क्रमात्। पार्श्वयोः पृष्ठसन्नाभि[1]जठरेषु प्रविन्यसेत्॥२॥
हृद्दोर्मूलककुद्वामदोर्मूलेषु हृदादिषु। करपद्युगले चैव जठराननयोर्न्यसेत् ॥ ३॥

व्योमान्तसौ[2]रसनया युतकर्णिकं तत् किञ्जल्कगं स्वरयुगं प्रविलिख्य पत्रे।
वर्गाष्टकं तदनु भूमिपुरेण वीतमाशासु वाक्षरयुजाश्रिषु टान्तयुक्तम् ॥ ४॥

अस्मिन् पीठे यजेद्देवीं नवशक्तिसमन्विते। मेधा प्रज्ञा प्रभा विद्या धीर्धृतिस्मृतिबुद्धयः॥ ५॥
विद्येश्वरीति गदिता भारत्याः पीठशक्तयः। इति।

सिद्धसारस्वते—

बीजं च सर्वशक्त्यन्ते कमलासनमुच्चरेत्। ङेऽन्तं नमःपदं ब्रूयादयं पीठमनुर्मतः॥ १॥

बीजं यन्त्रमध्यस्थम्। तथा—

अङ्गादि संयजेदादौ स्वरद्वन्द्वं ततोऽर्चयेत्। अष्ट वर्गांस्ततोऽभ्यर्च्य तच्छक्तीरर्चयेत् क्रमात्॥ २॥
कुन्दाभाक्षापविद्यायुक्करयुग्मा दलेष्विमाः। व्यापिनी पालिनी युक्ता पावनी क्लेदिनी ततः॥ ३॥
धारिणी मालिनी षष्ठी हंसिनी शान्तिनी तथा। ततः सम्पूजयेन्मन्त्री ब्राह्म्याद्यास्तदनन्तरम्॥ ४॥
लोकपालांस्तदस्त्राणि पूजयेत् क्रमतः सुधीः। एवं कुर्यान्न्यासजालं जपेल्लक्षं च मन्त्रवित्॥ ५॥
तद्दशांशेन जुहुयान्मधुरत्रयलोलितैः[3]। तिलैः शुद्धैस्तर्पणादि ततः कुर्यात् समाहितः॥ ६॥
एवं सिद्धे मनौ मन्त्री प्रयोगान्निजवाञ्छितान्। साधयेत् सर्वसिद्ध्यर्थं गुर्वनुज्ञापुरःसरम् ॥ ७॥
स्वर्णं रूप्यं तथा ताम्रं वर्गषोडशदिङ्मितम्। एतैस्तु रचितं सम्यग् रुचकं सर्वकामदम्॥ ८॥

वर्गः पञ्चविंशतिः, दिग् दश, रुचकमङ्गुलीयकम्।

अष्टोत्तरसहस्रं तु जपित्वा जुहुयात्तथा। घृतेन तत्समादाय सिक्तं सम्पातसर्पिषा॥ ९॥
अभिषेकप्रकारेण घटे विन्यस्य मुद्रिकाम्। मातृकां प्रयजेत्तत्र साङ्गां सावरणांबुधः॥ १०॥
अभिषिक्ताय शिष्याय मुद्रां तां वितरेद् गुरुः। मुद्राधारी ग्रहक्षुद्रदस्युमारीसरीसृपैः॥ ११॥

---

१. 'पृष्ठतो नाभि' ग. पाठः। २. 'न्तमौ' क. ख. पाठः। ३. 'लोडितैः' ग. पाठः।

विमुक्तः सुचिरं जीवेत् प्रथमं विजयी भवेत्। इति।

मन्त्रतन्त्रप्रकाशे—

सोमसूर्याग्निरूपाः स्युर्वर्णा लोहत्रयं तथा। रूप्यमिन्दुः स्मृतो हेम सूर्यस्ताम्रं हुताशनः।। १।।
लोहभागाः समुद्दिष्टाः स्वराद्यक्षरसंख्यया। तैर्लोहैः कारयेन्मुद्रामसङ्कुलितसङ्गताम् ।। २।।
साग्रं सहस्रं सञ्जप्य स्पृष्ट्वा तां जुहुयात्ततः। तस्यां सम्पातयेन्मन्त्री सर्पिषा पूर्वसंख्यया।।३।।

इति। उत्तरतन्त्रे—

तोयं पिबेद् दिनादौ यस्त्रिवारजप्तमेतया। वत्सराज्जायते सम्यक् स मूकोऽपि कवित्वभाक्।। १।।

इति। अस्यार्थः— प्रातः संध्यावन्दनानन्तरं चुलुकेन जलमादाय तन्मध्ये वक्ष्यमाणमातृकायन्त्रं विभाव्या— कारादिक्षकारान्तां मातृकां सञ्जप्य तज्जलममृतं भावयन् मूलाधारात् जिह्वाग्रान्तं सारस्वतीं नाडीं दीपशिखाकारां ध्यायंस्तस्यां होमधिया पिबेत्। एवं प्रतिदिनं कुर्वतश्चतुर्विधं पाण्डित्यं, वक्तृत्वव्याख्यातृत्ववादित्वकवित्वं चेति, स्वात्मज्ञानं च भवतीति परमरहस्यार्थः। तथा— 'ब्राह्मीरसेन वचया पयसा पाचयेद् घृतम्।'' घृतं गोघृतम्, अत्रौषधित्रयमपि समभागं ग्राह्यम्।।

अयुतं जप्तमनया भक्षितं कविताप्रदम्। अक्षरौषधिसम्पर्कपयसा पूरयेत् घटम्।। २।।

पयसा जलेन।

सहस्रजप्तेन ततः साध्यं सिञ्चेत् सुमन्त्रवित्। स स्यान्मेधेन्दिरा[1]कीर्तिदीर्घायुःकवितायुतः।। ३।।
वन्ध्या च लभते पुत्रं नानागुणगणालयम्। इति।

तन्त्रराजे—

वृत्तद्वयावृतं चाष्टपत्रमब्जं महीपुरम्। विधाय विलिखेन्मध्ये हंसहृद्वनशक्तिकम् ।। १।।
कूटं स्वरान् केसरेषु वर्गान् पत्रेषु चालिखेत्। पञ्चपञ्चाक्षरोपेतान् दावाम्बु दिग्विदिक्षु च।। २।।
स्वरेष्वपुनरुक्तानि पञ्चान्यानि तु पञ्च वै। सव्यञ्जनाव्यञ्जनत्वभेदतोऽभूद् द्विरन्वयः।। ३।।
सवाताग्निधरास्वेन[2] शक्तिस्तत्पञ्चकं भवेत्।

हंसो हकारः, हृत् सकारः, वनमौकारः, शक्तिर्विसर्गः, दावष्ठकारः, अम्बु वकारः। वातोऽकारः, अग्निरिकारः, धरा उकारः, खमनुस्वारः, शक्तिर्विसर्गः।। अथैतद्यन्त्ररचनाप्रकारः— तत्र प्राग्वदेव मध्यस्थकूटादिसकलवर्णान् विलिख्य षष्ठसप्तमाष्टमदलेषु षष्ठे—'यरलवश' सप्तमे—'षसहळक्ष' इति वर्गद्वयं विलिख्याष्टमे—'अइउअंअः' इति पञ्चाक्षराणि विलिख्य चतुरस्रेऽपि प्राग्वदेव वकारठकारौ विलिखेत् तथा—

एतद्यन्त्रस्य मध्यस्थं नाम कृत्वा प्रयोजयेत्। प्रातर्मूर्ध्नि स्मरेदिन्दुबिम्बस्थं सर्वसम्पदम् ।। १।।
अभिषेकात् धारणाच्च पूजनाल्लोहकल्पिते। स्थापनाद् गृहदेशादौ यन्त्रं सर्वार्थसिद्धिदम्।। २।।
एतद्यन्त्रस्य मध्यस्था देवताः सकला अपि। सन्निधिं [3]फलदानं च साधकानां वितन्वते।।३।।इति।

अत्र पूर्वोक्तश्लोकस्याप्ययमर्थः— उषःकाले ब्रह्मरन्ध्रस्थसहस्रदलकमलमध्यगतचन्द्रमण्डलमध्ये प्रोक्तयन्त्रं स्वाभीष्टसाध्यनामगर्भं भावयेत्, तेन तत्फलप्राप्तिर्भवति। अथवा भूमावेवैतद्यन्त्रं सिन्दूरादिनोत्कीर्य तत्र प्रागुक्तविधिना कुम्भं संस्थाप्य वर्णौषधिक्वाथजलेनापूर्य, तत्र देवीं सम्पूज्याभिषेकतः स्वाभिमतफलप्राप्तिर्भवति। यद्वा भूर्जादावालिख्य,

१. 'धीदार्यकीर्ति' ग. पाठः। २. 'स्वदे' क. पाठः। ३. 'जल' क. पाठः।

यथाविधि धारणात् स्वर्णादिकल्पिते यन्त्रे प्रागुक्तविकल्पना देव्याः पूजनात्ताम्रादौ कल्पितस्य गृहादौ यथाविधि भूम्यन्तःस्थापनाच्च स्वाभिमतफलसिद्धिर्भवति।। द्वितीयश्लोकस्यायमर्थः—तत्र सकलदेवताचक्रप्रतिष्ठासु सुवर्णरजतताम्रान्यतमेन कृते पट्टे यन्त्रमुत्कीर्य, मध्ये सम्बुद्ध्यन्ततत्तद्देवतानामपूर्वकं सन्निधेहीति विलिख्य प्राणप्रतिष्ठां विधाय, तत्र देवीं समभ्यर्च्य मातृकया लक्षमात्रं तद्यन्त्रं स्पृशञ्जपित्वा, तत्त्ववित् पूर्णात्मा सुपूजितं तच्चक्रं प्रथमं भूम्यन्तः संस्थाप्य तदुपरि निजवाञ्छितदेवतामूर्तिं यथाविधि स्थापयेत्। एवं कृते मूर्तौ तस्या देवतायाः सान्निध्यं सविशेषं भवति, स्थापयितुश्च सकलमभीप्सितं फलं भवतीति। अथैतन्मातृकाया ये ये न्यासभेदा वर्तन्ते तेषामपि पूजोपासनादिकं सर्वं प्रोक्तविधिनैव विधेयम्।। उत्तरतन्त्रे—

न्यसेद् बिन्द्वन्तिकामेनां संहारेण विलोमतः। पूर्वोक्ता एव मुन्याद्याः षडङ्गं च तथा भवेत्।। १।।
सञ्चिन्त्य सृष्टिमार्गेण विन्यसेत् सर्गसंयुताम्। बिन्दुसर्गस्थितां स्थित्यां डादिठार्णान्तिकां न्यसेत्।।२।।?
पूर्वोक्ता एव मुन्याद्याः षडङ्गं च तथा भवेत्। इति।

श्रीकुलार्णवे—

यतिवैखानसैः कार्यः संहारान्तः कुलेश्वरि। न्यासो गृहस्थैः स्थित्यन्तः सृष्ट्यन्तो वर्णिनां भवेत्।।१।।

इति। उत्तरतन्त्रे—

प्रणवोत्थकलायुक्तां मातृकां विन्यसेत् ततः। वर्णादिका नमोन्तास्ता न्यस्तव्या ध्रुवसंयुताः।। १।।
ऋषिः प्रजापतिः प्रोक्तो गायत्रं[1] छन्द ईरितम्। सरस्वती कलारूपा देवता परिकीर्तिता।। २।।
ह्रस्वदीर्घस्वरद्वन्द्वगतैरङ्गं ध्रुवैर्भवेत्। केशवादिह्रदायुक्तां न्यसेत्तां कामपूर्वकाम्[2]।। ३।।
यादीन् धातुयुतान् न्यसेत् प्राणशक्त्यात्ममूर्तिभिः। साध्यनारायण ऋषिर्गायत्रं छन्द ईरितम्।।४।।
लक्ष्मीनारायणो देवि देवता परिकीर्तिता। षड्दीर्घयुक्तकामान्तैः प्राग्वद्वर्गैः षडङ्गकम्।। ५।।
न्यसेत् तार्तीयसंयुक्तां ह्रदन्तां रुद्रपूर्वकाम्[3]। यादीन् धातुसमायुक्तान् प्राणशक्त्यात्मभिः सह।।६।।
मुनिस्तु दक्षिणामूर्तिश्छन्दो गायत्रमुच्यते। अर्धनारीश्वरो देवि देवता परिकीर्तिता।। ७।।
षड्दीर्घयुक्ततार्तीयप्रतिवर्गैः षडङ्गकम्। मायाद्यां मातृकां देवि न्यसेत् साधकसत्तमः।। ८।।
मुनिः शक्तिः समाख्यातो गायत्रं छन्द उच्यते। देवता जगतामादिर्मातृका भुवनेश्वरी।। ९।।
षड्दीर्घयुक्तमायान्तैर्वर्गैः प्राग्वत् षडङ्गकम्। श्रीयुतां मातृकां न्यसेद्विधिवत् परमेश्वरि।। १०।।
मुनिर्भृगुः समाख्यातो गायत्रं छन्द ईरितम्। षड्दीर्घयुक्तश्रीबीजयुतैर्वर्गैः षडङ्गकम्।। ११।।
कामबीजयुतां न्यसेन्मातृकां कमलेक्षणे। सम्मोहनो मुनिश्छन्दो गायत्री देवता प्रिये।। १२।।
सम्मोहिनी समाख्याता देवता विश्वमोहिनी। दीर्घयुक्तेन कामेन युतैर्वर्गैः षडङ्गकम्।। १३।।
मायालक्ष्मीस्मरारूढां मातृकां विन्यसेत् प्रिये। प्रपञ्चयागकर्मार्थं वक्ष्यते भुक्तिमुक्तिदम्।। १४।।
पञ्चमन्त्रमयं सर्वसिद्धिसम्पत्प्रदायकम्। महागणपतिं त्वादौ सऋषिच्छन्ददैवतम्।। १५।।
साङ्गन्यासं सावरणं ध्यात्वा तन्मन्त्रमष्टधा। जपेद् गाणपतं[1] बीजं सऋषिच्छन्ददैवतम्।। १६।।

---

१ 'त्री' ग. पाठः। २ 'विंकाम्' ग. पाठः। ३ 'विंकाम्' ग. पाठः।

चत्वारिंशच्च चत्वारि तथैव प्रजपेत् ततः। सकृद्गणपतं मन्त्रं जप्त्वा वैदिकमप्यथ॥ १७॥
मालामन्त्रं चतुर्वारं सन्नक्ष्यादिं जपेत्ततः। मातृकां विन्यसेद् प्राग्वद्दृष्यादिसहितां त्रिधा॥ १८॥
स्वरादिसप्तवर्गैस्तु ग्रहान् सप्त प्रविन्यसेत्। मुखे बाह्वोः पादयोश्च जठरे हृदये क्रमात्॥ १९॥
तारो माया च हंसश्च सोऽहं स्वाहेति वै मनुः। प्रपञ्चयागमन्त्रोऽयमष्टार्णः समुदीरितः॥ २०॥
प्रपञ्चयागमन्त्रस्य मुनिर्ब्रह्मा समीरितः। परमाद्या समाख्याता गायत्री छन्द ईरितम्[१]॥ २१॥
महः परं समाख्यातं देवता चिन्मयं प्रिये। त्रय्यन्ते बोधितं नित्यं सर्वव्यापि निरञ्जनम्॥ २२॥
विलोमगैः पञ्चमन्त्रैः सार्धं हरिहराक्षरैः। प्राग्वद् वर्गावसानस्थैस्तारमायादिकैः क्रमात्॥ २३॥
षडङ्गानि प्रकुर्वीत जातियुक्तानि मन्त्रवित्। वेदादिमाययोरन्ते दत्त्वादीन् क्रमतस्ततः॥ २४॥
मन्त्रशेषं समुच्चार्य होमं कुर्यात् समाहितः। प्रपञ्चयागनामायं होमः सर्वसमृद्धिदः॥ २५॥
अकारादिस्तु शान्तान्तः प्रथमोऽत्र मनुर्मतः। शान्तान्तं च हकाराद्यो द्वितीयो मन्त्र इष्यते॥२६॥
तृतीयोऽपि समाख्यातः सकाराकारबिन्दुभिः। सकाराकारसर्गैश्चेन्द्रियषट्कात्मको भवेत्॥ २७॥
चतुर्थोऽपि च सोकारहकाराकारबिन्दुभिः। बृहत्प्रयोगात् ब्रह्मात्र मुनित्वेन निगद्यते ॥ २८॥
श्रेष्ठार्थवाचकं प्रोक्तं परमाख्यं पदं बुधैः। गायन्तं त्रायते यस्माद् गायत्रं छन्द उच्यते[२]॥२९॥
यस्मादतिशयः क्वापि तेजसां नैव विद्यते। परंपदेन तत्प्रोक्तं परं ज्योतिश्च देवता॥ ३०॥
स्वर्गार्थः खेतिशब्दोऽयमात्मार्थेऽपि तथा भवेत्। हा हानार्थोऽपि गत्यर्थः सर्वतो भावतस्ततः॥३१॥
स्वर्गात्मनो स्वरूपं या व्याप्ततेजः परम्परा। स्वाहाकारेण चाख्याता हुतिर्यस्यां समीरिता॥३२॥
तेजोरूपं तु यद्व्याप्तं सशब्देन तदुच्यते। अहंपदेन चात्मापि द्वयोरैक्यं ततो भवेत्॥ ३३॥
सोऽहं मन्त्रे विधानेन हकारेऽहं वदेत् ततः। स इत्यनेन चिद्रूपं सर्वार्थस्यावभासकम्॥ ३४॥
सत्यं व्याप्तं च निर्लेपं हंसमन्त्रं वदेत् ततः। चराचरस्य जगतः सारभूतं गुणात्मकम्॥ ३५॥
जनकं सर्वलोकानां मायाबीजेन चोच्यते। अकाराद्यैर्मकारान्तैस्त्रिभिर्बीजैर्गुणात्मकैः॥ ३६॥
भावसत्यं तु यत्कुर्यात् प्रणवार्थः स उच्यते। ह्रद्धातुर्हरणार्थः स्यादनिष्टं मन्त्रिणस्तु यत्॥३७॥
संहरेत् तन्महः प्रोक्तं वर्णैर्हरिहरैर्ध्रुवम् । प्रपञ्चयागमन्त्रोऽयं प्रपञ्चस्यादिकारणम्॥ ३८॥
प्रपञ्चयाग आख्यातो न्यासो येन तु यः कृतः। अङ्गार्णैर्ज्वलने द्रव्यैर्होमोऽत्र द्विविधो मतः॥३९॥
अकारादिषु संयोज्य यथापूर्वं विधानवित्। स्थानेषु मातृकोक्तेषु न्यसेदष्टाक्षरेण तु॥ ४०॥
साधकेन्द्रः सुशुद्धात्मा पञ्चाशद्वारमन्वहम्। वर्णाः सर्वे तु विख्याता बाह्यज्ञानेन्द्रियात्मकाः॥४१॥
प्रत्येकेन्द्रियसङ्ग्राह्यं जगद् व्याप्तमतस्तु तैः। परात्परतरं लोके ज्योतिरैशं तु यद्भवेत्॥ ४२॥
तस्मिन् ब्रह्मानले होमो ब्रह्मज्ञैर्मन्त्रिभिस्तु यः। कृतो ज्योतिर्मयैः सम्यङ्मनुभिस्तं प्रचक्षते।॥४३॥
ब्रह्मात्मकहविर्द्रव्यैस्तद्विदे ब्रह्मणेऽर्पणम्। वर्णानां भेदतो भिन्नमित्थं शिथिलतां गतम्॥ ४४॥

---

१. 'गणपते:' ख. पाठः। २.'उत्तमम्' क. पाठः। 'उच्यते' ख. पाठः। ३. 'उत्परः' क. पाठः।

शरीरं चर्मसन्नद्धं शोणितामित[1]सम्भृतम्। मेदोमज्जास्थिसंयुक्तं गत्वरत्वेन सम्मतम्॥ ४५॥
ब्रह्मानले महास्वच्छे सर्वव्याप्ते निरञ्जने। यो जुहोति कृती मन्त्री शुद्धात्मा महसां निधिः॥ ४६॥
अशेषं मन्त्रसञ्जाप्ये ध्याने पूजनकर्मणि। अधिकारी स एव स्यान्नेतरः फलभाजनम्॥ ४७॥
केवलोऽपि च बिन्द्वन्तः कलादिकेशवादिकः। श्रीकण्ठाद्यैश्च संयुक्तो मायाबीजसमन्वितः॥ ४८॥
लक्ष्म्याद्यः कामबीजाद्यो बीजत्रययुतोऽपि च। प्रपञ्चयागसंयुक्ताः दश न्यासाः समीरिताः॥ ४९॥
वाञ्छितार्थप्रदाः सर्वे सर्वमन्त्रेषु कल्पिताः। एतेषु श्रेष्ठ आख्यातः प्रपञ्चाह्वययागकः॥ ५०॥
ज्ञानदः पुष्टिदश्चाथ सर्वसम्पत्करस्तथा। विशेषतो ग्रहक्षुद्रप्रपञ्चाज्ञाननाशकृत् ॥ ५१॥ इति।
प्रपञ्चयागमात्रेण यथा होमो विधीयते। यद्यद्द्रव्यैस्तथा तानि यदा यल्लभ्यते बुधैः॥ ५२॥
एतत्सर्वं विधानेन कथयामि यथातथम्। उक्तेनैव विधानेन गाणपत्यावसानकम् ॥ ५३॥
आज्येन जुहुयान्मन्त्री तद्वदेकाहुतिं हुनेत्। प्रपञ्चयागमन्त्रेण घृतेनैव ततः परम्॥ ५४॥
वटोदुम्बरसम्भूताः पर्प्यट्याः[2] पिप्पलस्य च। समिधस्तिलसिद्धार्थहविराज्यानि च क्रमात्॥ ५५॥
पर्पटी प्लक्षः।
एतद्द्रव्याष्टकं प्रोक्तं हुनेदेतेन मन्त्रवित्। दशायुतं विधानेन तदर्द्धमथवा तु यः॥ ५६॥
यथाभिलषितानत्र भोगान् भुक्त्वा सुखं हि सः। देहान्ते मुक्तिमाप्नोति मुनिभिः प्रार्थितां ततः॥५७॥
चौरशत्रुग्रहव्याधिसर्पराक्षसदोषनुत् । चतुःशतं तदर्द्धं वा तदर्द्धं वा हुतं मतम्॥ ५८॥
तत्तद्दोषानुसारेण होमसंख्यां प्रवर्धयेत्। रविसंख्यसहस्राणि हुनेद् द्रव्याष्टकेन यः॥ ५९॥
एतद्द्विगुणतश्चाथ चतुर्गुणत एव वा। भूतावेशग्रहावेशजूर्त्यादीन् स विनाशयेत्॥ ६०॥
शास्त्रोक्तक्रमभङ्गेन जपपूजादिकृत्तुः यः। स्मृतिभ्रंशो भवेत्तस्य होमं द्रव्याष्टकेन सः॥ ६१॥
सहस्रसंख्यया कुर्यात् स्वस्थो भवति तत्क्षणात्। प्रत्येकं द्विसहस्रं यो हुनेद्द्रव्याष्टकेन तु॥६२॥
अपस्मारं विस्मृतिं च शापदोषं स नाशयेत्। द्रव्याष्टकं त्रिमध्वक्तं लक्षमानं हुनेत् तु यः॥ ६३॥
प्रादुर्भूतेन महता तस्यैश्वर्येण तत्क्षणात्। देवेन्द्रस्य महालक्ष्मीः स्थिरा तुच्छतरा भवेत्॥ ६४॥
लक्षं लक्षार्द्धकं वाथ मधुरत्रयलोलितम्। द्रव्याष्टकं हुनेद्यो वै वत्सरत्रयमध्यतः॥ ६५॥
त्रैलोक्यं सकलं तस्य वशे तिष्ठति नान्यथा। वश्यादिसाधन[3] प्रोक्तं हुनेद् द्रव्याष्टकेन यत्॥६६॥
ह्रासवृद्ध्यादिकं होमे जानीयात् कार्यगौरवात्। शुद्धै[4]स्तिलैस्तु यो लक्षं होमं कुर्याद्यथाविधि॥६७॥
महापापानि तस्याशु प्रलयं यान्ति नान्यथा। लक्षं कमलहोमेन महालक्ष्मीः प्रजायते॥ ६८॥
हविषा पुष्टिदो होमो यवहोमो यशस्करः। मालतीपुष्पहोमोऽपि सर्ववश्यप्रदो भवेत्॥ ६९॥
सामुद्रलवणं हुत्वा तथा वश्यं प्रसाधयेत्। अथ शालिसमुद्भूतांस्तण्डुलान् सुष्ठु चूर्णयेत्॥७०॥
मधुरत्रयसंयुक्ततच्चूर्णेनैव साधकः। साध्यप्रतिकृतिं कृत्वा सम्यक् सम्पूज्य तां स्पृशन्॥ ७१॥

१. 'मित्त' क.ख. पाठः। २. 'पर्कट्याः' क. पाठः। ३. 'धने' ग पाठः। ४. 'सिद्धैः' क. पाठः। 'सिद्धे; ख. पाठः।

प्राणस्थापनमन्त्रं तु जपेत्साष्टशतं तु सत्। विभज्य जुहुयान्मन्त्री नान्यासक्तमना निशि।। ७२।।
सप्तरात्रं प्रकुर्वाणो नरं वा स्त्रियमेव वा। वशीकरोति झटिति नात्र कार्या विचारणा।। ७३।।
सामुद्रलवणस्यापि पुत्तल्याः फलमीदृशम्। वर्णौषधिविपक्वेन पञ्चगव्येन पूरिते ।। ७४।।
चुल्ल्यां संस्थाप्य सोऽधस्ताद्वह्निं कुम्भे प्रदीपयेत्। प्रादुर्भूते पुनस्तस्मिन् घटाग्नौ जुहुयाद् घृतम्।।७५।।
अष्टोत्तरशतं मन्त्री भसितं पतितं च यत्। तावत्संख्यं च सञ्जप्य गृह्णीयात् सर्वसिद्धिदम्।।७६।।
भक्षणाद् गात्रलेपाच्च तिलकक्रियया तथा। मस्तके धारणात् सद्यः सर्वे नश्यन्त्युपद्रवाः।।७७।।
भूतप्रेतपिशाचादिविषरोगादिनाशनम् । सर्ववश्यकरं पुंसां श्रीसौभाग्यजयप्रदम् ।। ७८।।
सहस्रसंख्यको होमो तदानीं गुरवे बुधः। पलं पलार्धकं वापि दद्याद्धेम्नो वरस्य च।। ७९।।
कल्पवृक्षाद्यथा देवा लभन्ते वाञ्छितं फलम्। प्रपञ्चयागतोऽप्येवं साधकोऽभीष्टमश्नुते।।८०।।इति।

अथैवं मातृकाविद्योपासकानामन्यविद्योपासकानां च प्रणाग्निहोत्रविधिरुक्तः कालीमते, तथा—

प्राणाग्निहोत्रं वक्ष्यामि सर्वसिद्धिप्रदायकम्। हितार्थं सर्वलोकस्य मन्त्रिणां च विशेषतः।। १।।
कृतपद्मासनः पूर्वममलाङ्गः शुभासने। उपविष्टः प्रसन्नात्मा प्राङ्मुखः स्थिरमानसः।। २।।
भुवनेशीहकारेण सत्त्वरूपेण लाञ्छितम्। मध्यमस्य तदीयेन वामाक्षिरजसा वृतम्।। ३।।
रेफेण तमसा चैव वेष्टितं च त्रिकोणकम्। पूर्वराक्षसवाय्वस्रि मूलाधारं विचिन्तयेत्।। ४।।
मध्ये प्राच्यां प्रतीच्यां च कौबेर्य्यां दक्षिणे तथा। तस्मिन्नेव समे पञ्च स्मरेत् कुण्डानि मन्त्रवित्।।५।।
सर्वदा ज्वलदग्नीनि स्वीयकार्यप्रसिद्धये। आवसथ्यं च सभ्यं च तथा चाहवनीयकम्।। ६।।
अन्वाहार्यं पुनः प्रोक्तं गार्हपत्यं भवेदिति। मध्यादिक्रमतस्त्वेवं नामतोऽमूनि चैव हि।। ७।।
प्रभाज्वालानिदानाद्धि ज्ञानरूपान्निरञ्जनात्। मूलप्रकृतिरूपाच्च कल्पादित्यान्निरञ्जनात्[1] ।। ८।।
द्वादशान्तस्थितात् सर्ववर्णहेतुः परात्मनः। निर्गतां मातृकां मन्त्री सुधानिःष्यन्दरूपिणीम् ।। ९।।
प्रतिलोमक्रमाद्भिन्नमेकैकाक्षरतो धिया[2]। होमयेत् तेषु कुण्डेषु ज्वलदग्निषु देशिकः ।।१०।।
स्युस्ते मारकप्रख्याः क्षादयः पञ्चवर्णकाः। पञ्च यान्ता भवन्त्येव गोमेदाभाश्च शादिकाः।। ११।।
नीलवर्णाश्च माद्याः स्युर्नाद्या विद्रुमसन्निभाः। णादयो वज्रसङ्काशास्तावन्तः परिकीर्तिताः।। १२।।
पुष्परागत्विषश्चान्ताः कान्ताः वैडूर्यवर्णकाः। अष्ट स्वरास्तु मुक्ताभा माणिक्याभास्ततः परम्।। १३।।
नवरत्नमया ह्येते नववर्गाः प्रकीर्तिताः। केतुर्विधुन्तुदो मन्दो वाक्पतिर्बुध एव च।। १४।।
भार्गवो भौमचन्द्रौ च भास्करो नव कीर्तिताः। नववर्गाधिपा ह्येते रत्नानामधिदेवताः।। १५।।
होममेवं विधानेन कुर्युर्येऽनुदिनं बुधाः। पञ्चाशत्संख्यया ते स्युः सम्मताः भुवनत्रये।। १६।।
स्वर्णवस्त्रादिकैराढ्या भाग्यवन्तः शुभोदयाः। ये वर्णा यत्र हूयन्ते तानहं वच्मि साम्प्रतम्।।१७।।
संवर्तकं च तत्षष्ठं पञ्चवर्गान्तिकास्तथा। षोडशस्वरझिण्टीशावर्घीशश्च ततः परम्।। १८।।

१. 'निरन्तरात्' क. पाठः। २. 'पि वा' ग. पाठः।

दशैतान् विधिवत् कुण्ड आवसथ्याह्वये हुनेत्। धरा बालीं[1] तुरीयश्च वर्गाणां च तुरीयकान्।।१९।।
मस्तकं च हराख्यं चाप्यमरेशं दशाप्यमून्। सभ्याख्ये जुहुयात् कुण्डे मन्त्रवित्तदनन्तरम्।। २०।।
नकुशीलं च तत्षष्ठं वर्गाणां च तृतीयकान्। सद्यान्तस्थाणुके चापि वामनेत्रं वशी क्रमात्।। २१।।
सञ्जुहोतु यथान्यासं कुण्ड आहवनीयके। यसप्तमद्वितीयौ च वर्गाणां च द्वितीयकान्।। २२।।
भौतिकान्ततिथीशाख्यौ सूक्ष्मसंज्ञमनन्तरम्। अन्वाहार्याभिधे कुण्डे वर्णानेतान् हुनेत् क्रमात्।।२३।।
वायुषष्ठं च वायुं च वर्गाद्यान् पञ्च पादिकान्[2]। अधरं च क्रियां चापि नारायणमिमान् दश।।२४।।
गार्हपत्याभिधे कुण्डे हुनेन्मन्त्री समाहितः। वर्णहोमः क्रमेणैवं यथावत् परिकीर्तितः।। २५।।
आकाशेन समं सर्वं शब्दजातं तु मन्त्रवित्। आवसथ्याभिधे कुण्डे जुहुयात् तदनन्तरम्।।२६।।
वायुना तद्गुणं पूर्वे वह्निना पश्चिमे मतः। रूपं कुण्डे हुनेन्मन्त्री पयसा रससञ्चयम्।। २७।।
उत्तराख्ये हुनेत् कुण्डे दक्षिणे तदनन्तरम्। धरया सर्वगन्धं च मन्त्रविज्जुहुयाद् वशी।। २८।।
प्रलयानलसङ्काशज्वलदग्निष्वहर्निशम्। होमं कुर्वीत कुण्डेषु मातृकावर्णसंयुतम् ।। २९।।
नित्यशुद्धपरानन्दचिद्रूपात्मा प्रजायते। ध्रुवमायादिकं होममजपान्तं तु पूर्ववत् ।। ३०।।
पञ्चाशत्संख्यया कृत्वा न्यस्य तावद्यथाविधि। जीवन्मुक्तो भवेन्मन्त्री चिरञ्जीवी च जायते।।३१।।
तेजसा सूर्यकल्पोऽसौ कर्ता हर्ता च शम्भुवत्। इति।

अथास्यार्थः— तत्र बद्धपद्मासनः प्राङ्मुखो मृद्वासने समुपविश्य, प्रागुक्तलक्षणे स्वमूलाधारे भुवनेश्वरीबीजमन्त्रस्य सत्त्वगुणात्मकेन हकारेणाक्रान्तमध्यप्रदेशं तस्य रजोगुणात्मकेन वामाक्ष्णा ईकारेणावृत्तं तमोगुणात्मकेन तदीयरेफेण वेष्टितं त्रिकोणमग्निमण्डलं पूर्वनिर्ऋतिवायव्यगतान्यस्त्राणि कोणानि यस्य तादृशं मूलाधारं विचिन्त्य, तस्मिन्मध्ये पूर्वपश्चिमोत्तरदक्षेष्वावसथ्यसभ्याहवनीयान्वाहार्यगार्हपत्याख्यानि पञ्च[3] कुण्डानि ज्वलदग्निशिखासमाकुलानि वाञ्छितार्थपदानि सञ्चिन्त्य, सर्वतेजःप्रकाशप्रतिबिम्बहेतुभूता—नवच्छिन्नचैतन्यात्मकान् सकलवर्णकारण—शब्दब्रह्मात्मकमूलप्रकृत्यात्मनो द्वादशान्तस्थितान् कल्पान्ताग्निशिखा— स्फुरत्कुहरकेषु कुण्डेषु वक्ष्यमाणक्रमेण वर्णान् मनसा जुहुयात्। तत्र वर्णानां रत्नवर्णतामाह— स्युरिति। रत्नानामधिदैवतत्वेन ग्रहानुपदिशति—केतुरित्यादि। अमृतमयत्वेन ध्यातानां रत्नसवर्णवर्णानां होममाह— होममिति। पञ्चकुण्डेषु पञ्चाशद्वर्णानामेकैकस्मिन् कुण्डे होतव्यान् वर्णान् दर्शयति—संवर्तकमित्यादिभिः। संवर्तकः क्षकारस्तस्य षष्ठः प्रतिलोमेन शकारः पञ्चवर्गान्तिकाः विलोमेन मणनञङाः, षोडशस्वरः अः, झिण्टीश एकारः, अर्घीशो हकारः, एतान् दशवर्णानावसथ्याख्यकुण्डे जुहुयात्। धरा लकारः वाली[4] तुरीयो वकारः, वर्गतुरीयका विलोमेन भधढझघाः, मस्तकं अं, हरः लृकारः[5], अमरेश उकारः एतान् दश वर्णान् सभ्ये जुहुयात्। नकुलीशो हकारस्तत्षष्ठो लकारः, वर्गाणां तृतीयकाः बदडजगाः, सद्यान्त औकारः, स्थाणुको लृस्वरः, वामनेत्रमीकारः, एतान् दश वर्णान् आहवनीये जुहुयात्। (यसप्तमद्वितीयौ सकाररकारौ वर्गद्वितीयाः फथठछखाः भौतिकान्त ओकारः तिथीशः अः सूक्ष्म इकारः, एतान् दश वर्णान् अन्वाहार्ये जुहुयात्)। वायुषष्ठः

१. 'वाजी' ग. पाठः। २. 'या' क. पाठः। ३. 'रत्नासमान' ग. पाठः। ४. 'बाजी' ग. पाठः। ५. लकारः' क. पाठः।

षकारः वायुर्यकारः, वर्गाद्याः पतटचकाः अधर ऐंकारः, क्रिया ऋस्वरः, नारायण आकारः, एतान् दश वर्णान् गार्हपत्ये जुहुयात्। इति होमक्रिया। होमकारस्तु "ॐह्रींश्रींहंसः सोहं स्वाहा" इत्यादिक्रमेणैकैकस्मिन् कुण्डे प्रत्येकमक्षरं पुनः पुनर्जुहुयात्। तत्प्रकारस्तु—आवसथ्ये क्षकारं (सभ्ये ळकार) आहवनीये हकारमन्वाहार्ये सकारं गार्हपत्ये षकारं, पुनरेवं क्रमेण शकाराद्यकारान्तान् वर्णान् पञ्च पञ्च जुहुयात्। अथात्र "अः इति ब्रह्मे"ति श्रुतेः परिशिष्टोऽकारः सर्वथात्र ब्रह्मरूपेण¹ ध्यातव्यः॥

अथैवं कुर्वतां साधकानां भोजनकाले कर्तव्यप्राणाग्निहोत्रमाह— उत्तरतन्त्रे —

प्रत्यहं विधिनानेन भोजनं कुरुते यदि। गार्हपत्यादिकुण्डानि तदा प्राणादिवायवः ॥१॥
उद्धरेत् कुण्डनामानि सप्तमीसहितानि तु। प्राणादीनां च नामानि सप्तम्यन्तं समुद्धरेत्॥ २॥
हिरण्यानन्तरं वर्णा गगनानन्तरं तथा। रक्तान्ते कृष्णशब्दान्ते सुप्रभान्ते तथा भवेत्॥ ३॥
शुचयः पश्चाभाष्य पावका इति चोच्चरेत्। अग्निं विहृत्य शब्दान्त आत्मानं च ततो वदेत्।४॥
उपचर्य्य पदं पश्चादूर्ध्वाधस्तिर्यगुद्धरेत् । पुनरूर्ध्वपदं चाधस्तिर्यगूर्ध्वं समं वदेत् ॥५॥
गच्छन्तु वह्निजायान्तान् पञ्च मन्त्रान् समुद्धरेत्। अहं वैश्वापदं पश्चान्नरो भूत्वा पदं वदेत् ॥ ६॥
जुहोम्यन्नं पदं पश्चाच्चतुर्विधपदं चरेत्। पचाम्येवं पदं ब्रूयाद् विधानेन पदं वदेत्॥ ७॥
स्वाहान्तं सर्वमुक्त्वा तु तृप्तिपर्यन्तमादरात्। तूर्ष्णीं होमं विधायादौ संस्कृतान्नेन मन्त्रवित्।८॥
अमृतेत्यादिमन्त्रेण पीत्वा तु चुलुकोदकम्। आचम्य विधिना पश्चाच्छुद्धाचमनमाचरेत्॥ ९॥
मूलाधारं समारभ्य द्वादशान्तावधि स्मरेत्। जीवात्मानं जगद्व्याप्तं नित्यमेवमनन्यगम्॥ १०॥
प्रकृतिस्थं शुभं शान्तमाद्यन्तरहितं परम्। हवनीयेन शुद्धेन हुतेनापि सुतर्पितम् ॥११॥
एवं गलत्सुधानं च पञ्चाशद्वर्णसेचितम्। भुक्त्वा हविर्हुतं मन्त्री स ज्वलत्पञ्चवह्निकः ॥१२॥
प्रातः सायं च कुर्वाणो मन्त्री प्राणाग्निहोत्रकम्। गर्भस्थितिभवं क्लेशं न विन्दति कदाचन।१३॥

अस्यार्थः— तत्रादौ प्राणादिपञ्चमन्त्रा उद्ध्रियन्ते, गार्हपत्यादिभिः। अयमर्थः—गार्हपत्ये प्राणे हिरण्यवर्णाः शुचयः पावका अग्निं विहृत्यात्मानमुपचर्य्योर्ध्वं गच्छन्तु स्वाहा। अन्वाहार्येऽपाने गगनवर्णाः शुचयः पावका अग्निं विहृत्यात्मानमुपचर्य्याधो गच्छन्तु स्वाहा। आहवनीये व्याने रक्तवर्णाः शुचयः पावका अग्निं विहृत्यात्मानमुपचर्य्य तिर्यगच्छन्तु स्वाहा। सभ्य उदाने कृष्णवर्णाः शुचयः पावका अग्निं विहृत्यात्मानमुपचर्य्योर्ध्वे गच्छन्तु स्वाहा। आवसथ्ये समाने सुप्रभावर्णाः शुचयः पावका अग्निं विहृत्यात्मानमुपचर्याधस्तिर्यगगच्छन्तु स्वाहा। एभिर्मन्त्रैः पञ्चाहुतीः पञ्चकुण्डेषु हुत्वा गार्हपत्यान्वाहार्य्याहवनीयसभ्यावसथ्येषु प्राणापानव्यानोदानसमानेषु हिरण्यगगनरक्तकृष्णसुप्रभावर्णाः शुचयः पावका अग्निं विहृत्यात्मानमुपचर्य्य अहं वैश्वानरो भूत्वा जुहोम्यन्नं चतुर्विधं पचाम्येवं विधानेनोर्ध्वाधस्तिर्यक् समं गच्छन्तु स्वाहेति गार्हपत्यान्वाहार्याहवनीयसभ्यावसथ्यानां यमशशिवरुणेन्द्रमध्यमानि स्थितानि सञ्चिन्त्य, पूर्ववदानेभ्योऽधिकपरिमाणेनावदानेन हुत्वा पश्चात् तृप्तिपर्यन्तं होमधिया भुक्त्वा 'अमृतापिधानमसि' मन्त्रेण चुलुकोदकं प्राश्य शुद्धाचमनं कुर्यात्॥ एवं कुर्वतः फलमाह—प्रातः सायमित्यादि। प्रपञ्चबिन्दुविनिर्गतामृतधारया समासिक्तमकार-विनिर्गतचन्द्रमण्डलद्वयरूपेण विसर्गे ध्यात्वा ताभ्यां प्रथमतरग्नीन्दुतेजोविलसिताभ्याममृतपूर्णसकारविनिर्गतामृतधारया समासिक्तबिन्दुभ्यां नाडीमार्गेणात्मनः सकलशरीरमापूर्यावस्थिताभ्यां रोगाः सर्वे बाधिता भवन्तीति॥ अथ कादिमते

१. 'सुत्रेण' क. पाठः।

प्राणाग्निहोत्रविधिः। तत्र श्रीतन्त्रराजे—

ततः सूक्ष्मैः पराख्यैश्च होमैः सिद्धिं शृणु प्रिये। स्वमूलाधारे वह्नौ कुण्डलिन्यग्रगामिनि॥ १॥
वाच्यवाचकरूपं तु प्रपञ्चं जुहुयात्तथा। येनावयोः समो देवि जायते हवनेन च॥ २॥
तद्विधानं वद प्राज्ञ शम्भो सम्यङ्ममाधुना। आधारे वह्निसंस्थानं कुण्डलिन्याः स्थितिं ततः॥ ३॥
तद्रूपं तत्क्रियां सर्वं वद मे विशदं प्रभो। शृणु वक्ष्ये विधानं ते सम्यग्विस्तरतोऽधुना॥ ४॥
प्राणाग्निहोत्रविद्येति यत् त्रय्यां श्रूयते परम्। यज्ज्ञात्वा वनितागर्भं न प्रयाति नरो ध्रुवम्॥ ५॥
यद्व्ययायासरहितमनन्यापेक्षनिर्वहम्। यन्मनःक्लेशविश्रान्तेः स्थानं निःशेषकल्मषम्॥ ६॥
सुखास्पदं स्वगं विश्वमयं चिद्वेद्यवेदनात्। अत्रोक्तशेषमखिलं षट्त्रिंशे पटले स्फुटम्॥ ७॥
प्रदर्श्यते ततस्त्वत्र वर्णयामि च किञ्चन। नित्यानित्योदिते मूलाधारमध्येऽस्ति पावकः॥ ८॥
सर्वेषां प्राणिनां तद्वद् हृदये च प्रभाकरः। मूर्धनि ब्रह्मरन्ध्राधश्चन्द्रमाश्च व्यवस्थितः॥ ९॥
तत्त्रयात्मकमेव स्यादाद्यानित्यात्रिखण्डकम्। तेषां त्रयाणामैक्यं तु मनसा भावयेत्तथा॥ १०॥
गमागमाभ्यां तेजोभिस्तेषामन्योन्यजैः शिवे। तथा समिद्धं तत्तेजस्त्रयं बुद्ध्वाथ तन्मयम्॥ ११॥
चित्तं विकल्पविधुरं भावयेदद्भुतं हुतम्[१]। तेषां त्रयाणां वर्णानां प्रागुक्तानां क्रमेण वै॥ १२॥
द्वाभ्यामन्यतमं कृत्वा पुटितं जुहुयाच्च तैः। पुटितान् भानुहृद्वर्णैः स्वरांस्तारेण हुंकृतैः॥ १३॥
कुण्डलीमुखमार्गाग्नौ जुहुयान्निश्चलाशयः। वह्निभानुपुटान्तःस्थैश्चन्द्रैस्तद्वद्धुनेत् क्रमात्॥ १४॥
चन्द्रभानुपुटान्तःस्थैर्वह्निवर्णैर्जुहुयात् तथा। भानुचन्द्रपुटान्तःस्थैर्वह्निवर्णैर्जुहुयात् तथा॥ १५॥
चन्द्रवह्निपुटान्तःस्थैर्भावर्णैर्जुहुयादपि। वह्निचन्द्रपुटान्तःस्थैरपि तद्वद्धुनेत्तु तैः॥ १६॥
तथा तेषां प्रातिलोम्यात् षोडशानां हुनेदपि। एवं द्वादशधा होममक्षरैः स्यादुदीरितैः॥ १७॥
कृत्वा तद्वाच्यमखिलमर्थरूपं च तैः समम्। तेजस्त्रयात्मरूपं स्यादावयोरपि तद्वपुः॥ १८॥
अन्यानि चावयोरिच्छागृहीतानि वपूंषि वै। तान्यन्यदेवतादेहसमानीच्छावशानि च॥ १९॥

॥ इति श्रीमहामहोपाध्यायभगवत्पूज्यपाद-श्रीगोविन्दाचार्यशिष्य-
श्रीभगवच्छङ्कराचार्यशिष्य-श्रीविष्णुशर्माचार्यशिष्य-
श्रीप्रगल्भाचार्यशिष्य-श्रीविद्यारण्ययतिविरचिते
विद्यार्णवाख्ये तन्त्रे चतुर्थः श्वासः॥ ४॥



१. 'न्यास्य' ख. पाठः। २. 'चयत' ख. पाठः। ३. 'सम्यगि' ख. पाठः।

अथ

# श्रीविद्यार्णवतन्त्रे

## पञ्चमः श्वासः

अथ कालीमते मन्त्रोद्धारः। तत्रादौ भूतलिपिः। तत्र सिद्धसारस्वततन्त्रे—

अथ भूतलिपिं वक्ष्ये सुगोप्यामतिदुर्लभाम् । सारस्वते महातन्त्रे गोपितां चातिसिद्धिदाम्॥ १॥
विष्णोः सकाशाद्यां लब्ध्वा मुनयो वाञ्छितं फलम्। लेभिरे सकलं देवि किं बहूक्तेन सर्वदा॥ २॥
ह्रस्वानां पञ्चकं वर्ग आदितः परिकीर्तितः । द्वितीयः कथितो देवि शिवाद्याश्चतुरक्षरः ॥ ३॥
खं वायुवह्न्यम्बुधरास्तृतीयः संप्रकीर्तितः। वर्गान्त्यादिद्वितीयोपान्त्यतृतीयैः क्रमादमी ॥ ४॥
पञ्चवर्गा वान्तशान्तभृगुभिर्नवमो मतः । नववर्गात्मको मन्त्रो द्विचत्वारिंशदक्षरः ॥ ५॥
वर्णाणामादिमो वर्गः श्रीकण्ठोर्ध्वोष्ठखान्विताः। वर्गान्त्या वान्तसंयुक्ताः क्रमेण कथिता अमी॥ ६॥
खं वायुवह्न्यम्बुधरा वर्गवर्णा मताः क्रमात्। वर्गो द्वितीयो भूहीनो वारिभूवियुतोऽन्तिमः॥ ७॥
नवानामपि वर्गाणां देवताः कथिताः क्रमात्। विरिञ्चिविष्णुरुद्राह्वा आश्विनेयौ प्रजापतिः॥ ८॥
लोकपालाः सक्रियादिशक्तयः परिकीर्तिताः । ऋषिस्तु दक्षिणामूर्तिर्गायत्रं छन्द ईरितम्॥ ९॥
सरस्वती देवतास्य गदिता विश्ववन्दिता। व्योमादिवर्गषट्कैः स्याज्जातियुक्तैः षडङ्ग (कैः ?कम्)॥ १०॥
आद्यवर्गद्वयस्याथ नवार्णन्यासमुच्यते । आधाराधिष्ठाननाभिहृद्गलेषु सबैन्दवे ॥ ११॥
नादे शक्त्यां शिवे* सम्यक् स्वरान् क्रमवशात् सुधीः। तृतीयवर्गहाद्यर्णान् न्यसेदूर्ध्वादि पञ्चसु॥ १२॥
मुखेषु, पञ्चवर्गाणां स्थानेष्वेषु प्रविन्यसेत्। दोःपदग्रेषु मूलेषु चापमूलाग्रकेषु च ॥ १३॥
मध्यदेशेषु जठरे पार्श्वद्वयसनाभिषु। पृष्ठेऽवशिष्टवर्गार्णान् गुह्यहृद्भ्रूषु विन्यसेत् ॥ १४॥ +
सृष्टिन्यासे विसर्गान्तान् बिन्दुसर्गान्तिमान् स्थितौ। आदिद्वितीयकोपान्त्यप्रान्तमध्यक्रमान्न्यसेत्॥ १५॥
सृष्टिषु क्रमगान् न्यस्येत् संहृतौ बिन्दुसंयुतान्। ध्यानमस्य प्रवक्ष्यामि देवेशि मुनिपूजितम्॥ १६॥
शाश्वतं यं[1] भूतमयं प्रवदन्ति मनीषिणः । चिद्वीजं बिन्दुनादाह्वशिफं विश्वम्भराक्षरैः॥ १७॥
शाखासमूहैः सकलदिशासु सुविजृम्भितम्। जलवर्णदलव्रातेनाच्छादितजगत्त्रयम् ॥ १८॥
कृशानुवर्णाङ्कुरैश्च संदीप्तं सुरभूरुहम् । रत्नाङ्कुरैरिव शुभं पवनाक्षरशोभितैः ॥ १९॥
कसुमैर्दीपयन्तं च स्वकीयतनुसच्छ्रियम्। वियदक्षरसद्रूपफलैरानम्रमम्बिके॥ २०॥
सर्वभूताश्रयं नित्यं परामृतमधुद्रवैः। सिञ्चन्तं परमेशानि देवीं वागीश्वरीं पराम्॥ २१॥

---

*अधिष्ठाने लिङ्गे। बिन्दौ ललाटस्थाने। नादे मूर्ध्नि। शक्त्यां तदुपरि। शिवे द्वादशान्ते॥

+ अत्रायमर्थः—ङकारमङ्गुल्यग्रे, ककारं बाहुमूले, खकारमुपमूले कूर्परसंधौ, घकारमङ्गुलिमूलेषु, गकारं मध्यमणिबन्धेऽङ्गुष्ठमूले। एवमन्यवर्गचतुष्टयस्य । अष्टमस्य जठर इत्यादिषु। शिष्टं शाद्यक्षरत्रयं गुह्यादिस्थानत्रये न्यसेत्॥

१ लिपिद्रुमम्।

निगमागमसंक्लृप्तसमुन्नतिसुशोभितम् । शिवशक्त्यात्मकं छायासमाश्रितजगत्त्रयम्।।२२।।
यमाश्रित्य मुनीन्द्रौघा वाञ्छितार्थान् प्रपेदिरे। एवंभूतार्णवृक्षस्य मूले त्वक्षरपङ्कजे ।।२३।।

वागीश्वरीं स्मरेद् देवीं सकलेष्टफलप्रदाम्।
कुन्दाभासामुरुकुचघटां शोभिचन्द्रार्धमौलिं
हस्ताम्भोजैर्वरपजवटीपुस्तकं पुंस्कपालम्।
विभ्राणां तां मधुमदलसद्विह्वलां युग्मनेत्रां
देवीं ध्यायेल्लिपिमयतनुं यौवनप्राप्तशोभाम्।।२४।।

इति ध्यात्वा महेशानि हृदि देवीमनन्यधीः। मातृकोक्ते यजेत्पीठे प्रत्यहं साधकः शिवे।।२५।।
वर्णपद्मे महेशानि मूर्तिं मूलेन कल्पयेत्। तस्यांमावाह्य वागीशीं यजेदावरणैः सह।।२६।।
पुराङ्गानि यजेन्मन्त्री केसरेषु पुरोक्तवत्। अम्बिकाद्या यजेत् पश्चाद्वक्ष्यमाणाश्चतुर्दले।।२७।।
अम्बिका वाग्भवा दुर्गा श्रीश्च मातृस्ततो यजेत्। अष्टपत्रे महेशानि तद्बहिः षोडशच्छदे।।२८।।
करल्याद्या यजेच्छक्तीर्वक्ष्यमाणास्तु षोडश। करली विकराली च तृतीयोमा सरस्वती।।२९।।
श्रीर्दुर्गेशा च लक्ष्मीश्च श्रुतिः स्मृतिरितीरिताः। धृतिः[1] श्रद्धा च मेधा च मतिः कान्तिरुदीरिताः।।३०।।
आर्य्या च षोडशीः प्रोक्ताः खड्गखेटकराः इमाः[2]। श्यामाश्च स्मेरवदनाः सर्वाभरणभूषिताः।।३१।।
विद्याह्रीपुष्टयः प्रज्ञा सिनीवाली कुहूः पुनः। रुद्रवीर्या प्रभा नन्दा स्यात्पूषा ऋद्धिदा[3] शुभा।।३२।।
कालरात्रिर्महारात्रिर्भद्रकाली कपालिनी[4]। विकृतिर्दण्डिमुण्डिन्यौ सेन्दुखण्डा शिखण्डिनी।।३३।।
निशुम्भशुम्भमथिनी महिषासुरमर्दिनी । इन्द्राणी चैव रुद्राणी शङ्करार्धशरीरिणी।।३४।।
नारी नारायणी चैव त्रिशूलिन्यपि पालिनी। अम्बिका हारिणी[5] चैव द्वात्रिंशच्छक्तयः सिताः।।३५।।
पिशाचास्याश्चक्रहस्ताः संपूज्याश्चारुभूषणाः। पिङ्गलाक्षी विशालाक्षी समृद्धिर्वृद्धिरेव च।।३६।।
श्रद्धा स्वाहा स्वधा भिक्षा[6] माया संज्ञा वसुन्धरा। त्रिलोकधात्री सावित्री गायत्री त्रिदशेश्वरी।।३७।।
सुरूपा बहुरूपा च स्कन्दमाता च तत्प्रिया[7]। विमला विपुला पश्चादरुणी पुनरारुणी।।३८।।
प्रकृतिर्विकृतिः सृष्टिः स्थितिः संहृतिरेव च। संध्या मतिः सती हंसी मर्दिका परदेवता।।३९।।
देवमाता भगवती देवकी कमलासना । त्रिमुखी सप्तमुख्यन्या सुरासुरविमर्दिनी।।४०।।
लम्बोष्ठी चोर्ध्वकेशी च बहुशीर्षा वृकोदरी। रथरेखाह्वया पश्चाच्छशि[8] रेखाह्वया परा।।४१।।
गगनरेखा च पवनवेगा च तदनन्तरम्। ततो भुवनपालाख्या ततः स्यान्मदनातुरा।।४२।।
अनङ्गानङ्गमदना तथैवानङ्गमेखला । अनङ्गकुसुमा विश्वरूपासुरभयङ्करी ।।४३।।
अक्षोभ्यासत्य[9]वादिन्यौ वज्ररूपा शुचिव्रता। वरदाख्या च वागीशा चतुष्षष्टिः समीरिताः।।४४।।

१ 'कृति' ग. पाठः। २ 'करान्विता' ग. पाठः। ३ 'षण्यृद्धिदा' क. पाठः। ४ 'कपर्दिना' ग. पाठः। ५ 'ह्लादिनी' ग. पाठः।
६ 'भिख्या' ग. पाठः। ६ 'च्युतप्रिया' क. पाठः। ८ 'चक्रि' क. पाठः। ९ 'सप्त' क. पाठः।

चापबाणधरा: सर्वा ज्वालाजिह्वा: समीरिता:। दंष्ट्रिण्यश्चोर्द्ध्वकेश्यश्च युद्धोपक्रान्तमानसा:।।४५।।
सर्वाभरणसन्दीप्ता: पूजनीया: प्रयत्नत: । ततोऽर्चयेल्लोकपालांस्तदस्त्राणि च तद्बहि:।।४६।।
एवं भूतलिपिं सम्यग् जगद्धात्रीं यजेत्सुधी:। वागैश्वर्यसमृद्ध: सन् वन्द्यते स सुरैरपि।।४७।।
साधक: कृतदीक्ष: सन् न्यसंल्लक्षं जपेत्सदा। तद्दशांशं तिलै: शुद्धैस्त्रिमध्वक्तैर्हुनेत् तत:।।४८।।
तर्पणादिद्विजार्चान्तं प्रागवत् कृत्वा तु मन्त्रवित्। काम्यकर्म तत: कुर्यात् स्वगुरूक्तविधानत:।।४९।।
जुहुयादयुतं पद्मैर्वशगा: स्युर्नराधिपा: । महालक्ष्मीरुत्पलानां होमात् संजायतेऽचिरात्।।५०।।
ब्रह्मवृक्षप्रसूनैश्च जुहुयात् साधक: प्रिये। वत्सरेणैव महतां कवीनामग्रणीर्भवेत्।। ५१।।
राजिकालवणैर्हुत्वा वशयेद्योषित: सुधी:। अनया भूतलिप्या च संपुटीकृत्य यं मनुम्।।५२।।
शतं क्रमाद्विलोमाच्च भजते तस्य सिद्ध्यति। सुप्ताशीर्विषरम्यां तां सम्यक् कुण्डलिनीं पराम्।।५३।।
संगमय्य च मध्येन[1] वर्त्मना स्थानमुत्तमम्। परामृतै: प्लावयेत्तां मूर्ध्नि मूलावधि क्रमात्।।५४।।
योगिनां खल्वयं योग: संमत: सर्वसिद्धिद:। एवंन्यस्तशरीरस्तु तेजसा भास्करोपम:।।५५।।
ज्ञात्वा यन्त्रविशेषांश्च काम्यकर्माणि साधयेत्।

बिन्द्वाढ्यं व्योम भूयस्तदपि च शिवयुग् ज्ञानिने स्याद् हृदन्तौ
मन्त्रोऽयं कर्णिकायां प्रणिगदित इतो[2] व्योमवर्णान् दलेषु।
साध्याख्याबन्धुवर्णांल्लिखतु खपुटितान् शिष्टमन्त्येऽथ पत्रे
वृत्तावीतं खयन्त्रं मलयजजतुभिर्निर्मितं क्ष्वेडहर्तृ।।५६।। ❧

वायू नेत्रैर्युतौ स्तो विरतिनतियुतो ङेन्तकोपेशशब्दो
मध्ये वायव्यवर्णान् पवनसुपुटितान् पत्रमध्येऽन्त्यमन्त्ये।
स्वात्यां मन्दोदये तत्पवनगृहगतं तालपत्रस्थयन्त्रं
शत्रोरुच्चाटकृत् स्याद्रिपुमृतिफलदं द्वारि तस्यैव खातम्।।५७।। ✥

वह्नी क्रमाच्छ्रुतिरदेन्दुयुजौ स्वकान्तौ रौरो: सफण्णतिरयं मनुरब्जमध्ये।
पत्रेषु वह्निपुटितान्यनलाक्षराणि प्रान्तेऽन्तिमं च सह साध्यसुपोषकार्णै:।
अग्निस्थितं[3] भुजदले शुभवासरर्क्षे लाक्षासुकुङ्कुमकृतं प्रकरोति रक्षाम्।।५८।।☼

---

❧अयमन्त्रार्थ:— विन्द्वाढ्यं व्योम हं, पुनस्तदेव शिवयुक् एकारयुक्तं तेन हे, ज्ञानिने इति स्वरूपं, हृत् नम:, अयं मन्त्रोऽष्ट-दलकमलकर्णिकायां लेख्य:। दलेषु व्योमवर्णान् साध्यनामबन्ध्वक्षरसहितान् प्रत्येकं हकारपुटितान् कृत्वा विलिखेत् अवशिष्टं वर्णमन्त्यपत्रे लिखेत्। एतत्पद्मं वृत्तावीतमाकाशमण्डलेनावृतं खयन्त्रं प्रोक्तविधिनोक्तफलदं भवति। साध्यनामाद्यन्तं यस्मिन् कोष्ठे तिष्ठति तत्कोष्ठगताक्षराणि तस्य बन्ध्वक्षराणि।।

✥अयमर्थ:— नत्रं इ, ए स्वरूपं तद्युतौ वायू यकारद्वयं तेन यिंयें, तथा कोपेशायनम: इति अष्टदलपद्मकर्णिकायां विलिख्य वायुवर्णान् यकारपुटितान् पत्रेषु अन्त्यं वर्णमन्त्यपत्रे लिखेत् शेषं पूर्ववत्।।

☼अयमर्थ:— अष्टलपद्मं विरच्य तत्कर्णिकायां रुंरौंस्वरौरो: फट् नम: इत लिखेत्। पत्रेषु रेफपुटितानि वह्न्यक्षराणि अन्त्ये चान्तिमं साध्यपोषकाक्षरै: सहितानि लिखित्वाग्निमण्डलेन संवेष्टयेत्। इदमाग्नेययन्त्रमुक्तफलदं भवति।

१. 'च' ग. पाठ:। २ 'वो' ग. पाठ:। ३ 'अन्तरिस्थतं' ग. पाठ:।

नासामनुस्वरसबिन्दुयुताम्बुयुग्मं ङेन्तो विधुर्विधुभुवे नतिरेष मध्ये।
अब्वर्णकान् (सु?व) पुटितान् शिशु[1] बन्धुवर्णैः पत्रेषु चाप्यपुरयुग्वरुणाह्वयन्त्रम्।।५९।।◆
गण्डानन्ते सबिन्दू विलिखतु च जगौ गण्डयोर्मध्यसंस्थौ
ल्वन्ते के ह्वु मध्ये तदनु कुपुटितान् भूमिवर्णान् धरान्तान्।
पत्रान्तः सेवकार्णैर्धरणिगृहयुतं चेन्द्रसौम्योदये तद्
भूर्जस्थं भूमियन्त्रं सुमृदि विरचितं गैरिकैः स्तम्भकृत स्यात्।।६१।।■

इति भूतलिपिप्रपञ्चकम्। अथ कालीमते श्रीविद्याप्रकरणम्—

पञ्चसिंहासनोऽन्यत्र ततो वै पञ्चपञ्चिका। षडायतनविद्याश्च पञ्चाम्नायास्तथैव च।। १।।
चतुः समयविद्याश्च श्रीविद्यावृन्दमेव च । ज्ञातव्यास्तु विशेषेण देवताभावसिद्धये।। २।।
संपत्प्रदाभैरवी च ततश्चैतन्यभैरवी । चैतन्यभैरवी चान्या द्वितीया सर्वसिद्धिदा।। ३।।
कामेश्वरीभैरवी च बालाद्याः पञ्च देवताः। पूर्वसिंहासनस्थाश्च स्मर्तव्याः सर्वसिद्धये।। ४।।
न्यासे होमे च पूजायां सर्वत्रैव तु साधकः। अघोरभैरवी चैव महाभैरव्यतः परम्।। ५।।
ललिताभैरवी चैव कामेशीभैरवी तथा । रक्तनेत्राभैरवी च दक्षसिंहासने स्थिताः।। ६।।
षट्कूटाभैरवी चैव ततो वै नित्यभैरवी। मृतसञ्जीविनी चैव मृत्युञ्जयपरा ततः।। ७।।
वज्रप्रस्तारिणी चैव प्रत्यक्सिंहासने स्थिताः। भुवनेशीभैरवी च कमलेशी च भैरवी।। ८।।
कौलेश[2] भैरवी चैव ततो डामरभैरवी। कामिनीभैरवी चैव सौम्यसिंहासने स्थिताः।। ९।।
प्रथमा सुन्दरी चैव द्वितीया सुन्दरी तथा। तृतीया सुन्दरी चैव चतुर्थी सुन्दरी तथा।। १०।।
पञ्चमी सुन्दरी चैव ऊर्ध्वसिंहासनस्थिताः। श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च।। ११।।
त्रिशक्तिः सर्वसाम्राज्या लक्ष्म्यः पञ्च प्रकीर्तिताः। श्रीविद्या च परंज्योतिः परनिष्कलशाम्भवी।। १२।।
अजपा मातृका चेति पञ्च कोशाः प्रकीर्तिताः। श्रीविद्या त्वरिता चैव पारिजातेश्वरी ततः।। १३।।
त्रिकूटा पञ्चबाणेशी पञ्च कल्पलताः स्मृताः । श्रीविद्यामृतपीठेशी सुधासूरमृतेश्वरी।। १४।।
अन्नपूर्णेति विख्याताः पञ्च कामदुघाः क्रमात्। श्रीविद्या सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी।।१५।।
वाराहीति च संप्रोक्ताः पञ्चरत्नमिति ध्रुवम्। इति।

अथ मन्त्रोद्धारः, तत्रादौ गुरुपादुका—

शिवचन्द्रानलार्घीशबिन्दुभिः प्रथमाक्षरम् । आकाशचन्द्रसंवर्तमहाकालक्षमाम्बुभिः।। १।।
वाय्वग्न्यनन्तबिन्द्वन्तैर्द्वितीयं बीजमुद्धृतम्। तदेव वामकर्णेन तृतीयं बीजमुद्धृतम्।।२।।
तदेव दक्षनेत्रेण चतुर्थं बीजमीरितम् । श्रीपरेति तथा पावकेति सर्वपदं ततः।।३।।

---

◆ वरुणयन्त्रे वृंवौंविधवेविधुभुवेनमः। इति कर्णिकायां लिखित्वा पत्रेषु बन्ध्वक्षरैः सह वकारपुटितान् वायुवर्णान् लिखेत्।।
■ भूयन्त्रे लंग्लौं लंजंगंलंलुके नमः इति मध्ये विलिख्य पत्रेषु लकारपुटितान् भूमिवर्णान् सेवकार्णयुतान् लिखेत्।।
१. 'सहेति' सुपाठः। २ 'शा' क. पाठः।

आराध्यसर्वगुरु च नाथसर्वगुरुगुरु । श्रीगुर्वथ तथा नाथ वह्निर्बीजं तृतीयकम्।। ४।।
आद्यबीजचतुष्कं च श्रीशंभुगुरुशब्द‌ंतः। प्रथमं तु द्विधा चोक्त्वा द्वितीयादित्रयं भवेत्।।५।।
प्रथमं च तृतीयं च प्रोक्ता च स्थूलपादुका। तारपञ्चकमादौ तु देयं सर्वार्थसाधिका।।६।।
खेचरीबीजमुक्तेयं प्रोक्ता स्यान्मध्यपादुका। तारत्रययुतेयं तु संप्रोक्ता लघुपादुका।।७।।
तारत्रयं श्रीअमुकानन्दनाथपदं ततः। श्रीपादुकां पूजयामीत्युक्ता लघुतरापरा ।। ८।।

ॐ ऐंह्रींश्रीं हसखफ्रें हसौः हस्‍खूं हसक्षमलवयरीं हसक्षमलवयरूं हसक्षमलवय (रीं?रिं) श्रीपरपावक सर्वाराध्यसर्वगुरुनाथ सर्वगुरुगुरुश्रीगुरुनाथ रंहसक्षमलवयरूं। ५ँ हस्‍खूं हसक्षमलवयरां हसक्षमलवयरूं हसक्षमलवय (रीं?रिं)श्रीशम्भुगुरु ५ँ हस्‍ूं हस्‍ूं हसक्षमलवयरां हसक्षमलवयरूं हसक्षमलवय (रीं?रिं) ५ँ हस्‍खूं हसक्षमलवयरूं इति स्थूलपादुका।।

ॐऐंह्रींश्रीं हसौं सहक्षमलवयरूं सहक्षमलवयरूं हस्‍ौः सहक्षमलवयरीः हस्‍ौः श्रीपरपावक सर्वारा- ध्यसर्वगुरुनाथ सर्वगुरुस्वयंगुरु श्रीगुरुनाथ रैं२ हसक्षमलवयरूं हसौं सहक्षमलवयरीं सहक्षमलवयरूं सहलक्षमवयरां श्रीशंभुगुरु ५ँ हसौः सहक्षमलवयरूं श्रीअमुकानन्दनाथामुकशक्तिदेव्यम्बाश्रीपादुकां पूजयामि, इति मध्यमपादुका।।

ॐऐंह्रींश्रीं हसखफ्रें हसौः हसक्षमलवरयूं श्रीअमुकानन्दनाथ ॐऐंह्रींश्रीं सहखफ्रें स्हौः सहक्षमलवरयीं अमुकदेव्यम्बाश्रीपादुकां पूजयामि इति लघुपादुका।। ॐऐंह्रींश्रीं अमुकानन्दनाथामुकशक्त्यम्बाश्रीपादुकां पूजयामि, इति लघुतरपादुका।। ॐऐंह्रींश्रीं श्रीअमुकानन्दनाथश्रीपादुकां पूजयामि— इति सामान्यपादुका।।

ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेद्गुरुपादुकाम् । स्वस्थचित्तः स्थिरवपुर्योगमार्गविचक्षणः ।। १।।
श्रीगुरोः पादुकामन्त्रे ऋषिर्ब्रह्मा समीरितः । गायत्रं छन्द आख्यातं निचृदाद्यं महेश्वरि ।।२।।
बीजशक्ती तथाद्यन्तौ मध्यमं कीलकं भवेत्। मोक्षार्थे विनियोगः स्यादृषिन्यास उदीरितः।।३।।
प्रातः शिरसि शुक्लेऽब्जे द्विनेत्रं द्विभुजं गुरुम्। वराभयकरं शान्तं स्मरेत् तन्नामपूर्वकम्।।४।।
शशाङ्कायुतसङ्काशं सूर्यकोटिसमप्रभम् । शुक्लाम्बरधरं श्रीमच्छुक्लमाल्यानुलेपनम्।। ५।।
वामोरुस्थितया रक्तवर्णया पद्महस्तया । शक्त्यालिङ्गितमानन्दामोदमानं गुरुं स्मरेत्।। ६।।

अथौघत्रयगुरुध्यानम्—

कराभ्यां चिन्मुद्रां समधुनृकपालं च दधतीं द्रुतस्वर्णप्रख्यामरुणकुसुमालेपवसनाम्।
कृपापूर्णापाङ्गमरुणनयनां कर्बुरजटामुपेतां सिद्धौघैर्भजतु गुरुपङ्क्तिं कृतमतिः।। १।।

अथ गुरुनमस्कारः —

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः।। १।।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः।।२।।
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुः कर्ता च हर्ता च गुरवे वै नमो नमः।।३।।

---

१ 'तवर्तः' क. पाठः। २ 'रैं' ग. पाठः।

अथ कुण्डलिनीमन्त्रः —

वाग्भवं भुवनेशी च श्रीबीजं तु तथैव च। त्र्यक्षरो मन्त्र आख्यातः कुण्डलिन्याः सुसिद्धिदः ॥१॥
ऋषिः शक्तिः समाख्यातो गायत्री छन्द ईरितम्। चेतना कुण्डली शक्तिर्देवतात्र समीरिता ॥२॥
वाग्भवं बीजमाख्यातं शक्तिः श्रीबीजमुच्यते। हृल्लेखा कीलकं प्रोक्तं कुण्डलिन्यास्तु चिन्तने ॥३॥
विनियोगः समाख्यातः सर्वागमविशारदैः। बीजत्रयद्विरावृत्त्या षडङ्गन्यास ईरितः ॥४॥
ध्यानं वक्ष्यामि कुण्डल्याः सावधानतया शृणु। मूलाधारे त्रिकोणे तु सूर्यकोटिसमत्विषि ॥५॥
प्रसुप्तभुजगाकारां सार्द्धत्रिवलयस्थिताम्। नीवारशूकवत् तन्वीं तडित्कोटिसमप्रभाम् ॥६॥
सूर्यकोटिप्रभां दीप्तां चन्द्रकोटिसुशीतलाम्। शिवशक्तिमयीं देवीं शङ्खावर्तक्रमात् स्थिताम् ॥७॥
सुषुम्नामध्यमार्गेण यान्तीं परशिवावधि। ह्रींकारबीजरूपेण चिन्तयेद्योगवर्त्मना ॥८॥

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर—
त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्।
पाणिभ्यां मणिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थसव्यचरणां ध्यायेत् परामम्बिकाम् ॥९॥

कुलगुरुध्यानं प्रागेवोक्तम्। अथ कुण्डलीस्तुतिः शारदायाम्—

मूलोन्निद्रभुजङ्गराजसदृशीं यान्तीं सुषुम्नान्तरं
भित्त्वाधारसमूहमाशु विलसत्सौदामिनीसंनिभाम्।
व्योमाम्भोजगतेन्दुमण्डलगलद्दिव्यामृतौघैः पतिं
संभाव्य स्वगृहागतां पुनरिमां संचिन्तयेत् कुण्डलीम् ॥१॥

हंसं नित्यमनन्तमद्वयगुणं स्वाधारतो निर्गता
शक्तिः कुण्डलिनी समस्तजननी हस्ते गृहीत्वा च तम्[१]।
याता शम्भुनिकेतनं परसुखं तेनानुभूय स्वयं
यान्ती स्वाश्रम[२]कर्मकोटिरुचिरा ध्येया जगन्मोहिनी ॥२॥

अव्यक्तं परबिम्ब[३] मञ्चितरुचिं नीत्वा शिवस्यालयं
शक्तिः कुण्डलिनी गुणत्रयवपुर्विद्युल्लतासन्निभा।
आनन्दामृतकन्दग[४] पुरमिदं चन्द्रार्ककोटिप्रभं
संवीक्ष्य स्वगृहंगता[५] भगवती ध्येयानवद्या गुणैः ॥३॥

मध्येवर्त्म समीरणद्वयमिथः संघट्टसंक्षोभजं
शब्द[६] स्तोममतीत्य तेजसि तडित्कोटिप्रभाभास्वरम्[७] ॥

---

१ 'चक्रे गृहे सिञ्चतीम्' ग. पाठः। २ 'स्वाश्रयं' ग. पाठः। ३ 'बिम्बं' ख. पाठः। ४ 'मध्यगं' ग. पाठः। ५ 'स्वपुरं' ग. पाठः।
६ 'याब्ज' क. ख. पाठः। ७ 'रै' ग. पाठः।

उद्यन्तीं समुपास्महे नवजपा[1]सिन्दूरसान्द्रा रुणां
सान्द्रानन्दसुधामयीं परशिवं प्राप्तां परां देवताम्।।४।।
गमनागमनेषु जाङ्घिकी सा तनुयाद्योगफलानि कुण्डली।
मुदिता[2] कुलकामधेनुरेषा भजतां वा[3]ञ्छित कल्पवल्लरी।।५।।
आधारस्थितशक्तिबिन्दुनिलयां नीवारशूकोपमां
नित्यानन्दमयीं गलत्परसुधावर्षैः[4] प्रबोधप्रदैः।
सिक्त्वा षट् सरसीरुहाणि विधिवत् कोदण्डमध्योदितां
ध्यायेद् भास्वरबन्धुजीवरुचिरां संविन्मयीं देवताम्।।६।।
हृत्पङ्केरुहभानुबिम्बनिलयां विद्युल्लतामन्थरां
बालार्कारुणतेजसा भगवतीं निर्भर्त्सयन्तीं तमः।।
नादाख्यं परमर्धचन्द्रकुटिलं संविन्मयीं शाश्वतीं
यान्तीमक्षररूपिणीं विमलधीर्ध्यायेद्विभुं तेजसाम्।।७।।
भाले पूर्णनिशाकरप्रतिभटां नीहारहारत्विषा
सिञ्चन्तीममृतेन देवममितेनानन्दयन्तीं तनुम्।
वर्णानां जननीं तदीयवपुषां संव्याप्य विश्वं स्थितां
ध्यायेत् सम्यगनाकुलेन मनसा संविन्मयीमम्बिकाम्।।८।।
मूले भाले हृदि च विलसद्वर्णरूपा सवित्री
पीनोत्तुङ्गस्तनभरनमन्मध्यदेशा महेशी।
चक्रे चक्रे गलितसुधया सिक्तगात्री प्रकामं
दद्यादद्य श्रियमविकलां वाङ्मयी देवता नः।।९।।
आधारबन्धप्रमुखक्रियाभिः समुत्थिता कुण्डलिनी सुधाभिः।
त्रिधामबीजं शिवमर्चयन्ती शिवाङ्गना वः शिवमातनोतु।।१०।।
निजभुवननिवासादुच्चलन्ती विलासैः पथि पथि कमलानां चारुहासं विधाय।
तरुण[5] तपनकान्तिः कुण्डली देवता सा शिवदसदनसुधाभिर्दीपयेदात्मतेजः।।११।।
सिन्दूरपुञ्जनिभमिन्दुकलावतंसमानन्दपूर्णनयनत्रयशोभिवक्त्रम्।
आपीनतुङ्गकुचनम्रमनङ्गतन्त्रं शंभोः कलत्रममितां श्रियमातनोतु।। १२।।
वर्णैर्णवषट्दिशा[6] रविकलाचक्षु[7] र्विभक्तैः क्रमात्
सान्तैरादिभि[8]रावृतान् क्षहयुतैः षट्चक्रमध्यानिमान्।

१ 'सन्ध्यारुणां' ग. पाठः। २ 'का' क. पाठः। ३ 'काङ्क्षित' क. पाठः। ४ 'वर्णैं' ग. पाठः। ५ 'तरणि' ग. पाठः। ६ 'शिवा' क. पाठः। 'शिखा' ग. पाठः। ७ 'तत्त्वैः' क.ग. पाठः। 'आद्यैः' सादिभिः, ग. पाठः।

डाकिन्यादिभिराश्रितान् परिचितान् ब्रह्मादिभिर्दैवतै–
भिन्दाना परदेवता त्रिजगतां चित्तेषु दत्ता[१] मुदम्।। १३।।
आधाराद् गुणवृत्तशोभिततनुं निर्गत्वरीं सत्वरं[२]
भिन्दन्तीं कमलानि चिन्मयघनानन्द[३] प्रबोधोद्धुराम्।
संक्षुब्धध्रुवमण्डलामृतकरप्रस्यन्दमानामृत–
स्रोतः कन्दलितामनन्दतडिदाकारां शिवां भावये।। १४।।
मूलाधारे त्रिकोणे तरुणतरणिभाभास्वरे विभ्रमन्तं
कामं बालार्ककालानलजरठकुरङ्गाङ्ककोटिप्रभाभम्।
विद्युन्मालासहस्रद्युतिरुचिरलसद्बन्धुजीवाभिरामं
त्रैगुण्याक्रान्तबिन्दुं जगदुदयलयैकान्तहेतुं विचिन्त्य।। १५।।
तस्योर्ध्वे विस्फुरन्तीं स्फुटरुचिरतडित्पुञ्जभाभास्वराङ्गी[४]–
मुद्गच्छन्तीं सुषुम्नामनु सरणिशिखामाललाटेन्दुबिम्बम्।
चिन्मात्रां सूक्ष्मरूपां जगदुदयकरीं भावनामात्रगम्यां
मूलं या सर्वधाम्नां स्फुरति[६]निरुपमा हूंकृतोदञ्चितोरः।।१६।।
नीता सा शनकैरधोमुखसहस्रारारुणाब्जोदरे
च्योतत्पूर्णशशाङ्कबिम्बमधुनः पीयूषधारास्रुतिम्।
रक्तां मन्त्रमयीं निपीय च सुधानिःष्यन्दरूपा विशे–
द्भूयोऽप्यात्मनिकेतनं पुनरपि प्रोत्थाय पीत्वा[५] विशेत्।।१७।।
योऽभ्यस्यत्यनुदिनमेवात्मनोऽन्त[७] र्बीजांशं दुरितजरापमृत्युरोगान्।
जित्वासौ स्वयमिव मूर्तिमाननङ्गः सञ्जीवेच्चिरमतिनीलकेशजालः।।१८।।

इति कुण्डलिनीस्तुतिः। अथ मूलविद्याचिन्तनम्–

पञ्चदश्या ऋषिः प्रोक्तो दक्षिणामूर्तिरव्ययः। पङ्क्तिश्छन्दः समाख्यातं परब्रह्मस्वरूपिणी।। १।।
देवता ह्युदिता श्रीमन्महात्रिपुरसुन्दरी । वाग्भवं बीजमाख्यातं शक्तिस्तार्तीयमुच्यते।। २।।
कीलकं मध्यकूटं स्यात् पुरुषार्थचतुष्टये। विनियोगः समाख्यातः सर्वागमविशारदैः।।३।।
कूटत्रयद्विरावृत्त्या षडङ्गानि समाचरेत्।
सिन्दूरपुञ्जनिभमिन्दुकलावतंसमानन्दपूर्णनयनत्रयशोभिवक्त्रम्।
आपीनतुङ्गकुचनम्रमनङ्गतन्त्रं शंभोः कलत्रममितां श्रियमातनोतु।।४।।

---

१ 'चित्ते विधत्तां' ग. पाठः। २ 'रां, क. ख. पाठः। ३ 'न्दां' ग. पाठः। ४ "रामां" क.ग. पाठः। ५ 'रतु' क. पाठः। ६ 'नित्या' क. पाठः। ७ 'दिनमात्मनो नियन्तं बीजेशात्' क. ग. पाठः।

अथ कूटत्रयचिन्तनम्—

मूलाधारे वाग्भवाख्यं कूटं संचिन्तयेद्बुधः। वाग्भवाख्यस्य कूटस्य ऋषिर्ब्रह्मा समीरितः।। १।।
छन्दो गायत्रमाख्यातं देवता वागधीश्वरी। आद्यवर्णं तु बीजं स्यादन्त्यं शक्तिः समीरिता।। २।।
मध्यत्रयं कीलकं स्याद्वाक्सिद्ध्यै विनियोगकम्। ब्रह्मवाग्रूपिणी ङेन्ता विष्णुवाग्रूपिणी तथा।।३।।
रुद्रवाग्रूपिणी ङेन्ता परवाग्रूपिणी तथा। शिववाग्रूपिणी ङेन्ताखिलवाग्रूपिणी तथा ।।४।।
षडङ्गं विन्यसेदेतैर्वाग्भवाद्यैः सुसाधकः।

शुक्लां स्वच्छविलेपमाल्यवसनां शीतांशुखण्डोज्ज्वलां
व्याख्यामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैः।
बिभ्राणां कमलासनां कुचनतां वाग्देवतां सस्मितां
वन्दे वाग्विभवप्रदां त्रिनयनां सौभाग्यसंपत्करीम्।।५।।

हृदये कामराजाख्यं कूटं संचिन्तयेद् बुधः । कामराजाख्यकूटस्य ऋषिः संमोहनः स्मृतः।। ६।।
गायत्री छन्द आख्यातं कामेशी देवता स्मृता। आद्यं बीजं तथा शक्तिर्हल्लेखा कीलकं स्मृतम्।।७।।
मध्यवर्णचतुष्कं तु वशीकरणसिद्धये । विनियोगोऽत्र विख्यातः सर्वागमविशारदैः।। ८।।
द्रांसक्षोभणबाणाय द्रींद्रावणपदं तथा । वाणाय च तथा क्लीं च आकर्षणपदं पुनः।। ९।।
बाणाय ब्लूं वशीकारबाणाय च ततः पुनः। सः उन्मादनबाणाय पञ्च बीजानि चोच्चरेत्।। १०।।
सर्वबाणेभ्य इत्युक्त्वा षडङ्गानि प्रविन्यसेत्। कामकूटादिभिर्मन्त्रैर्नमोन्तै रससंख्यकैः।। ११।।

बालार्ककोटिरुचिरां स्फटिकाक्षमालां कोदण्डमिक्षुजनितं स्मरपञ्चबाणान्।
विद्यां च हस्तकमलैर्दधतीं त्रिनेत्रां ध्यायेत् समस्तजननीं नवचन्द्रचूडाम्।। १२।।

आज्ञाचक्रे शक्तिकूटं चिन्तयेत् साधकाग्रणीः। अथास्य शक्तिकूटस्य ऋषिः शिव उदाहृतः।। १३।।
पङ्क्तिश्छन्दस्त्वादिशक्तिर्देवता बीजमत्र सः। हल्लेखा शक्तिरुद्दिष्टा कीलकं मध्यवर्णकौ।।१४।।
विनियोगस्तु विज्ञेयश्चतुर्वर्गाप्तये ध्रुवम्। ङेन्ता सर्वज्ञताशक्तिः शक्त्यन्ता नित्यतृप्तता।। १५।।
चतुर्थ्यन्ता समुद्दिष्टा तथैवानादिबोधिनी। ङेन्ता स्वतन्त्रता शक्तिस्तथा नित्यमलुप्तता।। १६।।
शक्तिर्ङेन्तानन्ततादिशक्तिर्ङेन्ता तथैव च। एतैर्मन्त्रैर्जातियुक्तैः शक्तिकूटादिकैः क्रमात्।। १७।।
विन्यस्य च षडङ्गानि ध्यायेद् देवीमनन्यधीः।

कदम्बवनमध्यगां कनकमण्डपान्तः स्थितां षडम्बुरुहवासिनीममरसिद्धसौदामिनीम्।
विजृम्भितजपारुचिं विमलचन्द्रचूडामणिं त्रियम्बककुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये।। १८।।

अथाभेदचिन्तनम्—

मूलादिब्रह्मरन्ध्रान्तं ब्रह्मविद्यां विभावयेत्। तत्प्रभापटलव्याप्तं स्वशरीरं विचिन्तयेत्।। १।।

अहं देवी न चान्योऽस्मि ब्रह्मैवाहं[1] न शोकभाक्। सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान्।।२।।
त्वमेवाहमहं त्वं च संविन्मात्रवपुस्तव । आवयोरन्तरं देवि नश्यत्वाज्ञाबलात् ततः।।३।
अहं तीर्णो भवं घोरं कृत्यं किञ्चिन्न मेऽस्ति वै। तथापि देहि मे मातराज्ञां तव सुसेवने।।४।।
कृत्वा समाधिस्थितया धिया ते चिन्तां नवाधारनिवासभूताम्।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये।। ५।।
मञ्जुशिञ्जितमञ्जीरं वाममर्धं महेशितुः । आश्रयामि जगन्मूलं यन्मूलं वचसामपि[2]।। ६।।

अथ मूलदेवतास्तुतिः –

कल्याणवृष्टिभिरिवामृतपूरिताभिर्लक्ष्मीस्वयंवरणमङ्गलदीपिकाभिः।
सेवाभिरम्ब तव पादसरोजमूले नाकारि किं मनसि भक्तिमतां जनानाम्।। १।।
एतावदेव जननि स्पृहणीयमास्ते त्वद्वन्दनेषु सलिलस्थगिते च नेत्रे।
सांनिध्यमुद्यदरुणायतसोदरस्य त्वद्विग्रहस्य सुधया परयाप्लुतस्य।। २।।
ईशित्वभागकलुषाः कति नाम सन्ति ब्रह्मादयः प्रतियुगं प्रलयाभिभूताः।
एकः स एव जननि स्थिरसिद्धिरास्ते यः पादयोस्तु सुकृती प्रणतिं करोति।। ३।।
लब्ध्वा सकृत् त्रिपुरसुन्दरि तावकीनं कारुण्यकन्दलितकान्तिभरं कटाक्षम्।
कन्दर्पभावसुभगास्त्वयि भक्तिभाजः सम्मोहं[3]यन्ति तरुणीर्भुवनत्रयेषु।। ४।।
ह्रींकारमेव तव नाम गृणन्ति वेदा मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे।
यत्संस्मृतौ यमभटादिभयं विहाय दीव्यन्ति नन्दनवने सह लोकपालैः।। ५।।
हन्तुः पुरामधिगलं परिपूर्यमाणः क्रूरः कथं नु भविता गरलस्य वेगः।
आश्वासनाय किल मातरिदं तवार्धं देहस्य शश्वदमृताप्लुतशीतलस्य।। ६।।
सर्वज्ञतां सदसि वाक्पटुतां प्रसूते देवि त्वदङ्घ्रिसरसीरुहयोः प्रणामः।
किञ्च[4] स्फुरन्मुकुटमुज्ज्वलमातपत्रं द्वे चामरे च वसुधां महतीं ददाति।। ७।।
कल्पद्रुमैरभिमतप्रतिपादनेषु कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः।
आलोकय त्रिपुरसुन्दरि मामनाथं त्वय्येव भक्तिभरितं त्वयि दत्तदृष्टिम्।। ८।।
हन्तेतरेष्वपि मनांसि निधाय चान्ये भक्तिं वहन्ति किल पामरदैवतेषु।
त्वामेव देवि मनसा वचसा स्मरामि त्वामेव नौमि शरणं जगति त्वमेव।। ९।।
लक्ष्येषु सत्स्वपि तवाक्षिविलोकनानामालोकय त्रिपुरसुन्दरि मां कथञ्चित्।

---

१ 'ब्रह्म चाहं' ग. पाठः। २ 'सचराचरम्' ग. पाठः। ३ 'द' ग. पाठः। ४ 'किञ्चित्' क. पाठः।

नूनं मयापि सदृशं करुणैकपात्रं जातो जनिष्यति जनो नच जायते च।।१०।।
ह्रींह्रीमिति प्रतिदिनं जपतां जनानां किंनाम दुर्लभमिह त्रिपुराधिवासे।
मालाकिरीटमदवारणमाननीयांस्तान् सेवते मधुमती स्वयमेव लक्ष्मी:।। ११।।
संपत्कराणि सकलेन्द्रियनन्दनानि साम्राज्यदानकुशलानि सरोरुहाक्षि।
त्वद्वन्दनानि दुरितौघहरोद्यतानि मामेव मातरनिशं कलयन्तु नान्यम्।। १२।।
कल्पोपसंहरणकल्पितताण्डवस्य देवस्य खण्डपरशोः परभैरवस्य।
पाशाङ्कुशैक्षवशरासनपुष्पबाणा सा साक्षिणी विजयते तव मूर्तिरेका।। १३।।
लग्नं सदा भवतु मातरिदं तवार्धं तेज:परं बहुलकुङ्कुमपङ्कशोणम्।
भास्वत्किरीटममृतांशुकलावतंसं मध्येत्रिकोणमुदितं परमामृतार्द्रम्।। १४।।
ह्रींकारमेव तव धाम तदेव रूपं त्वन्नाम सुन्दरि सरोजनिवासमूले।
त्वत्तेजसा परिणतं जगदादिमूलं सङ्गं तनोतु सरसीरुहसङ्गमस्य।। १५।।
ह्रींकारत्रयसंपुटेन महता मन्त्रेण संदीपितं स्तोत्रं यः प्रतिवासरं तव पुरो मातर्जपेन्मन्त्रवित्।
तस्य क्षोणिभुजो भवन्ति वशगा लक्ष्मीश्चिरस्थायिनी वाणी निर्मलसू[१]क्तिभारभरिता जागर्ति दीर्घं वपुः। १६।

इति स्तुति:।।

समुद्रमेखले देवि पर्वतस्तनमण्डले। विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे।। १७।।

इति भूमिप्रार्थना।।

संध्यासूदङ्मुखोऽह्न्यपि निशि च पुनर्दक्षिणास्यो निवीतं
कुर्यान्मूत्रादिशौचं बहिरथ सलिलात् तत्र लिङ्गे मृदेका।
पञ्चापानेऽथ हस्ते दश पुनरुभयोः सप्त चैतद्गृहस्थे
द्वैगुण्यादिक्रमात् तद्व्रतिवनियतिषु स्यात् तदर्धं निशायाम्।। १।।

इति शौचम्।

ततः श्रीकाममन्त्रस्य संमोहन ऋषिः स्मृतः। गायत्रीच्छन्द आख्यातं श्रीकामो देवता स्मृता।।१।।
बीजं तु कामराजः स्यान्नमः शक्तिरुदीरिता। सर्वजनप्रियायेति कीलकं समुदाहृतम्।। २।।
षड्दीर्घकामराजेन षडङ्गानि प्रविन्यसेत्।

जपारुणं रत्नविभूषणाढ्यं मीनध्वजं चारुकृताङ्गरागम्।
कराम्बुजैरङ्कुशमिक्षुचापं पुष्पास्त्रपाशौ दधतं भजामि।।३।।

ध्यात्वैवं कामबीजं च कामदेवाय सर्व च। जनप्रियाय हृदयं काममन्त्र उदाहृतः।।४।।
अनेन दन्तकाष्ठं तु अभिमन्त्र्याष्टधा पुनः। दन्तान् विशोध्य मतिमान् मुखप्रक्षालनं चरेत्।।५।।

१. 'भक्ति' क. ख. पाठ:।

इति दन्तधावनम्।

श्रीविद्यां ब्रह्मरन्ध्रे तु विचिन्त्य च ततः परम्। चतुर्लक्ष्मीमहामन्त्रैर्मुखक्षालनमाचरेत्॥ ६॥

इति मुखप्रक्षालनम्।

तीरमागत्य चाचम्य कुर्यात् सङ्कल्पमादरात्। अतितीक्ष्ण महाकाय कल्पान्तदहनोपम॥ ७॥
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि। भैरवाज्ञामनुस्मृत्य स्नानं वैदिकमाचरेत्॥ ८॥
तान्त्रिकं स्नानमनुतत् कुर्यान्मन्त्रोक्तवर्त्मना। जले श्रीचक्रमाभाव्य तीर्थान्याकृष्य मण्डलात्॥९॥
ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे। तेन सत्येन मे देव तीर्थं देहि दिवाकर॥ १०॥
मुद्रयाङ्कुशरूपिण्या तीर्थान्याकृष्य योज्य च। गङ्गास्वरूपिणीं देवीं ध्यात्वा मूलमनुं जपन्॥११॥
जातवेदादिऋग्भिश्च समूलाभिः स्वमूर्धनि। अभिषिञ्चेत् सप्तकृत्वः कुम्भाख्यमुद्रया ततः॥ १२॥
देवीं स्वहृदि संयोज्य स्वस्थाने तीर्थसन्ततिम्। यन्मया दुष्कृतं तोयं शरीरमलसंयुतम्॥ १३॥
तस्य पापविशुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम्। इति तीरे तु सन्तर्प्य गृह्णीयाच्छुद्धवाससी॥१४॥

इति स्नानम्। ततो विभूतिधारणम्—

हस्ते विभूतिं संस्थाप्य पञ्चतारैः प्रमन्त्रयेत्। अग्निरित्यादिमन्त्रैश्च ईशानाद्यैश्च मन्त्रयेत्॥ १५॥
ततस्तु धारयेन्मन्त्री केवलं मूलविद्यया।

इति भस्मधारणम्। अथ वैदिकसन्ध्यानन्तरं तान्त्रिकसन्ध्यां कुर्यात्—

ततो मणिधरिण्यन्ते वज्रिण्यन्ते महाप्रति। सरे रक्षद्वयं हुंफट्स्वाहान्तो मनुरीरितः॥ १॥
अनेनैव तु मन्त्रेण शिखां बद्ध्वा विचक्षणः। त्रिभिः कूटैस्त्रिराचामेत् त्रितत्त्वान्तैः समाहितः॥२॥
विद्यातत्त्वाय च तथा शिवतत्त्वाय चैव हि। मायातत्त्वाय च तथा स्वाहान्तैस्तदनन्तरम्॥३॥
प्राणानायम्य सङ्कल्प्य पुरतो जलमध्यतः। श्रीचक्रं तु विभाव्यानु सूर्यात्तीर्थानि मुद्रया॥४॥
प्राग्वदावाह्य विधिवदावाहन्यादिमुद्रिकाः। प्रदर्श्य दक्षहस्ते तु जलं सङ्गृह्य[1] यत्नतः॥५॥
वामहस्तेन सञ्छाद्य पञ्चभूताक्षरैः क्रमात्। अभिमन्त्र्य सकृत्तोयं वामहस्ते निधाय च॥६॥
स्वरैः सम्मार्जयेन्मूर्ध्नि तत्पृष्ठस्रुतबिन्दुभिः। ततो दक्षे जलं ग्राह्यं सहितैर्मूलविद्यया॥७॥
कादिमान्तैः स्पर्शवर्णैः स्वाहान्तैरभिमन्त्र्य च। पीत्वा तत्तोयमथ च पुनर्दक्षे जलं क्षिपेत्॥ ८॥
अभिमन्त्र्य च तत्प्राग्वद्वामहस्ते निधाय तत्। विनिःसृतैश्च[2] तत्पृष्ठाद्बिन्दुभिर्मार्जयेत्तथा॥ ९॥
यादिक्षान्तैर्व्यापकार्णैस्ततस्तज्जलमादरात्। इडायाकृष्य देहान्तः क्षालयेत् कल्मषं ततः॥१०॥
विरेच्य पिङ्गलामार्गात् कृष्णवर्णं तु तज्जलम्। ज्वलद्वज्रशिलायां तु स्फालयेदस्त्रमुच्चरन्॥११॥
ततः प्रक्षाल्य च करावाचम्याञ्जलिना जलम्। गृहीत्वोत्थाय गायत्र्या सूर्याभिमुखमुत्क्षिपेत्॥१२॥
एवमर्घ्यत्रयं दत्त्वा चोपविश्य प्रयत्नतः। श्रीचक्रावृतिदेवीश्च तर्पयेद्विधिवत् पुनः॥ १३॥
पञ्चविंशतिधा मूलमुच्चार्य स्वेष्टदेवताम्। सन्तर्प्याचम्य गायत्र्या प्राणायामत्रयं चरेत्॥ १४॥

---

१. 'संग्राह्य' क. पाठः। २. 'सुतै' क. पाठः।

गायत्र्याश्च ऋषिर्ब्रह्मा गायत्रं छन्द ईरितम्। गायत्री देवता प्रोक्ता द्विरावृत्त्या त्रिभिः पदैः॥ १५॥
षडङ्गानि प्रविन्यस्य ध्यायेद् देवीमनन्यधीः। भास्वद्रत्नौघमुकुटस्फुरच्चन्द्रकलाधराम्॥ १६॥
सद्यःसन्तप्तहेमाभां सूर्यमण्डलरूपिणीम्। पाशाङ्कुशाभयवरान् धारयन्तीं स्मरन् बुधः॥ १७॥

इति। कुलार्णवे—

प्रातः सन्ध्यामुपासीत धर्मकामार्थसिद्धये। मूलाधारे वसाब्जे च ह्रींबीजं रक्तसन्निभम्[1]॥ १॥
ध्यात्वा प्रभापुटान्तःस्थं[2] बहिर्निःसार्य्य मण्डले। सौरे विभाव्य रक्ताभां त्रिनेत्रां च चतुर्भुजाम्॥२॥
वह्निमण्डलमध्यस्थां कुमारीरूपधारिणीम्। बिभ्राणां पुस्तकं मालां वरदं चाभयं तथा॥ ३॥
बालसूर्यसमामम्बां[3] ध्यात्वैवं सञ्जपेन्मनुम्। अथ माध्यन्दिने सन्ध्यानाहते च कठाब्जके॥ ४॥
ह्रींबीजं शुक्लसकाशं ध्यात्वा निःसार्य पूर्ववत्। सूर्यमण्डलमध्यस्थां त्रिनेत्रां शुक्लविग्रहाम्॥५॥
आरूढयौवनां चक्रं शङ्खं पद्मं गदां तथा। बिभ्राणां च तथा ज्येष्ठां ध्यात्वैवं सञ्जपेन्मनुम्॥ ६॥
अथ सायन्तनी संध्या भ्रूमध्ये ह्क्षपद्मके। ह्रींबीजं कृष्णवर्णं तु ध्यात्वा निःसार्य पूर्ववत्॥ ७॥
सोममण्डलमध्यस्थां कृष्णवर्णां चतुर्भुजाम्। बिभ्राणामभयं शूलं कपालीं तर्जनीं तथा॥ ८॥
वामे दक्षे च बिभ्राणां चित्रां नेत्रत्रयान्विताम्। विचित्राभरणां रौद्रीं ध्यात्वैवं सञ्जपेन्मनुम्॥ ९॥
अष्टबीजानि चोच्चार्य वाग्भवं कुटमुच्चरेत्। वागीश्वर्यै विद्महे च कामकूटं ततोच्चरेत्॥ १०॥
कामेश्वर्यै धीमहीति शक्तिकूटं ततः परम्। तन्नः शक्तिःपदं प्रोक्त्वा व्याहरेच्च प्रचोदयात्॥ ११॥
बीजपञ्चकमुच्चार्य गायत्र्येषा समीरिता। मूलविद्यां ततो जप्त्वा गुह्यातीति निवेदयेत्॥ १२॥

इति सन्ध्याविधानम्। सङ्क्षेपसन्ध्या तु तन्त्रान्तरे— "सायं प्रातश्च मध्याह्ने देवीं ध्यात्वा मनुं जपेत्" इति सन्ध्यात्रयमावश्यकम्। तथा कुलार्णवे—

सन्ध्यालोपो न कर्तव्यः शम्भोराज्ञैवमेव हि। दीक्षितः सन्ध्यया हीनो न दीक्षाफलमश्नुते॥ १॥
न कुर्याद्यदि तां[4] सन्ध्यां पतितो[5] दशधा जपेत्। अन्यसन्ध्यासमे काले सौत्रकण्टकिविद्यया॥२॥
कृत्वा षडङ्गमन्त्रेण ध्यायेत् तां सौत्रकण्टकीम्। षड्वक्त्रां द्वादशभुजां त्रिनेत्रां परमेश्वरीम्॥ ३॥
गलादूर्ध्वं श्वेतवर्णां पीतां गलतलादधः। कट्यादिपादपर्यन्तं नीलाभां च ततः स्मरेत्॥ ४॥
द्विरष्टवर्षां रक्ताङ्गीं सर्वश्रृङ्गारचर्चिताम्। स्वर्णरत्नप्रभाभिश्च मण्डिताभिः (लि) सहस्त्रिकाम्॥५॥
मोचिनीं सर्वपापानां रक्तसिंहासने स्थिताम्। तदूर्ध्वं श्वेतपद्मं च तदूर्ध्वं श्वेतकेसरम्॥ ६॥
तत्पृष्ठे संस्थितां देवीं त्रिखण्डागुणमण्डिताम्[6]। रत्नमुकुटोज्ज्वलां दिव्यां सन्ततां नादपूरिताम्॥७॥
हसद्वक्त्रां महादेवीं दक्षिणोदयगामिनीम्। महासमययागाय[7] नित्यनिष्कलगामिनीम्॥ ८॥
पञ्चप्रणवमुच्चार्य वाग्भवं परदुष्करम्। कर्मच्छेदनकारीति अघोरे वरदे तथा॥ ९॥
विच्चे मायापदं प्रोक्त्वा त्रैलोक्यपदमुद्धरेत्। रूपेति च पदं प्रोक्त्वा सहस्रपरिवर्तिनी॥१०॥

---

१. 'संभवम्' क.ग. पाठः। २. 'स्थे' क. पाठः। ३. 'मानाभां' क.ख.ग. पाठः। ४. 'पतितां' क. पाठः। ५. 'ते' क. पाठः। ६. 'गुह' ग. पाठः। ७. 'मागाय' ग. पाठः।

मातृगणे पदं चानु हस्त्रूं प्रणवपञ्चकम् । लुप्तसन्ध्यामहापापनिवृत्त्यर्थमिमं जपेत् ।। ११।।
दशवारं ततो जप्यान्मूलमन्त्रं यथाविधि। स्वयं ज्योतिर्मयो भूत्वा मूलविद्यां हृदि स्मरन्।।१२।।
पूजार्थं जलमादाय यागमण्डपमाविशेत्। इति।

ज्ञानार्णवे—

सर्वशृङ्गारवेषाढ्यः कर्पूरघुसृणादिभिः। महामृगमदोद्दामलिप्ताङ्गः कुङ्कुमारुणः।। १।।
नवरत्नविभूषाढ्यो रक्ताम्बरविराजितः। ताम्बूलरागवदनो मादनानन्दमानसः।। २।।
यागमन्दिरमागत्य लाक्षारसविचित्रितम्। अनेकधूपबहुलं पुष्पसम्भारपूरितम्।। ३।।
गोमयेन च संलिप्तं[१] चारुपुष्पविराजितम्। इति।

दक्षिणामूर्तिसंहितायाम्—

अथ यागगृहं यायादलङ्कारविभूषितम्। अनेकचित्रसुभगं भूमौ गोमयचर्चितम्।। १।।
उपरिष्टाल्लसत्पुष्पवितानं धूपधूपितम्। दीपमालावलीरम्यविकीर्णकुसुमोज्ज्वलम्।।२।।

इति यागमण्डपम्।

तारं वज्रोदकं हुंफट्स्वाहामन्त्रेण देशिकः । जलेनासनमभ्युक्ष्य तदुपर्युपविश्य च।। ३।।
तारं माया विशुद्धेति सर्वपापानि चोच्चरेत्। शमयाशेषेति ततो विकल्पमपनेति च।। ४।।
य हूमिति च मन्त्रेण हस्तौ पादौ च क्षालयेत्। ॐह्रींस्वाहेति मन्त्रेण त्रिराचम्याङ्गने[२] ततः।।५।।
उपविश्य ततः सौरपूजां कुर्याद्यथाविधि। इति।

कुलार्णवे— ''प्राङ्मुखः प्राङ्गणे पूर्वे यजेन्मार्तण्डभैरवम्।।'' इति। शम्भुनिर्णये—

चतुरन्वयसिद्ध्यर्थं सौरपूजेयमीरिता । तद्विचार्य चिदादित्यपूजां कर्तुं सुखासने ।। १।।
प्राङ्मुखः प्रत्यगासीनः समस्निग्धमहीतले। सामान्यार्घ्यं[३] च वामे स्यात् प्रणवान्पञ्च चोच्चरेत्।।२।।
मण्डलोच्चा (द्धा) रणं कुर्यादिति साधारणं मतम्। भूताङ्गुलं च वेदास्रं षट्कोणं चोर्ध्वरिखिकम्।।३।।
विलिख्य तस्मिन् साधारपात्रमस्त्रविशोधितम्। संस्थाप्य पयसापूर्याधारपात्रजलेषु च।। ४।।
वह्न्यर्कसोमबीजैस्तु तथा चात्मविभावितम्। एवं[४] निष्पाद्य षट्दीर्घं द्वितीयप्रणवात्मकम्[५]।। ५।।
अङ्गं तस्य विधायैवं शङ्खं संस्थाप्य देशिकः। बहच्छ्वासकराग्रेण पुरतः सौरमण्डलम्।। ६।।
वक्ष्यमाणेन मन्त्रेण कस्तूरीचन्दनादिभिः। इति।

ऐंह्रींश्रीं हसखफ्रें हसौः चन्द्रसूर्याग्निगर्भ स्फुर स्फुर धर्मार्थकाममोक्षलाभं कुरु कुरु महाखेचरीमुद्रां प्रकटय प्रकटय शाम्भवाज्ञया चतुरन्वयानां सिद्धिसामर्थ्यादि[६] दद दद किच किच किलि किलि फ्रें मण्डलब्रह्माण्डमण्डल हस्त्रूं महाचण्डशिवे स्हफ्रें ५ँ।

अनेन मन्त्रेणाभ्यर्च्य वृत्ताष्टदलपद्मकम्। मण्डलं चतुरस्रं तु कृत्वा संस्थाप्य चाग्रतः।। ७।।
सामान्यं च विशेषार्घ्यं मण्डलं विलिखेद् बुधः। दक्षे सौरार्घ्यपूजार्थे मण्डलं चतुरस्रकम्।। ८।।
कृत्वाऽधारंतुसंस्थाप्य पूजयेदमुनाणुना।

१.'प्य' ग. पाठः २.'णे' क. पाठः। ३.'र्घं' क. पाठः। ४.'सर्वं' ग. पाठः। ५.'दिकम्' ख. पाठः। ६. 'दिकं' ख. पाठः।

इति। ५ँ ऐं पात्रासादनाय नमः ऐं ५ँ। "तत्रास्त्रक्षालितं पात्रं धूपितं स्थापयेद्बुधः" ५ँ क्लीं ६ँ।

इति मन्त्रेण चार्घ्यं तु पूजयेच्छुद्धवारिणा। हौंबीजेन च[1] षट्दीर्घस्वरसम्भेदितेन च॥ ९॥

अष्ट पद्मानि[2] निक्षिप्य रक्तपुष्पैः समर्चयेत्। अस्त्रेण रक्षां सङ्कल्प्य स्वात्मानमधिधारयेत्॥ १०॥

अथाष्टपद्ममध्ये तु ध्यात्वा प्रेतस्वरूपिणम् । अनन्तमर्चयेत्तत्र शयानं[3] मनुनामुना॥ ११॥

'५ँ अनन्ताय नमः अं ५ँ।'

तल्पीकृतस्वयं देहं छत्रीकृतफणात्रयम्। फणिनामीश्वरं श्वेतं ध्यात्वा सम्पूजयेत्ततः॥ १२॥

अग्नीशासुरवायव्येष्वस्त्रिषु क्रमतो यजेत्।

५ँ हूंहूंफ्रें प्रबन्धनाथाय हूंहूंहं ५ँ। ५ँ यंरलं त्रिमूर्तये ५ँ। ५ँ यं अर्घ्याय यं ५ँ। ५ँ परमसुखाय हं ५। ५ हं

देहस्याकाशमध्यस्थं ह्रींबीजं रक्तसन्निभम्। वहत्पुटाद्विनिःसार्यानन्तं प्रेतात्मकासनम्॥ १३॥

आवाह्य तद्बीजमयं ध्यायेन्मार्तण्डभैरवम्। ध्यानम्—

रक्तवर्णं स्थूलदेहं षड्वक्त्रमूर्ध्वकेशिकम् । भुजद्वादशसंयुक्तं सर्पास्थिरत्नचर्चितम्॥ १४॥

क्रोधिनं चोर्ध्वलिङ्गं च ज्वलद्रश्मिसमाकुलम्। व्याघ्रचर्मपरीधानं मुण्डमालाविभूषितम्॥ १५॥

हुंहुंकारं प्रमुञ्चन्तं संहरन्तं महाशिनाम्[4] । त्रिशूलासिचक्रखड्गसृणिवरदपाणिकम् ॥ १६॥

तर्जाशोकगदाचापपाशाभयकरालिनम् । आवाहनादिमुद्राश्च सन्दर्श्याभ्यर्च्य साधकः॥ १७॥

ह्वामादिकमतश्चाङ्गं कृत्वा मार्तण्डभैरवे। ततः पुष्पाञ्जलिं सार्घ्यं समन्त्रं च निवेदयेत्॥ १८॥

५ँ ह्रौं हस्रौः श्रीकुलमार्तण्डभैरवाय ह्रौं हस्रौः ५॥

पश्चात् सम्प्रोक्ष्य चात्मानं जपेन्मन्त्रमिमं पुनः। पुष्पाञ्जलिं क्षिपेत् सम्यक्सवित्रे सर्व[5]साक्षिणे॥ १९॥

५ँ हस्रौः क्ष्रौं हस्रौः फट् खफ्रें भां फट् हस्रौः ५ँ क्षों हस्रौः फट् खफ्रेभां ५ँ। इति पुष्पाञ्जलिमन्त्रः।

मुद्रे च शूलतर्जन्यौ त्रिधाङ्क्षां हरिणीमपि। कृत्वाङ्गुलिप्रदर्श्य तु पूर्वाद्यष्टदलेषु च॥ २०॥

मध्ये च शूलतर्जन्यौ दधानं चण्डरोचिषम्। नव शक्तीर्यजेत्तत्र भैरवानपि पूजयेत्॥ २१॥

५ँ जूं ज्वालायै जूं ५ँ। ५ँ क्षां मित्रीशायै क्षां ५ँ। ५ँ हुंफट् चण्डालिन्यै हुंफट् ५ँ। ५ँ सौः भीषणायै सौः ५ँ। ५ँ ऐं नारसिंहायै ऐं ५ँ। ५ँ ह्रीं कमलादेव्यै ह्रीं ५ँ। ५ँ फ्रें मार्तण्डायै फ्रें ५ँ। फ्रें कपालिन्यै फ्रें ५ँ। ५ँ सौः कौलिन्यै सौः ५ँ॥ अथ भैरवमन्त्राः—५ँ फ्रें चण्डाय फ्रें ५ँ, एवं विश्वेशाय, महादेवाय, महाकालाय, गभस्तीशाय, चण्डेशाय, तैजसाय, मार्तण्डाय।

मुद्रां च खेचरीं बद्ध्वा लयाङ्गं भोगमङ्गकम्। ह्वामादिकं विधायैव दूर्वारक्तप्रसूनकैः॥ २२॥

सम्पूज्य धूपदीपादिनैवेद्यन्तार्घमन्त्रकम्। यथाशक्ति जपित्वा तु अर्घ्यमन्त्रेण तज्जपम्॥ २३॥

पूर्वोक्तमर्घ्यमन्त्रे च चिदादित्यहृदम्बुजे। दह दह कहकहात्मानं तदा समुद्धरेत् ॥ २४॥

निधायार्घ्यं च नैवेद्यं तेजोऽर्घ्यं च तथा बहिः। वामभागे लिखित्वा तु चतुरस्रं तु मण्डलम्॥ २५॥

तस्मिन् साधारपात्रे तु पशुमार्तण्डभैरवम्। अभ्यर्च्य च विधानेन तन्मन्त्रेणैव देशिकः॥ २६॥

---

१.'तु' ग. पाठः। २.'द्य' क. पाठः। ३.'शयने' ग. पाठः। ४.'महे' ख. 'महाशनम्'' ग. पाठः। ५.' ग. पाठः।

समर्प्याशेषिनिर्माल्यं तस्मै सर्वं निवेदयेत्।

ऍं ह्रां ह्रीं सः पशुमार्तण्डभैरवाय ऍं। इति सौरपूजा।। अथ मण्डपपूजा— आदौ मण्डपध्यानम्—

अमृताब्धौ मणिद्वीपे चिन्तयेन्नन्दनं वनम्। चम्पकाशोकपुन्नागपाटलैरुपशोभितम्।। २७।।
लवङ्गमालती[1] बिल्वदेवदारुनमेरुभिः। मन्दारपारिजाताद्यैः कल्पवृक्षैः सुपुष्पितैः।। २८।।
चन्दनैः कर्णिकारैश्च मातुलुङ्गैश्च[2] वञ्जुलैः। दाडिमीलकुचाङ्कोलैः पूगैः कुरुबकैरपि।। २९।।
कदलीकुन्दमन्दारनारिकेलैरलङ्कृतम्। अन्यैः सुगन्धिपुष्पाढ्यैर्वृक्षषण्डैश्च मण्डितम्।। ३०।।
मालतीमल्लिकाजातीकेतकैः शतपत्रकैः। पारन्तीतुलसीनन्द्यावर्तैर्दमनकैरपि ।। ३१।।
सर्वर्तुकुसुमोपेतैर्लसद्भिरुपशोभितम् । मन्दमारुतसम्भिन्नकुसुमामोदिदिङ्मुखम् ।। ३२।।
तस्य मध्ये परज्योतिःस्वरूपो मेरुपर्वतः। तस्य मध्ये सदा फुल्लैः कुमुदोत्पलपङ्कजैः।।३३।।
सुगन्धिकैश्च कह्लारैर्नवैः कुवलयैरपि । हंससारसकारण्डभ्रमरैश्चक्रनामभिः ।। ३४।।
अन्यैः कलकलाराव[3] विहङ्गैरुपशोभितम्। महासरसि तन्मध्ये पुलिनेऽतिमनोहरे।। ३५।।
परितः पारिजाताढ्यं महाकल्पतरुं स्मरेत्। नीपोपवनमध्यस्थं नानापुष्पसुपुष्पितम्।। ३६।।
नानारत्नफलाकीर्णं छायाश्रितजगत्त्रयम् । उद्भूतरत्नच्छायाभिररुणीकृतभूतलम्।। ३७।।
उद्यद्दिनकरेन्दुभ्यामुद्भासितदिगन्तरम्। ऋतुभिः सेवितं षड्भिरनिशं प्रीतिवर्द्धनम्।। ३८।।
परामृताख्यमधुभिः सिञ्चन्तं मण्डपं मुहुः। तस्याधस्तान्महावेदि[4]र्माणिक्यैकविनिर्मिता।। ३९।।
वज्रप्राकारसन्दीप्ता शतयोजनविस्तृता। तन्मध्ये चिन्तयेद् दीप्तं मण्डपं मणिकुट्टिमम्।।४०।।
उद्यदादित्यसङ्काशं भास्वरं शशिशीतलम्। चतुर्द्वारसमायुक्तं हेमप्राकारशोभितम्।। ४१।।
रत्नोपक्लृप्तसंशोभिकपाटाष्टकशोभितम् । नवरत्नसमाक्लृप्ततुङ्गगोपुरतोरणम्।। ४२।।
हेमदण्डसमालम्बिध्वजावलिपरिष्कृतम् । नवरत्नसमाबद्धस्तम्भराजिविराजितम्।। ४३।।
सहस्रदीपसंयुक्तदीपमण्डलराजितम् । तप्तहाटकसंक्लृप्तवातायनमनोहरम् ।। ४४।।
नानावर्णांशुकाबद्धसुवर्णशतकोटिभिः। किङ्किणीमालिकायुक्तपताकाभिरलङ्कृतम्।। ४५।।
हेमकुम्भावलीरम्यनानाचित्रविचित्रितम् । जातरूपमयै रत्नखचितैरतिविस्तृतैः।। ४६।।
माणिक्यरत्नवैडूर्यस्वर्णमालावलीयुतैः। अन्तरान्तरसम्बद्धरत्नैर्दृष्टिमनोहरैः।। ४७।।
विचित्रैश्चित्रवर्णैश्च वितानैरुपशोभितम्। सर्वरत्नसमायुक्तहेमकुट्टिममुज्ज्वलम्।। ४८।।
केतकीमालतीजातीचम्पकोत्पलकेसरैः। मल्लिकातुलसीयूथीनन्द्यावर्तकदम्बकैः।।४९।।
एतैरन्यैश्च कुसुमैरलङ्कृतमहीतलम् । रत्नसोपानसन्नद्धभूमिकाभिरुपस्कृतम् ।। ५०।।
चन्द्रकाश्मीरकस्तूरीमृगनाभितमालकैः । चन्दनागुरुकर्पूरैरादीपितदिगन्तरम् ।। ५१।।
पुष्पमालावलीरम्यमुक्ताश्रेणिविराजितम्। कर्पूरदीपभास्वन्तं माणिक्यदीपमण्डितम्।।५२।।

१. 'नी' क. पाठः। २. 'लिङ्गै' क. पाठः। ३. 'वैः' ग. पाठः। ४. 'दी' क. पाठः।

कल्पवृक्षतरुप्रान्तमन्तरारत्नवेदिकाम्[1] । रत्नसिंहासने नद्धं श्रीमच्छ्रीचक्रमण्डितम् ।। ५३ ।।
इन्द्रादिदेवतावृन्दैर्ब्रह्मविष्णुशिवादिभिः । अनेकयोगिनीवृन्दैरस्त्रदैवतकैरपि ।। ५४ ।।
संसेव्यमानपादाब्जयुग्मया तत्स्वरूपया। महात्रिपुरसुन्दर्याधिष्ठितं सर्वकामदम् ।। ५५ ।।
सुधासन्दोहकल्लोललोलितं मोक्षकामदम्। अनेकधूपबहुलं मण्डपं चिन्तयेत् सुधीः ।।५६ ।।
तन्मण्डपस्थमात्मानं ध्यायेन्नाकुलचेतसम्। भैरवोऽहमिति ज्ञात्वा सर्वज्ञादिगुणान्वितः ।।५७ ।।

इति श्रीमण्डपध्यानम् ।। अथ द्वारपूजा —

तत्र स्वर्णप्रकारस्य पूर्वद्वारेणान्तःप्रविश्य प्रादक्षिण्येन मणिमण्डपस्य पश्चिमद्वारं गत्वा तदारभ्य मणिमण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण मणिमण्डपान्तःप्रविश्य साधकः पूजयेद् देवीमिति क्रमस्तेनैव क्रमेण द्वारपूजनमित्यतो यागमण्डपस्य प्राकारसम्भवे तद्द्वाराश्रितः, तदसम्भवे यागमण्डपस्य पश्चिमद्वारे, मण्डपासम्भवे गोमयोपलिप्ताया यागभूमेः पश्चिमभागे क्वापि[2] स्थित्वा सामान्यार्घ्यं विधायैवं कल्पयित्वा क्रमेण पूजयेत्। कोटियोजनविस्तीर्णसुधार्णवान्तर्गतं कोटियोजनविस्तीर्णायतं महाद्भुतं नवरत्नमयं दीपं सहस्रादित्यतेजसं, तन्मध्यतृतीयांशे मदनोन्मादनं नाम नानापुष्पलताकुलं कदम्बकाननगर्भकं नन्दनोद्यानं, तन्मध्यतृतीयांशे कोटिसूर्यप्रतीकाशं ज्वलत्स्वर्णप्रकारवेष्टितं नानासुरभिशालितोरणद्वारं नानारत्नविमण्डितं परितः सेवायातेन्द्रादिगणसमाकुलं श्रीमण्डपं ध्यात्वा, सामान्यार्घ्योदकेनाभ्युक्ष्य पुष्पतोयाभ्यां क्रमेण पूजयेत् ।। ४ सुधार्णवाय नमः,४ नवरत्नमयद्वीपाय नमः, ४ नन्दनोद्यानाय नमः, ४ स्वर्णप्राकाराय नमः, तद्द्वारस्य दक्षिणोत्तरशाखयोरुपर्य्यधश्च पूजयेत्। ४ गां गणेशपादुकां पूजयामि, ४ क्षां क्षेत्रपालपादुकां पूजयामि, ४ द्वां द्वारश्रीपादुकां पूजयामि ४ दें देहलीश्रीपादुकां, पूजयामि। दक्षिणपादपुरःसरमन्तः प्रविश्याभ्यन्तरे प्रागाद्यष्टदिक्षु इन्द्रादिदिक्पालान् पूजयेत्। ततः पश्चिमभागे तिरस्करिणीं पूजयेत्। वृत्तत्रिकोणचतुरस्रमण्डलं विधाय, तत्र—

नीलं तुरङ्गमधिरुह्य सुशोभमानां नीलांशुकाभरणमाल्यविभूषणाढ्या।
निद्रापटेन भुवनानि तिरोदधाना खड्गायुधा भगवती परिपातु चास्मान् ।।

इति ध्यात्वा, ४ ऐं नमो भगवति माहेश्वरि पशुजनमनश्चक्षुस्तिरस्करणं कुरु २ स्वाहेति गन्धाक्षतकुसुमैः पूजयेत्। ततः ४ कदम्बवनाय नमः, ४ श्रीरत्नमण्डपाय नमः— इतिसम्पूज्य, तस्य द्वारदेवताः पूजयेत्। सौः अस्त्राय फडित्यनेन पश्चिमद्वारमभ्युक्ष्योर्ध्वशाखायां ४ मां महालक्ष्मीपा०, वामे ४ सां[3] सरस्वतीपा०, मध्ये ४ दुं दुर्गाश्रीपा०, ४ द्वां द्वारश्रीपा०। दक्षवामशाखयोः ४ शं शङ्खनिधिवसुधाराभ्यां नमः, ४ पद्मनिधिवसुमतीभ्यां नमः। ऊर्ध्वे दक्षे ४ नं विघ्नेशपा०, वामे ४ क्षं क्षेत्रेशपादुकां० तदूर्ध्वे च दक्षे ४ गां गङ्गापा०, वामे ४ यां यमुनापा०, तदूर्ध्वे दक्षे ४ धां धात्रे नमः, वामे ४ विं विधात्रे नमः, अधो देहल्यां ४ दें देहलीपा०, ४ वा वरुणपा० इति पश्चिमद्वारपूजा। ततः उत्तरद्वारं गत्वा तदूर्ध्वशाखायां ४वं वटुकनाथपा०, ४ द्वां द्वारश्रीपा०। ततः पूर्ववच्छङ्खनिधिसुधारादिदेहल्यन्तं सम्पूज्य, देहल्यग्रतः ४ कुं कुवेरपा० इति उत्तरद्वारपूजा।। ततः पूर्वद्वारं गत्वा तदूर्ध्वशाखायां ४ क्षौं क्षेत्रपालपा०, दक्षिणे ४ विं विघ्ननाथपा० ततः स्वस्माद्वामतः क्षेत्रपालस्य दक्षिणवामाग्रेषु महालक्ष्मीसरस्वतीद्वारश्रियः पूजयित्वा, शङ्खपद्ममिथुनादारभ्य देहल्यन्तं प्राग्वत् पूजयित्वा, देहल्यग्रतः ४ लां इन्द्रनाथपा० इति पूर्वद्वारपूजा।। ततो दक्षिणद्वारं गत्वाभ्युक्ष्य, तदूर्ध्वशाखायां ४ ग्लौं गणनाथपा०, ४ द्वां द्वारश्रीपादुकां पू०। दक्षवामशाखयोः कामदेववसन्तमिथुने

---

१ 'तल' ग. पाठः। २ 'वापि' क. पाठः। ३ 'स्वां' ख. पाठः।

प्रथमं पूजयेत्। तदूर्ध्वे शङ्खपद्ममिथुनादिदेहल्यन्तं सम्पूज्य, देहल्यग्रतः ४ यां यमनाथपा० इति दक्षिणद्वारपूजा॥ ततः पुनः पश्चिमद्वारं गत्वा वामपादपुरःसरं तत्तोरणान्तः प्रविश्यमणिमण्डपाभिमुखस्था मञ्चस्थदेवताः पूजयेत्। ४ रं रत्नसोपानाय नमः इति रत्नसोपानं पूजयित्वा, तदूर्ध्वे मञ्चस्थदेवता ध्यात्वा पूजयेत्। पश्चिमद्वारस्य पुरतो दक्षे ४ सां सरस्वतीपा०, वामे ४ मां महालक्ष्मीपा०, तयोर्मध्ये उपर्य्यधोऽग्रेषु गौर्य्यादयो मानवौघान्ताः पूज्याः। ४ गौं गौरीपा० ४ लों लोकधात्रीपा० ४ वां वागीश्वरीपा० ४ दिव्यौघश्रीपा० ४ सिद्धौघश्रीपा०, ४ मानवौघश्रीपा०। ततः पुनरुत्तरद्वारे प्राग्वन्मायादुर्गे गौर्यादिमानवौघान्तं पूजयेत्। ततः पूर्वद्वारि प्राग्वद्भद्रकालीस्वस्ती[1] गौर्य्यादिमानवौघान्तं पूजयेत्। ततो दक्षिणद्वारि स्वाहाशुभङ्करीदेव्यौ गौर्यादिमानवौघान्तं पूजयेत्। ततः पुनः पश्चिमद्वारं गत्वा, "पालितं बहिरिन्द्राद्यैः परमैश्वर्यशोभितम्। प्रपद्ये पश्चिमद्वारं भवान्या मन्दिरं महत्॥" इति ध्यात्वा। ४ पश्चिमद्वाराय रत्नमण्डपाय नमः, इति मण्डपं सम्पूज्य तालत्रयपूर्वकं द्वारमुद्घाट्य सिद्धार्थाक्षतकुसुमानि नाराचास्त्रप्रयोगेन "आं अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥" ह्रः अस्त्राय फडित्यन्तेन मण्डपान्तः प्रक्षिप्य तस्मान्निर्गच्छतां विघ्नसङ्घानां[2] वामाङ्गसंङ्कोचनेन मार्गे दत्त्वा त्रिविधविघ्नानुत्सारयेत्, देहल्यामेव मूलविद्यां वास्त्रमन्त्रं वा मनसा जपन् वामपार्ष्णिघातत्रयेण भौमान् तालत्रयेणान्तरिक्षगान् दिव्यदृष्ट्यवलोकनेन च दिव्यान् विघ्नानुत्सार्य, "ॐ पाखण्डकारिणो भूता भूमौ ये चान्तरिक्षगाः। दिव्यलोके स्थिता ये च ते नश्यन्तु शिवाज्ञया॥" इति पठित्वा, वामपादपुरःसरं देहलीं लङ्घयन् मण्डपान्तः "ततो मौनी विशुद्धात्मा हृदि देवीं परामृशन्। अबहिर्मनसो योगी यागभूमौविशेत्॥" इति द्वारपूजा॥ अत्र प्रतिद्वारं गमनासम्भवे पश्चिमद्वार एवं स्थित्वा तत्तद्द्वाराणि कल्पतित्वा पूजयेत्। पश्चिमद्वारमेवेति केचित्। अथ द्वारदेवतानां ध्यानानि—

पद्मद्वयवराभीतिभास्वत्पाणिचतुष्टयाम्। पद्मवर्णां भजेत्पद्मां पद्माक्षीं पद्मवासिनीम्॥ १॥
अक्षस्रक्पुस्तकधरा पूर्णचन्द्रसमद्युतिः। विश्वविद्यामयी देवी भारती भासतां मयि॥ २॥
शङ्खचक्राङ्कितकरा कुमारी कुटिलालका। मृगेन्द्रवाहना देवी दुर्गा दुर्गाणि हन्तु मे॥ ३॥
तप्तकार्तस्वराभासा दिव्यरत्नविभूषिता। द्वारश्रीरूर्ध्वपद्मस्था वराभयकराम्बुजा॥ ४॥
मुक्तामाणिक्यसङ्काशौ किञ्चित्स्मितमुखाम्बुजौ। अन्योन्यालिङ्गनपरौ शङ्खपङ्कजधारिणौ॥ ५॥
विगलद्रत्नवर्षाभ्यां शङ्खाभ्यां मूर्ध्नि लाच्छितौ। शङ्खासनसमासीनौ विश्वसङ्कल्पकल्पकौ॥ ६॥
तुन्दिलं कम्बुकनिधिं वसुधारां घनस्तनीम्। वामतः पङ्कजनिधिं प्रियया सहितं यजेत्॥ ७॥
सिन्दूराभौ भुजाश्लिष्टौ रक्तपद्मोत्पलान्वितौ। निःसरद्रत्नवर्षाभ्यां पद्माभ्यां मूर्ध्नि लाच्छितौ॥८॥
पद्मासनसमासीनौ विश्वसङ्कल्पकल्पकौ। तुन्दिलं पङ्कजनिधिं तन्वीं वसुमतीमपि॥ ९॥
पलाशपाटलच्छायं रमणीयं रतिप्रियम्। पुण्ड्रेक्षुचापपुष्पेषुमन्तं वन्दे मनोभवम्॥ १०॥
प्रपद्ये प्रीतिदयितं पूर्णेन्दुसदृशप्रभम्[3]। वसन्तं नन्दनोद्याने वसन्तं सन्ततोत्सवम्॥ ११॥
पाशाङ्कुशारुणाम्भोजपाणिं पाटलतुन्दिलम्। वीरं विघ्नेश्वरं वन्दे गजवक्त्रं त्रिलोचनम्॥ १२॥

---

१ 'सरस्वती' क. पाठः। २ 'संघातानां' क. पाठः। ३ 'शं प्रभुम्' क. पाठः।

कपालशूले[1] बिभ्राणं कराभ्यां[2] कृष्णविग्रहम्। तीक्ष्णं त्र्यक्षं समर्चामि क्षेत्रेशं क्षतविद्विषम्।। १३।।
वराभयकरां सौम्यां सोमकोटिसमप्रभाम् । भजे गङ्गां महादेव्याः पादोदकतरङ्गिणीम्।। १४।।
वामपादार्घसम्भूतां परदेव्यास्तरङ्गिणीम् । वराभयकरां वन्दे कालिन्दीं कालविग्रहाम्।। १५।।
भर्तारं जगतां वन्दे शङ्खचक्रगदाम्बुजम् । बिभ्राणां गरुडारूढं धातारं कृष्णविग्रहम्।। १६।।
रक्तं रक्तारविन्दस्थं वराभयकमण्डलुम् । हंसारूढं विधातारं वन्देऽक्षस्रक्समन्वितम्।। १७।।
सिंहारूढां श्यामलाङ्गीं खड्गखेटकधारिणीम्। अधस्तादेहलीं वन्दे पश्चिमास्यां स्वरक्षिणीम्[3] ।।१८।।
पाशाभयधरं वन्दे पूर्णेन्दुसदृशच्छविम् । वरुणं मकरारूढं द्वारे श्रीपाददैवतम्[4] ।। १९।

इति पश्चिमद्वारे।।

करकलितकपालः कुण्डली दण्डपाणिस्तरुणतिमिरनीलो व्यालयज्ञोपवीती।
क्रतुसमयसपर्याविघ्नविच्छेदहेतुर्जयति वटुकनाथः सिद्धिदः साधकानाम्।।२०।।
धूम्रवर्णो गदाहस्तः कुवेरो नरवाहनः। सौम्यद्वाराधिपः पायात् परदेव्या धनेश्वरः।। २१।।
व्यालव्यग्रजटाधरं त्रिनयनं नीलाञ्जनाद्रिप्रभं
दोर्दण्डात्तकपालभालमरुणस्रग्वस्त्रगन्धोज्ज्वलम्।
घण्टाघुर्घुरमेखलध्वनिमिलद्धाङ्कारभीमं विभुं
वन्देऽहं सितसर्पकुण्डलधरं[5] तं क्षेत्रपालं सदा।।२२।।
सितो गजास्यः परशुं दन्तं पाशं त्रिशूलकम्। भुजैश्चतुर्भिर्बिभ्राणो मूषकोपरि संस्थितः।। २३।।
पूर्वद्वाराधिपः शक्रः परदेव्याः सुपीतकः। वज्रहस्तः सहस्राक्षः पायादैरावतध्वजः ।। २४।।
गणेशं श्यामवर्णं च चतुर्बाहुं दिगम्बरम् । वामदक्षोर्ध्वबाहुभ्यां पाशाङ्कुशधरं तथा।।२५।।
दक्षिणाधःकरेणैव मधुपूर्णं कपालाम् । दधानं वामहस्तेन देव्या मदनमन्दिरम् ।। २६।।
स्पृशन् वामाङ्कसंस्थाया रक्ताया दक्षपाणिना। आत्मयोनौ न्यस्य लिङ्गं पद्मं वामेन पाणिना।।२७।।
दधत्याः शुण्डया योनिं जिघ्रन् ध्यात्वा प्रपूजयेत्। नीलाञ्जनचयप्रख्यं यमं महिषवाहनम्।।२८।।
दण्डमण्डितदोर्दण्डं दक्षद्वाराधिपं स्मरेत्। इति।

अथ मञ्चस्थदेवताध्यानम्—

अक्षस्रक्पुस्तकाभीतीर्दधानां बाहुभिर्वरम्। त्रिलोचनां स्मरेद्देवीं सर्वशुक्लां सरस्वतीम्।। १।।
पद्मद्वयवराभीतिभास्वत्पणिचतुष्टयाम् । निर्दग्धहेमगौराङ्गीं महालक्ष्मीं त्रिलोचनाम् ।। २।।
पाशाङ्कुशवराभीतीर्बिभ्रतीमरुणप्रभाम्। त्रिनेत्रां मातरं वन्दे गौरीं रक्ताम्बरोज्ज्वलाम् ।।३।।
नत्युत्पलवराभीतीर्बिभ्रतीं काञ्चनप्रभाम्। मातरं दिव्यरत्नाङ्गीं लोकधात्रीं नमाम्यहम् ।।४।।
श्वेतां श्वेताम्बरां श्वेतभूषणस्रग्विलेपनाम् । पद्मद्वयवरादर्शकरां वागीश्वरीं भजे।। ५।।

---

१.'पाणौ कृपाणं' ख. पाठः। २.'कपालं' ग. पाठः। ३.'स्वरूपिणीम्' ग. पाठः। ४.'ते' क.ख.ग. पाठः। ५.'हंसक' क. पाठः।

वराङ्कुशौ पाशमभीतिशूलं करैर्दधानां भवभावमूलम्[१]।
घनाघनौघप्रभदेहकान्तिं मायां त्रिनेत्रामनिशं स्मरामि॥६॥
शङ्खचक्रधनुर्बाणान् धारयन्तीं त्रिलोचनाम्। दूर्वादलनिभां वन्दे दुर्गां दुर्गतिहारिणीम्॥ ७॥
कपालं खेटकं खड्गं त्रिशूलं बिभ्रतीं करैः। भिन्नाञ्जनचयप्रख्यां भद्रकालीं नमाम्यहम्॥ ८॥
शक्तिस्वस्तिकमुद्राभीहस्तां चन्द्रसमप्रभाम्। त्रिनेत्रां संस्मरेद् देवीं स्वस्तिं स्वस्तिकरीं पराम्॥९॥
रक्तोत्पलद्वन्द्ववराभयानि करैर्वहन्तीं स्मितशोभिवक्त्राम्।
रक्तां त्रिनेत्रामरुणाम्बराढ्यां स्वाहां भजे देवगणैकवन्द्याम्॥ १०॥
शालिकल्पलताशार्ङ्गबाणपाणिचतुष्टया। ज्वलत्काञ्चनवर्णाभा शुभं कुर्याच्छुभङ्करी॥ ११॥

इति ध्यानानि॥ ततो मण्डलमध्ये ब्रह्मणे नमः, गृहेशानाय२ नमः, नैर्ऋत्यां वास्तुपुरुषाय नमः इति सम्पूज्य "ॐ रक्ष रक्ष हुंफट्स्वाहा" इति भूमिमभ्युक्ष्य "ॐ पवित्रवज्रभूमे रक्ष रक्ष हुंफट्स्वाहा" इति भूमिमभिमन्त्र्य "आः सुरेखे वज्ररेखे हुंफट्स्वाहा" इति भूमौ विलिख्य, तदुपर्यासनमास्तीर्य, ब्रह्मविष्णुरुद्रेश्वरसदाशिवान् पूर्वादिचतुर्दिक्षु मध्ये च सम्पूज्य, तदुपरि त्रिकोणं सञ्चिन्त्य, कोणत्रये मध्ये च कामरूपपूर्णगिरिजा- लन्धरोड्यानपीठानि सम्पूज्य "ॐ ह्रीं आधारशक्तिकमलासनाय नमः" इति मन्त्रेणासनं सम्पूज्य, तस्मिन् प्राङ्मुखो वोदङ्मुखो वोपविश्याथवा मातृकामण्डलं ध्यात्वा तदुपर्य्यपविश्य भूमिं प्रार्थयेत्। "ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्। मां च पूतं कुरु धरे नतोऽस्मि त्वां सुरेश्वरि।" ॐ पृथिव्या मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसने विनियोगः। ओं प्रणवस्य ब्रह्मा ऋषिर्गायत्री छन्दः परमात्मा देवता प्राणायामे विनियोगः। ततः प्राणायामत्रयं कृत्वा शिरसि, दीपनाथाय नमः। दक्षभुजे, गं गणपतये नमः, गणानां त्वा०। वामे दुं दुर्गायै नमः, ओं जातवेदसे०। दक्षजानुनि, क्षं क्षेत्रपालाय नमः ओं क्षेत्रस्य पतिना वयं०। वामजानुनि, सं सरस्वत्यै नमः, प्रणो देवी सरस्वती०। ततः श्रीगुरुभ्यो नमः परमगुरुभ्यो नमः परमेष्ठिगुरुभ्यो नमः इति नमस्कृत्य। ततः "पार्ष्णिघातकरास्फोटसमुदञ्चितवक्त्रकैः। पातालभूनभोलीनान् विघ्नानुत्सारयेद् बुधः।" इति विघ्नानुत्सार्य। "उक्तपाशुपतास्त्रेण वामहस्ततलं द्विधा। मणिबन्धं समारभ्य संस्पृष्टं दक्षपाणिना॥ प्रमृज्य दक्षिणं पाणिं सकृदेवोक्तमार्गतः।" इति करशुद्धिं विधाय दिग्बन्धं कुर्यात्। तद्यथा— लं इन्द्राय नमः इन्द्रदिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा। "ॐ सुदर्शनाय विद्महे महाज्वालाय धीमहि तन्नश्चक्रं प्रचोदयात्"३। "उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्। नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्॥" एवं दशदिग्बन्धनं कृत्वा, रं अग्निप्राकाराय नमः। सहस्रार हुँफट् सुदर्शनाग्निप्राकाराय नमः। ओंह्रीं स्फुर स्फुर प्रस्फुर २ घोर घोरतर तनुरूप चट २ प्रचटप्रचट कहकह वमवम बन्धय बन्धय घातय घातय हुंफट् अघोराग्निप्राकाराय नमः इति जलेनाग्निप्राकारत्रयं कुर्यात्।

त्रिरग्निवेष्टनं कृत्वा गणेशं पञ्चमीं ततः। दुर्गां विघ्नं च शरभमघोरं च सुदर्शनम्॥ १॥
एताः समयविद्याश्च जपेत् प्रत्यूहशान्तये। एवं रक्षां पुरा कृत्वा भूतशुद्धिमथाचरेत्॥२॥

एते मन्त्रा उद्धारपटले बोद्धव्याः। तन्त्रान्तरे—

---

१. 'भवमूलभूताम्' ग. पाठः। २. 'शाय' ग. पाठः।

स्थापयेद् दक्षिणे भागे पूजाद्रव्याणि देशिकः। सुवासिताम्बुसम्पूर्णं सव्ये कुम्भं सुशोभनम्॥ १॥
प्रक्षालनाय करयोः पश्चात् पात्रं निवेशयेत्। घृतप्रज्वालितान् दीपान् स्थापयेत् परितः शुभान्॥२॥

इति। कुलचूडामणौ—

नानाविधानि पुष्पाणि गन्धानि विविधानि च। कर्पूरजातिधूपादिवासितं पटवासितम्॥ १॥
ताम्बूलं देवद्रव्याणि धूपदीपादिकं च यत्। सर्वालङ्कारभूषादि वस्त्रादीनि कुलेश्वरः[१]॥ २॥
मूलमन्त्रजप्ततोयैः संशोध्य स्थापयेत् ततः। सर्वं स्वदक्षिणे स्थाप्यं वामे चार्घ्यं निवेशयेत्॥३॥
पश्चिमे देवतायाश्च कुलद्रव्याणि धारयेत्।

इति। तत्रैव— 'ॐ पुष्पकेतुराजार्हते सर्वगताय सम्यक् संबद्धाय ॐ पुष्पे पुष्पे महापुष्पे सपुष्पे पुष्पसम्भवे पुष्पावचायसङ्कीर्ण हुँफट् स्वाहा' इति मन्त्रेण पुष्पादिशोधनम्। 'ओं रक्षरक्ष हुँफट्स्वाहा' इति मन्त्रेण हृदि हस्तं दत्त्वात्मरक्षां कुर्यात्। ततः प्रणवेन प्राणायामत्रयं कृत्वा भूतशुद्धिं कुर्यात्।

शरीराकारभूतानां भूतानां यद्विशोधनम्। अव्ययब्रह्मसम्पर्काद् भूतशुद्धिरियं मता॥ ४॥
सुषुम्नावर्त्मनात्मानं परमात्मनि योजयेत्। योगयुक्तेन विधिना चिन्मन्त्रेण समाहितः॥ ५॥

इति। चिन्मन्त्रेण परमात्ममन्त्रेणेत्यर्थः। ओंह्रींहंसः सोहस्वाहा इति मन्त्रेण पूर्वोक्तमूलाधारादिषट्चक्राणि विचिन्त्य हृदयचक्रस्थितं जीवात्मानं मनसा सह सुषुम्नावर्त्मना कुलकुण्डलिनीं जीवात्मना सह ब्रह्मरन्ध्रस्थपरमशिवपदे योजयामि स्वाहा, इदं लिङ्गशरीरं शोधयामि स्वाहा इति जीवात्मना मनोदण्डेनाहत्य हुंबीजेनाकुञ्चिताधो— वायुनाऽधोवह्नेर्विवृद्धोष्मणा तां जारयित्वा सुषुम्नान्तर्वर्तिचित्राख्यनाडीमध्यमार्गेण षटचक्रभेदक्रमेण स्थानार्णदैवतैः सह संहारयोगतो ब्रह्मरन्ध्रस्थसहस्रदलकमलकर्णिकास्थचन्द्रमण्डलान्तरस्थिते परमशिवे लीनां चिन्तयेत्। ततः पादादिजानुपर्यन्तं पृथिवीस्थानं पीतवर्णं चतुरस्राकारं ब्रह्मदैवत्यं निवृत्तिकलात्मकं तन्मध्ये लंबीजे पञ्चोद्घातप्रयोगेण जले संलापयामि। जान्वादिलिङ्गपर्यन्तं जलस्थानं शुक्लवर्णं पद्मलाञ्छितार्द्धचन्द्राकारं विष्णुदैवत्यं प्रतिष्ठाकलात्मकं तन्मध्ये वंबीजं चतुरुद्घातप्रयोगेण तेजसि संलापयामि। लिङ्गादिनाभिपर्यन्तं तेजःस्थानं रक्तवर्णं त्रिकोणाकारं रुद्रदैवत्यं विद्याकलात्मकं तन्मध्ये रंबीजं त्रिरुद्घातप्रयोगेण वायौ संलापयामि। नाभ्यादिहृदयपर्यन्तं वायुस्थानं धूम्रवर्णं षट्कोणाकारं षड्बिन्दुलाञ्छितमीश्वरदैवत्यं शान्तिकलात्मकं तन्मध्ये यंबीजं द्विरुद्घातप्रयोगेणाकाशे संलापयामि। हृदयादिकण्ठपर्यन्तमाकाशस्थानं स्वच्छवर्णं वृत्ताकारं सदाशिवदैवत्यं शान्त्यतीताकलात्मके तन्मध्ये हंबीजमेकोद्घातप्रयोगेणाहङ्कारं संलापयामि। कण्ठादिभ्रूमध्यपर्यन्तम्अहङ्कारस्थानं त्रिवर्णं दण्डाकारमादिशिवदैवत्यं सर्वकलात्मकं तन्मध्ये हंसःबीजं सर्वोद्घातप्रयोगेण महत्तत्वे संलापयामि। भ्रूमध्यादिभालपर्यन्तं महत्तत्त्वस्थानं श्वेतवर्णं अर्धचन्द्राकारमानन्दशिवदैवत्यं कलास्वरूपं तन्मध्ये सोहंबीजमर्धो— द्घातप्रयोगेण प्रकृतौ संलापयामि। भालादिसमन्तपर्यन्तं प्रकृतिस्थानं बालार्कवर्णं योन्याकारमानन्दशिवदैवत्यं कलास्वरूपं तन्मध्ये हंबीजम् आद्यौद्घातप्रयोगेण पुरुषे संलापयामि। सीमन्तादिब्रह्मरन्ध्रपर्यन्तं पुरुषस्थानमुद्दीप्तवर्णं लिङ्गाकारं चैतन्यदैवत्यं निष्कलं तन्मध्ये नादाक्षरं बीजं परबिन्दुस्वरूपं निरुद्घातप्रयोगेण चिच्छक्तौ संलापयामि। ब्रह्मरन्ध्रं चिच्छक्तिस्थानं कर्पूरवर्णं सहस्रारम् आनन्ददैवत्यं निराकारस्वरूपं तन्मध्ये ह्रीबींजं संहारध्यानप्रयोगेण परब्रह्मशिवात्मकं चिदानन्दघनं चिन्तयामि, इति विभाव्य, ॐ पृथिव्यप्तेजोवाय्वाकाशगन्धरसरूपस्पर्शशब्द— घ्राणरसनाचक्षुस्त्वक्श्रोत्रपादोपस्थपायुपाणिवागगमनानन्दविसर्गादानवचनाहङ्कारमनोबुद्धिचित्तविकल्पसङ्कल्पव्यव—

सायनिश्चयजीवात्मपरमात्माभिधसमस्तत्त्वात्मकं प्रपञ्चस्वरूपं स्थूलसूक्ष्मशरीरद्वयं संहारक्रमेण पृथिवीम— प्स्वपस्तेजसि तेजो वायौ वायुमाकाशे आकाशमहङ्कारे अहङ्कारं महति महान्तं प्रकृतौ प्रकृतिं पुरुषे पुरुषं परमशिवे संयोजयामि स्वाहा, इदं स्थूलशरीरं शोधयामि स्वाहा, इति सस्थानानि साक्षराणि सकार्याणि सकारणानि[1] सदैवतानि साङ्गोपाङ्गानि स्थूलानि सूक्ष्माणि च सर्वाणि तत्त्वानि स्वस्वकारणेषु संहारक्रमेण लीनानि कृत्वा सहस्रदलकमलपरमशिवे बीजभावेन लीनानि चिन्तयेत्। परमशिवं च चिच्छक्त्यात्मकमानन्दघनं विनिवेश्य निर्मलधिया निर्लीनसर्वेन्द्रियो योगी यागफलं प्रयाति, सततं नित्योदितं निष्क्रियमेवं क्रमेण सच्चिदानन्दमयः क्षणं तिष्ठेत्, इति संहारक्रमः।। अथ पापपुरुषचिन्तनम्—

वामकुक्षिगतं पापपुरुषं कज्जलप्रभम्। ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम्।। १।।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् । तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।। २।।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् । खड्गचर्मधरं क्रूरं पापमेवं विचिन्तयेत्।। ३।।

इति ध्यात्वा, "यं पापशरीरं शोषय२ शोश्यामि स्वाहा" यंबीजं धूम्रवर्णं षोडशवारं जपन् वामनासया वायुमापूर्य तदेव चतुष्षष्टिवारं जपन् कुम्भकयोगेन हृदयादुद्गतेन षट्कोणादागतेन महावायुना पापपुरुषं शुष्कं विचिन्त्य, तदेव बीजं द्वात्रिंशद्वारं जपन् दक्षिणनासया वायुं रेचयेत् "रं शुष्कपापशरीरं दाहय २ दाहयामि स्वाहा" रंबीजं रक्तवर्णं षोडशवारं जपन् पिङ्गलया वायुमापूर्य तदेव चतुःषष्टिवारं जपन् कुम्भकयोगेन नाभेरुदितेन त्रिकोणादागतेन महता वह्निना पापपुरुषं दग्धं विचिन्त्य, तदेव द्वात्रिंशद्वारं जपन् इडया वायुं रेचयेत्। "टं चन्द्रमण्डलं प्रेरय २ प्रेरयामि स्वाहा" टमिति चन्द्रबीजं शुक्लवर्णं १६ वारं जपन् इडया वायुमापूर्य ६४ वारं जपन् कुम्भकयोगेन सहस्रारमध्ये महामृतौघपूरितं विश्वाह्लादकं चन्द्रबीजं विचिन्त्य ३२ वारं जपन् पिङ्गलया रेचयेत्। "वं परमामृतं वर्षय २ वर्षयामि स्वाहा" वमिति वरुणबीजं शुक्लवर्णं १६ वारं जपन् पिङ्गलया वायुमापूर्य ६४ वारं जपन् कुम्भकयोगेन तस्माच्चन्द्रबिम्बान्मातृकामयीं महावृष्टिमुत्पाद्य तदस्थिश्मशानादिकमाप्लावितं विचिन्त्य ३२ वारं जपन् इडया वायुं रेचयेत्। "लं शरीरमुत्पादय २ उत्पादयामि स्वाहा" लमिति पृथिवीबीजं पीतवर्णं १६ वारं जपन् इडया वायुमापूर्य ६४ वारं जपन् कुम्भकयोगेन ॐ परमात्मजीवात्मचित्तबुद्धिमनोऽहङ्कारनिश्चयव्यवसायसङ्कल्पविकल्पवचनादानविसर्गानन्द-गमनवाक्पाणिपायूपस्थपादश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणशब्दस्पर्शरूपरसगन्धाकाशवायुतेजोजलपृथिव्याख्यसमस्ततत्त्वात्मकं प्रपञ्चरूपं स्थूलसूक्ष्मशरीरद्वयं सृष्टिक्रमेण पृथग्भूताभ्यां परमशिवचिच्छक्तिभ्यां निरुत्पत्तिप्रयोगेण पुरुषं, पुरुषादाद्योत्पत्तिप्रयोगेण प्रकृतिं, प्रकृतेरर्द्धोत्पत्तिप्रयोगेण महान्तं, महतः सर्वोत्पत्तिप्रयोगेणाकाशमाकाशाद् द्विरुत्पत्तिप्रयोगेण वायुं, वायोस्त्रिरुत्पत्तिप्रयोगेण तेजस्तेजसश्चतुरुत्पत्तिप्रयोगेण जलं, जलात्पञ्चोत्पत्तिप्रयोगेण पृथिवीं, पृथिव्याः षड्उपत्तिप्रयोगेणोत्पादयामि स्वाहा—इति सस्थानानि साक्षराणि सकारणानि सकार्याणि सदैवतानि साङ्गोपाङ्गानि स्थूलानि सूक्ष्माणि च सर्वाणि तत्त्वानि सृष्टिक्रमेण परशिवशक्तिसकाशात् स्वस्वकारणेभ्य उत्पादितानि कृत्वा, पादादुद्गतया चतुरस्रादागतया महत्या पृथिव्या उपष्टभ्य देवतापूजायोग्यं नवं पुण्यशरीरमुत्पादितं विचिन्त्य, तत्त्वानि च निजस्थानेषु स्थितानि कृत्वा, तदेव लंबीजं द्वात्रिंशद्वारं जपन् पिङ्गलया वायुमापूर्य ६४ वारं जपन् इडया वायुं रेचयेत् इति षट् प्राणायामा भवन्ति। "आत्मानं हृदयाम्भोजादानयेत्परमात्मनः। मनुना हंसदेवस्य कुर्यान्न्यासादिकं ततः।। ॐ हंसः सोऽहं अवतरावतर शिवपदात् जीवपदेन सुषुम्नावर्त्मना मूलशृङ्गाटमुल्लसोल्लस ज्वलज्ज्वल

१. 'सक' क. ख. पाठः।

प्रज्वलप्रज्वल ॐ हंसः सोहं इति कुण्डलिनीरूपधारिणीं चिच्छक्तिं जीवात्मना सह सृष्टियोगेन स्थानार्णदैवतैः सह सुषुम्नान्तर्वर्तिचित्राख्य- नाडीमध्यमार्गेण षट्चक्रभेदक्रमेण ब्रह्मरन्ध्रतो मूलाधारमानीय स्थापयेत्, मूलाधारात् जीवात्मानं हृदिस्थं चिन्तयेदिति भूतशुद्धिः॥

अथ प्राणप्रतिष्ठा। ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः, ऋग्यजुःसामानि छन्दांसि, चैतन्यरूपा प्राणशक्तिर्देवता, ओं बीजं, ह्रीं क्रों कीलकं प्राणस्थापने विनियागः, इति यथास्थानं विन्यस्य, अंकंखंगंघंङंआं आकाशवायुतेजोजलपृथिव्यात्मने अङ्गुष्ठाभ्यां नमः। इंचंछंजंझंञं ईं शब्दस्पर्शरूपरसगन्धात्मने तर्जनीभ्यां नमः। उंटंठंडंणंऊं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यां नमः। एंतंथंदंधंनंऐं वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यां नमः। ओंपंफंबंभंमंऔं वचनादानविसर्गानन्दगमनात्मने कनिष्ठिकाभ्यां नमः। अंयंरंलंवंशंषंसंहंळंक्षंअः चित्तबुद्धिमनोऽहङ्कारात्मने करतलकरपृष्ठाभ्यां नमः। एभिरेव जातियुक्तैः षडङ्गानि। आंनमः नाभेश्चरणपर्यन्तं, ह्रींनमः हृदयान्नाभिपर्यन्तं, क्रोंनमः मूर्धादिहृदयपर्यन्तं। यं त्वगात्मने नमः, रं असृगात्मने नमः। लं मांसात्मने नमः, वं मेदात्मने नमः, शं अस्थ्यात्मने नमः, षं मज्जात्मने नमः, सं शुक्रात्मने नमः, हं प्राणात्मने नमः ळं जीवात्मने नमः, क्षं परमात्मने नमः। एवं विन्यस्य प्राणशक्तिं ध्यायेत्।

रक्ताब्धिपोतारुणपद्मसंस्था पाशाङ्कुशाविक्षुशरासबाणान्।
शूलं कपालं दधतीं कराब्जै रक्तां त्रिनेत्रां प्रणमामि देवीम्॥ १॥

इति ध्यात्वा। ॐ ऐंह्रींश्रींओंआंह्रींक्रोंयंरंलंवंशंषंसंहोंसोहंहंसः श्रीमन्महात्रिपुरसुन्दर्याः प्राणा इह प्राणाः, ३० जीव इह स्थितः, ३० सर्वेन्द्रियाणि, ३० वाङ्मनश्चक्षुस्त्वक्श्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति ज्ञानमुद्रया हृदि हस्तं दत्वा वारत्रयं पठेत्। ओं आंहंसः इति सर्वानन्दमयं देहं दृढं चिन्तयेत्, (अन्तर्बहिःस्थ) प्रधानदेवतात्मकमात्मानं चिन्तयेदिति प्राणप्रतिष्ठा॥

॥ इति श्रीमहामहोपाध्यायभगवत्पूज्यपादश्रीगोविन्दाचार्यशिष्य-श्रीभगवच्छङ्कराचार्यशिष्य-
श्रीविष्णुशर्माचार्यशिष्य-श्रीप्रगल्भाचार्यशिष्य-श्रीविद्यारण्ययति-
विरचिते श्रीविद्यार्णवाख्ये तन्त्रे पञ्चमः श्वासः॥५॥



अथ

# श्रीविद्यार्णवतन्त्रे

## षष्ठः श्वासः

अथ मातृकान्यासः– "ततो देहस्य सन्नाहं सम्यक् न्यासं समाचरेत्।"

अन्तर्बहिःस्थाश्च कलायुताश्च श्रीकण्ठविष्ण्वादिसमन्विताश्च।

लज्जारमाकामपृथक्समूहाः प्रपञ्चयागो दश मातृकाः स्युः।। १।।

गुदात्तु द्व्यङ्गुलादूर्ध्वं सुषुम्नासूक्ष्मरन्ध्रगम्। वादिवेदार्णलसितं पङ्कजं कनकप्रभम् ।। २।।

तत्स्थां विद्युल्लताकारां तेजोरूपामणीयसीम्। कुलकुण्डलिनीमूर्ध्वं नयेत् षट्चक्रभेदतः।। ३।।

द्वादशान्तेन्दुमध्यस्थं पूर्वोक्तं मातृकाव्रजम्। नवनीतनिभं ध्यात्वा द्रुतं कुण्डलिनीत्विषा।। ४।।

तेजोञ्जलौ[१] विनिःसार्य मातृकान्यासमाचरेत्।।

ततोऽकारादिषट्स्वरान् करतलकरतत्पृष्ठव्याप्तिक्रमेण विन्यस्यावशिष्टदशस्वरान् दशस्वङ्गुलीषु विन्यस्य आदिक्षान्तमातृकामुच्चरन् करशुद्धिं कुर्यात्। यथा– "प्रकोष्ठे मणिबन्धे च कूपरि करयोस्तले। तत्पृष्ठे च तदग्रे च करशुद्धिरुदाहृता"।। इति मातृकाकरशुद्धिः। अथान्तर्मातृकान्यासः– तत्र स्वरैः पूरकं स्पर्शैः कुम्भकं व्यापकैः रेचकमिति क्रमेण प्राणायामत्रयं कृत्वा, अस्या अन्तर्मातृकायाः ब्रह्मा ऋषिः, गायत्री छन्दः, श्रीमातृकासरस्वती देवता, हलो बीजानि, स्वराः शक्तयः, जाताव्यक्तिः कीलकं मम शरीरशुद्ध्यर्थे न्यासे विनियोगः, इति विन्यस्य "अंकंखंगंघंङंआं हृदयाय नमः" इत्यादिना प्राग्वत् षडङ्गानि विन्यस्य ध्यायेत्। तथा संहितायाम्–

अथ वक्ष्ये महेशानि मातृकां लोकमातरम् । अकारादिक्षकारान्तवर्णावयवदेवताम् ।। १।।

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्रं छन्द उच्यते। मातृका देवता देवि हलो बीजानि शक्तयः।। २।।

स्वरास्तु परमेशानि जाताव्यक्तिस्तु कीलकम्। अनिर्वाच्या हलो वर्णाः शक्त्या व्यक्ता भवन्ति हि।। ३।।

शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते। असद्रूपा हलो वर्णाः शक्त्यासन्नाः पराङ्मुखाः।।४।।

स्फुरन्मात्रास्तदोच्चार्य्याः सम्मुखा व्यक्तवर्णकाः। ऋॠऌॡ परित्यज्य षड्युग्मस्वरमध्यगाः।। ५।।

वर्गाः[२] षट् च क्रमेणैव सप्तमः क्रोधसंयुतः। अन्ते निक्षिप्य देवेशि षडङ्गानि प्रविन्यसेत्।। ६।।

कलापत्राम्बुजे कण्ठे स्वरान् सम्यक् प्रविन्यसेत्। हृद्यर्कपत्रे तद्वर्णान्नाभौ दशदले न्यसेत्।। ७।।

दशवर्णांल्लिङ्गमध्ये षड्दले षडथेश्वरि। चतुर्दले तथाधारे चतुर्वर्णांस्ततो न्यसेत्।। ८।।

भ्रूमध्ये द्विदले हक्षौ इत्यन्तर्मातृकां न्यसेत्। इति।

---

१. 'ततो' ग. पाठः। २. 'वर्णाः' क. ग. पाठः।

तन्त्रान्तरे—

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के।
वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणां
हंक्षंतत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि।। १ ।।

इति ध्यात्वा न्यसेदित्यन्तर्मातृका।। अथ बहिर्मातृका— ऋष्यादिन्यासं प्राग्वद् विन्यस्य ध्यायेत्।

ध्यायेद्वर्णस्वरूपाढ्यां स्वरवक्त्रां क्रमेण हि। कचवर्गकरां रम्यां टतवर्गपदाम्बुजाम्।। १ ।।
पवर्गचारुपार्श्वाङ्गलसच्छातोदरीं पराम् । यशवर्गाङ्गसुभगा[1] पीनोन्नतघनस्तनीम् ।। २ ।।
नितम्बिनीं च गहनां शुकाक्षीं क्षाममध्यमाम्। शुक्लमाल्याङ्गरागाङ्गीं शुक्लांशुकसुशोभिताम्।।३ ।।
चिन्तालिखितसत्पाणिं समग्रवरदायिनीम्। इति ध्यात्वा।
ब्रह्मरन्ध्रे तथा वक्त्रवेष्टने नयनद्वये। श्रुतिनासापुटद्वन्द्वगण्डोष्ठद्वयेषु च।। १ ।।
दन्तयुग्मे च मूर्धास्यद्वये षोडश विन्यसेत्। दोःपत्सन्धिषु साग्रेषु पार्श्वयुग्मे न्यसेत् क्रमात्।।२ ।।
पृष्ठनाभिद्वये चैव जठरे विन्यसेदथ । त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः।। ३ ।।
प्राणजीवौ च परमौ यकारादिषु संस्थिताः। क्रमेण देवदेवशि न्यस्तव्या एतदात्मकाः।। ४ ।।
हृद्दोर्मूलेषु संन्यस्य तथा परगले न्यसेत्। कक्षद्वये हृदारभ्य पाणिपादयुगे तथा ।। ५ ।।
जठराननयोर्न्यसेदित्यन्तर्गात्ररूपिणी। अनेन न्यासयोगेन मन्त्री वर्णस्वरूपवान् ।। ६ ।।

इति बहिर्मातृका। अथ सृष्टिमातृका— "केवलां मातृकां न्यस्य ब्रह्मचारी भवेद्यदि। विसर्गसहितां तां च सृष्टिसंज्ञां न्यसेद्बुधः"।। इति सृष्टिमातृका। अथ स्थितिमातृका— "केवलां मातृकां न्यस्य गृहस्थः साधको यदि। विसर्गबिन्दुसहितां डकाराद्यां[2] स्थितिं न्यसेत्"।। ध्यानं तु—

सिन्दूरकान्तिममिताभरणां त्रिनेत्रां विद्याक्षसूत्रमृगपोतवरान् दधानाम् ।
पार्श्वस्थितां भगवतीमपि काञ्चनाभां[3] ध्यायेत् कराब्जधृतपुस्तकबर्णमालाम्।। १ ।।

इति ध्यात्वा, डंः नमः इत्यादि बिन्दुविसर्गसहितान् ठकारावसानान् वर्णांस्तत्तत्स्थानेषु न्यसेदिति स्थितिमातृका।।
अथ संहारमातृका— "केवलां मातृकां न्यस्य वानप्रस्थोऽथवा यतिः। बिन्दुयुक्तां विलोमेन संहारमातृकां न्यसेत्।।"
ध्यानं तु—

अक्षस्रजं हरिणपोतमुदग्रटङ्कं विद्यां करैरविरतं[4] दधतीं त्रिनेत्राम्।
अर्धेन्दुमौलिमरुणामरविन्दवासां वर्णेश्वरीं प्रणमत स्तनभारनम्राम्।। १ ।।

इति ध्यात्वा। क्षं नम इत्यादिबिन्दुसहितान् विलोमतस्तत्तद्वर्णांस्तत्तत्स्थानेषु न्यसेदिति संहारमातृका।।

अथ कलामातृका—

केवलां मातृकां न्यस्य तारभक्तो भवेद्यदि। प्रणवांशकलायुक्तां मातृकां विन्यसेत् सुधीः।। १ ।।

---

१. 'गां'ग. पाठः। २. 'तामकारा' ग. पाठः। ३. 'नाङ्गीं' ग. पाठः। ४. 'रैश्च विततं' ग. 'रैरविततं' ख. पाठः।

प्रजापतिर्ऋषिः प्रोक्तो गायत्रं छन्द ईरितम्। कलासरस्वती देवी देवता परिकीर्तिता।।२।।
ओं बीजं च नमः शक्तिः कीलकं तु कलाः स्मृताः। प्रणवद्वयमध्यस्थैर्विषण्ढैर्दीर्घसुस्वरैः।।३।।
षडङ्गानि प्रविन्यस्य ध्यायेद् देवीं परां शिवाम्। अथ ध्यानम्—

हस्तैः पद्मं रथाङ्गं गुणमथ हरिणं पुस्तकं वर्णमालां
टङ्कं शुभ्रं कपालं दरं[1]ममृतलसद्धेमकुम्भं वहन्तीम्।
मुक्ताविद्युत्पयोदस्फटिकनवजपाबन्धुरैः पञ्चवक्त्रै-
स्त्र्यक्षैर्वक्षोजनम्रां सकलशशिनिभां शारदां तां नमामि।। १।।

इति ध्यात्वा "ओं अंनिवृत्तिकलायै नमः" इत्यादिमातृकास्थानेषु न्यसेदिति कलामातृका।।

अथ श्रीकण्ठादिमातृका—

केवलां मातृकां न्यस्य शिवभक्तो भवेद्यदि। श्रीकण्ठादिशक्तियुक्तां मातृकां विन्यसेत् सुधीः।।१।।
ऋषिस्तु दक्षिणामूर्तिश्छन्दो गायत्रमीरितम्। अर्धनारीश्वरो देवो देवता परिकीर्तिता ।। २।।
हसौं बीजं नमः शक्तिः शिवशक्तिस्तुः कीलकम्। षड्दीर्घयुक्तबीजेन षडङ्गानि प्रविन्यसेत्।।३।।

बन्धूककाञ्चननिभं रुचिराक्षमालां पाशाङ्कुशौ च वरदं निजबाहुदण्डैः।
बिभ्राणमिन्दुशकलाभरणं त्रिनेत्रमर्धाम्बिकेशमनिशं वपुराश्रयामः।। ४।।

इति ध्यात्वा "हसौंअंश्रीकण्ठाय[2] पूर्णोदर्यै नमः" इत्यादि न्यसेदिति श्रीकण्ठादिमातृका।। अथ केशवादि- मातृकान्यासः—

केवलां मातृकां न्यस्य विष्णुभक्तो भवेद्यदि। केशवादिशक्तियुक्तां मातृकां विन्यसेद् बुधः।।१।।
प्रजापतिर्ऋषिः प्रोक्तो गायत्रं छन्द ईरितम्। अर्द्धलक्ष्मीहरिः साक्षाद् देवता परिकीर्तिता ।।२।।
कामबीजं तु बीजं स्यान्नमः शक्तिरुदाहृता। विष्णुलक्ष्मीः कीलकं तु विनियोगस्तु पूर्ववत्।।३।।
षड्दीर्घकामराजेन षडङ्गानि प्रविन्यसेत्।

हस्तैर्बिभ्रत् सरसिजगदाश[3]ङ्खचक्राणि विद्यां पद्मादर्शौ कनककलशं मेघविद्युद्विलासम्
वामोत्तुङ्गस्तनमविरलाकल्पमाश्लेषलोभादेकीभूतं वपुरवतु वः पुण्डरीकाक्षलक्ष्म्योः।। १।।

इति ध्यात्वा "क्लीं श्रीं अं केशवाय कीर्त्यै नमः" इत्यादि न्यसेदिति केशवमातृका।।

अथ शक्तिमातृकान्यासः—

केवलां मातृकां न्यस्य भुवनेशीं भजेद्यदि। भुवनेशीबीजपूर्वां मातृकां विन्यसेत् सुधीः।। १।।
ऋषिः शक्तिः समुद्दिष्टो गायत्रं छन्द ईरितम्। भुवनेशी मातृका स्याद् देवता देववन्दिता।।२।।
ह्रीं बीजं तु नमः शक्तिर्मूलप्रकृतिः कीलकम्। मायाषड्दीर्घकेनैव षडङ्गानि समाचरेत्।।३।।

उद्यत्कोटिदिवाकरप्रतिभटा[4]तुङ्गोरुपीनस्तनी
[5]मूर्धर्धेन्दुकिरीटहाररशनामञ्जीरसंशोभिता।

---

१. 'वरं' ग. पाठः। २. 'ण्डेशाय' क. पाठः। ३. 'बोतु' ग. पाठः। ४. 'ट्यत्त' ग. पाठः। ५. 'बद्धा' ग. पाठः।

विभ्राणा करपङ्कजैर्जपवटीं पाशाङ्कुशौ पुस्तकं
दिश्याद्वो जगदीश्वरी त्रिनयना पद्मे निषण्णा सुखम्।।४।।

इति ध्यात्वा, "ह्रीं अं नमः" इत्यादि न्यसेदिति भुवनेश्वरीमातृका। अथ लक्ष्मीमातृका—

केवलां मातृकां न्यस्य लक्ष्मीपूजारतो यदि। लक्ष्मीबीजसमायुक्तां मातृकां विन्यसेत् सुधीः।।५।।
ऋषिर्भृगुस्तु गायत्रं छन्दो लक्ष्मीस्तु मातृका। देवता श्रीं नमो बीजं शक्तिः प्रकृतिः कीलकम्।।६।।
षड्दीर्घलक्ष्मीबीजेन षडङ्गानि प्रविन्यसेत्।

विद्युद्दामसमप्रभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैः
शुण्डादण्डसमुद्धृतामृतघटैरासिच्यमानामिमाम्।
बिभ्राणां करपङ्कजैर्जपवटीं पद्मद्वयं पुस्तकं
भास्वद्रत्नसमुज्ज्वलां कुचनतां ध्यायेज्जगत्स्वामिनीम्।।७।।

इति ध्यात्वा, "श्रीं अं नमः" इत्यादि न्यसेदिति लक्ष्मीमातृका। अथ कामेश्वरीमातृका—

केवलां मातृकां न्यस्य कामेशीपूजको यदि। कामबीजेन संयुक्तां मातृकां विन्यसेत् सुधीः।।१।।
ऋषिः सम्मोहनश्छन्दो गायत्रं देवता स्मृता। कामेश्वरी च क्लीं बीजं नमः शक्तिस्तु कीलकम्।।२।।
षड्दीर्घकामबीजेन षडङ्गानि प्रकल्पयेत्।

बालार्ककोटिरुचिरां स्फटिकाक्षमालां कोदण्डमिक्षुजनितं स्मरपञ्चबाणान्।
विद्यां च हस्तकमलैर्दधतीं त्रिनेत्रां ध्यायेत् समस्तजननीं नवचन्द्रचूडाम्।।३।।

इति ध्यात्वा, "क्लीं अं नमः" इत्यादि न्यसेदिति कामबीजमातृका। अथ सम्मोहनीमातृका—

केवलां मातृकां न्यस्य त्रिपुराराधको यदि। शक्तिश्रीकामसंयुक्तां मातृकां विन्यसेत्सुधीः।। १।।
ऋषिः सम्मोहनश्छन्दो गायत्रं देवता मनोः। सम्मोहनी च क्लीं बीजं ह्रीं शक्तिः श्रीं च कीलकम्।।२।।
बीजत्रयद्विरावृत्या षडङ्गानि समाचरेत्।

ध्यायेयमक्षवलयेक्षुशरासपाशान् पद्मद्वयाङ्कुशशरान् नवपुस्तकं च।
आबिभ्रतीं निजकरैररुणां कुचार्तां सम्मोहनीं त्रिनयनां तरुणेन्दुचूडाम्।।३।।

इति ध्यात्वा, "ह्रींश्रींक्लींअंनमः" इत्यादि न्यसेदिति संमोहनीमातृका। प्रपञ्चयागस्तु प्रागेव प्रपञ्चितः। इति दशविधमातृकाः। "एते सामान्यतः प्रोक्ता सर्वत्र दशमातृकाः" इत्युक्तत्वात्। दुर्वासोवाक्यम्—

न्यासं कृत्वा गणेशग्रहभगणमहायोगिनीराशि[1]पीठैः
षड्भिः श्रीमातृकार्णैः सहितबहुकलैरष्टवाग्देवताभिः।
सश्रीकण्ठादियुग्मैर्विमलनिजतनौ केशवाद्यैश्च तत्त्वैः
षट्त्रिंशद्भिर्धराद्यैर्भगवति भवतीं यः स्मरेत्स त्वमेव।।१।। इति।

१. 'शक्ति' ग. पाठः।

(स च वर्णमातृका—कलामातृका—मूर्तिमातृका—प्रपञ्चयागमातृकान्यासाख्यः सङ्ग्रहश्चतुर्विधः[1]) तत्र वर्णमातृकान्यासो दशविधः श्रीविद्याङ्गभूतः। तथा चोक्तम्—

शुद्धं बिन्दुयुतं विसर्गसहितं हल्लेखया संश्रितं
बालासम्पुटितं तथा च परया श्रीविद्ययालङ्कृतम्।
आरोहादवरोहतश्च कुरुते न्यासं पुनर्हंसयो—
र्यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकृत्॥२॥ इति।

अथ बालासम्पुटितमातृकान्यासः—

ऋषिस्तु दक्षिणामूर्तिः पङ्क्तिश्छन्द उदाहृतम्। तथा वर्णमयी बाला देवता परिकीर्तिता॥ १॥
वाग्भवं बीजमाख्यातं तार्तीयं शक्तिरुच्यते। कामराजं कीलकं स्याच्छ्रीविद्याङ्गतया पुनः॥२॥
न्यासे तु विनियोगः स्याद्बालाबीजत्रयेण तु। द्विरावृत्त्या क्रमेणैव षडङ्गन्यासमाचरेत्॥३॥
मुक्ताशेखरकुण्डलाङ्गदमणिग्रैवेयहारोर्मिकां विद्योतद्वलयादिकङ्कणकटीसूत्रां स्फुरन्नूपुराम्॥
माणिक्योदरबन्धुरस्तनभरामिन्दोः कलां बिभ्रतीं पाशं साङ्कुशपुस्तकाक्षवलयं दक्षोर्ध्वबाह्वादितः॥
पूर्णेन्दुप्रतिमप्रसन्नवदनां नेत्रत्रयोद्भसितामिन्दुक्षीरवलक्षगात्रविलसन्माल्यानुलेपाम्बराम्।
पञ्चाशल्लिपिजृम्भिताखिलजगद्वाग्देवतां देवतां मूलाधारसमुद्गतां भगवतीं वर्णाम्बुजे चिन्तयेत्॥

"ओंऐंह्रींश्रींऐंक्लींसौः अं सौःक्लींऐं" इत्यादि न्यसेदिति बालासम्पुटितमातृकान्यासः॥ अथ परासम्पुटित— मातृकान्यासः—

ऋषिर्ब्रह्मा समुद्दिष्टो गायत्रं छन्द ईरितम्। परासरस्वती देवी मातृका देवता स्मृता॥ १॥
षड्दीर्घपरया चैव षडङ्गानि समाचरेत्। अकलङ्कशशाङ्काभां त्र्यक्षां चन्द्रकलावतीम्॥२॥
मुद्रापुस्तलसद्बाहुं प्रणमामि परां कलाम्।

"४ सौः अंसौः इत्यादि न्यसेदिति परामातृका॥ अथ श्रीविद्यामातृकान्यासः—

ऋषिस्तु दक्षिणामूर्तिश्छन्दः पङ्क्तिरुदाहृता। देवता मातृकारूपा महात्रिपुरसुन्दरी॥ १॥
कूटत्रयद्विरावृत्त्या षडङ्गानि समाचरेत्।

आरक्ताभां त्रिनेत्रां मणिमुकुटवतीं रत्नताटङ्करम्यां
हस्ताम्भोजैः सपाशाङ्कुशमदनधुनःसायकैर्विस्फुरन्तीम्।
आपीनोत्तुङ्गवक्षोरुहतटविलुठत्तारहारोज्ज्वलाङ्गीं
ध्यायन्नम्भोरुहस्थामरुणनिवसनामीश्वरीमाश्रयामि॥ १॥

इति ध्यात्वा "४ मूलं अं नमः शिरसीत्यादि" न्यसेदिति श्रीविद्यामातृका॥ अथ हंसमातृका—

ऋषिस्तु दक्षिणामूर्तिश्छन्दो गायत्रमुच्यते। हरगौरीमहादेवी मातृका देवता स्मृता॥ १॥
हसा षड्दीर्घयुक्तेन षडङ्गन्यासमाचरेत्।

---

१. 'इदं धनुश्चिह्नान्तर्गतं' क. संज्ञके नास्ति।

उद्यद्भानुस्फुटिततडिदाकारमर्धाम्बिकेशं पाशाभीती वरदपरशू सन्दधानं कराब्जैः।।
दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं सौम्याग्नेयं वपुरवतु वश्चन्द्रचूडं त्रिनेत्रम्।। १।।

इति ध्यात्वा, "४ हंसः अंनमः शिरसी"त्यादि न्यसेदिति हंसमातृका।। अथ परमहंसमातृका—

ऋषिः परमहंसः स्याद् विराट् छन्द उदाहृतम्। चिन्मयी देवता प्रोक्ता परमात्मस्वरूपिणी।। १।।
प्रणवद्वयमध्यस्थवर्गैः कुर्यात् षडङ्गकम्।
श्रीमत्परात्ममनुजृम्भितवर्णरूपां मानैरगम्यपदवीपरि[1]चीयमानाम्।
विद्याक्षसूत्रकलशं दधतीं च मुद्रां ध्यायेत् समस्तजननीं विशदां त्रिनेत्राम्।।२।।

इति ध्यात्वा, ४ सोहं क्षंनमः" इत्यादि विलोमेन तत्तत्स्थानेषु न्यसेदिति परमहंसमातृका।। अथ कलान्यासः। स तु पञ्चविधः। तारोत्थकला० कामकला० सोमकला० त्रिमूर्तिकला० अष्टात्रिंशत्कलान्यासश्चेति। अष्टात्रिंशत्कलान्यासोऽपि द्विविधः, ज्योतिरष्टात्रिंशत्कला० शिवाष्टात्रिंशत्कलान्यासश्चेति। तारोत्थकलान्यासस्तु प्रागेवोक्तः। विशेषस्तु—

ताराद्यवर्णसंयुक्ता न्यस्तव्यस्ता नमोन्विताः। स्थानेष्वेतेष्वथ पुनर्मातृकायाः कला न्यसेत्।। १।।
तारस्य पञ्चभेदेभ्यः पञ्चाशद्वर्णगाः कलाः। स्वरकलान्यासोत्तरम्—
सदाशिवेन सञ्जाता नादादेताः सितत्विषः। अक्षस्रक्पुस्तककराः कपालाढ्यकराम्बुजाः।। १।।

इति ध्येयाः। कचवर्गकलान्यासोत्तरम्—

अकाराद् ब्रह्मणोत्पन्नास्तप्तचामीकरप्रभाः। कराम्बुजधृताक्षस्रक्पङ्कजाभयकुण्डिकाः।। १।।

इति ध्येयाः। टतवर्गकलान्यासोत्तरम्—

उकाराद्विष्णुनोत्पन्नास्तमालदलसन्निभाः । अभीतिदरचक्रेष्टबाहवः परिकीर्तिताः।। १।।

इति ध्येयाः। पयवर्गकलान्यासोत्तरम् —

ईश्वरेणोदिता बिन्दोर्जपाकुसुमसन्निभाः । उद्वहन्त्योऽभयं शूलं कपालं बाहुभिर्वरम्।। १।।

इति ध्येयाः। षवर्गकलान्यासोत्तरम्—

ईश्वरेणोदिता बिन्दोर्जपाकुसुमसन्निभाः। अभयं हरिणं टङ्क[2] दधाना बाहुभिर्वरम्।। १।।

इति ध्येयाः इति। विशेषार्चा तु पात्रासादनप्रकरणे वेदितव्या[3]। अथ ज्योतिरष्टात्रिंशत्कलान्यासः— "४ अं अमृतायै नमः शिरसि" इत्यादिस्वरकलाः क्रमेण विन्यसेत्। ततो दक्षहस्तसन्ध्यग्रेषु "४ कंभं तपिन्यै नमः" इत्यादि "ङनं ज्वालिन्यै नमः" इत्यन्तं विन्यस्य, वामहस्तसन्ध्यग्रेषु "४ चधं रुच्यै नमः" इत्यादि "ञणं बोधिन्यै नमः" इत्यन्तं विन्यस्य, दक्षपादसन्ध्यग्रेषु "४ टढं धारिण्यै नमः" इत्यादि "४ लं ज्वलिन्यै नमः" इत्यन्तं विन्यसेत्। ततो वामपादसन्ध्यग्रेषु "४ वं ज्वालिन्यै नमः" इत्यादि "४ हं कपिलायै नमः" इत्यन्तं विन्यस्यावशिष्टकलाद्वयं मस्तके व्यापकं च कुर्यादित्यष्टात्रिंशत्तेजःकलान्यासः। अन्ये कलान्यासा अग्रे वक्ष्यन्ते। एतदुत्तरं प्रपञ्चयागः इति श्रीमदाचार्यमतं, स तु प्रागुक्तरीत्यावगन्तव्यः। तस्य फलम्—

एवं वर्णमयं होमं कृत्वा दिव्यतनुर्नरः। प्रजपेत् सकलान् मन्त्राँस्ततः सिद्धिमवाप्नुयात्।। १।।

---

१. 'पदवीं परि' ख. पाठः। २. 'खेटं' ग. पाठः। ३. 'विशेषः। ऋचस्तु'........बोद्धव्याः' क.ग. पाठः।

प्रपञ्चयागस्य विधेर्विधाता भवेत्स मन्त्री कृतकृत्य एव।
सर्वे स्फुरन्तः प्रभवन्ति मन्त्राः सदात्मयागीति निगद्यते सः॥ २॥
एतस्य होमस्य न कोटिभागभागेन तुल्यं ध्रुवमग्निहोत्रम्।
एवं विधातुः खलु यत्र तत्र शरीरपातेऽपि[1] भवेद्विमुक्तिः॥ ३॥

तथा च प्रपञ्चसारः— (७ प० ५१ श्लो०)

शुद्धश्चापि सबिन्दुकस्त्वथ कलायुक्केशवाद्यैस्तथा श्रीकण्ठादियुतश्च शक्तिकमलामारैस्तथैकैकशः।
न्यासास्ते दशधा पृथङ्निगदिताः स्युर्ब्रह्मयागान्तिकाः सर्वे साधकसिद्धिसाधनविधौ सङ्कल्पकल्पद्रुमाः॥

प्रपञ्चयागस्तु विशेषतो विपत्प्रपञ्चसंसारविशेषपावकः।
परं च नित्यं भजतामयत्नतः परस्य चार्थस्य निवेदकः सदा॥ २॥

न्यस्य मन्त्री यथान्यायं देहे विश्वस्य मातरम्। जपेन्मन्त्रान् भजेद्देवान् यजेदग्निमनन्यधीः॥ ३॥
देवो भूत्वा यजेद्देवान्नादेवो देवमर्चयेत्। एवमाह श्रुतिः साक्षादतोऽग्रे विन्यसेद् बुधः॥ ४॥
यो न्यासकवचच्छन्नो मन्त्रं जपति तं प्रिये। विघ्ना दृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः॥५॥
अकृत्वा न्यासजातं यो मूढात्मा प्रजपेन्मनुम्। बाध्यते सर्वविघ्नैश्च व्याघ्रैर्मृगशिशुर्यथा॥ ६॥

इति सर्वे मातृकान्यासाः॥ अथ षट्त्रिंशत्तत्त्वन्यासः— ४ क्षं पृथिवीतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः, पादयोः। एवं लंअप्तत्त्वं लिङ्गे विलोमक्रमेण, तेजो हृदि, वायुः मुखे, आकाशं शिरसि, गन्धः पादयोः, रसो लिङ्गे, रूपं हृदि, स्पर्शो मुखे, शब्दः शिरसि, उपस्थो लिङ्गे, पायुः पायौ, पादः पादयोः, पाणिः पाण्योः वाक् मुखे, घ्राणं घ्राणयोः, जिह्वा जिह्वायां, चक्षुः चक्षुषोः, त्वक् सर्वाङ्गे, श्रोत्रं श्रोत्रयोः, मनो हृदि अहङ्कारो हृदि, बुद्धिः हृदि, प्रकृतिः सर्वगात्रे, पुरुषः सर्वगात्रे, रागो हृदि, विद्या हृदि, कला हृदि, नियतिः सर्वगात्रे, कालतत्त्वं सर्वगात्रे, माया हृदि, शुद्धविद्या हृदि, ईश्वरो हृदि, सदाशिवो ग्रीवायां, शक्तिर्मूलाधारे, शिवः सहस्रारे इति षट्त्रिंशत्तत्त्वन्यासः॥ अथ प्राणायामः—

इतिकृतेऽधिकृतो भवति ध्रुवं परमदैवतमन्त्रजपादिषु।
पवनसंयमनं त्वमुना चरेद्यमिह जप्तुमसौ मनुमिच्छति॥ १॥

इति वचनात्। "प्राणायामं विधायेत्थं योगपीठं न्यसेत्तनौ" इति वचनाच्च मूलविद्यया प्राणायामत्रयं कृत्वा योगपीठन्यासं कुर्यात्॥ तत्र प्राणायामविधिर्विविच्यते—तत्र प्राणानां शरीरादपि द्वादशाङ्गुलाधिकानामायामः। आयमनमायामः सङ्कुचितभावः शरीरसाम्यं शरीरान्न्यूनभावापादनं वेति प्राणायाम इत्यर्थः, अत एव पवनसंयमनमित्युक्तं। त्रिपुरासारसमुच्चये—

अथेदं शरीरं स्वकीयाङ्गुलीभिर्बुधैः षण्णवत्यङ्गुलायाममुक्तम्।
दिनेशाङ्गुलीभिः शरीरात् समीरोऽधिकः प्राणसंज्ञो मतो योगविद्भिः॥२॥
इति प्राणवायुं सदाभ्यासतो यो नरो न्यूनभावं[2] नयत्येनमङ्गात्।
समत्वं शरीरेण वा भूतलेऽस्मिन् स पूज्यो बुधैरुत्तमो योगवित्सु॥३॥ इति।

१. 'तोपि' क. पाठः। २. 'वे' क. पाठः।

स तु पूरकाद्यङ्गत्रयात्मकः। तथा च "अङ्गत्रयात्मकः प्रोक्तः पूरकुम्भकरेचकैरिति" तत्र कुम्भक एव प्राणायामशब्दो मुख्यः, इतरयोस्तदुपकारकत्वात्। ज्ञानार्णवे—

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम्। प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना।। १।। इति।

स पुनर्द्विविधः सहितः केवलश्च। तत्र सहितोऽपि द्विविधो रेचकादिक्रमः पूरकादिक्रमश्चेति। तत्र रेचकादिक्रममाह योगशास्त्रे—

प्राणायामस्त्रिधा प्रोक्तो रेचपूरककुम्भकैः। सहितः केवलश्चेति कुम्भको द्विविधो मतः।। १।।

विरेच्य पूरकः कार्यः शनैः सहितकुम्भके। यावत्केवलसिद्धिः स्यात् तावत्सहितमभ्यसेत्।।२।।

इति। तत्क्रममाह प्रपञ्चसारे—

रेचकपूरककुम्भकभेदात् त्रिविधः प्रभञ्जनायामः। मुञ्चेद्दक्षिणयानिलमन्तर्नयेद्वामया च मध्यमया।

संस्थापयेच्च नाड्येत्येवं प्रोक्तानि रेचकादीनि। षोडशतद्द्विगुणचतुःषष्टिमात्रकाणि तानि च क्रमशः।

इति। नाड्येत्यस्य दक्षिणयेत्यादिभिः सम्बन्धः। तथा च "इडा वामे तनोर्मध्ये सुषुम्ना पिङ्गला परे"। द्विगुण इति षोडशानां द्विगुण इत्यर्थः। अथ पूरकादिक्रममाह समुच्चये—

शीतांशुमार्गेण शनैः समीरमापूरयेत् सोदरमादरेण।
विकारमात्राभिरपेततन्द्रः कालाग्निमूलार्पितचित्तवृत्तिः।। १।।
ततो धारयेन्मारुतं धीरचेताः चतुःषष्टिमात्रासमापूरितं तम्।।
बहिर्भास्वता रेचयेन्मन्दमेनं तदर्धाभिरन्तर्निरुद्धं तु ताभिः।।२।।

तथा वामकेश्वरे—

पूरकं कुम्भकं चैव रेचकं च विचिन्तयेत्। मूलाधारे लयं कृत्वा पीत्वा वायुं शनैः शनैः।। १।।
यथेष्टं पूरयेद् देहं तत्त्वज्ञो विजितेन्द्रियः। ततस्तु स्तम्भयेद्वायुं प्रकाशगतमानसः।। २।।
कुम्भके चिन्तयेद् विद्वान् विद्यां मुक्तिकरीं शुभाम्। तदा तु रेचयेद् वायुं गम्यते यत्स्वभावतः।।३।।
देहान्निःसारयेन्मन्त्री स्वदेहस्थं तमोगुणम्। वामेन पूरयेद् वायुं दक्षिणेन विरेचयेत्।। ४।।
माहेन्द्रेण समेनैव मन्त्री कुम्भकमभ्यसेत्। सदा कुम्भकयोगेन लभते सिद्धिरुत्तमा ।। ५।।
अभ्यासी कारयेन्मात्रां यथेष्टं तत्त्वदर्शिनाम्। यथाशक्त्या पिबेद् वायुं यथाशक्त्या च कुम्भयेत्।।६।।
स्वभावं च त्यजेद् वायुस्ततः सिद्धिः प्रजायते। इति।

तस्यां विद्यायां पूरकादिक्रम एव नित्यातन्त्रोक्तः, रेचकादिक्रमस्तु साधारणतया प्राप्तः। श्रुत्यनुसारेण प्रपञ्चसारादौ वैष्णवादिसामान्यतया प्रोक्तत्वात्। तथा च श्रुतिः— "प्राणायामास्त्रयः प्रोक्ता रेचपूरककुम्भकाः" इति। सुसाधितप्राणानां रेचकादिक्रम इति कश्चित्। उभयथापि सामान्यत्वं तन्त्रान्तरेण, पूरकादिक्रमोऽपि सामान्यतया वैष्णवादौ युज्यते। तस्मादस्मिन्नपि प्रकरणे सामान्यत्वेनोभयोः प्राप्तौ विशेषत्वेन पूरकादिक्रमस्यैव मुख्यत्वमाह महेश्वरः—"पूरकं कुम्भकं चेत्यादि"। तत्र वायोरादानकाले पूरकनामा प्राणायामः, धारणकाले कुम्भकनामा, त्यागकाले रेचकनामा। तदुक्तम्— "बाह्यादापूरणं वायोरुदरे पूरको हि सः। सम्पूर्णकुम्भवद्वायोर्धारणं कुम्भको मतः।। बहिर्यद्रेचनं वायोरुदराद्रेचकः स्मृतः"। इति। तथा च दक्षिणामूर्तिः—

मूलमन्त्रेण देवेशि वामेनापूर्य चोदरम्। कुम्भकेन त्रिरावृत्त्या दक्षिणेनापसारयेत्।। १।। इति। ज्ञानार्णवे "आसने सम्यगासीनो वामेनापूर्य चोदरम्" इति। तन्त्रराजेऽपि— "वामेन नासारन्ध्रेण पूरयेदमृतात्मना। स्मरन्नम्बु मरुत्पश्चाद्दक्षिणेनापसारयेत्।" इति। तत्र क्रममाह— 'मूलाधार' इत्यादि। लयमिति मनसो लयमित्यर्थः। तेनैव वायोरपि लयभावित्वात्। तन्त्रराजे—

मूलाधारे मनः कृत्वा वायुमापूर्य मूलतः। नाडीचक्रान्तरं नीत्वा सर्वाङ्गानि च चारयेत्।। १।। इति। यथेष्टमिति सहजगतागतशीलं वायु यथाशक्यमाकर्षयेदित्यर्थः। प्रकाशे परमात्मनि गतं लीनं मानसं यस्य सः प्रकाशगतमानसः। तेन स्वप्रकाशसच्चिदानन्दपरमात्मस्वरूपः सन् कुम्भयेदित्यर्थः। अथाङ्गत्रयात्मके प्राणायामे कापि विद्याध्यानं भवति न वेत्यत आह— कुम्भके चिन्तयेदित्यादि। विद्यां—मोक्षोपयोगि ज्ञानं, विद्या तां, सा च श्रीविद्येत्यत आह— मुक्तिकरीं शुभामिति। तेन कुम्भककाले मूलादिब्रह्मरन्ध्रान्तं मूल[1]विद्यां विभावयेदित्युक्तं, श्रीविद्यायाः सूक्ष्मध्यानं कुर्यादिति तु सगर्भपक्षे पूरकादिषु प्रत्येकमशक्तौ केवलकुम्भके वेति ध्येयम्। रेचकप्रकारमाह— तदेत्यादि। गम्यते बहिरिति शेषः। स्वभावतो न तु न्यूनाधिक[2]त्वादन्यथा तु अयुक्ताभ्यासाद् दोषापत्तेः। तथा चोक्तं गोरक्षशतके—

युक्तं युक्तं पिबेद्वायुं युक्तं युक्तं च धारयेत्। युक्तं युक्तं त्यजेदेनमेवं सिद्धिमवाप्नुयात्।। १।।
यथा सिंहो गजो व्याघ्रो भवेद्धार्यः शनैःशनैः। तथैव हि निजो वायुरन्यथा हन्ति साधकम्।।२।।
प्राणायामेन युक्तेन सर्वरोगक्षयो भवेत् । अयुक्ताभ्यासयोगेन सर्वरोगसमुद्भवः ।। ३।।
हिक्का श्वासश्च कासश्च शिरःकर्णाक्षि[3]वेदनाः। भवन्ति विविधा रोगाः प्राणायामव्यतिक्रमात्।।४।।
ततः शास्त्रोक्तमार्गेण प्राणायामान् समाचरेत्। इति।

देहान्निःसारयेदिति। रेचकयोगवायुना सह देहस्थस्तमोगुणो बहिर्निःसृत इति भावयेदित्यर्थः। अथ पूरकादेर्नाडीनियममाहवामेनेत्यादि। इत्येकप्राणायामे प्रथमे द्वितीयादियुग्मे तु दक्षिणेनैव पूरयेत्। तदुक्तम्—

येनैव सन्त्यजेत्तेन पूरयेद् धारयेत् ततः। रेचयेच्च ततोऽन्येन शनैरेवं पुनः पुनः।। १।।

इति। योगशास्त्रे —

अथासने दृढे योगी वशी हितमिताशनः । गुरूपदिष्टमार्गेण प्राणायामान् समभ्यसेत्।। १।।
चले वाते चलं चित्तं निश्चले दृढबन्धनम्। योगी स्थानत्वमाप्नोति ततो वायुं निबन्धयेत्।।२।।
यावद्वायुः स्थितो देहे तावज्जीवनमुच्यते। मरणं तस्य निष्क्रान्तिस्ततो वायुं निबन्धयेत्।।३।।
मलाकुलासु नाडीषु मारुतो नैव मध्यगः। कथं स्यादुन्मनीभावः कार्यसिद्धिः कथं भवेत्।।४।।
शुद्धिमेति यदा सर्वं नाडीचक्रं मलाकुलम्। तदैव जायते योगी प्राणसङ्ग्रहणे क्षमः।। ५।।
प्राणाभ्यासं ततः कुर्यान्नित्यं सात्त्विकया धिया। यथा सुषुम्नापार्श्वस्था मलाः शोषं प्रयान्ति च।।६।।
बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत्। धारयित्वा यथाशक्ति पुनः सूर्येण रेचयेत्।।७।।
प्राणं सूर्येण चाकृष्य पूरयेदुदरं शनैः। विधिवत् कुम्भकं कृत्वा पुनश्चन्द्रेण रेचयेत्।।८।।
येन त्यजेत्तेन पीत्वा धारयेदनिरोधतः । रेचयेच्च ततोऽन्येन शनैरेवं न वेगतः।।९।।

---

१. 'मूलं विभाव्य' क. पाठः। २. 'क्यात्' क. पाठः। ३. 'दि' क. पाठः।

प्राणं चेदिडया पिबेन्नियमितं भूयोऽन्यया रेचयेत्
पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद् वामया।
सूर्याचन्द्रमसोरनेन विधिनाभ्यासं सदा तन्वतां
शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः।। १०।। इति।

तथा त्रिपुरासारे—

विपरीतमतो विदधीत पुनः पुनरप्यथ तद्विपरीतमिति ।
अमुना विधिना सुमनाः[1] सततं मरुतो विदधीत सुसंयमनम्।। १।। इति।

अथ कुम्भकफलमाह— सदेत्यादि, केवलकुम्भकयोरित्यर्थः। सुसाधिते वायौ मात्रासंख्यानमुक्तं प्रथमाभ्यासे, तत्राप्ययं कामचारमाह— "अभ्यासी" इत्यादि। अभ्यासी प्रथमाभ्यासी तत्त्वदर्शिनां मात्रां यथेष्टं यथेच्छं कारयेदित्यर्थः। एतदेव स्पष्टयति—यथाशक्त्येत्यादि। तथा च सति प्रथमाभ्यासी यथोक्तसंख्यामात्राया न्यूनमपि कुर्यात्, मध्यमाभ्यासी यथोक्तसंख्यामेव, उत्तमाभ्यासी ततोऽधिकसंख्यामपि कुर्यादिति यथेष्टपदतात्पर्यम्। अथ मात्रालक्षणमाह नारदः —

कालेन यावतात्मीयो हस्तः स्वं जानुमण्डलम्। पर्येति मात्रा स्यात् तुल्या स्वयैकश्वासमात्रया।।१।।इति।

तथा फेत्कारिणीतन्त्रे—

जानुं प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम्। क्रियते चाङ्गुलीस्फोटः सा मात्रा परिकीर्तिता।।१।।इति।

अपि च कात्यायनीतन्त्रे—

मध्या मूलाद्यावदग्रमङ्गुष्ठेन च पीड्यते। मात्रा सा प्रोच्यते सद्भिर्योगेऽभीष्टं प्रयच्छति।। १।।इति।

वस्तुतस्तु तत्तन्मन्त्रोच्चारणमेव मात्रा। तथा च गौतमीये—

रेचयेद् दक्षिणे वायुं पूरयेद्वामतस्ततः। द्वात्रिंशदभ्यसेन्मन्त्रं प्राणायामः स उच्यते।। १।। इति।

ततः पूरकानन्तरं कुम्भकेऽभ्यसेदित्यर्थः। एतत्तु रेचकादिपक्षे, अत एव कुम्भक एव जपादिकं नेतरयोः। दक्षिणामूर्तिकल्पे—

प्राणापानौ समौ कृत्वा सुविधाय च कुम्भकम्। हृत्पङ्कजे समासीनं मां ध्यायेद्यतमानसः।।१।।इति।

अगस्त्यसंहितायाम्—

यावच्छक्यं नियम्यासून् मनसैव जपेन्मनुम्। रामं मुहुर्मुहुर्ध्यायन् पूर्वोक्तविधिना सुधीः।। १।।इति।

असून् नियम्य कुम्भकं कृत्वा रामं ध्यायन् यावच्छक्यं मनुं जपेदिति सम्बन्धः। एतेन यत्र विशेषो नोक्तस्तत्र यथाशक्ति मन्त्रं जपेदिति वैष्णवः। तयैव रीत्यैकत्र दृष्टन्यायेन सर्वत्रैवायं प्रकारः। अत एव श्रीविद्यायां वामकेश्वरतन्त्रे— "कुम्भके चिन्तयेद्विद्वन् विद्यां मुक्तिकरीं शुभाम्।" इत्युक्तमिति वदन्ति। वस्तुतस्तु सगर्भके प्राणायामे केवलकुम्भके कुम्भक एव सहितकुम्भके शक्तावङ्गत्रयेऽप्यशक्तौ कुम्भके त्वावश्यकं जपध्यानमिति तु तेषां वचनानां निर्गलितार्थः। स च मूलया बालया वा तदशक्तौ प्रणवेन वा कार्यः। तदुक्तं फेत्कारीये—"प्राणायामत्रयं कुर्यान्मूलेन प्रणवेन वा।" इति। निषिद्धप्रणवोच्चारिणां[2] प्रणवस्थाने सार्द्धत्रिमात्रिक औंकारो ज्ञेयः। कालिकापुराणे—

१. 'सुभगः' क. ख. पाठः। २. 'रणं' ग. पाठः।

चतुर्दशस्वरो यस्तु सार्द्धत्रिमात्रसंज्ञकः। नादबिन्दुसमायुक्तः शूद्राणां सेतुरुच्यते।। १।। इति।

अत्र सुसाधितप्राणानां पूरकादौ त्रिपुरासारोक्तैव संख्या जपादौ तन्त्रराजे तदन्यथा। यदुक्तं तन्त्रराजे—

एवं सुसाधिते पश्चाद् द्वात्रिंशन्मात्रया हरेत्। धारयेत्तच्चतुष्षष्ट्या रेचयेत् तत्तुरीयतः।। १।।

इति तु श्रीकादिमते, तदेतयोर्मतयोर्विकल्पः। तत्राशक्तौ सामान्यपटले फेत्कारीयतन्त्रोक्तः कार्यः। तद्यथा—

तथा द्वादशमात्राभिः कुम्भकः क्रियते सदा। तस्माद् द्विगुणमात्राभी रेचकः क्रियते तथा।। १।।

प्राणायामत्रयं त्वेवमैकैकं त्रितयात्मकम्। इति।

अत्राप्यशक्तौ सुभगोदयोक्तः कार्यः। ''प्राणायामत्रयं कुर्यात् स्मरन् विद्यां हृदा पुनः।'' इति। तद्वचनं तत्पद्धतौ व्याख्यातं—दक्षिणनाड्या एकवारं मूलमुच्चरन् वायुमापूर्य चतुर्वारं कुम्भकं कृत्वा वामनाड्या द्विवारं रेचयेदिति प्राणायामत्रयं कुर्यादित्यर्थः। अत्र दक्षिणेन पूरणं युग्मे बोद्धव्यमयुग्मे पूरकादौ वामस्यैवोक्तत्वादथवा तन्मतमेवेदमिति वयं न विद्मः। तत्राप्यशक्तौ ज्ञानार्णवदक्षिणामूर्तिभ्यामुक्तस्य ''कुम्भकेन त्रिरावृत्त्या'' इत्यस्यैव ग्रहणमिति सङ्क्षेप इति सहितकुम्भकः। अथ केवलकुम्भकः, योगशास्त्रे —

रेचकं पूरकं मुक्त्वा मुखे यद्वायुधारणम्। प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः।। १।।

केवले कुम्भके सिद्धे रेचपूरविवर्जिते । न तस्य दुर्लभं किञ्चित् त्रिपु लोकेषु विद्यते।।२।।

शक्तः केवलकुम्भेन यथेष्टं वायुधारणे। राजयोगपदं चैव लभते नात्र संशयः ।। ३।।

हठं विना राजयोगो राजयोगं विना हठः। न सिध्यति ततो युग्ममानिष्पत्तेः समभ्यसेत्।।४।।

कुम्भितप्राणरेचान्ते कुर्याच्चित्तं निराश्रयम्। एवमभ्यासयोगेन राजयोगपदं व्रजेत्।। ५।।

कुम्भकात् कुण्डलीबोधो कुण्डलीबोधतो[१] भवेत्। अनर्गला सुषुम्ना च हठसिद्धिश्च जायते।।६।।इति।

हः सूर्यो ठश्चन्द्रस्ताभ्यां सूर्यचन्द्राभ्यां दक्षिणवामाभ्यां पिङ्गलेडाभ्यां प्राणवायोर्मूलाधारादौ योगो हठयोग इत्यर्थः। स च प्राणायामो राजयोगः, स च सुषुम्नामार्गेण षट्चक्रभेदक्रमेण शिवशक्तिसामरस्यलक्षणमाह तन्त्रराजे—

कम्पश्च पुलकानन्दो वैमल्यस्थैर्यलाघवाः। तद्वत् कान्तिप्रकाशौ च योगसिद्धस्य लक्षणम्।। १।।

योगशास्त्रे —

वपुःकृशत्वं वदनप्रसन्नता नादस्फुटत्वं नयने सुनिर्मले।

अरोगिता बिन्दुजयोऽग्निदीपनं नाडीविशुद्धेर्हठसिद्धिलक्षणम्।। १।।

इति केवलकुम्भक इत्युक्तः। प्राणायामः सगर्भो विगर्भश्चेति द्विविधः स्यात्। उक्तं च रुद्रयामले— ''सगर्भश्च विगर्भश्च प्राणायामो द्विधा मतः''। इति। तथा च योगिनीतन्त्रे—

अयं प्राणायामः सकलदुरितध्वंसनकरो विगर्भः प्रोक्तोऽसौ शतगुणफलो गर्भकलितः।

जपध्यानापेतः स तु निगदितो गर्भरहितः सगर्भस्तद्युक्तौ मुनिपरिवृढैर्योगनिरतैः।। १।इति।

स पुनस्त्रिविधः उत्तमाधममध्यमभेदात्। तथा च तन्त्रराजे —

प्राणायामस्त्रिधा प्रोक्त उत्तमाधममध्यतः। लाघवो भूतलत्याग उत्तमे चित्तनिर्वृतिः।। १।।

---

१. 'धना' क. पाठः।

सर्वाङ्गस्वेदसंवृद्धिरधमे मध्यमे तथा। सर्वाङ्गकम्पनं प्रोक्तमभ्यासात् कालसंयुतात् ।। २।।
तेऽप्युत्तमगुणा भूयुरभ्यासात् कालयोगतः। तस्मात् समभ्यसेत् प्रातः सायं च नियमेन वै।।३।।इति।

तथा त्रिपुरासारे —

शुचिः प्राणायामान् प्रणवसहितान् षोडश वशी प्रभाते सायं च प्रतिदिवसमेवं वितनुते।
द्विजो यस्तं भ्रूणप्रहरणकृतांहोभिकलितं पुनन्त्येते मासादिह दुरिततूलौघदहनाः।। १।।
त्रायन्त्यमी षड्भिरपीह मासैर्जन्मान्तरोपार्जितपापपुञ्जात्।
संवत्सराद् ब्रह्मपदं तदेकं प्रकाशयत्येव यदच्युताख्यम्।। २।। इति।

योगशास्त्रे तु—

प्रातर्मध्यन्दिने सायमर्द्धरात्रे च कुम्भकान्। शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत्।। १।।
कनीयसि भवेत् स्पन्दः कम्पो भवति मध्यमे। उत्तिष्ठत्युत्तमे प्राणरोधे पद्मासने मुहुः।।२।।
जलेन श्रमजातेन गात्रमर्दनमाचरेत् । दृढता लघुता चैव तेन गात्रस्य जायते।।३।।
अभ्यासकाले प्रथमे शस्तं क्षीराज्यभोजनम्। ततोऽभ्यासे दृढे जाते न तादृङ्नियमग्रहः।।४।।इति।

तत्र क्रमः— विहितपद्मासनः सन्निमीलितनयनयुगलो मूलाधारार्पितचित्तवृत्तिर्मूलमन्त्रादिकमुच्चरन् इडया वामनाड्या षोडशमात्रया वायुमापूर्य मूलाधारं प्रापय्याङ्गुष्ठकनिष्ठानामाभिर्नासापुटौ विधृत्य चतुःषष्टिमात्रया तं वायुं स्तम्भयित्वा द्वात्रिंशन्मात्रया पिङ्गलया दक्षिणनाड्या शनैः शनैस्तं वायुं रेचयेदित्येकः प्राणायामः। पुनस्तं पिङ्गलया वायुं शनैः शनैः समाकृष्य तथैवेडया रेचयेदित्यन्यः। एवं वैपरीत्येन विंशतिवारं षोडशवारं द्वादश षट् त्रिर्वा द्विर्वा यथाशक्ति कुर्यात्, ततः सिद्धिमवाप्नुयादिति[1]। शारदातिलके— "मात्रावृद्धिक्रमेणैव सम्यग्द्वादश षोडश।" इति सङ्क्षेपः। अत्र सर्वत्र प्राणायामेनैव सर्वेषां कर्माधिकारः, अकरणे निन्दाश्रवणात्। अगस्त्यसंहितायाम्—

प्राणायामैर्विना यद्यत् कृतं कर्म निरर्थकम्। अतो यत्नेन कर्तव्याः प्राणायामाः शुभार्थिभिः।।१।।इति।

अथ एवावश्यकोऽयं भूतशुद्धिरिव पूजायामिति। इति प्रणायामविधिर्मतद्वयसाधारणः।।

अथ योगपीठन्यासः — तत्रांसद्वयोरुद्वयकल्पितपादचतुष्टयं मुखनाभिपार्श्वद्वयमध्योपकल्पितगात्रचतुष्टयं योगपीठं निजदेहं ध्यात्वा न्यसेत्। मूलाधारे ४ महाकायाय[2] रक्तवर्णाय मण्डूकाय नमः। तदुपरि स्वाधिष्ठा— नपर्यन्तं ४ पञ्चवक्त्रदशभुजरक्तवर्णकृष्णवामदक्षिणपार्श्वाय कालाग्निरुद्राय नमः। तदुपरि नाभिपर्यन्तं बन्धूकरुचिरायै मूलप्रकृत्यै नमः। तदुपरि हृत्पर्यन्तं[3] शरच्चन्द्रप्रभायै पङ्कजद्वयधारिण्यै आधारशक्त्यै नमः। तदुपरि हृदय एव ४ कूर्माय नमः, ४ अनन्ताय नमः, ४ वराहाय०, ४ पृथिव्यै०, ४ अमृतार्णवाय०, ४ समस्तमातृकामुच्चार्य नवखण्डविराजिताय नवरत्नमयद्वीपाय नमः। तत्रैव नवखण्डेषु ईशानादिमध्यान्तं ४ अं १६ पुष्परागरत्नाय नमः। ४ कं ५ नीलरत्नाय० ४ चं ५ वैडूर्यरत्नाय० ४ टं ५ विद्रुमरत्नाय० ४ तं ५ मौक्तिकरत्नाय० ४ पं ५ मरकतरत्नाय० ४ यं ४ वज्ररत्नाय० ४ शं ४ गोमेदरत्नाय० ४ ळक्षं पद्मरागरत्नाय नमः। तत्रैव स्वर्णपर्वताय नमः। तदुपरि ४ नन्दनोद्यानाय नमः। तन्मध्ये

१. 'प्रा' क. पाठः। २.'कालाय' क.ख. पाठः। ३. ' दशदश' क. पाठः। ४. 'हृदय' क. पाठः।

४ कल्पकोद्यानाय नमः, ४ वसन्तादिऋतुभ्यः०। पश्चिमे ४ इन्द्रियाश्वेभ्यः, पूर्वे ४ इन्द्रियार्थगजेभ्यो नमः, ४ विचित्ररत्नभूमिकायै नमः। तत्र पश्चिमादिमध्यान्तं विलोमेन ४ कालचक्रेश्वरीश्रीपा० ४ मुद्राचक्रेश्वरीश्रीपा० ४ मातृकाचक्रेश्वरीश्रीपा० ४ रत्नचक्रेश्वरीश्री० ४ देशचक्रेश्वरीश्री० ४ गुरुचक्रेश्वरीश्री०४ तत्त्वचक्रेश्वरीश्री० ४ ग्रहचक्रेश्वरीश्री० ४ मूर्तिचक्रेश्वरीश्री० ४ कारणतोयपरिधये०[१] ४ माणिक्यमण्डपाय०। तस्य निर्ऋत्यादिकोणेषुमध्ये च ४ देशरूपिणीशक्तिश्री० ४ कालरूपिणीशक्तिश्री०४ आकाररूपिणीशक्तिश्री० ४ शब्दरूपिणीशक्तिश्री० ४ मध्ये संगीतयोगिनी– रूपिणीशक्तिश्री० ४ तन्मध्ये समस्तगुप्तप्रकटयोगिनीचक्ररूपिणीशक्तिश्री०। ततस्तन्मध्ये ४ कल्पतरुभ्यो० तेषामधस्तात् ३ रत्नवेदिकायै नमः। तदुपरि ४ श्वेतच्छत्राय० तस्याधः ४ रत्नसिंहासनाय नमः, इत्येतत्सर्वं मानसपङ्कजे विन्यस्य यथायथं तत्तत्स्थानान्यध्य[२] वस्य रत्नसिंहासनत्वेनात्मदेहं ध्यायेत्। तत्र सिंहसनदेवता न्यसेत्। दक्षांसे ४ रक्तवर्णाय ऋषभरूपाय धर्माय०। वामांसे ४ श्यामवर्णाय सिंहरूपाय३ ज्ञानाय०। वामोरौ ४ पीतवर्णाय भूताकाराय वैराग्याय०। दक्षोरौ ४ इन्द्रनीलप्रभाय गजरूपाय ऐश्वर्याय०। एते सिंहासनपादरूपिणः। मुखे ४ अधर्माय०। वामपार्श्वे ४ अज्ञानाय०। नाभौ ४ अवैराग्याय०। दक्षपार्श्वे ४ अनैश्वर्याय०। एते हिंसासनगात्ररूपिणः। मध्ये ४ मायायै० ४ विद्यायै०। तदुपरि ४ आनन्दकन्दाय० ४ संविन्नालाय० ४ प्रकृतिमयपत्रेभ्यः ४ विकारमयकेसरेभ्यः० ४ पञ्चाशद्वर्णबीजाढ्यसर्वतत्त्वरूपायै कर्णिकायै० तस्यां ४ अं सूर्यमण्डलाय० ४ उं सोममण्डलाय० ४ मं वह्निमण्डलाय० ४ सं सत्त्वाय० ४ रं रजसे० ४ तं तमसे० ४ आं आत्मने० ४ अं अन्तरात्मने० ४ पं परमात्मने० ४ ह्रीं ज्ञानात्मने०। तदुपरि पूर्वादिचतुर्दिक्षु मध्ये च ४ ज्ञानतत्त्वात्मने नमः, ४ मायातत्त्वात्मने० ४ कलातत्त्वात्मने० ४ विद्यातत्त्वात्मने० ४ परतत्त्वात्मने०। ततः केसरेषु पूर्वाद्यष्टदिक्षु मध्ये च श्रीचक्राधारपीठस्य नव शक्तीर्न्यसेत्। ४ दूतर्यम्बाश्री० ४ सुन्दर्यम्बाश्री० ४ सुमुख्यम्बाश्री०४ विरूपाम्बाश्री० ४ विमलाम्बाश्री० ४ अन्तर्यम्बाश्री० ४ वदर्यम्बाश्री० ४ पुरन्दर्यम्बाश्री०। मध्ये कर्णिकायां ४ पुष्पम[५] र्दन्यम्बा श्री०। एता वराभयधारिण्यो रक्तवर्णा ध्येयाः। तदुपरि ४ क्लीं सर्वशक्तिकमलासनाय नमः, इति सिंहासनमन्त्रं विन्यस्य तदुपरि श्रीचक्रं ध्यात्वा, ४ मूलं समस्तप्रकटगुप्त– गुप्ततरसंप्रदायकुलकौलनि गर्भरहस्यातिरहस्यपरापर- रहस्ययोगिनीश्री[६]चक्रपादुकाभ्यो नमः इति व्यापकेन विन्यस्य, हृदि त्रिकोणं विभाव्य तन्मध्ये ४ मूलं ओं ह्रौं क्लीं भगवति ब्लूं नित्याकामेश्वरि स्त्रीं[७] सर्वसत्त्ववशङ्करि सः त्रिपुरभैरवि ऐं विच्चे ह्रींश्रीं श्रीमहात्रिपुरसुन्दर्यम्बाश्री० इति विन्यस्य, प्रणवादिनमोऽन्तं मूलविद्यां च विन्यस्य, श्रीचक्रं पुरत्रयात्मकं ध्यात्वा, तत्रारोहणक्रमेण ४ वाग्भवमुच्चार्य चतुरस्रषोडशदलाष्टदलात्मने शरीरात्मकाय प्रथमपुराय नम इति व्यापकं न्यसेत्। कामराजमुच्चार्य चतुर्दशारद्विदशारात्मने बुद्ध्यात्मकाय द्वितीयपुराय नम इत्यपि व्यापकम्। ४ शक्तिकूटमुच्चार्याष्टारत्रिकोणबिन्दुचक्रात्मने प्राणात्मकाय तृतीयपुराय नम इत्यपि व्यापकं विन्यस्य, ४ इच्छाशक्तिज्ञानशक्तिक्रियाशक्त्यादिसमस्तत्रितयात्मने श्रीचक्रस्य पुरत्रयाय नमः इत्यपि व्यापकम्। ततो हृदयत्रिकोणस्याग्रादिकोणत्रयमपि पुरत्रयात्मकं वाग्भवादिपुरत्रयात्मकं च ध्यात्वा, तत्र प्रणवादिनमोऽन्तं वाग्भवादिकूटत्रयं न्यसेत्। ततो नादबिन्दुकलाज्येष्ठारौद्रीवामाविषघ्नीदूतरीसर्वानन्दाभ्यः श्रीचक्रस्थत्रैलोक्यमोहनादिनवचक्रशक्तिभ्यो नमः, इत्येनेन व्यापकं कुर्यात्। ततो हृदयकमलकेसरेषु कामेश्वरीपीठस्य

---

१. 'करुणा' ग. पाठः। २. 'न्यवध्यवस्य' क. पाठः। ३. 'ध्वजाय' क. ख. पाठः। ४. 'विश्व' क. पाठः। ५. 'भद्रिक' ग. पाठः। ६. 'वीसिद्धचक्र' ग. पाठः। ७. 'श्रीं' क. पाठः।

नव शक्तीर्न्यसेत्। ४ मोहिन्यै नमः ४ क्षोभिण्यै ४ वशिन्यै० ४ स्तम्भिन्यै०४ आकर्षिण्यै० ४ द्राविण्यै० ४ आह्लादिन्यै० ४ क्लिन्नयै० मध्ये ४ क्लेदिन्यै०, इति विचिन्त्य, त्रिकोणमध्ये ४ बालामूलं पञ्चदशीं चोच्चार्य, त्रिकोणरक्तवर्णोड्डियानपीठश्रीं० त्रिकोणाग्रे ४ बालामूलयोर्वाग्भवद्वयमुच्चार्य चतुरस्रपीतवर्णकामरूपपीठश्री०। दक्षिणकोणे ४ कामराजद्वयमर्धचन्द्रनिभश्वेतवर्णजालन्धरपीठश्री०। वामकोणे ४ शक्तिबीजद्वयं षड्बिन्दुलाञ्छितवृत्तधूम्रवर्ण-पूर्णगिरिपीठश्री०, इति पीठचतुष्टयं विन्यस्य, पुनर्बैन्दवे आग्नेयादिकोणेषु ४ लां ह्रां ब्रह्मणे पृथिव्यधिपत्ये नमो ब्रह्मप्रेतासनश्री०। ४ वां ह्रीं विष्णवेऽपामधिपतये नमो विष्णुप्रेतासनश्री०। रांहूं रुद्राय तजोऽधिपत्ये नमो रुद्रप्रेतासनश्री०। ४ यां ह्रैं ईश्वराय वाय्वधिपतये नम ईश्वरप्रेतासनश्री०। ४ ह्सौं वियदधितपये पञ्चवक्त्राय सदाशिवाय प्रेतपद्मासनाय नमः सदाशिवमहाप्रेतपद्मासनश्री०, इति पञ्चप्रेतासनं न्यस्य, तदुपरिरक्तपद्मकर्णिकायां चतुरस्रगर्भितषट्कोणपीठे षडासनानि विन्यसेत्। ४ अंआंसौः त्रिपुरासुधार्णवासनाय नमः। ४ ऐंक्लींसौः त्रिपुरेश्वरीपीताम्बुजासनाय नमः। ४ ह्रींक्लींसौः त्रिपुरसुन्दरीदेव्या— त्मासनाय नमः। ४ हैंह्क्लींह्सौः त्रिपुरवासिनीसर्वचक्रासनाय नमः। ह्सैंह्स्क्लींह्सौः त्रिपुराश्रीसर्वमन्त्रासनाय नमः। ४ ह्रींक्लींब्लें त्रिपुरमालिनीसाध्यसिद्धासनाय नम इति विन्यस्य, मध्ये चतुरस्रे चतुष्पीठचतुरासनं न्यसेत्। ऐशाने ४ वाग्भवद्वयमुच्चार्य अग्निचक्रे कामगिर्यालये मित्रेशनाथात्मके जाग्रद्दशाधिष्ठायके इच्छाशक्त्यात्म-करुद्रात्मकशक्तिकामेश्वरीदेवी ह्रींक्लींसौः त्रिपुरसुन्दरीदेव्यात्मासनाय नमः। वायव्यकोणे ४ कामराजद्वयं, सूर्यचक्रे जालन्धरपीठे षष्ठेशनाथात्मके स्वप्नदशाधिष्ठायके ज्ञानशक्त्यात्मविष्ण्वात्मक— शक्तिश्रीवज्रेश्वरीदेवी हैंह्क्लींह्सौः त्रिपुरवासिनीसर्वचक्रासनाय नमः। नैर्ऋते ४ शक्तिद्वयमुच्चार्य सोमचक्रे पूर्णगिरिपीठे उड्डीशनाथात्मके सुषुप्तिदशाधिष्ठायके क्रियाशक्त्यात्मकब्रह्मात्मशक्तिश्रीभगमालिनीदेवी ह्सैंह्स्क्लींह्सौः त्रिपुराश्रीसर्वमन्त्रासनाय नमः। आग्नेये ४ समस्तद्वयमुच्चार्य ब्रह्मचक्रे महोड्यानपीठे श्रीचर्यानाथात्मकतुर्यतुर्यातीतदशाधिष्ठायके परब्रह्मशक्त्यात्मकश्रीत्रिपुरसुन्दरीदेवी ह्रींक्लींब्लें त्रिपुरमालिनीसाध्यसिद्धासनाय नमः। मध्ये ४ ऐंक्लींसौः क० १५ श्रीमहात्रिपुरसुन्दरीसर्वमन्त्रासनाय नमः। इति विन्यस्य, ४ अं ५१ शिवशक्तिसदाशिवेश्वरशुद्धविद्यामायाकालनियतिकलाविद्यारागपुरुषप्रकृतिबुद्ध्याहङ्कारमन-स्त्वक्चक्षुः श्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलपृथिव्यात्मने श्रीमहात्रिपुरसुन्दर्या योगपीठासनाय नमः, इति व्यापकं कुर्यात्। ततो मूलमुच्चार्य श्रीमन्महात्रिपुरसुन्दरीश्री० इति षट्त्रिंशत्तत्वात्मके देहमये महायोगपीठे निजेष्टदेवतां हृदि न्यसेत्। "इति देहमये पीठे चिन्तयेत्परदेवताम्" इति योगपीठन्यासः। शारदायाम्—

संहारसृष्टिमार्गेण मातृकान्यस्तविग्रहः। मन्त्रन्यासं ततः कुर्याद् देवताभावसिद्धये।। १ ।।

इति। तत इति मन्त्रन्यासानन्तरमित्यर्थः। मन्त्रन्यास उपास्यमन्त्रसंबन्धी न्यासः। वैशम्पायनसंहितायाम्—

तत उपास्यमन्त्रस्य न्यासानृष्यादिकांश्चरेत्। यस्य मन्त्रस्य ये न्यासाः कर्तव्याः सिद्धिमिच्छता।।१ ।।

जपतर्पणहोमार्चाः[1] सिद्धमन्त्रकृता अपि। अङ्गन्यासादिभिर्हीना न दास्यन्ति फलान्यमी।।२।।

न्यासानशेषान् न्यसतः स्वदेहे त्रैलोक्यमेतद्वशमेति पुंसः।
पापानि सद्यः प्रशमं प्रयान्ति त्रस्यन्ति रक्षांसि सपन्नगानि।। ३।।

आदावृष्यादि विन्यस्य कराङ्गन्यसनं ततः। ततो मन्त्राक्षरन्यासः पदन्यासस्ततः परम्।। ४।।

तत्तत्कल्पविशेषोक्तान् न्यासानन्यान् समाचरेत्। ततो मन्त्रपुटैर्वर्णैर्मातृकायाः सबिन्दुकैः।। ५।।

---

१. 'धाः' ख. पाठः।

विन्यसेन्मन्त्रवित् सम्यक् शास्त्रदृष्टेन वर्त्मना। अथर्ष्यङ्गकरन्यासस्ततो मुद्राः प्रदर्शयेत्।। ६।।

इति क्रमः। अन्यत्रापि श्रीविद्यामधिकृत्य—

अन्तः शुद्धा च सृष्टिस्थितिविलयमयी तारजाभिः कलाभिः
श्रीकण्ठाद्यैश्च विष्णुप्रमुदिततनुभिर्शक्तिलक्ष्मीमनोजैः।
बीजैर्व्यस्तैः समस्तैः कलितलिपिवरा चात्मयागश्च मौनी[1]
षोढा कामश्च षोढा नवविधभवना मन्त्रगुप्सर्वमन्त्राः।।७।। इति।

स पुनरस्यां विद्यायां त्रिविधः षोढाश्रीचक्रकरशुद्ध्यादिभेदात्। तत्र षोढा द्विविधः पूर्वोत्तरभेदात्। तत्र पूर्वषोढान्यासः सर्वाम्नायविषयः, उत्तरषोढान्यास ऊर्ध्वाम्नायविषयः। श्रीचक्रन्यासस्त्रिविधः संहारसृष्टिस्थितिभेदात्। करशुद्ध्यादिन्यासस्तु बहुतरः, श्रीकण्ठादिरतिकामादिन्यासादीनामपि तत्रैवान्तर्भावात्। तत्र षोढान्यासः संहारश्रीचक्रन्यासः सृष्टिश्रीचक्रन्यासः करशुद्ध्यादिन्यासश्चेति, जपकाले स्थितिश्रीचक्रन्यासस्य करशुद्ध्यादावन्तर्भावात्, पूजाकाले संहारश्रीचक्रन्यासस्योपलक्षणत्वेन तदन्तर्भावाच्च चतुर्विधो न्यासस्तदवसरे संक्षेपादावश्यक इति योगिनीहृदयमतम्। योगिनीहृदये—

एवं चतुर्विधो न्यासः कर्तव्यो वीरवन्दिते। षोढान्यासोऽणिमाद्यश्च मूलदेव्यादिकः प्रिये।। १।।
करशुद्ध्यादिकश्चैव साधकेनाशु सिद्धये। प्रातःकालेऽथवा पूजासमये होमकर्मणि।।२।।
जपकालेऽथवा तेषां विनियोगः पृथक् पृथक्। पूजाकाले समस्तं वा कृत्वा[2] साधकसत्तमः।।३।।

इति। तत्रादौ पूर्वषोढान्यासो योगिनीहृदये—

न्यासान्निर्वर्तयेद्देवि षोढान्यासपुरःसरम्। गणेशैः प्रथमो न्यासो द्वितीयश्च ग्रहैर्मतः।। १।।
नक्षत्रैश्च तृतीयः स्याद्योगिनीभिश्चतुर्थकः। राशिभिः पञ्चमो न्यासः षष्ठः पीठैर्निगद्यते।।२।।
षोढान्यासस्त्वयं प्रोक्तः सर्वत्रैवापराजितः। एवं यो न्यस्तगात्रस्तु स पूज्यः सर्वयोगिभिः।।३।।
नास्त्यस्य पूज्यो लोकेषु पितृमातृमुखो जनः। स एव पूज्यः सर्वेषां स स्वयं परमेश्वरः।।४।।
षोढान्यासविहीनं यं प्रणमेदेष पार्वति। सोऽचिरान्मृत्युमाप्नोति नरकं च प्रपद्यते।। ५।।

इति। ज्ञानार्णवे —

षोढान्यासं ततः कुर्याद् येन ब्रह्माण्डरूपकः। विराट्स्वरूपो वर्णात्मा शिवः साक्षान्न संशयः।।१।।
गणेशाः प्रथमो न्यासः सर्वविघ्नविनाशकः। तरुणादित्यसंकाशान् गजवक्त्रांस्त्रिलोचनान्।।२।।
पाशाङ्कुशवराभीतिकराञ्शक्तिसमन्वितान्। एतांस्तु विन्यसेद्देवि मातृकान्यासवत् प्रिये।।३।।

इति। अत्र ४ अं श्रीविघ्नेश्वराभ्यां नम इत्यन्ये। विघ्नेश्वराय श्रियै नम इत्यपरे। विघ्नेश्वरश्रीभ्यां नम इति केचित्। गणेशाः शक्तयश्च मातृकान्यास[3] बोद्धव्या, इति गणेशन्यासः। अथ ग्रहन्यासः ज्ञानार्णवे— "ग्रहन्यासं ततो न्यसे" दिति।।

रक्तं श्वेतं तथा रक्तं श्यामं पीतं च पाण्डुरम्। धूम्रं कृष्णं च[4] धूम्रं च धूम्रधूम्रं विचिन्तयेत्।।१।।
रविमुख्यान् कामरूपान् सर्वाभरणभूषितान्। स्वरैरर्कं हृदि न्यस्य यवर्गेण शशी ततः।। २।।

---

१. 'मौती' क. पाठः। २. 'त्वा' क. पाठः। ३. 'न्यासे' क. पाठः। ४. 'धूम्रं कृष्णं कृष्णधूम्रं' क. ग. पाठः।

भ्रूमध्ये तु कवर्गेण भौमं नेत्रत्रये न्यसेत्। टवर्गेण बुधं हृदि तवर्गेण बृहस्पतिम्॥३॥
हृदयोपरि देवेशि चवर्गेण गले भृगुम्। पवर्गेण शनिं नाभौ राहुं वक्त्रे शवर्गत:॥४॥
ळक्षाभ्यां पादयो: केतुं न्यसेदेवं वरानने। सूर्यश्च रेणुका चैव सोमश्चैवामृता तथा॥५॥
मङ्गलो धामया[1] युक्तो बुधश्च ज्ञानरूपया। गुरुर्यशस्विनीयुक्त: शाङ्करीसहितो भृगु:॥६॥
शनि: शक्तिसमायुक्तो राहु: कृष्णासमन्वित:। धूम्रया सहित: केतु: शक्तयोऽम्बान्तिका: स्मृता:॥७॥

इति पूर्ववत्प्रयोग:। अथ नक्षत्रन्यास:—

अथ नक्षत्रवृन्दस्य न्यासं कुर्यात् सुखप्रदम्। ज्वलत्कालाग्निसंकाशा: सर्वाभरणभूषिता:॥ १॥
नतिपाण्योऽश्विनीपूर्वा वरदाभयपाणय: । युग्मं युग्मं[2] तथा युग्मं युग्मयुग्मेन रोहिणी॥२॥
एकमेकं तथा द्वन्द्वमेकं पुष्यान्तमुच्यते। ललाटे लोचने पश्चाद्वामदक्षिणकर्णयो: ॥ ३॥
नासाद्वये च देवेशि तथा कण्ठे न्यसेत् क्रमात्। पुष्यान्तं च प्रविन्यस्य खगाभ्यां चैव सर्पकम्॥४॥
दक्षस्कन्धे घङाभ्यां च मघां स्कन्धे द्वितीयके। चपूर्वफाल्गुनीं दक्षे कर्पूरे छजसंस्थिताम्॥५॥
उत्तरां फाल्गुनीं वामे कूर्परे विन्यसेत्प्रिये। झञवर्णस्थितौ हस्ते मणिबन्धे न्यसेत्प्रिये॥६॥
टठार्णेन युतां चित्रां वामे तु मणिबन्धके। डकारेण युतां स्वातीं दक्षहस्तेन विन्यसेत्॥७॥
ढणयुक्तां विशाखां च वामहस्ते प्रविन्यसेत्। तथदस्थाऽनुराधां च नाभौ न्यसेत्तु पार्वति॥८॥
धकारेण युतां ज्येष्ठां न्यसेद् दक्षकटौ प्रिये। नपफस्थं तथा मूलं न्यसेद् वामकटौ प्रिये॥९॥
पूर्वाषाढां बकारेण दक्षोरौ विन्यसेत्तत:। भकारेणोत्तराषाढां वामोरौ तदनन्तरम् ॥१०॥
मकारयुक्तं श्रवणं दक्षजानुनि विन्यसेत्। यरान्वितां धनिष्ठां च वामजानुनि विन्यसेत्॥ ११॥
लकारेण युतां देवि शतभिषां न्यसेत् प्रिये। दक्षजङ्घागतां पश्चात् पूर्वभाद्रपदां तत:॥ १२॥
वशवर्णात्मिकां न्यसेद् वामजङ्घागतां क्रमात्। षसहस्थोत्तराभाद्रपदां दक्षिणपादके ॥ १३॥
क्षकारेण तथा बिन्दुविसर्गाभ्यां च रेवतीम्। वामपादतले न्यस्य योगिनीन्यासमारभेत्॥ १४॥

इति। ध्यानमाह ज्वलदित्यादि पूर्ववत्। इति नक्षत्रन्यास:॥ अथ योगिनीन्यास:— तन्त्रान्तरे—

विशुद्धौ षोडशारे तु डाकिनीं भावयेत् सुधी:। त्वग्धातुदेवतां कण्ठे सर्वकामार्थसिद्धये॥ १॥

रक्तां रक्तत्रिनेत्रां पशुजनभयकृच्छूलखट्वाङ्गहस्तां
वामे खेटं दधानां चषकमपि सुरापूरितं चैकवक्त्राम्।
अत्युग्रामुग्रदंष्ट्रामरिकुलमथनीं[3] पायसान्ने प्रसक्तां
कण्ठस्थानेऽमृताद्यै: परिवृतवपुषं भावयेड्डाकिनीं ताम्॥२॥

डांडींडूंडैं ततो डोंडौं डमलेति वरेति च। यूं डाकिनीपदं प्रोक्त्वा मां रक्षद्वितयं वदेत्॥३॥
सर्वसत्त्ववशं प्रोक्त्वा करि देवि तत: परम्। आगच्छद्वितयं प्रोक्त्वा इमां पूजां तथैव च।॥४॥
गृह्णद्वयं वाग्भवं च घोरे देवि तत: परम्। मायाबीजं भृगु: सर्गी परमेति तत: परम्॥५॥

---

१. 'मेधया' क. ख. पाठ:। २. 'युग्मायुग्म' ख. पाठ:। ३. 'थिनीं' क. पाठ:।

घोरेहूं घोररूपे च एह्येहीति नमः पदम्। चामुण्डे डरलान्ते च कस[1] हैं श्रीमहात्रि च।। ६।।
पुरसुन्दरि देवीति विच्चेन्त[2] वरदे[3] पदम्। स्वरान् विशुद्धपीठस्थे विशुद्धान्ते तु डाकिनि।।७।।
विशुद्धनाथदेवश्रीपादुकां पूजयामि च। अङ्गुष्ठानामिकाभ्यां च कर्णिकायामिमं न्यसेत्।।८।।
ततः षोडशपत्रेषु पूर्वाद्यक्षरपूर्विकाः। अमृतादिकशक्तीस्तु विन्यसेत् ता यथाक्रमम्।। ९।।
अमृताकर्षिणीन्द्राणीशान्युमा चोर्ध्र्वकेशिनी। ऋद्धिदा च ततो ऋूषा लृकारा च ततः परम्।।१०।।
लॄषा चैकपदा चैश्वर्यात्मिकौंकारिणी ततः। तथौषधात्मिका चैवाम्बिका चाप्यक्षरसत्मिका।।११।।
अमृतादिकशक्तीनां डाकिनीसदृशं वपुः। तत्समानायुधादीनि न्यासपूजनचिन्तने ।।१२।।
अनाहते द्वादशारे राकिणीं रक्तधातुगाम्। ध्यायेत् तत्कर्णिकामध्ये साधकः सर्वसिद्धये।।१३।।

श्यामां शूलाब्जहस्तां डमरुकसहितां तीक्ष्णचक्रं वहन्तीं
द्व्यास्यां रक्तत्रिनेत्रां भ्रुकुटिवलिलसद्दष्टदन्तप्रभाभिः।
दीप्तां तां देवदेवीं हृदयकमलगां रक्तधात्वेकनाथां
शुद्धान्नेषु प्रसक्तां मधुमदमुदितां भावयेद् राकिणीं ताम्।। १४।।

तत्तदक्षरतत्स्थानतदन्तपद[4]योजनात् । पूर्ववन्मन्त्रमुच्चार्य कर्णिकायां न्यसेद् बुधः।। १५।।
परितः कालरात्र्यादिशक्तीस्तद्वर्णपूर्विकाः। न्यसेद् द्वादशपत्रेषु पूर्वादिषु यथाक्रमम्।। १६।।
कालरात्रिश्च खातीता गायत्री च ततः परम्। घण्टाधारिणिका चैव ततो ङार्णात्मिका पुनः।।१७।।
चामुण्डाच्छाया जया झङ्कारिणी ञार्णात्मिका पुनः। टङ्कहस्ता च ठङ्कारिण्येताः पूर्वादि विन्यसेत्।।१८।।
कालरात्र्यादिशक्तीनां राकिणीसदृशं वपुः। तत्समानायुधादीनि न्यासपूजनचिन्तने।। १९।।
मणिपूरे दशदले लाकिनीं मांसधातुगाम्। ध्यायेत् तत्कर्णिकामध्ये साधकः सर्वसिद्धये।।२०।।

कृष्णां देवीं त्रिवक्त्रां त्रिनयनसहितां दंष्ट्रिणीमुग्ररूपां
वज्रं शक्तिं च दण्डाभयवरददरान् दक्षवामे दधानाम्।
ध्यात्वा नाभिस्थपद्मे दशदलविलसत्कर्णिके लाकिनीं तां
मांसस्थां गौडभक्तोत्सुकहृदयवतीं चिन्तयेत् साधकेन्द्रः।।२१।।

मन्त्रं प्राग्वत् प्रविन्यस्य डामर्यादीन् प्रविन्यसेत्। डामरी ढंकारिणी च णकारिण्यथ तामसी।।२२।।
स्थानदेवी च दाक्षायण्यथ धात्री तथैव च। नन्दा च पार्वती फट्कारिण्येता दशपत्रगाः।।२३।।
डामर्यादिकशक्तीनां लाकिनीसदृशं वपुः। तत्समानायुधादीनि न्यासपूजनचिन्तने ।। २४।।
स्वाधिष्ठाने रसदले काकिनीं भावयेत्सुधीः। मेदोधातुस्थदेवेशीं परिवारसमन्विताम्।। २५।।

स्वाधिष्ठानाख्यपद्मे रसदलललिते वेदवक्त्रां त्रिनेत्रां
पीताभां धारयन्तीं त्रिशिखगुणकपालाभयान्यात्तगर्वाम्[5]।

---

१.'म' क. 'ल' ग.पाठः। २.'तु' ख.पाठः। ३.'दं' क.ख.पाठः। ४.'परि' ख.पाठः। 'तद्धातुपद' ग. पाठः। ५.'पीतवर्णाम्' ग.पाठः।

मेदोधातुप्रतिष्ठामलिमदमुदितां बन्धिनीत्यादियुक्तां[1]

दध्यन्ने सक्तचित्तामभिमतफलदां काकिनीं भावयेत्ताम्।।२६।।

बन्धिनी भद्रकाली च महामाया यशस्विनी। रमा तथा च लम्बोष्ठी षड्दले पूर्ववन् न्यसेत्।।२७।।

बन्धिन्यादिकशक्तीनां काकिनीसदृशं वपुः। तत्समानायुधादीनि न्यासपूजनचिन्तने।।२८।।

मूलाधारे वेददले शाकिनीमस्थिधातुगाम्। परिवारयुतां देवीं कर्णिकायां तु भावयेत्।।२९।।

देवीं ज्योतिःस्वरूपां त्रिनयनविलसत्पञ्चवक्त्रां सुदंष्ट्रां

हस्ताम्भोजेषु चापं सृणिमपि दधतीं पुस्तकं ज्ञानमुद्राम्।

मूलाधारस्थपद्मे निखिलपशुजनोन्मादिनीमस्थिसंस्थां

मुद्गान्ने प्रीतियुक्तां मधुमदमुदितां चिन्तयेत् शाकिनीं ताम्[2]।।३०।।

वरदा शशिनी षण्डा चतुर्थी स्यात्सरस्वती। चतुर्दलेषु पूर्वादि न्यसेदेतास्तु साधकः।।३१।।

वरदादिकशक्तीनां शाकिनीसदृशं वपुः। तत्समानायुधादीनि न्यासपूजनचिन्तने।। ३२।।

आज्ञायां द्विदले पद्मे या मज्जाधातुदेवता। ध्यात्वा तां कर्णिकामध्ये तन्मन्त्रं तत्र विन्यसेत्।।३३।।

भ्रूमध्ये बिन्दुपद्मे द्विदलसुललिते शुक्लवर्णा कराब्जै–

र्बिभ्राणां ज्ञानमुद्रां डमरुकसहिता[3] मक्षमालां कपालम्।

षड्वक्त्रां मज्जसंस्थां त्रिनयनललितां हंसवत्यादियुक्तां

हारिद्रान्ने प्रसक्तां सकलसु[4]रनुतां हाकिनीं भावयेत्ताम्।।३४।।

हंसवत्यै क्षमावत्यै नम इत्यपि विन्यसेत्। दलद्वये क्रमाद् देवि तत्तदक्षरपूर्वकम् ।।३५।।

हंसवत्यादिशक्त्योस्तु हाकिनीसदृशं वपुः। तत्समानायुधादीनि न्यासपूजनचिन्तने ।।३६।।

ब्रह्मरन्ध्रे सहस्रारे कर्णिकायां तु याकिनीम्। तां शुक्रधातुगां देवीं ध्यायेत् सावरणां शुभाम्।।३७।।

मुण्डव्योमस्थपद्मे सकलदलयुते याकिनीं भैरवीं तां

यक्षिण्याद्यां समस्तायुधकलितकरां सर्ववर्णां समष्टिम्।

डादीनां सर्ववक्त्रां सकलसुखकरीं सर्वधातुस्व[5]रूपां

सर्वान्ने सक्तचित्तां परशिवरसिकां भावयेत् सर्वरूपाम्।। ३८।।

तन्मन्त्रं पूर्ववन्न्यस्य परितोऽप्यमृतादिकाः। अमृतादिकशक्तीनां याकिनीसदृशं वपुः।।३९।।

तत्समानायुधादीनि न्यासपूजनचिन्तने।

इति योगिनीन्यासः।। अथ राशिन्यासः –

प्राणानायम्य मूलेन राशीनां ध्यानमाचरेत्। रक्तं श्वेतं हरिद्वर्णं पाण्डुं चित्रं सितं स्मरेत्।।१।।

पिशङ्गकपिलौ कद्रुकर्बुरारुणधूमलान् ।अकारादिचतुष्केण विन्यसेत् सुरवन्दिते।। २।।

१.'पूर्वशक्तिम्' ग. पाठः। २.'तां प्रसन्नाम्' ग. पाठः। ३.'तां मस्त; ग. पाठः। ४.'सुखकरीं' ग. पाठः। ५.'स्थ' ग. पाठः।

मेषं दक्षिणपद्गुल्फे ततो द्वन्द्वेन वै वृषम्। न्यसेज्जानुनि वेदैस्तु मिथुनं वृषणे ततः।।३।।
द्वाभ्यां कर्कटकं कुक्षौ द्वाभ्यां स्कन्धे च सिंहकम्। अनुस्वारविसर्गाभ्यां शवर्गेण च कन्यकाम्।।४।।
दक्षिणे तु शिरोभागे विन्यसेद्वीरवन्दिते। तथा वामे शिरोभागे कवर्गेण तुलाभृतम्।।५।।
चवर्गेण तथा स्कन्धे वृश्चिकं विन्यसेत् प्रिये। टवर्गेण तथा कुक्षौ धन्विनं विन्यसेत् प्रिये।।६।।
मकरं तु तवर्गेण वृषणे वामके न्यसेत्। पवर्गेण तथा कुम्भं वामजानुनि विन्यसेत्।।७।।
यवर्गेण क्षकारेण मीनं गुल्फे तु वामके। तथा—

प्राणापानोदानव्यानसमानाः पञ्च वायवः। मेषाद्या राशयो ज्ञेयाः पञ्च सिंहावसानकाः ।। ८।।
तथा नागश्च कूर्मश्च कृकलो देवदत्तकः। धनञ्जय इति प्रोक्ताः कन्याद्याः पञ्च राशयः ।। ९।।
जीवात्मपरमात्मानौ कुम्भमीनौ प्रकीर्तितौ। न्यस्तव्या मन्त्रिभिः सिद्ध्यै तदाद्या रविराशयः।।१०।।

इति राशिन्यासः।। अथ पीठन्यासः—

अथ पीठानि विधिना न्यसेत् सर्वमयानि हि। सितासितारुणश्यामहरितपीतान्यनुक्रमात् ।। १।।
पुनःपुनः क्रमाद् देवि पञ्चाशत्स्थानसंचये। पीठानि संस्मरेद्विद्वान् सर्वकामार्थसिद्धये।। २।।

"कामरूपं महापीठ" मित्यादिपीठमातृकोक्तक्रमो बोद्धव्य इति पीठन्यासः।। इति पूर्वषोढान्यासः समाप्तः।।

अथ कामरतिन्यासः—

केवलां मातृकां न्यस्य कामभक्तो भवेद्यदि। कामशक्तिसमायुक्तां मातृकां विन्यसेत् सुधीः।।१।।
संमोहन ऋषिश्चैव जगती छन्द उच्यते। श्रीकामशक्तयो देवि देवताः परिकीर्तिताः।।२।।
क्लीं बीजं च नमः शक्तिर्मातृका कीलकं स्मृतम्। षट्दीर्घकामबीजेन षडङ्गानि प्रविन्यसेत्।।३।।
अथ कामा वरारोहे दाडिमीकुसुमप्रभाः। वामाङ्गशक्तिसहिताः पुष्पबाणेक्षुकार्मुकाः ।।४।।
शक्तयः कुङ्कुमनिभाः सर्वाभरणभूषिताः। नीलोत्पलकरा ध्येयास्त्रैलोक्याकर्षणक्षमाः ।।५।।

इति ध्यात्वा। ४ अं कामाय रत्यै नमः इत्यादि कामरतिमातृकोक्तक्रमेण न्यसेदिति कामरतिमातृकान्यासः।।

अथ श्रीचक्रन्यासस्तदुक्तं तन्त्रान्तरे—

एवं षोढा पुरा कृत्वा कामरत्यादिकं न्यसेत्। ततः श्रीचक्रविन्यासः कर्तव्यः शिवताप्तये।। १।।
श्रीमत्त्रिपुरसुन्दर्याश्चक्रन्यासं शृणु प्रिये । यन्न कस्यचिदाख्यातं तनुशुद्धिकरं परम्।।२।।

श्रीरुद्रयामले—

शरीरं चिन्तयेदादौ निजं श्रीचक्ररूपकम्। त्वगाद्याकारनिर्मुक्तं ज्वलत्कालाग्निसत्प्रभम्[1]।।१।।इति।
ऋषिच्छन्दोदैवतानि स्मृत्वा न्यासं समाचरेत्। अनुलोमविलोमस्थबालया स्यात् षडङ्गकम्।।१।।
द्वादशान्ते चिदाकाशे शिवशक्त्यात्मकं गुरुम्। परतेजोमयं ध्यायेद्भोगमोक्षफलाप्तये।।२।।

आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजभावयुक्तम्।
योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि।।३।।

---

१. 'संनिभम्' ख. पाठः।

वामजानौ गणेशानां वामांसे क्षेत्रपालकम्। योगिनीं दक्षिणे जानौ स्कन्धे वटुकभैरवम्।। ४।।
न्यसेद् दक्षपदाग्रेऽथ शक्रं वाथ हुताशनम्। दक्षजानौ यमं पश्चाद् दक्षपार्श्वे न्यसेद् बुधः।। ५।।
दक्षांसे निर्ऋतिं पश्चाद्वामांसे वरुणं ततः। वामपार्श्वे समीरं च वामजानौ धनाधिपम्।। ६।।
ईशानं वामपादाग्रे ब्रह्माणं ब्रह्मरन्ध्रतः। अनन्तं विन्यसेन्मन्त्री मूलाधारे समाहितः।। ७।।
चतुरस्रादिरेखायै नम इत्यादितो न्यसेत्। दक्षांसपृष्ठपाण्यग्रस्फिक्पादाग्राङ्गुलीष्वथ ।। ८।।
वामपादाङ्गुलि, स्फिक्पाण्यग्रे चांसकूटके। सचूलीतल, पृष्ठेषु व्यापकत्वेन सुन्दरि।।९।।
सिद्धीस्तदन्तरालस्था व्यापकत्वेन विन्यसेत्। चतुरस्रमध्यरेखायै नम इत्यापि वल्लभे।। १०।।
विन्यस्य तस्याः स्थानेषु ब्रह्माण्याद्यास्तथाष्टसु। इति।

श्रीरुद्रयामले—

कैलासशिखरासीनं शिवं पप्रच्छ पार्वती। श्रीचक्रन्यासकवचं ब्रूहि मे देव शङ्कर।। १।।

शङ्कर उवाच

साधु पृष्टं त्वया देवि लोकानां हितकाम्यया। श्रीचक्रन्यासकवचं प्रस्फुटं कथयामि ते।।२।।
शरीरं चिन्तयेदादौ निजं श्रीचक्ररूपकम्। त्वगाद्याकारनिर्मुक्तं ज्व'लत्कालाग्निसत्प्रभम्।।३।।
द्वादशान्ते चिदाकाशे शिवशक्त्यात्मकं गुरुम्। परतेजोमयं ध्यायेद्भोगमोक्षफलाप्तये।।४।।
गणेशो जानु (मे?नी) पातु वामांसं क्षेत्रनायकः। योगिन्यो दक्षिणं (पान्तु) स्कन्धं वटुकभैरवः।।५।।
दक्षपादाग्रमिन्द्रो मे पात्वग्निर्दक्षजानुकम् । दक्षपार्श्वं यमः पातु दक्षांसं निर्ऋतिर्मम।।६।।
वरुणः पातु वामांसं वामपार्श्वं समीरणः। वामजानु धनाध्यक्षो वामपादाग्रमीश्वरः ।।७।।
ब्रह्मरन्ध्रं विधिः पातु मूलाधारमनन्तकः । चतुरस्रादिरेखायै नम इत्याद्यनुक्रमात् ।।८।।
व्यापकत्वेन विन्यसेत् कुसुमाञ्जलिमीश्वरि । निधिवाहनमारुढा वराभयकराम्बुजाः ।।९।।
पद्मरागप्रतीकाशाः प्रसीदन्त्वणिमादयः । दक्षांसपृष्ठमणिमा कराग्रं² लघिमावतु ।। १०।।
दक्षस्फिचं तु महिमा ईशित्वं चरणाग्रकम्। वशित्वं वामपादेऽव्यात् प्राकाम्यं स्फिचकेतरे।।११।।
इच्छासिद्धिस्तु वामांसं कराग्रं³ भुक्तिसिद्धिका। रससिद्धिः शिरो मेऽव्याच्छिरः पृष्ठं तु मोक्षदा।।१२।।
चतुरस्रमध्यरेखायै नम इत्याद्यनुक्रमात् । व्यापकत्वेन विन्यसेत् कुसुमाञ्जलिमीश्वरि।। १३।।
(पादाङ्गुष्ठौ तु ब्रह्माणी माहेशी दक्षपार्श्वकम्। कौमारी च शिरः पातु वैष्णवी वामपार्श्वकम्।।१४।।
वामजानुनि वाराही चेन्द्राणी दक्षजानुनि। चामुण्डा पातु दक्षांसे महालक्ष्मीस्तु वामके।। १५।।
चतुरस्रान्तरेखायै नम इत्याद्यनुक्रमात्। व्यापकत्वेन विन्यसेत् कुसुमाञ्जलिमीश्वरि।। १६।।)
मुद्रादेव्यः प्रसीदन्तु वराभयकराम्बुजाः । भक्तानुग्रहसंधानदेवतामोदहेतवे।। १७।।
पादाङ्गुष्ठद्वयं मुद्रा सर्वसंक्षोभिणी मम । सर्वविद्राविणी मुद्रा पार्श्वं रक्षतु दक्षिणम्।। १८।।

१. 'कुल' ग. पाठः। २. 'वराङ्गं' ग. पाठः। ३. 'इच्छासिद्धिर्वराङ्गं तु वामाङ्गं भुक्ति' ग. पाठः।

आकर्षिणी मूर्ध्नि देशं वामपार्श्वं वशङ्करी। उन्मादिनी वामजानुं दक्षजानुं महाङ्कुशा।। १९।।
सव्यांसं खेचरी पातु वामांसं बीजमुद्रिका। त्रिखण्डा द्वादशान्तं तु योन्यङ्गुष्ठद्वयं पदोः।।२०।।
हृन्मध्यं त्रिपुरा पातु सिद्धिमुद्रासमन्विता। सर्वाशापूरकं ङेन्तं षोडशाराय वै नमः।।२१।।
व्यापकत्वेन विन्यसेत् कुसुमाञ्जलिमीश्वरि। कलादेव्यः प्रसीदन्तु पाशाङ्कुशकरोद्यताः।।२२।।
रक्ताङ्ग्यो रक्तवसनाः सर्वाभरणभूषिताः। कामाकर्षिणिका पातु कर्णपृष्ठं तु दक्षिणम्।।२३।।
बुद्ध्याकर्षिणिका नित्या रक्षताद्[1] दक्षिणांसकम्। अहङ्काराकर्षिणी मे कूर्परं पातु दक्षिणम्।।२४।।
दक्षिणं पाणिपृष्ठं मे शब्दाकर्षिणिकावतु । स्पर्शाकर्षिणिका पायाद्दक्षिणोरुतटं मम।।२५।।
रूपाकर्षिणिका जानु रसाकर्षी तु गुल्फकम्। गन्धाकर्षिणिका रक्षेद् दक्षपादतलं मम।।२६।।
वामपादतलं देवी चित्ताकर्षिणिकावतु। पादाधोयावता गुल्फं धैर्याकर्षिणिकावतु।। २७।।
स्मृत्याकर्षिणिका जानुं वामोरुं नामकर्षिणी। बीजाकर्षिणिका पातु करपृष्ठमदक्षिणम्।।२८।।
कूर्परं पातु मे सव्यमात्माकर्षणकारिणी। अमृताकर्षिणी वामांसं शरीराकर्षिणी श्रुतिम्।।२९।।
सिद्धिमुद्रान्विता यावद्धृन्मध्यं त्रिपुरेश्वरी। सर्वसंक्षोभणं ङेन्तं चक्राय नम इत्यपि।।३०।।
व्यापकत्वेन विन्यसेत् कुसुमाञ्जलिमीश्वरि। अनङ्गकुसुमादेव्यः प्रसन्ना रक्तकञ्चुकाः।।३१।।
वेणीकृतजगत्केशाः शरकार्मुकपाणयः । अनङ्गकुसुमा पातु दक्षशङ्खं सदा मम।।३२।।
अनङ्गमेखलादेवी त्रायतां दक्षजानुकम्। अनङ्गमदनाशक्तिरूरुं पायात् सदा मम।।३३।।
गुल्फमध्यान्तरं मेऽव्यादनङ्गमदनातुरा । अनङ्गरेखा वा माङ्गं रक्षतां गुल्फमन्तरम्।। ३४।।
अनङ्गवेगिनी पायादूरुप्रान्तं सदा मम। ममानङ्गाङ्कुशा जानुदेशं रक्षतु वामकम्।।३५।।
अनङ्गमालिनी शङ्खं वामे रक्षतु मेऽनिशम्। सुन्दरी सिद्धिमुद्राभ्यां पातु मे हृदयान्तरम्।।३६।।
सर्वसौभाग्यदं ङेन्तं चक्राय नम इत्यापि। व्यापकत्वेन विन्यसेत् कुसुमाञ्जलिमीश्वरि।।३७।।
शक्तिदेव्यः प्रसीदन्तु बाणकार्मुकपाणयः । सर्वाभरणसंपन्ना वैडूर्यमणिरोचिषः ।। ३८।।
सर्वसंक्षोभिणी फालं तदन्तं द्राविणी मम। दक्षिणं पालयेद् गण्डं सर्वाकर्षिणिका सदा।।३९।।
सर्वाह्लादकरी दक्षमंसान्तं पातु मे सदा। सर्वसंमोहनीशक्तिः पार्श्वान्तं पातु दक्षिणम्।।४०।।
सर्वसंस्तम्भिनी रक्षेद्दक्षमूरुं तु पृष्ठकम्। जङ्घान्तं जृम्भिणी दक्षं वामं सर्ववशङ्करी।।४१।।
रञ्जिनी वामपूर्वं तु पृष्ठं पालयतान्मम। पार्श्वान्तं सर्वमव्यान्मे सर्वोन्मादनकारिणी।।४२।।
सर्वार्थसाधिनी पायादंसान्तं दक्षिणेतरम्। वामं पातु कपोलं मे सर्वसंपत्प्रपूरणी।।४३।।
सर्वमन्त्रमयी भालं वामभागं ममावतु । पालयेद् द्वारकूपं मे सर्वद्वन्द्वक्षयङ्करी ।।४४।।
त्रिपुरवासिनी सिद्धिमुद्राभ्यां पातु हृन्मम। सर्वार्थसाधकं ङेन्तं चक्राय नम इत्यपि।।४५।।
व्यापकत्वेन विन्यसेत् कुसुमाञ्जलिमीश्वरि। दश देव्यः प्रसीदन्तु सर्वसिद्धिप्रदायिकाः।।४६।।

---

१. 'रक्षिका' ग. पाठः।

कुन्दमन्दारहाराभा वराभयकराम्बुजाः। सर्वसिद्धिप्रदा मेऽव्याद्दक्षिणेक्षणकोणकम् ॥ ४७॥
पालयेन्नासिकामूलं सर्वसंपत्प्रदा मम। नित्यं रक्षतु वामाक्षिकोणं सर्वप्रियङ्करी ॥ ४८॥
रक्षेत् कुक्षिं सकोणं मे सर्वमङ्गलकारिणी। तथैव कुक्षिवायव्यं सर्वकामप्रदावतु॥ ४९॥
वामजान्वन्तरं पातु सर्वदुःखविमोचनी। सर्वमृत्युप्रशमनी दक्षिणं जानुकान्तरम् ॥ ५०॥
सदा पायादपानं मे सर्वविघ्ननिवारिणी। सर्वाङ्गसुन्दरी देवी रक्षतात् कुक्षिनैर्ऋतम् ॥ ५१॥
आग्नेयं पालयेत् कुक्षिं सर्वसौभाग्यदायिनी। हृन्मध्यं त्रिपुराश्रीर्मे सिद्धिमुद्रान्वितावतु॥ ५२॥
सर्वरक्षाकरं ङेन्तं चक्राय नम इत्यपि। व्यापकत्वेन विन्यसेत् कुसुमाञ्जलिमीश्वरि ॥ ५३॥
अन्तर्दशारवासिन्यः प्रसीदन्तु ममानिशम्। देव्यः स्फटिकसंकाशाः पुस्तकाक्षालिबाहवः॥५४॥
सर्वज्ञा सर्वशक्तिश्च दक्षिणघ्राणसृक्विणी। सर्वैश्वर्यप्रदा ज्ञानमयी च स्तनमुष्ककौ ॥ ५५॥
सीवनीमनिशं पातु सर्वव्याधिविनाशिनी। वामं मे वृषणं पातु सर्वाधारस्वरूपिणी॥ ५६॥
सर्वपापहरानन्दमयी च स्तनसृक्विणी। वामनासापुटं पातु सर्वरक्षास्वरूपिणी ॥ ५७॥
अग्रदेशं नासिकायाः सर्वेप्सितफलप्रदा। हृत्पद्मं सिद्धिमुद्राभ्यां पातु त्रिपुरमालिनी॥ ५८॥
सर्वरोगहराष्टारचक्राय नम इत्यपि । व्यापकत्वेन विन्यसेत् कुसुमाञ्जलिमीश्वरि॥ ५९॥
वाग्देव्यो नः प्रसीदन्तु सिन्दूरकनकाम्बराः। पुस्तकाक्षालिविलसद्वरदाभीतिबाहवः॥६०॥
दक्षिणं चिबुकस्यांशं वशिनी पातु सर्वदा। कण्ठं कामेश्वरी दक्षं हृदयं पातु मोदिनी॥ ६१॥
विमला दक्षिणं नाभेस्तद्वाममरुणावतु। हृद्वामं जयिनी पातु कण्ठं सर्वेश्वरी तथा॥ ६२॥
कौलिनी चिबुकं सिद्धा त्रिपुरा हृदयाम्बुजम्। सर्वसिद्धिप्रदान्तरालचक्राय नम इत्यपि॥ ६३॥
व्यापकत्वेन विन्यसेत् कुसुमाञ्जलिमीश्वरि। कामकामेश्वरीबाणचापपाशाङ्कुशाः क्रमात्॥ ६४॥
परितो हृदि कोणस्य चतुरस्रं ममावतु। महामोक्षप्रदां योनिं हृदयोपरि राजिताम्॥ ६५॥
कामेश्वर्यादिकं पातु नित्याषोडशकं मम। कामप्रदा रुद्रशक्तिः कामरूपनिवासिनी॥ ६६॥
अग्रकोणं महायोनेः पातु कामेशवरी मम। धर्मदा वैष्णवी शक्तिर्जालन्धकृतमन्दिरा॥ ६७॥
दक्षकोणान्तरं योनेः पायान्मे वैष्णवी सदा। अर्थदा वैष्णवीशक्तिः पूर्णशैलकृतालया॥ ६८॥
वामकोणान्तरं पातु सुभगा भगमालिनी। त्रिपुराम्बा योनिमध्यं सिद्धिमुद्रा ममावतु॥ ६९॥
उड्यानपीठनिलया परब्रह्मस्वरूपिणी। पञ्चश्रीकोशकल्पद्रुकामधुग्रत्नदैवतैः ॥ ७०॥
मण्डितासनसंस्थाना सर्वदर्शनसंस्थिता। स्तुता षडङ्गदेवीभिश्चतुः समयपूजिता ॥ ७१॥
महासौभाग्यजननी महामोक्षप्रदायिनी। हृदि दोरन्तरं पातु महात्रिपुरसुन्दरी॥ ७२॥
सैव चक्रेश्वरी देवी सिद्धिमुद्रासमन्विता। आपादमस्तकं देवी पातु त्रिपुरभैरवी॥ ७३॥
एतत्ते कवचं भद्रे रहस्यं सर्वकामदम्। तुरीयविद्यामुच्चार्य परब्रह्मस्वरूपिणी॥ ७४॥

श्रीमहात्रिपुरशून्याशून्यवर्जितशक्तिपरबैन्दवचक्रवासिन्यनाख्याभासाश्रीपादुकां पूजयामि तर्पयामि नमः तत्रैव नवचक्रेश्वरीः पूजयेत्। कएईलह्रीं हसकहलह्रीं सकलह्रीं त्रिपुरशून्याशून्यपरबैन्दवचक्रवासिन्यनाख्याभासा श्रीपादुकां पूजयामि नमः।

इति विन्यस्य स्वमुद्रां प्रदर्शयेत्।

यत्र कस्यचिदाख्यातं तदद्य प्रकटीकृतम्। य इदं विन्यसेद् देहे साधकः स्थिरमानसः।। ७५।।
विमुच्य मानुषं भावं स सद्यः शिवतां व्रजेत्। त्रिकालं भावयेद्यस्तु तस्य सर्वाङ्गसंगतम्।। ७६।।
आमस्तं योगिनीवृन्दं स्फुरद्रूपं प्रकाशते। भूतप्रेतपिशाचाद्यैर्बाधितुं नैव शक्यते ।। ७७।।
सिद्धवद्विचरेल्लोके तापत्रयविवर्जितः। यत्र योगी स्मरेदेतत् तस्मादारभ्य सर्वतः।। ७८।।
धरणी क्षेत्रतां याति यावद् द्वादशयोजनम्।

इति श्रीरुद्रयामले श्रीचक्रन्यासकवचम्। इति संहारश्रीचक्रन्यासः।। अथ सृष्टिचक्रन्यासः–सच मूलदेव्याद्यणिमान्तः। तत्र क्रममाह योगिनीहृदये—

मूलदेव्यादिकं न्यासमणिमान्तं पुनर्न्यसेत्। शिरस्त्रिकोणे पूर्वादि कामेश्वर्यादिकं न्यसेत्।। १।।
बाणा नेत्रे भ्रुवौ चापौ कर्णौ[१] पाशद्वयं पुनः। सृणिद्वयं च नासाग्रं[२] दक्षिणाद्यं च विन्यसेत्।।२।।
मुण्डमालाक्रमेणैव न्यसेद्वाग्देवताष्टकम् । बैन्दवादीनि चक्राणि न्यस्तव्यानि वरानने।।३।।
नेत्रमूले त्वपाङ्गे च कर्णपूर्वोत्तरे तथा । चूलिकायाश्च[३] निम्नार्धे शेषार्धे कर्णपृष्ठके[४]।।४।।
कर्णमूले त्वपाङ्गे च तस्य मूले च विन्यसेत्। सर्वसिद्ध्यादिकं कण्ठे प्रादक्षिण्येन विन्यसेत्।।५।।
हृदये मनुकोणस्थाः शक्तयोऽपि च पूर्ववत्। नाभौ त्वष्टदलं तत्र[५] वंशे वामे च पार्श्वयोः।।६।।
उदरे सव्यपार्श्वे च न्यसेदादिचतुष्टयम् । वंशवामान्तरालादि न्यसेदन्यचतुष्टयम् ।। ७।।
स्वाधिष्ठाने न्यसेत् स्वस्य पूर्वाद्द क्षावसानकम्। मूलाधारे न्यसेन्मुद्रादशकं साधकोत्तमः।।८।।
पुरः सव्ये च वंशे च वामे चैवान्तरालके। ऊर्ध्वाधो दश मुद्राश्च ऊर्ध्वाधोवर्जितं पुनः।।९।।
ब्रह्माण्याद्यष्टकं दक्षजङ्घायां ताश्च पूर्ववत्। वामजङ्घां समारभ्य वामादिक्रमतोऽपि वा।। १०।।
ब्रह्माण्याद्यष्टकं न्यसेच्छेष[८] द्वयं पादतले न्यसेत्। कारणात् प्रसृतं न्यासं दीपाद् दीपमिवोदितम्।।११।।
एवं विन्यस्य देवेशि स्वाभेदेन विचिन्तयेत्।

इति समष्टिरूपेण महाचक्रस्य संहारक्रमन्यासमुक्त्वा सृष्टिक्रमेणाह—मूलदेव्यादिकमिति। एवं चेत् क्रियते तदा न्यासः सृष्टिक्रमेण भवति, तं पुनर्न्यसेदित्यर्थः। तत्र प्रकारमाहशिर इत्यादि। शिरसि कल्पितत्रिकोणः शिरस्त्रिकोणस्तस्मिन् कामेश्वर्यादिकं बीजदेवीत्रयं न्यसेदित्यर्थः। केन क्रमेणेत्यत आहपूर्वादीति। पूर्वश्चात्र मस्तकाग्रभागस्तदादि यथा स्यात्। तेन ललाटाभिमुखस्त्रिकोणः कल्पनीय इत्यायातम्। स च श्रीचक्रनिर्माणक्रमेण यथायोग्यविन्यासरेखो भवति तथाष्टारपर्यन्तं कल्पनीय इति भावः। तथा च सति शिरोपेक्षया पूर्वाग्रं त्रिकोणं जातमिति, पश्चिमकोणे आग्नेयकोणे ईशानकोणे इति वा भविष्यति। तत्राद्ये पूर्वादिति प्रादक्षिण्येनेत्यर्थः। अन्त्येऽप्रदक्षिणमित्यर्थः। तेन पश्चिमाद्यप्रदक्षिणमिति तन्त्रराजमतमायातम्। तेन सह योगिनीहृदयस्यैकवाक्यतयैवमेव न्यासः कार्य इति कश्चित्। चतुःशत्येकवाक्यतया पूर्वमतद्वयेन न्यासः कार्य

---

१. 'बाणान्नेत्रे भ्रुवोःचापौ कर्णे' ख. पाठः। २. 'ग्रे' ख. पाठः। ३. 'चूडादिके' ख. पाठः। ४. 'पृष्ठयोः' ग. पाठः।
५. 'तत्तु' ग. पाठः। ६. 'के' ग. पाठः। ७. 'पुनः' ग. पाठः। ८. 'तेषु' ग. पाठः।

इति कश्चित्। वस्तुतस्त्वयं पक्षः समीचीनः पूर्वचतुःशत्या तात्पर्यग्राहकत्वादस्येति संक्षेपः। आयुधन्यासे स्थानविशेषमाह—बाणा इत्यादि। बाणाः पञ्चबाणाः शिवस्य शक्त्याश्चेति द्विविधाः नेत्रे नेत्रद्वयस्वरूपा इत्यर्थः। नेत्रे इति द्विवचनं तेन दक्षनेत्रं कामेश्वरबाणाः वामनेत्रं कामेश्वरीबाणाः एवं दक्षभ्रूः कामेश्वरचापः, वामभ्रूः कामेश्वर्यचापः, दक्षकर्णः कामेश्वरपाशः वामकर्णः कामेश्वरीपाशः, दक्षनासापुटाग्रं कामेश्वराङ्कुशः वामनासापुटाग्रं कामेश्वरीङ्कुशः, इति तत्र तत्रैव तान् न्यसेदित्यत आह—दक्षिणाद्यमित्यादि। अत्र यद्यपि त्रिकोणाष्टारयोर्मध्यमायुधस्थानमिति पूर्ववदपि तत्रैव न्यास उपपद्यते तथापि सृष्टिक्रमेण स्वरमूर्तीनां सांनिध्यात् तत्रैवायुधानां न्यासो युक्त इतीश्वराज्ञा। एवं षोडशनित्यानामपि स्वरमूर्तित्वात् सृष्टिक्रमे तत्स्थानामपि संनिधानात् तेष्वेव तासां न्यासो युक्त इतीश्वरेच्छा मन्तव्या। श्रीविद्यान्यासस्थानस्य पृष्ठतः स्वस्थान एव गुरुपङ्क्तयो न्यस्तव्याः, ततः षोडशनित्यामण्डल इति क्रमः सृष्टिक्रमन्यासे, अन्यत्र तु पूर्वोक्तक्रम एवेति। ज्ञानार्णवे—

श्रीविद्यां ब्रह्मरन्ध्रे तु पृष्ठतो गुरवः क्रमात्। तिथिनित्यास्ततो देवीं मातृकास्वरसंयुताः।। १ ।।
मातृकावन्न्यसेद्वक्त्रे सर्वसौभाग्यदायिनी। अःस्वरे परमेशानि श्रीविद्यां विश्वमातृकाम्।। २ ।।
स्वरवद्विन्यसेन्नित्यां नीरजायतलोचने।

इत्ययं न्यासः सृष्टिश्रीचक्रन्यासान्तर्गतः स्वतोऽपीति मन्तव्यम्।। अथाष्टारन्यासक्रममाह-मुण्डमालेति। मुण्डोमस्तकः, मुण्डे माला मुण्डमाला तस्याः क्रमेण प्रतिपाद्येत्यर्थः। तेन ललाटोर्ध्वकोणादितः पूर्वादिप्रादक्षिण्येन शिरोनवयोगिनीचक्रीत्याष्टकोणेषु मालाक्रमेण वाग्देवताष्टकं न्यसेदिति भावः। ननु बिन्दुचक्रन्यासं कथं कुर्यादित्यत आह—बैन्दवादीनीति। बैन्दवं सर्वानन्दमयं महाबिन्दुचक्रं तदेवादिर्येषां तानि यथाचक्राणि त्रिकोणादीनि बैन्दवादीनि कृत्वा न्यस्तव्यानीति सम्बन्धः। आदौ बिन्दुचक्रं न्यस्य पश्चात् त्रिकोणादीनि न्यसेदिति भावः। तर्हि बिन्दुचक्रन्यासः कथं प्रथमं नोक्त इति चेत्? न, तस्यावच्छेदकत्वात् त्रिकोणस्य, त्रिकोणमध्यं हि बिन्दुचक्रं तेन विना कथं तदुपपद्यताम्। तेनायं कलितार्थः परिपाटीविशेषः प्रथमं शिरसि त्रिकोणं विचिन्त्य तन्मध्ये "सर्वानन्दमयचक्राय नमः" इति व्यापकं कृत्वा तद्बिन्दुत्वेन विचिन्त्य तत्र यथाविधि मूलदेवीं न्यसेत्। ततस्त्रिकोणादौ न्यासः। अतः शिरस्त्रिकोणे इति सिद्धविभक्तिनिर्देशः। केचित्तु तटस्थमेव प्रथमं बिन्दुचक्रं विभाव्य विन्यस्य तद्बाह्यतस्त्रिकोणचक्रं विभाव्य विन्यसेदिति क्रममाहुः। स च नो योगिनीहृदयसंमत इति चिन्त्यम्।। अथान्तर्दशारचक्रस्य न्यासस्थानान्याह—नेत्रमूल इत्यादि। नेत्रस्य दक्षिणनेत्रस्य मूले पूर्वकण्ठे नासिकोपकण्ठ इति यावत्, तस्यैवापाङ्ग अञ्चले कर्णोपकण्ठे इति यावत्, कर्णस्य दक्षिणस्य पूर्वोत्तरे पूर्वे मध्ये उत्तरे पृष्ठे, चूलिकायाः चूलाया निम्नार्धे पश्चादर्धे शेषार्धे पूर्वार्धशिरःपृष्ठार्धभागयोरित्यर्थः, इति कश्चित्। चूलिकाया निम्नार्धे चूलिकाया अधस्ताद्यद्निम्नस्थलं घाटासीवनी तस्यार्धे, शेषार्धे वामार्धे तेन स्कन्धसीवन्या दक्षवामभागयोरित्यर्थः इति कश्चित्। अत्र प्रथमभङ्गप्रसङ्ग इति दिक्। कर्णपृष्ठे वामकर्णपृष्ठे, कर्णमूले वामकर्णमध्ये, अपाङ्गे वामनेत्रप्रान्ते तस्य वामनेत्रमूले पूर्वकण्ठे चेति दशसु स्थानेषु चक्रक्रमेण न्यसेत्, सर्वज्ञाद्या दशशक्तीरिति शेषः।। अथ बाह्यदशारचक्रन्यासमाह-सर्वसिद्ध्यादिकमित्यादि। कण्ठे विशुद्धचक्रे अकारादिविसर्गान्तषोडशदले सर्वसिद्ध्यादिकं देवीदशकं पूर्वदलादिप्रादक्षिण्येन न्यसेदित्यर्थः, पद्मस्योर्ध्वमुखत्व-भावनापूर्वकमिति भावः तदा कण्ठकूप एव पूर्वदलमत एवान्तः कण्ठवेष्टनरूप एवायं न्यासो बहिः कण्ठवेष्टनत्वेन न्यसेत्। अथ[1] चतुर्दशारन्यासमाह—हृदय इत्यादि। अनाहतचक्रे कण्ठान्तद्वादशदले मनुकोणस्थाश्चतुर्दशारस्थाः

१ '  ' क. पाठः।

सर्वसंक्षोभिण्यादिचतुर्दशशक्तयोऽपि पूर्ववत् पूर्वदलादिप्रादक्षिण्येन न्यस्तव्या इत्यर्थः।। अथाष्टदलन्यासमाह नाभाविति। भिन्नप्रक्रमे अष्टदलपद्मं नाभौ न्यसेत् ततो[1] बाह्याङ्गवेष्टनत्वेन पूर्ववदन्तर्वेष्टनेनेत्यर्थः। अतो न्यासस्थान-विशेषमष्टदलात्मकमाह-वंशे वामे तदवच्छन्नमेरुदण्डे इत्यर्थः। तेन पृष्ठे पश्चिमदलं वामपार्श्वे उत्तरदलमुत्तरे पूर्वदलं दक्षपार्श्वे दक्षिणदलमिति दिग्दलचतुष्टयेऽनङ्गकुसुमादिचतुष्टयं पश्चिमादप्रदक्षिणं विन्यसेदित्यर्थः। दिग्दलमाह—वंश इति। वामो वामपार्श्वः, वंशश्च वामश्च वंशवामौ तयोरन्तरालं वंशवामान्तरालं वंशवामपार्श्वान्तरालमित्यर्थः। तेन वायव्यदलं जातं, तदेवादिर्यत्र न्यसनक्रियायां तत्तथेति क्रियाविशेषणं, तेन वंशवामान्तरालादिर्यथा स्यात् तथान्यदनङ्गरेखादिचतुष्टयं न्यसेदित्यर्थः। आदिपदेन वामपार्श्वोदरान्तरालमुदरदक्षपार्श्वान्तरालं दक्षपार्श्ववंशान्तरालमिति क्रमेण वायव्येशानाग्नेयनैर्ऋतविदिग्दलचतुष्टयं जातमित्यष्टदलेष्वेवं न्यासः।। अथ षोडशदलचक्रन्यासमाह—"स्वाधिष्ठाने इति" स्वाधिष्ठाने लिङ्गमूले षड्दले स्वस्यात्मनो देहस्य पूर्वभागदलादारभ्याग्नेयदलपर्यन्तं कामाकर्षिण्यादिपञ्चशक्तीर्विन्यस्य, षष्ठे दले शरीराकर्षिणीं षोडशीं शक्तिं न्यसेदिति लिङ्गवेष्टनत्वेन न्यासक्रमः।। अथ त्रैलोक्यमोहनचक्रस्यान्तश्चतुरस्ररेखाया न्यासमाह मूलाधार इत्यादि। मूलाधारे चतुर्दले। तत्र प्रकारमाह—पुर इत्यादि। पुरः पूर्वे देहस्येति शेषः। स्वस्येति चानुवर्तते। सव्ये दक्षिणे, सव्यं स्याद् दक्षवामयोरित्यभिधानात्। वंशे पृष्ठवंशे, वामे वा दले एतद्दलचतुष्टये सर्वसंक्षोभण्यादिमुद्राचतुष्टयं प्रादक्षिण्येन विन्यस्यान्तरालके आग्नेयनैर्ऋत्यवायव्येशानेति दलसंधिचतुष्टये उन्मादिन्यादिमु[2]द्राचतुष्टयं च विन्यस्योर्ध्वमिन्द्रेशानयोर्मध्ये निर्ऋतिवरुणयोर्मध्येऽधस्तयोर्यथाक्रमं खेचरीयोनिमुद्रे न्यसेदिति, दश मुद्राश्चेति।। अथ मध्यमचतुरस्ररेखाया न्यासमाह— ऊर्ध्वाधोवर्जितं पुनरित्यादि। पूर्ववन्मूलाधार इव पूर्वादिप्रादक्षिण्येन चतुर्दिक्षु चतुर्मातॄर्विन्यस्याग्नेयादिचतुरन्तराले वाराह्यादिचतुर्मातॄर्न्यसेदित्यर्थः। अत एवोर्ध्वाधोवर्जितमिति मातॄणामष्टत्वात्।। अथ बाह्यचतुरस्ररेखान्यासमाह—वामजङ्घामित्यादि। वामादिक्रमतः प्रादक्षिण्येनेत्यर्थः। तेन पूर्वादिदिग्दलेषु चतुष्टयं न्यस्याग्रे यादिविदिग्दलेषु चतुष्टयमिति सिद्ध्यष्टकं न्यसेत्। ततोऽवशिष्टसिद्धिद्वयं पादतले वामपादतले चेति न्यसेदित्यर्थः।। सृष्टित्वमस्य प्रतिपादयन्नाह—कारणात् सर्वानन्दमयादित्यर्थः। एवमिति स्वात्मभेदेन ध्यानं कुर्यादित्यर्थः।।

भ्रूमध्ये हृदये नाभौ स्वाधिष्ठाने ततः परम्। मूलाधारे तथैवोरुयुगले जानुनोरपि ।।१।।
जङ्घयोः पादयोश्चैव[3] क्रमाद्विन्द्वादिकेश्वरीः। विन्यसेत् साधकश्रेष्ठस्त्रिपुरान्तः समाहितः।।२।।
ततस्तु व्यापकं कुर्यात् तत्तच्चक्रार्पणा[4]णुना।। इति सृष्टिश्रीचक्रन्यासनिरूपणम्।।

अथ स्थितिचक्रन्यासो निरूप्यते योगिनीहृदये—

ततस्तु करशुद्ध्यादिन्यासं कुर्याद्विचक्षणः। मूर्ध्नि गुह्ये च हृदये नेत्रत्रितय एव च।।१।।
श्रोत्रयोर्युगले देवि मुखे च भुजयोः पुनः। पृष्ठे जानौ च नाभौ च विद्यान्यासं विधाय च।।२।।

इति। मूर्धादिषु विद्यान्यासं विधाय करशुद्ध्यादिविद्यान्यासं कुर्यादित्यर्थः। तत्राधेयाधारभावाच्चक्रचक्रेश्वरीणामपि न्यासो मन्तव्यः। प्रथमं चक्रेश्वरीविद्यादिन्यासं कुर्यादित्यर्थः। तेन स्थितित्वमायातम्। तथा च—

सृष्टिः स्यान्नवयोन्यादिपृथ्व्यन्तं संहृतिः पुनः। पृथ्व्यादिनवयोन्यन्तमिति शास्त्रस्य निश्चयः।।१।।

इति तत्रैवोक्तत्वात्। तथा —

---

१. 'ततः पुनः' ग. पाठः। २.'अन्नादादिमुद्रा' क. पाठः। ३. 'पादयोजाङ्घ्योः' क.ख. पाठः। ४. 'चक्रार्चिना' ग. पाठः।

करशुद्धिकरी त्वाद्या द्वितीया चात्मरक्षिका। आत्मासनगता देवी तृतीया तदनन्तरम्॥ १॥
चक्रासनगता पश्चात् सर्वमन्त्रासनस्थिता। साध्यसिद्धासना षष्ठी मायालक्ष्मीमयी परा॥ २॥
मूर्तिविद्या च सा देवी सप्तमी परिकीर्तिता। अष्टम्यावाहनी मुद्रा[१] नवमी भैरवी परा॥ ३॥
मूलविद्या तथा ख्याता त्रैलोक्यवशकारिणी। एवं नवप्रकाराः स्युः पूजाकाले प्रयत्नतः॥४॥
एताः क्रमेण न्यस्तव्याः साधकेन कुलेश्वरि। पादाग्रजङ्घाजानूरुगुदलिङ्गाग्रकेषु च॥ ५॥
आधारे विन्यसेन्मूर्तिं तस्यामावाहनीं न्यसेत्। मूलेन व्यापकन्यासः कर्तव्यः परमेश्वरि॥६॥
अकुलादिषु पूर्वोक्तस्थानेषु परिचिन्तयेत्। चक्रेश्वरीसमायुक्तं नवचक्रं पुरोदितम्॥ ७॥
आसां नामानि वक्ष्यामि यथानुक्रमयोगतः। तत्राद्या त्रिपुरादेवी द्वितीया त्रिपुरेश्वरी॥ ८॥
तृतीया च तथा प्रोक्ता देवी त्रिपुरसुन्दरी। चतुर्थी च महादेवि देवी त्रिपुरवासिनी॥ ९॥
पञ्चमी त्रिपुराश्रीः स्यात् षष्ठी त्रिपुरमालिनी। सप्तमी त्रिपुरासिद्धिरष्टमी त्रिपुराम्बिका॥ १०॥
नवमी तु महादेवी महात्रिपुरसुन्दरी। पूजयेच्च क्रमादेता नवचक्रे पुरोदिते॥ ११॥
एवं नवप्रकाराद्या पूजाकाले तु पार्वति। एकाकारा ह्यादिशक्तिरजरामरकारिणी॥ १२॥

इति। तत्र प्रथममकुलादिकं ध्यात्वा त्रैलोक्यमोहनादिकं तत्तन्मन्त्रोच्चारेण मनसा ध्यायंस्तदवच्छिन्नबाह्यान्तः स्पर्शेन विन्यस्य तत्र त्रैलोक्यमोहनादौ तथैव नवचक्रेश्वरीर्न्यसेत्, ततस्तच्चक्रेश्वरीयुक्तं तत्तच्चक्रं पुनर्ध्यायेत् इत्यत उक्तं "चक्रेश्वरीसमायुक्त" मिति चक्रेश्वर्यधिष्ठितमित्यर्थः। तद्यथा– अकुले विषुसंज्ञे सुषुम्नामूलभागस्थसहस्रदलकमले त्रिपुराधिष्ठितं त्रैलोक्यमोहनं चक्रं, वह्नौ आधारे चतुर्दलकमले त्रिपुरेश्वर्यधिष्ठितं सर्वाशापरिपूरणं चक्रं, शाक्ते स्वाधिष्ठानस्थषड्दलकमले त्रिपुरसुन्दर्यधिष्ठितं सर्वसंक्षोभकं चक्रं, नाभौ दशदलकमले त्रिपुरवासिन्यधिष्ठितं सर्वसौभाग्यदायकं चक्रं, अनाहते द्वादशदले त्रिपुराश्र्यधिष्ठितं सर्वार्थसाधकं चक्रं, विशुद्धौ षोडशदले त्रिपुरमालिन्यधिष्ठितं सर्वरक्षाकरं चक्रं, लम्बिकाग्रेऽष्टदलकमले त्रिपुरासिद्धाधिष्ठितं सर्वरोगहरं चक्रं, भ्रुवोरन्तरे द्विदलकमले त्रिपुराम्बाधिष्ठितं सर्वसिद्धिप्रदायकं चक्रमिन्दौ ललाटे बिन्दौ महात्रिपुरसुन्दर्यधिष्ठितं सर्वानन्दकरं चक्रं भावयेदिति। तथाच योगिनीहृदये—

"अकुले विषुसंज्ञे च शाक्ते वह्नौ तथा पुनः। नाभावनाहते शुद्धौ लम्बिकाग्रे भ्रुवोन्तरे॥ १॥
इन्दौ" इति। कुलं मूलाधारादधः षड्दलपद्मं नाम तस्मादेकाङ्गुलादधः पद्ममष्टदलपद्मं तस्मादेकाङ्गुलादधः शोणसहस्रदलपङ्कजमिति क्रमः। कुलादन्यदकुलं सुषुम्नामूलस्थरक्तसहस्रदलकमलं तस्मिन्नित्यर्थः। ननु षड्दलस्यैव कुलत्वात्तदनुत्वेनाष्टदलस्याप्यकुलत्वमिति तत्र कथं न स्यादित्यत आह– विषुसंज्ञे चेति। विषुसंज्ञ एवाकुले न्यासो नत्वकुलमात्रे इत्यर्थः। विषुसंज्ञे व्यापकनाम्नि सहस्रदले इति यावत्, यतस्तत्र स्थिता सुषुम्ना तदन्तर्भूतत्रिंशत्पङ्कजानि व्याप्नोतीति। अतो नाष्टदलकमलरूपमकुलं गृह्यते इत्यर्थः। शाक्ते वह्नाविति, वह्नौ शाक्ते इति व्यत्ययेनान्वयश्चक्रक्रमानुरोधात् तद्व्यत्ययादेशस्तु महेश्वरस्य स्वतन्त्रेच्छत्वात्। तथा च वह्निर्मूलाधारो वह्निमण्डलाधारत्वात् शक्तिः हृल्लेखा, तदूर्ध्वस्थितत्वात् शाक्तं स्वाधिष्ठानमित्यर्थः। नाभौ मणिपूरके, अनाहते हृदयपङ्कजे, विशुद्धौ कण्ठपद्मे, लम्बिकाग्रे कण्ठोर्ध्वे तालुमूले अष्टदलकमले, भ्रुवोरन्तरे आज्ञायां द्विदलकमले, इन्दौ ललाटबिन्दावित्यर्थः। "दीपाकारोऽर्धमात्रं च ललाटे वृत्तमिष्यते"

---

१. 'विद्या' ग. पाठः।

इति स्वयमुक्तत्वात्। अर्धमात्रमिति ह्रस्वस्योच्चारणकालो मात्रेत्युच्यते, मात्राया अर्धमुच्चारणकाले यस्य तदर्धमात्रं। ललाटे भ्रुवोरुपरिभागे वृत्तं वर्तुलाकारो बिन्दुरेवेन्दुरिष्यत इत्यर्थः। तेन बिन्दो रूममुच्चारणकालः स्थानं चोक्तम्, दीपाकारोऽर्धमात्रोच्चारणकालो वृत्तसंनिवेशो बिन्दुरित्यर्थः।। अथः सहस्रारादीनां प्रपञ्चमाह स्वच्छन्दसंग्रहे—

अधश्चोर्ध्वं सुषुम्नायाः सहस्रदलसंयुतम्। रक्तं श्वेतं च साहस्रदलस्थशक्तिभिर्युतम् ।। १।।
ऊर्ध्वाधोमुखमीशानि कर्णिकाकेसरान्वितम्। शक्तिरूपं महादेवि कुलाकुलमयं शुभम् ।। २।।
पङ्कजद्वयमीशानि[1] स्थितं शाश्वतमव्ययम्। तयोर्मध्ये सुषुम्नान्तस्त्रिदशाधारपङ्कजम् ।। ३।।
शक्तिरूपं शिवाकारं शर्वाण्याः सन्निजालयम्। तेषां रूपक्रमं चैव क्रमाद्वक्ष्येऽधुना श्रृणु।। ४।।
गुदमेढ्रान्तरं देवि पञ्चाङ्गुलसमुच्छ्रितम्। गुदमेकाङ्गुलं मध्ये द्वयाङ्गुलविसारणम् ।। ५।।
तस्य मूले महायोनिस्त्रिकोणाकाररूपिणी। सुषुम्ना योनिमध्यस्था तस्या मूले महेश्वरि ।। ६।।
अधः पद्मं सहस्रारं कर्णिकाकेसरान्वितम्। तैजसं रक्तवद् दीप्तं तद्दलस्थितशक्तिभिः ।। ७।।
प्रतिकिञ्जल्कसंस्थाभिः शक्तिभिः सहिता[2] प्रिये। कर्णिकामध्यतो देवि कुलदेवी च संस्थिता।।८।।
तत्पद्मोर्ध्वे सुषुम्नायां मध्ये त्वेकाङ्गुलोपरि। पद्ममष्टदलैर्युक्तमष्टग्रन्थिसमन्वितम् ।। ९।।
रक्तं स्वकर्णिकोपेतं रक्तकिञ्जल्कशोभितम्। ग्रन्थ्यग्रस्थं त्रिशृङ्गं च ब्रह्माण्याद्यष्टभैरवैः ।।१०।।
अष्टपत्रस्थितग्रन्थिस्थितवर्गा[3] दिशक्तिभिः। तदन्यशक्तिभिश्चैव संगताभिः[4] समावृतम्।। ११।।
तन्मध्ये कौलशक्त्या च सेवितं संस्मरेत् ततः। एकाङ्गुलप्रमाणोर्ध्वे षड्दलं कुलपङ्कजम्।।१२।।
आधारपङ्कजं पीतं चतुष्पत्रं सुकेसरम्। अधोमुखं च तन्मध्ये कुण्डली परमेश्वरि।। १३।।
स्वयम्भूमध्यगा चिन्त्या वरदादिभिरावृता। पार्थिवं पङ्कजं ह्येतत् तस्याधः पङ्कजं परम्।। १४।।
तैजसं परमेशानि तन्मध्यस्थितशक्तयः। निष्कलाः परमेशानि विद्युत्पुञ्जनिभाः स्मरेत्।। १५।।
तदूर्ध्वे कर्णिकामध्ये वह्निबिम्बं तदूर्ध्वगम्। पूर्णपीठं च तस्योर्ध्वे शाकिनी संस्थिता शिवे।।१६।।
आधारपङ्कजस्योर्ध्वे सार्धद्वयङ्गुलकोपरि। तैजसं साष्टपत्रं च पीतकर्णिकया युतम्[5]।। १७।।
हृल्लेखा कर्णिकामध्ये स्थितानङ्गादिसेविता। एतस्माद्द्वयङ्गुलादूर्ध्वे स्वाधिष्ठानं षडस्रकम्।।१८।।
आप्यं च बन्धिनीशक्तिपूर्वाभिः शक्तिभिर्वृताम्। काकिनीमभिचिन्त्याथ नाभावष्टाङ्गुलोपरि।।१९।।
तत्पद्मं मणिपुरं च दशपत्रं सुशोभनम्। लाकिनीमध्यगं तच्च डामर्यादिभिरावृतम्।।२०।।
चतुर्दशाङ्गुलादूर्ध्वे मणिपूराख्यपङ्कजात्। पङ्कजं राकिनीमध्यं द्वादशारमनाहतम् ।।२१।।
पत्रस्थकालरात्र्यादिशक्तिभिश्च[6] समावृतम्। मध्यस्थसूर्यबिम्बे[7] तु[8] नादोड्यानाख्यपीठकम्।।२२।।
तस्मादेकाङ्गुलादूर्ध्वे विशुद्धं षोडशारकम्। मध्यगा डाकिनी बाह्यपत्रेषु परमेश्वरि।। २३।।
अमृताद्यक्षरान्तःस्था चन्द्रबिम्बं तदूर्ध्वतः। कण्ठोर्ध्वं परमेशानि लम्बिका चतुरङ्गुले।।२४।।

१. 'पञ्चक' क.ख. पाठः। २.'संवृतं' ख. पाठः। ३.'वर्णा' क.ग. पाठः। ४.'शृङ्गस्थाभिः' ख. पाठः। ५. 'कुलम्' क.ग. पाठः। ६. 'तत्रस्थ' क.ग. पाठः। ७. 'तत्रस्थ' ग. पाठः। ८. 'म्बेन्दु' क. पाठः।

तस्मादष्टदलं पद्मं रसिकादिभिरावृतम्। आज्ञाचक्रं द्विपत्राब्जं हक्षद्विदलसंयुतम् ॥ २५॥
हंसवतीक्षमापार्श्वद्वये[१] मध्ये तु हाकिनी। ततो ललाटगं वृत्तं बिन्द्वावरणमूर्ध्वतः॥ २६॥
सूर्यकोटिप्रतीकाशमतिदीप्तं महद्गुणम्। तन्मध्ये दशकोटीनां संख्यायोजनमपङ्कजम् ॥ २७॥
तत्कर्णिका[२] समासीनः शान्त्यतीतेश्वरः प्रभुः। पञ्चवक्त्रो दशभुजो विद्युत्पुञ्जनिभाकृतिः॥ २८॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरनुक्रमात्। परिवार्य्य स्थिताश्चैताः शान्त्यतीतस्य सुन्दरि॥२९॥
वामभागे समासीना शान्त्यतीता मनोन्मनी। पञ्चवक्त्रधराः सर्वाः दशबाह्विन्दुभूषणाः॥३०॥
बिन्दुतत्त्वं समाख्यातं कोट्यर्बुदशतैर्वृतम्।

इति स्थितिश्रीचक्रन्यासनिरूपणम्॥

इति श्रीमहामहोपाध्यायभगवत्पूज्यपादश्रीगोविन्दाचार्यशिष्य–श्रीभगवच्छङ्कराचार्यशिष्य–
श्रीविष्णुशर्माचार्यशिष्य–श्रीप्रगल्भाचार्यशिष्य–श्रीविद्यारण्ययतिविर–
चिते श्रीविद्यार्णवाख्ये तन्त्रे षष्ठः श्वासः॥६॥



---

१. 'द्वयोः' ग. पाठः। २. 'यामा' ग. पाठः।

अथ

# श्रीविद्यार्णवतन्त्रे

## सप्तमः श्वासः



अथ स्थितिश्रीचक्रन्यासस्तु विद्याचक्रेश्वरीत्यङ्गत्रयात्मक इति सिद्धान्तः। तत्र प्रथमं सम्प्रदायात् करशुद्धिविद्यया करशुद्धिं विधायात्मरक्षाविद्ययात्मरक्षां कृत्वा देवीं स्वात्माभेदेन विभावयेत्। तथा श्रीतन्त्रराजे—

अरुणां करुणातरङ्गिताक्षीं धृतपाशाङ्कुशपुष्पबाणचापाम्।
अणिमादिभिरावृतां मयूखैरहमित्येव विभावये भवानीम्।। १।।

इति विभाव्य श्रीचक्रन्यासमारभेत्। तत्र विद्यान्यासस्तु—आदौ कूटाक्षरभेदेन व्यस्ताव्यस्तां मूलविद्यां न्यसेद्यथाक्रमेण—

मूर्ध्नि गुह्ये च हृदये नेत्रयोर्दक्षवामयोः[1]। श्रोत्रयोर्भुजयोः षष्ठे जान्वोर्नाभौ च विन्यसेत्[2]।। १।।

इति कूटन्यासः।। अथाक्षरन्यासः— "मूर्ध्नि गुह्ये च हृदये नेत्रेषु श्रोत्रयोर्मुखे। भुजयोः पृष्ठके जान्वोर्नाभौ पञ्चदश न्यसेत्" इत्यक्षरन्यासः।। अथ समस्तविद्यान्यासः—

स्थानेषु पञ्चदशसु मूर्धादिषु विचक्षणः। मूलविद्यां पृथङ्न्यसेत् त्रितारादि यथाक्रमम्।। १।।

इति विद्यान्यासः। अथ नवचक्रेश्वरीविद्यान्यासः —

पादयोर्जङ्घयोर्जान्वोरूर्वोश्च गुदपार्श्वयोः। स्फिचोर्ध्वजाग्रे चाधारे मूलाधारे च विन्यसेत्।। १।।
नवचक्रेश्वरीविद्यान्यासोऽयं परिकीर्तितः।

इति नवचक्रेश्वरीविद्यान्यासः। अथ नवचक्रन्यासः —

ब्रह्मरन्ध्रे तथाधारे स्वाधिष्ठाने च नाभिके। अनाहते विशुद्धौ च लम्बिके भ्रूयुगान्तरे।। १।।
बिन्दुस्थाने क्रमेणैव नव चक्राणि विन्यसेत्।

इति नवचक्रन्यासः। अथ चक्रेश्वरीन्यासः, तत्र —

तत्र विद्याः समुच्चार्य[3] त्रिपुरा त्रिपुरेश्वरी। सुन्दरी त्रिपुराद्या च तथा त्रिपुरवासिनी।। १।।
त्रिपुराश्रीः पञ्चमी स्यात्षष्ठी त्रिपुरमालिनी। सप्तमी त्रिपुरासिद्धा त्रिपुराम्बाष्टमी भवेत्।।२।।
नवमी तु महादेवी महात्रिपुरसुन्दरी। नवचक्रेषु विन्यसेदिति न्यासः समीरितः।।३।।

इति चक्रेश्वरीन्यासः। इति स्थितिश्रीचक्रन्यासोद्धारः। अथ रक्षाषडङ्गन्यासः —

तारत्रयं ततो बाला नमस्त्रिपुरसुन्दरि। मां रक्षयुगलं प्रोक्त्वा षडङ्गान्यत्र विन्यसेत्।। १।।

---

१. 'नेत्रेषु' ग. पाठः। २. 'मूर्ध्नि गुह्ये च हृदये नेत्रत्रितय एव च। कर्णयोर्भ्रूयुगे देवि मुखे च भुज एव च।। पृष्ठे जानौ च नाभौ च मूलविद्यां न्यसेत् क्रमात्। इति पाठान्तरम्। ३. 'तत्तद्विद्याः' ग. पाठः।

इति रक्षाषडङ्गम्।

बालाबीजत्रयेणैव द्विरावृत्त्या षडङ्गकम्। कुर्याच्च साधको बीजषडङ्गन्यास ईरितः।। १।।
कूटत्रयद्विरावृत्या षडङ्गानि समाचरेत्। विद्यापञ्चदशीमूलषडङ्गन्यास ईरितः ।। २।।
पञ्चत्र्येकैककैकैस्तु पञ्चबीजैः षडङ्गकैः। श्रीविद्याषोडशार्णायाः षडङ्गोऽयमुदाहृतः ।। ३।।
सर्वज्ञा नित्यतृप्ता तथैवानादिबोधिनी। स्वतन्त्रा च ततो नित्यालुप्तशक्तिस्ततः परम्।। ४।।
अनन्तशक्तिर्ङेन्तास्ता बालाबीजैकपूर्विकाः। षडङ्गयुवतीन्यासः प्रोक्तः सर्वार्थसिद्धये।। ५।।
एकैकं कूटमादौ श्रीमहात्रिपुरसुन्दरी । सर्वज्ञताशक्तिधाम्ने इत्यादि प्रागुदीरितः ।। ६।।
षडङ्गयुवतीन्यासो मूलविद्याप्रदीपकः।

इति मूलषडङ्गयुवतीन्यासः। "माया षड्दीर्घकाद्यादि प्रकारान्तरमिष्यते।।" इति अथ षडङ्गयुवतीनां ध्यानम्

कुन्देन्दुनीलासितपीतरक्तप्रभा वराभीतिकराः वराङ्ग्यः।
लावण्यलीलाखिलयौवनाढ्याः श्रीदेवदेव्यास्तनवो युवत्यः।। १।।

इति ध्यानम्। अथ श्रीविद्यापूर्णन्यासः, ज्ञानार्णवे—

अथ वक्ष्ये महेशानि श्रीविद्यान्यासमुत्तमम्। सम्पूर्णां चिन्तयेद्विद्यां ब्रह्मरन्ध्रेऽरुणप्रभाम्।। १।।
स्रवत्सुधाषोडशार्णां महासौभाग्यदां स्मरेत्। वामांसदेशे सौभाग्यादङ्गुली भ्रामयेत्ततः।। २।।
रिपुजिह्वाग्रहां मुद्रां पादमूले प्रविन्यसेत्। पुनः सम्पूर्णया देवि गलोर्ध्वे विन्यसेत्ततः।।३।।
पुनः सम्पूर्णया देवि व्यापकत्वेन विन्यसेत्। व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाभिवन्द्य च।।४।।
श्रीविद्यापूर्णरूपोऽयं न्यासः सौभाग्यवर्धनः। ब्रह्मरन्ध्रे न्यसेद्देवि मणिबन्धे न्यसेत्ततः।।५।।
ललाटेऽनामिकां कुर्यात् षोडशार्णां स्मरेद्बुधः। सम्मोहनाख्यो देवेशि न्यासोऽयं क्षोभकारकः।।६।।
त्रैलोक्यमरुणं ध्यायन् श्रीविद्यां मनसि स्मरन्। पादयोर्जङ्घयोर्जान्वोः कट्योरन्धुनि पृष्ठके।।७।।
नाभौ च पार्श्वयोश्चैव स्तनयोरंसयोस्तथा । कर्णयोर्ब्रह्मरन्ध्रे च वदने चैव पार्वति ।। ८।।
ततः कर्णप्रदेशे तु करे चैतदनुक्रमात्। संहारोऽयं महान्यासो बीजैः षोडशभिः क्रमात्।।९।।
श्रीविद्यायाः षोडशार्णन्यासैर्विश्वेश्वरो भवेत्। सृष्ट्यर्थं विन्यसेद्देवि मातृकां पूर्ववत् प्रिये।।१०।।

इति। अत्र षोडशार्णाया बहुभेदाद्येन भेदेन यो दीक्षितस्तस्य वर्णानेव न्यसेत्। {अ[१]त्रास्मिन् ग्रन्थे श्रीतन्त्रराजविहितार्चाक्रमश्च, तत्र पञ्चदश्याः श्रीभगवता शम्भुना उद्धारः कृतस्तस्मात्पूर्वं पञ्चदश्या मन्त्रोद्धारः क्रियते। पूजा त्वेतस्या अग्रे विशेषतो लिख्यते। अस्याः श्रीविद्या मुख्याम्नाय ऋग्वेदः। पञ्चममण्डले (५/४७/४) "चत्वार ईं बिभ्रति क्षेमयन्तः" इति मन्त्रोद्धारः ऋग्वेदे प्रसिद्धः। अथर्वणे शौनकशाखायां चोपनिषदि उद्धृतोऽस्या मूलमनुः तदानुसारतां गमयति।} अथ षोडशार्णानामुद्धारक्रमः प्रदर्श्यते। तत्र श्रीज्ञानार्णवे—श्रीदेव्युवाच

त्रिपुरा विविधा देव भवता प्रकटीकृता। त्रिविधेति यदुक्तं तु प्रकटीकुरु शङ्कर।। १।।

१. 'अत्रास्मिन्' इत्यारभ्य बन्धचिह्नान्तर्गतं गद्यजातं क— खयोर्नास्ति।

**ईश्वर उवाच –**

परब्रह्मस्वरूपं च नादबिन्दुकलान्वितम् । शिवशक्तिमयं तत्तु कथयामि तवानघे।। २।।
व्याप्य तिष्ठति वै विश्वं स शिवः परमेश्वरि। पूर्वं गुणैस्तु कथिता शिवशक्त्यात्मिका[1] शृणु।।३।।
अकारादिसकारान्ता मातृकाशक्तिरव्यया । हकारः परमेशानि केवलं शिव उच्यते।। ४।।
आद्यन्ताक्षरभावेन तदाहंसकलार्थदः[2] । यदुच्यते मातृकार्णैस्तत्सर्वमहमीश्वरः ।। ५।।
हकारः परमेशानि शून्यरूपः सदाव्ययः । सकारः शक्तिरूपत्वात् परवाची च सर्गवान्।। ६।।
उत्पत्तेः कारणं यस्माच्छक्तिरित्यभिधीयते। आत्मानं दर्शयेद्योगः सोहंशब्देन सुन्दरि।। ७।।
बिन्दुत्रयसमायोगान्महात्रिपुरसुन्दरी। नादरूपेण सा देवी हकारार्धस्वरूपिणी ।। ८।।
हकारः परमेशानि शिवरूपी यतस्तदा। तस्यार्धाङ्गं महाशक्तिर्हकारार्धस्वरूपिणी।। ९।।
अत एव महाविद्या महात्रिपुरसुन्दरी। नित्येति कथ्यते देवि चित्कला परदेवता।। १०।।
श्रीगुरोः कृपया भद्रे सम्प्रदायकुलान्वितः। प्रातरुत्थाय देवेशि गुरुं स्मृत्वा स्वनामभिः।। ११।।
सन्ध्यास्नानादिकं देवि विधाय मनुवित्तमः। सर्वशृङ्गारवेषाढ्यः कर्पूरघुसृणादिभिः।। १२।।
महामृगमदोद्दामलिप्ताङ्गः कुङ्कुमारुणः। नवरत्नविभूषाढ्यो रक्ताम्बरविराजितः।। १३।।
ताम्बूलरागवदनो मादनानन्दमानसः। यागमण्डपमासाद्य लाक्षाचित्रविचित्रितम्।। १४।।
अनेकधूपबहुलं पुष्पप्रकरशोभितम्। गोमयेन च संलिप्तं चारुपुष्पवितानितम्।। १५।।
मनोहरे मृदौ सूक्ष्म[3] आसने चोपविश्य च। मन्त्रोद्धारं प्रकुर्वीत सर्वकार्यार्थसिद्धये।। १६।।
आद्यं वाग्भवमुच्चार्य कामबीजं द्वितीयकम्। कुमार्यास्तु तृतीयं तु त्रिपुरा परमेश्वरि।। १७।।
करशुद्धिकरी विद्या प्रथमा परमेश्वरि↔। कुमारी तु द्वितीया सा त्रिपुरेशी महेश्वरि△।। १८।।
त्रिपुरेश्यादिमं त्यक्त्वा भुवनेशीं परिक्षिपेत्⇨। अनया चासनं विद्यात्[4] त्रिपुरेश्या षडङ्गकम्।।१९।।
त्रिपुरेशी महेशानि त्रिबीजा हस्थिता सदा। चक्रासनगता[5] विद्धि देवि त्रिपुरवासिनी[6]▶।। २०।।
त्रिपुरेश्या महेशानि वाग्भवे कामराजके। शिवचन्द्रसमायुक्ता तार्तीये शिवरूपिणी।। २१।।
सर्वमन्त्रासनगता त्रिपुराश्रीरियं प्रिये◣। आत्मासनगतायास्तु हित्वा तार्तीयमद्रिजे।। २२।।
बलेमात्मकमारोप्य साध्यसिद्धासनस्थिता। साध्यसिद्धासनगता बिद्धि त्रिपुरमालिनी▽।। २३।।
सम्पत्प्रदा भैरवी या ततस्तार्तीयबीजके। बिन्दुं हित्वा तत्र सर्गं निक्षिपेत् सुरसुन्दरी⇦।।२४।।
मूलविद्यां शृणु प्रौढे सकलागमसेविताम्। सर्वदर्शनवन्द्यां च चित्कलामव्ययां शिवे।। २५।।
भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनम्। अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते⇆।।२६।।

---

↔अं आं सौः इति। △ऐंक्लींसौः इति। ⇨ह्रींक्लींसौः इति। ▶हैं हक्लीं हसौः इति। ◣हसैं हसक्लीं हसौः इति। ▽ह्रीं क्लीं ब्लें इति। ⇦हस्रैं हसकलरीं हस्रौ इति। ⇆लसहईएरक इति।

---

१. 'शक्त्युन्नतां' क.ग. पाठः। २. 'त्मकः' ख. पाठः। ३. 'मृदुश्लक्ष्णे' ख. पाठः। ४. 'अनयात्मासनं दद्यात्' ग. पाठः। ५. 'तां' ग. पाठः। ६. 'नीम्' ग. पाठः।

महात्रिपुरसुन्दर्या मन्त्रा मेरुसमुद्भवाः। लकारात् पृथिवी देवी सशैलवनकानना।। २७।।
पञ्चाशत्पीठसम्पन्ना सर्वतीर्थमयी परा। सकाराच्चन्द्रतारादिग्रहराशिस्वरूपिणी ।। २८।।
हकाराच्छिवसंयोगाद्व्योममण्डलसंस्थिता। ईकाराद्विश्वमूर्तिर्या महातुर्यात्मिका प्रिये।। २९।।
एकाराद्वैष्णवी शक्तिर्विश्वपालनतत्परा। रकारात् तेजसा युक्ता परज्योतिःस्वरूपिणी।। ३०।।
ककारात् कामदा कामरूपिणी स्फुरदव्यया। अर्धचन्द्रेण देवेशि विश्वयोनिरितीरिता।। ३१।।
बिन्दुना शिवरूपेण शून्यरूपेण साक्षिणी[१]। अनया सह सर्वत्र व्याप्तिर्निश्चलतात्मना।। ३२।।
एवं परब्रह्मरूपमेरुणानेन सुव्रते । एवं च नवभिर्वर्णैर्जायते त्रिपुरामनुः।। ३३।।
अन्यथा देवि निष्पत्तिर्नास्ति श्रीत्रिपुरामनोः। श्रीचक्रमपि देवेशि मेरुरूपं न संशयः।। ३४।।
लकारः पृथिवीबीजं तेन चोर्वी तदुच्यते। सकारश्चन्द्रमा भद्रे कलाषोडशकात्मकम्।। ३५।।
तस्मात् षोडशपत्रं तु हकारः शिव उच्यते। अष्टमूर्तिः सदा भद्रे तस्माद्वसुदलं भवेत्।। ३६।।
ईकारस्तु महामाया भुवनानि चतुर्दश। पालयन्ती परा तस्माच्छक्रकोणं भवेत् प्रिये।। ३७।।
शक्तिरेका दशस्थाने स्थित्वा सूते जगत्त्रयम्। विश्वयोनिरिति ख्याता सा विष्णोर्दशरूपका।।३८।।
रकारात्[२] परमेशानि चक्रं व्याप्य विजृम्भते। दशकोणपरा तस्माद्रकाराज्ज्योतिरव्ययः।। ३९।।
कलादशान्वितो बहिर्दशकोणप्रवर्तकः । ककारान्मादनं देवि शिवं चाष्टस्वरूपकम्।। ४०।।
योनीरस्य[३] तदा चक्रे वसुयोन्यङ्कितं भवेत्। अर्धमात्रा गुणान् सूते भेदरूपा यतस्ततः।। ४१।।
त्रिकोणरूपा योनिस्तु बिन्दुना बैन्दवं[४] भवेत्। कामेश्वरस्य रूपं तद्विश्वाधारस्वरूपकम्।। ४२।।
श्रीचक्रं तु वरारोहे श्रीविद्यावर्णसम्भवम्। इति।

तन्त्रान्तरे —

मनुश्चन्द्रः कुबेरश्च लोपामुद्रा च कामराट्। अगस्त्यनन्दिसूर्य्याश्च विष्णुस्कन्दशिवास्तथा।। १।।
दुर्वासाश्च महादेव्या द्वादशोपासकाः स्मृताः। शक्रश्च चोन्मनी चैव तथा च वरुणस्तथा।। २।।
धर्मराजोऽनलो लनगराजो वायुर्बुधस्तथा। ईशानश्च रतिश्चैव तथा नारायणस्तथा।। ३।।
ब्रह्मा जीवो महादेव्यास्त्रयोदश उपासकाः। पञ्चविंशतिसंख्याकोपासकानां महेश्वरि।।४।।
उपास्यमन्त्रभेदांस्ते प्रवक्ष्यामि समासतः। इति।

ज्ञानार्णवे —

शृणु देवि प्रवक्ष्यामि बीजं कामेश्वरीमतम्। सकला भुवनेशानी कामेशीबीजमुत्तमम्●।। १।।
अनेन सकला विद्याः कथयामि विशेषतः। शक्त्य[५]न्तस्तुर्यवर्णोऽयं कलमध्ये सुलोचने।।२।।
वाग्भवं पञ्चवर्णाढ्यं□कामराजमथोच्यते। मादनं शिवचन्द्राद्यं शिवान्तं मीनलोचने।। ३।।

●सकलह्रीमिति। □कएईलह्रीमिति।

१.'संस्थिता' ख.पाठः। २.'सकरात्' ग. पाठः। ३.'योनिः' ग. पाठः। ४.'भैरवी' ग. पाठः। ५. 'शक्यतः' क.। 'शक्तितः ख.पाठः।

चतुरक्षररूपं तु त्र्यक्षरा त्रिपुरा परा।

अत्र शक्तिकूटं प्रागुद्धृतकामेशीबीजरूपमित्यर्थः।

सर्वतीर्थमयी देवी सर्वदेवस्वरूपिणी। सर्वसाक्षिमयी नित्या सर्वयोनिमयी परा।। ५।।

सर्वज्ञानमयी संवित्सर्वप्रज्ञानरूपिणी। सर्वदेवमयी साक्षात् सर्वसौभाग्यसुन्दरी।। ६।।

एतामुपास्य देवेशि कामः सर्वाङ्गसुन्दरः।

इयं कामराजोपासिता श्रीविद्या। तथा—देव्युवाच

एतस्या देवदेवेश भेदान् कथय सुन्दर। केन केनोपासितेयं विशदीकुरु शङ्कर।। १।।

ईश्वर उवाच

श्रृणु देवि प्रवक्ष्यामि लोपमुद्राभिधां पराम्। कामराजाख्यविद्यायाः शक्तिं तुर्यं च सुन्दरि।। २।।

हित्वा मुखे शिवेन्द्वाढ्या लोपामुद्रा प्रकाशिता।

कामराजविद्याया वाग्भवे एकारमीकारं च हित्वादौ हकारं सकारं च दद्यादन्यत् समानम्। तथा—

अगस्त्योपासिता विद्या त्रैलोक्यक्षोभकारिणी। एषा विद्या कामराजपूजितैव न संशयः।। ३।।

हसकलह्रीं हसकहलह्रीं सकलह्रीं इति लोपामुद्रोपासिता श्रीविद्या। अनयोर्भेदमग्रे वक्ष्यामः।

विद्याद्वयमिदं भद्रे दुर्लभं भुवनत्रये। कामराजाख्यविद्याया वाग्भवेन वरानने ।। ४।।

विद्योद्धारं प्रवक्ष्यामि शक्तिमादनमध्यगम्। शिवं कुर्याद्वाग्भवे तु शिवाद्यं कामराजकम्।। ५।।

चन्द्राद्यं तु तृतीयं स्याद्विद्येयं मनुपूजिता।

कहएईलह्रीं हकएईलह्रीं सकएईलह्रीं इति मनूपासिता श्रीविद्या।

सहाद्यं वाग्भवं देवि चन्द्राद्यं शिवमध्यगम्। मादनं कामबीजं तु शक्तिबीजं हसाननम्।। ६।।

चन्द्राराधितविद्येयं भोगमोक्षफलप्रदा।

सहकएईलह्रीं सहकहएईलह्रीं सहकएईलह्रीं इति चन्द्रोपासिता श्रीविद्या। तथा—

हसाद्यं वाग्भवं विद्धि शिवाद्यं सहमध्यगम्। मादनं कामबीजे तु तार्तीयं श्रृणु पार्वति।। ७।।

सहाद्यं शक्तिबीजं तु कुबेरेण प्रपूजिता।

हसकएईलह्रीं हसकएईलह्रीं हसकएईलह्रीं इति कुबेरोपासिता विद्या। तथा—

कामराजाख्यविद्यायास्तार्तीयं श्रृणु पार्वति। शक्तिबीजं सहाद्यं स्याद्विद्यागस्त्यप्रपूजिता।। ८।।

इति। कएईलह्रीं हसकहलह्रीं सहसकलह्रीं इत्यगस्त्योपासिता श्रीविद्या। तथा— "लोपामुद्रा प्रभावेन साक्षाद्ब्रह्मस्वरूपिणी" इतीयं विद्या लोपामुद्रयाप्युपासितेत्यर्थः। एतेनेयं द्वितीया लोपामुद्रोपासिता श्रीविद्येति। तथा—

कामराजाख्यविद्याया वाग्भवे मादनं त्यज। चन्द्रं तत्रैव संयोज्य कामराजे ततः परम्।। ९।।

हित्वा चन्द्रं मुखे कुर्याद्विद्येयं नन्दिपूजिता।

सएईलह्रीं सहकहलह्रीं सकलह्रीं इति नन्द्युपासिता श्रीविद्या। तथा—

कामराजमिदं भद्रे षड्वर्णं सर्वमोहनम्❖। शक्तिबीजं वराहोहे चन्द्राद्यं सर्वसिद्धिदम्।। ४।।

❖हसकहलह्रीमिति।

कामराजाख्यविद्याया हित्वा भूमिं तृतीयके। शक्तिबीजे स्थिता[१] देवि चन्द्राधः कुरु तत्र च।।१०।।
इन्द्राराधितविद्येयं भुक्तिमुक्तिफलप्रदा। इति।

कएईलह्रीं, हसकहलह्रीं सलकह्रीं, इतीन्द्रोपासिता श्रीविद्या। तथा—

लोपामुद्राख्यविद्याया द्वितीयाया महेश्वरि। कामराजे भृगुं हित्वा मुखे कुर्यात्तमेव हि।। ११।।
शिवं बिना चतुर्थं तु तार्तीये शक्रगः शिवः। एषा विद्या वरारोहे त्रिपुरा सूर्यपूजिता।। १२।।

इति। कएईलह्रीं, सहकलह्रीं सहसकहह्रीं, इति सूर्योपासिता श्रीविद्या। तथा—

शृणु देवि प्रवक्ष्यामि चतुष्कूटां च शाङ्करीम्। लोपामुद्रां द्वितीयां तु विलिख्य सुरसुन्दरि।। १३।।
पुनर्विलिख्य तामेव चतुर्थे पञ्चमे स्थिताम्। हित्वा तु भुवनेशानीमेकोच्चारेण चोच्चरेत्।। १४।।
चतुष्कूटा महाविद्या शङ्करेण प्रपूजिता।

इति। कएईलह्रीं, हसकहलह्रीं सहसकलह्रीं,कएईलहसकहलसहसकलह्रीं, इति शिवोपासिता श्रीविद्या। तथा—

लोपामुद्रां पुनर्देवि विलिखेत्तदनन्तरम्। नन्दिकेश्वरविद्यां च षट्कूटा वैष्णवी भवेत्।। १५।।

लोपामुद्रां द्वितीयामित्यर्थः। कएईलह्रीं, हसकहलह्रीं, सहसकलह्रीं, सएईलह्रीं, सहकहलह्रीं, सकलह्रीं, इति षट्कूटा विष्णूपासिता श्रीविद्या।

कामराजाख्यविद्याया त्रिकूटेषु वरानने। या स्थिता भुवनेशानी द्विधा कुरु महेश्वरि।। १६।।
बिन्दुहीना नादहीना दुर्वासःपूजिता भवेत्। दुर्वाससा पुरा देवि निष्कला पूजिता परा।। १७।।

इति। कएईलह्हीही, हसकहलह्हीही, सकलह्हीह्री, इति दुर्वाससोपासिता श्रीविद्या। इति द्वादश भेदाः। अन्यपस्त्रयोदश विद्या अग्रे उद्धरिष्यामः।। अथ षोडशार्णविद्याया उद्धारक्रममाह, ज्ञानार्णवे—

चतुर्विधप्रकारेण शृणु देवेशि कथ्यते। त्वं मनोहारिणी यस्मात् कथ्यते भुवि दुर्लभा।। १।।
चन्द्रान्तं वारुणान्तं च शक्रादिसहितं पृथक्। वामाक्षिबिन्दुनादाढ्यं विश्वमातृकलान्वितम्।।२।।
विद्यादौ+योजयेद्देवि साक्षाज्जाग्रत्स्वरूपिणी। उत्पत्तिर्जागरो बोधो व्यावृत्तिर्मनसस्तथा ।।३।।
कलाचतुष्टयं जाग्रदवस्थायां व्यवस्थितम्। जाग्रत् सत्त्वगुणा प्रोक्ता केवलं शक्तिरूपिणी[२]।।४।।
त्रिकूटाः सकला भद्रे[३] पञ्चकूटा भवन्ति हि। वैष्णवी वसुकूटा स्यात् षट्कूटा शाङ्करी भवेत्।।५।।

इति। अस्यार्थः— चन्द्रान्तं हकारः, वरुणान्तं शकारः, शक्रादि रेफः, वामाक्षि ईकारः, बिन्दुनादाभ्यां ह्रींश्रीं इति बीजद्वयं सिद्धम्। प्राक्प्रोक्तविद्या मायाबीजादिकाश्चेदुत्पत्तिरूपा भवन्ति। कूटादिषु मायबीजदानेन जागररूपा भवन्ति। कूटादिषु श्रीबीजदानेन मनोव्यावृत्तिरूपा भवन्ति। विद्यादिषु श्रीबीजदानेन बोधरूपा भवन्ति। एते भेदा जाग्रत्स्वरूपाः। तदुक्तं स्वच्छन्दसङ्ग्रहे—

लज्जाबीजादिका विद्याः प्रोक्ता उत्पत्तिरूपकाः। लज्जाबीजादिकूटैस्तु प्रोक्ता जागररूपकाः।। १।।
एवं श्रीबीजयोगेन बोधव्यावृत्ति[४]रूपकाः। जाग्रत्स्वरूपा श्रीविद्या चतुर्द्धा सा प्रकीर्तिता।।२।।
तदा भेदास्तु सकलाश्चतुष्कूटा भवन्ति हि। वैष्णवी सप्तकूटा स्यात्पञ्चकूटा तु शाङ्करी।।३।।
स्वप्नरूपा महाविद्याः प्रोक्ता बीजद्वयादिकाः। मायालक्ष्म्यादिकाश्चैता अभिलाषस्वरूपकाः।।४।।

---

+ पूर्वोक्तद्वादशविद्यादौ। १.'जोत्थिता' क.पाठः। २.'लाः ज्ञप्तिरूपिणी' ग.पाठः। ३.'भेदाः'ग.पाठः। ४.'व्याप्तनिरूपकाः' ग.पाठः।

बीजद्वयादिकूटाश्चेद्भ्रमरूपाः प्रकीर्तिताः। रमामायादिकाश्चिन्तारूपिण्यः कूटयोजिताः।। ४।।
स्मृतिरूपाश्च कथितास्तथा भेदा महेश्वरि। पञ्चकूटा भवन्त्येते वसुकूटा तु वैष्णवी ।। ५।।
षट्कूटा शाङ्करी प्रोक्ता स्वप्नावस्था समीरिता। वेदादिबीजयुगलयोगात् सर्वाः समीरिताः।। ६।।
सुषुप्तिरूपा जायन्ते सुषुप्तिः शिवरूपिणी। मरणं विस्मृतिर्मूर्च्छा निद्रा च तमसावृता।। ७।।
सुषुप्तेस्तु कला ज्ञेयाश्चतस्रः परमेश्वरि । तारमायादिकाश्चैव मायातारादिकास्तथा ।। ८।।
सुषुप्तिभेदाश्चत्वारः कलारूपा महेश्वरि। इति।

अत्र तारमायारमादिका, मायातारमादिका, ताररमामायादिका, रमातारमायादिका, इत्यर्थः। एवं क्रमेण द्वादशविधविद्यानां तु चतुश्चत्वारिंशदुत्तरशतं भेदा भवन्ति।। ज्ञानार्णवे—

वेदादिमण्डिता देवि शिवशक्तिमयी सदा। तदा भेदास्तु सकलाः षट्कूटाः परमेश्वरि।। १।।
वैष्णवी नवकूटा स्यात् सप्तकूटा तु शाङ्करी। अस्याः स्मरणमात्रेण जगदानन्दितं भवेत्।।२।।
भेदत्रयं तु कथितं महाविद्यां शृणु प्रिये। यस्य विज्ञानमात्रेण ब्रह्म साक्षान्न संशयः।।३।।
सुषुप्त्यादौ जागरान्ते स्फुरत्तामात्रलक्षणा ।अवस्थाशेषतां प्राप्ता तुर्या तु परमेश्वरि[1]।।४।।
भावाभावविनिर्मुक्ता गुणातीता निगद्यते। वैराग्यं च मुमुक्षुत्वं समाधिर्विमलं मनः।।५।।
सदसद्वस्तुनिर्धारस्तुरीयायाः कला इमाः। आद्यबीजद्वयं भद्रे विपरीतक्रमेण तु।। ६।।
विलिख्य परमेशानि ततोऽन्यानि समुद्धरेत्। अन्तर्मुखी वरारोहे कुमारी त्रिपुरेश्वरी।।७।।
एभिस्तु पञ्चसंख्याकैर्बीजैः सम्पुटितां यजेत्। षट्कूटां परमेशानि विद्येयं षोडशाक्षरी।।८।।
त्रिकूटाः सकला भद्रे षोडशार्णा भवन्ति हि। वैष्णव्येकोनविंशार्णा शैवी सप्तदशाक्षरी।।९।।

इति। अस्यार्थः आद्यबीजद्वयं मायारमात्मकं तस्य विपरीतक्रमः आदौ रमा पश्चान्मायेत्यर्थः। अन्तर्मध्ये स्थितं कामबीजं मुखे आदौ यस्याः कुमार्याः। एतैः पञ्चसंख्याकैर्बीजैः षट्कूटां नवकूटां वा सम्पुटितां सम्पुटवत्कृताम्। तेनानुलोमविलोमतः सम्पुटितामित्यर्थः। गान्धर्वेऽपि—

रमाबीजं समुद्धृत्य मायाबीजं नियोजयेत्। कामबीजं समालिख्य वाग्बीजं तदनन्तरम्।। १।।
चतुर्दशस्वरोपेतं चन्द्रं बिन्दुयुगान्वितम् ।प्रणवं भुवनेशानीं रमा चैव महेश्वरि।। २।।
उद्धरेत् परमेशानि ततः पञ्चदशाक्षरीम्। व्युत्क्रमात् परमेशानि पूर्वोक्तं बीजपञ्चकम्।।३।।
आलिख्य सम्पुटं[2] कुर्याद्विद्येयं व्यष्टकूटका। इति।

तथा च योगिनीतन्त्रे—

श्रीबीजमायास्मरयोनिशक्तिस्तारं च माया कमलाथ विद्या।
शक्त्यादिबीजैश्च विलोमतः सा श्रीषोडशीयं च शिवप्रदिष्टा।। १।। इति।

---

१. 'परमाकला' ग. पाठः। २. 'संपुटीकुर्यात्' इति साधुः पाठः।

तथा रुद्रयामले —

श्रीर्माया मदनो वाणी परा तारं शिवप्रिया। हरिप्रिया त्रिकूटा सा परा वाणी मनोभवः।। १।।

माया लक्ष्मीर्महाविद्या श्रीविद्या षोडशाक्षरी[1]। इति।

दक्षिणामूर्तौ च—

द्वितीयस्यादियुग्मं तु विपरीतं लिखेत् सुधीः। बालां चान्तर्मुखीं कृत्वा विलिखेत्तदनन्तरम्।। १।।

तारं मायां ततो लक्ष्मीं तथा कूटत्रयं लिखेत्। कलया सम्पुटां कुर्याद्रमाख्यां परमेश्वरि।। २।।

इति। कलया पूर्वोक्त (शक्त्यादि) पञ्चकलया रमाख्यां प्रणवादिषट्कूटां, उमाख्यामिति पाठेऽयमेवार्थः। केचित्तु कलया स्थाने बालया पाठं कुर्वन्तस्तत्र परमेश्वरीमिति च बालयान्तर्मुख्या संपुटां वदन्ति। रमाख्यां श्रीं परमेश्वरीं ह्रीमिति च, तेनोत्तरदले क्लींऐंसौः श्रींह्रीमिति वदन्ति। तत्र सम्पुटशब्दार्थापरिज्ञानात्। नवरत्नेश्वरे—

मन्त्रमादौ वदेत् पूर्वं साध्यसंज्ञामनन्तरम्। विपरीतं पुनश्चान्ते मध्यं तत्सम्पुटं स्मृतम्।। १।।

इति सम्पुटलक्षणादनन्वयापत्तेः सर्वतन्त्रविरोधाच्च। तथा श्रीक्रमे—

श्रीर्माया मदनो योनिः परैतानि मुखे कुरु। वेदादिर्भुवनेशानी श्रीबीजं च त्रिकूटकम्।। १।।

षट्कूटां सम्पुटां कुर्यादाद्यैः पञ्चभिरक्षरैः। इति। मायातन्त्रे—

लक्ष्मीः परामदनयोनियुता च शक्तिस्तारं परा च कमलाप्यथ मूलविद्या।

शक्त्यादिभिश्च विपरीततया प्रदिष्टं श्रीमन्त्रराजमुदितं परदेवतायाः।। १।। इति।

एतेनानुलोमतः पञ्चबीजैः सम्पुटितमिति मतं हेयम्। श्रुतौ च "रमा माया तारा परा लक्ष्मीः कुमारिका। विद्या व्यस्ता बाला श्रीः परा तथा" व्यस्ता विपरीता, तथेति व्यस्तेत्यर्थः। कुमारी[2] चान्तर्मुखी बोध्या। अत्र कुमारिकानन्तरं तारादित्रिबीजसम्बन्धस्तत्रैकवाक्यताबलात् (त्रैपुरीश्रुतिबलाच्च। तथा च श्रीमाये मध्यादिबालिका तारो माया श्रीर्विद्या परादिपञ्चबीजान्यन्ते चेति।) श्रीपरा चेति पाठे न केवलं बाला व्यस्ता श्रीपरा चेति विद्यायां षोडशबीजानां स्वरूपकथनं वा क्रमोक्तत्वाभावात्। एतेन श्रीर्माया तारं माया बालात्रिकूटं व्यस्ता बाला रमा मायेति मतं च हेयम्। कुलामृते—

श्रीबीजं शक्तिबीजं च कामबीजं च वाग्भवम्। बालान्तः संस्थितं बीजं प्रणवं च ततः परम्।। १।।

शक्तिबीजं रमां चैव विद्यां च परमेश्वरि। लोपां वा कामराजं वा त्रिकूटामथवा पराम्।। २।।

विन्यस्य पुनराद्यानि पञ्चबीजानि सुन्दरि। विपरीतक्रमेणैव विन्यसेत् षोडशी परा।। ४।।

इति। यामले च—

लक्ष्मीः परा मदनवाग्भवशक्तिबीजं तारं च भूतिकमले कथिता च विद्या।

कूटत्रयं च विपरीततया नियुक्तं श्रीषोडशाक्षरमिहागमसुप्रसिद्धम्।। १।।

त्रिकूटं कामादि बालायाश्चकाराद्रमां मायां च। निबन्धे—

सान्तान्तं शिवपूर्वसप्तमयुतं सूक्ष्मान्तमस्तान्वितं देवीं दक्षिणबाहुशक्रनयनं कामं[3] कलालाञ्छितम्।

दन्तान्तोर्ध्वमुखं सजीवदशनं शेषे[4] मुखेनान्वितं बीजं पञ्चकमित्थमेवमुदितं सर्वार्थसिद्धिप्रदम्।।१।।

१. 'शी परा' ख.पाठः। २. 'रिका चा' ग. पाठः। ३. 'वामं' ग. पाठः। ४. 'सशेषदशनं जीवं' इति साधुः पाठः।

वेदाद्यं त्रिगुणं रमामथ वदेत् कामेन संसेवितां लोपां वा पुनरेव पञ्चकमथो पूर्वं विलोमक्रमैः।
एषा श्रीपरमा परात्परतमा सर्वार्थसिद्धिप्रदा सारात्सारतरा समस्तजगतामुत्पत्तिभूता शिवा॥२॥
सेयं श्रीब्रह्मरूपा सकलगुणमयी निर्गुणा निष्प्रपञ्चा। साक्षात्कामदुघा सुरमुनिनिवहैर्वन्दितानन्दरूपा✡

इति। ज्ञानार्णवे—

वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि। वर्णितुं नैव शक्योऽहं श्रीविद्यां षोडशाक्षरीम्॥ १॥
वैखरी वाच्यभावत्वादशक्ता गुणवर्णने। यतो निरक्षरं वस्तु परा तत्रैव कारणम्॥२॥
मूकीभूता हि पश्यन्ती मध्यमा मध्यमा भवेत्। ब्रह्मविद्यास्वरूपा हि भुक्तिमुक्तिफलप्रदा॥३॥
एकोच्चारेण देवेशि वाजपेयस्य कोटयः। अश्वमेधसहस्राणि प्रादक्षिण्यं भुवस्तथा॥४॥
काश्यादितीर्थयात्राः स्युः सार्धकोटित्रयान्विताः। तुलां नार्हन्ति देवेशि नात्र कार्या विचारणा॥५॥
एकोच्चारेण गिरिजे किं पुनर्ब्रह्म केवलम्। षोडशार्णा महाविद्या न प्रकाश्या कदाचन॥६॥
गोपितव्या त्वया भद्रे स्वयोनिरिव पार्वति। षोडशीयं सुगोप्या हि स्नेहादेवि प्रकाशिता॥७॥
अपि प्रियतमं देयं सुतदारधनादिकम्। राज्यं देयं शिरो देयं न देया षोडशाक्षरी॥८॥

इति। सिद्धयामले— (प्रकारान्तरेण षोडशीमाह)

कामो माया रमा बाला त्रिकूटा स्त्री भगाङ्कुशौ। काली कामकला कूर्चः[1] सर्वादौ प्रणवः प्रिये॥१॥
श्रीमहाषोडशीयं च या ख्याता भुवनत्रये। ज्ञानेन मृत्युहा विद्या सर्वाम्नायैर्नमस्कृता॥२॥
सप्तलक्षा महाविद्यास्तन्त्रादौ कथिताः प्रिये। तासां सारतमा भूता या या विद्याः सुगोपिताः॥३॥
बहुना किमिहोक्तेन तासां सारा तु षोडशी। प्रकाशिता महादेवि या पृष्टा ते[2] पुनः पुनः॥४॥

ॐक्लींह्रींश्रींऐंक्लींसौः कएईलह्रीं हसकहलह्रीं सकलह्रीं स्त्रींऐंक्रोंक्रींक्लींहूं इति॥ रुद्रयामले—

लोपायाः शक्तिकूटान्ते हंसबीजयुता यदि। तदा सप्तदशीविद्या साक्षाज्ज्ञानस्वरूपिणी॥ १॥

सहकलह्रीं हसकलह्रीं सकलह्रीं हंसः इति।

लोपामुद्रावाग्भवे तु पृथ्व्यन्ते शिवयोजनात्। सकारं कामराजादौ लोपा तु षोडशाक्षरी॥ १॥
अनया सदृशी विद्या न विद्यार्णवगोचरे।

हसकलहह्रीं, हसकहलह्रीं, सकलह्रीमिति। हसकलह्रीं, सहसकहलह्रीं, सकलह्रीं इति षोडशीद्वयम्। तत्रैव—

लोपावाग्भवशक्रान्ते शिवबीजं नियोजयेत्। तथैव शक्तिबीजे तु लोपा सप्तदशाक्षरी॥ १॥
अस्याः स्मरणमात्रेण शिवो भवति नान्यथा। अणिमाद्यष्टसिद्धीशः साक्षाद्भूमिपुरन्दरः॥ २॥

हसकलहह्रीं, हसकलहह्रीं सकलहह्रीं इति लोपा सप्तदशाक्षरी। तत्रैवाष्यदशाक्षरी—

अधरं बिन्दुना युक्तं वाग्भवाद्ये नियोजयेत्। मादनं कामबीजाद्ये तार्तीयाद्ये महेश्वरि॥ १॥

---

१. 'र्चं' क. पाठः। २. 'मे' ग. पाठः। ✡दिव्यपाठत्वात् न वृत्तभङ्गदोषः।

भृगुः सर्गान्वितो देवि मनुना च समन्वितः। अष्टादशाक्षरी ह्येषा श्रीविद्या भुवि दुर्लभा।।२।।
श्रीगुरोः कृपया देवि नित्या सिद्धिप्रदायिनी। नवलक्षं जपित्वा तु लोपामुद्रां महेश्वरि।।३।।
अष्टादशाक्षरी विद्या पश्चाद्राध्या वरानने। अन्यथा शापमाप्नोति कुलं तस्य विनश्यति।।४।।
सर्वकल्याणदा विद्या सर्वविघ्नविनाशिनी। सर्वसौभाग्यदा देवी सर्वमङ्गलकारिणी।। ५।।
अनया सदृशी विद्या त्रैलोक्ये चातिदुर्लभा।

ऐंहसकलह्रीं, क्लींहसकहलह्रीं सौःसकलह्रीं, इति लोपाष्टादशाक्षरी। तथा –

कामराजाख्यविद्याया वाग्भवाद्ये तु वाग्भवम्। भुवनेशीं कामराजे श्रीबीजं शक्तिपूर्वतः।। १।।
एषाप्यष्टादशी प्रोक्ता सर्वसिद्धिप्रदायिका। भोगमोक्षप्रदा साक्षात् पुरुषार्थप्रदायिका ।। २।।
अनया सदृशी विद्या न विद्यार्णवगोचरे[१]। नास्ति नास्ति पुनर्नास्ति सत्यं सत्यं वदाम्यहम्।।३।।

ऐंकएईलह्रीं, ह्रींहसकहलह्रीं, श्रींसकलह्रीं इति कामराजाष्टादशाक्षरी। तथा

प्रणवं पूर्वमुद्धृत्य ततो वै कुलसुन्दरीम्। कामाक्षरं शक्तिवर्णं पुरन्दरहरौ ततः।। १।।
भुवनेशीं समुद्धृत्य विलोमां बालिकां ततः। प्रणवं सविसर्गं च पुनश्च कुलसुन्दरीम्।। २।।
लोपावाग्भवमुद्धृत्य विलोमां बालिकां ततः। प्रणवं सविसर्गं तु ततो वै कुलसुन्दरीम्।। ३।।
शक्तिकूटमध्यभागे हकारं योजयेच्छिवे। विलोमां बालिकां तत्र ब्रह्मार्णः सविसर्गकः।। ४।।
इयं श्रीपरमा विद्या केवला मोक्षदायिनी। अस्या लक्षजपेनैव किं न सिद्ध्यति भूतले।। ५।।
अस्याः स्मरणमात्रेण शिवो भवति नान्यथा।

ऊंऐंक्लींसौःकएलहह्रींसौःक्लींऐंओंः ऐंक्लींसौःहसकलह्रींसौःक्लींऐंओंः ऐंक्लींसौःसकहलह्रींसौःक्लींऐंओंः इति परमाविद्या। श्रीक्रमे–

तां विद्यां शृणु देवेशि काममिन्द्रसमन्वितम्। नादबिन्दुकलाभेदात् तुरीयस्वरसंयुतम्।। १।।
महाश्रीसुन्दरीविद्या महात्रिपुरसुन्दरी । ककारे सर्वमुत्पन्नं कामकैवल्यदायकम्।। २।।
लकारे सकलैश्वर्यमीकारे सर्वसौख्यदम्। एवं बीजत्रयं देवि विद्यानां सारसङ्ग्रहम्।। ३।।
वाग्भवं कामराजं च शक्तिं तेन नियोजयेत्। एकाक्षरेण कथिता ब्रह्मविद्यैव केवलम्।। ४।।

कलई इति ब्रह्मविद्या। कामराजलोपामुद्रयोर्विशेषमाह कुलोड्डीशे–

श्रीपरावाग्भवाख्यैश्च ईश्वरीतारमन्मथैः। आद्यभूतैर्विद्यमाना सुन्दरी षड्विधा स्मृता।।१ ।।

अनयोराद्ये कामो माया श्रीबीजं, मायाश्रीकामबीजं, श्रीमायाकामबीजं, तथा त्रिविधा चाष्टादशाक्षरी, तथा च–

काममायारमा पूर्वे माया लक्ष्मीः स्मरस्तथा। रमा माया तथा कामो वसुचन्द्राक्षरी त्रिधा।। १।।

"स्मरं योनिं लक्ष्मीं त्रितयमिदमाद्ये तव मनौ" इति भगवदाचार्येण प्रतिपादितम्। शक्तिकामराजस्तु[३] श्रीक्रमे–

मायाबीजं ततो झिण्ठिः कामः शक्रं वियत् क्रमात्। जातवेदो मृगाङ्केन लाञ्छितं परमेश्वरि।। १।।
एतद्वाग्भवकूटं च पूर्ववत् कामराजकम्। तथैव शक्तिबीजं तु सुन्दर्येषा प्रकीर्तिता।। २।।

---

१. 'त्रैलोक्ये चातिदुर्लभा' ख. पाठः। २. 'ला' ख. पाठः। ३. 'शक्तिमायाश्रीकामबीजं' क.ख.ग. पाठः।

सुन्दरी सिद्धिदा विद्या त्रैलोक्यवशकारिणी।

अत्रापि पूर्ववद्बीजसंयोगः। माया ईकारः, झिण्ठिः एकारः। पुनः शक्तिमाह—

एतद्धगं ततो माया ब्रह्मा शक्रो हरोऽग्निना। वामनेत्रेण संयुक्तो नादबिन्दुविभूषितः।। १।।

एतद्वाग्भवमुद्दिष्टं पूर्ववत् कामशक्तिकम्।

भग एकारः। अत्रापि पूर्ववद्बीजसंयोगः। अत्र विशेषः—

ब्रह्मबीजं यदा दद्यात् त्रिकूटेषु वरानने[1]। प्रथमा सुन्दरी देवी द्वितीया ब्रह्मसुन्दरी।। १।।

शक्तिकूटे महेशानि अनन्तसुन्दरी मता। एषा तु षोडशी विद्या मतभेदेन दर्शिता।।२।।

इति। मन्त्रान्तरमाह—

त्रिकूटान्ते हंसबीजं बिन्दुसर्गविभूषितम्। एषा श्रीप्राणसंयुक्ता दारिद्र्यदुःखनाशिनी।। १।।

शक्तिलोपामुद्रा तु—

शक्तिर्महेशः कामश्च इन्द्रबीजं ततः परम्। महामाया ततः पश्चात्त्वत्स्नेहात् प्रकीर्तितम्।। १।।

पूर्ववत् कामशक्त्याख्यौ वर्णौ निष्कीलितात्मकौ। इति शाक्ती[3] महाविद्या पश्चिमाम्नाययोजिता।।२।।

शक्तिः सकारः। पूर्ववत् कामराजविद्यावत्। अत्रापि पूर्ववद्बीजसंयोगः।

शिवबीजं[4] शक्तिसोमं मादनं च पुरन्दरम्। व्योमवह्निसमायुक्तं तुरीयस्वरबिन्दुकम्।। १।।

पूर्ववत् कामराजस्तु शक्तिबीजं समुद्धरेत्। एषा विद्या महेशानि वर्णितुं नैव शक्यते।। २।।

शक्तिः सकारः, सोमः सकारः, पूर्ववत् कामराजविद्यावत्। अत्रापि पूर्ववत् बीजसंयोगः।

शिवशक्तिर्भुवनेशानी वाग्भवं बीजमुत्तमम्। कामं व्योम च देवेशि महामाया ततः परम्।। १।।

सोमं व्योम महामाया नवार्णा परिकीर्तिता। रुद्रशक्तिरियं देवि पूर्वाम्नाये हि योजिता[5]।। २।।

इति। तन्त्रान्तरे—

मादनं गोत्रभित्सान्तो रेफवामाक्षिचन्द्रवान्। नादबिन्दुसमायुक्तः कथितः परमेश्वरि।। १।।

ब्रह्मा च गगनं शक्रो नकुलीशोऽनलस्तथा। मायाबिन्दुसनादेन कामराजं समुद्धरेत्।। २।।

शक्तिर्मादनशक्तश्च हरो वह्नीन्दुमायया। बिन्दुनादसमाक्रान्तः कथितः कामदो मनुः।। ३।।

एषा विद्या महेशानि कथितैकादशाक्षरी। अरिहा सिद्धिदा देवी महात्रिपुरसुन्दरी।। ४।।

मादनं पञ्चवक्त्रं च लोहिता रुद्रयोगिनी। पुरन्दरो महामाया वाग्भवं बीजमुत्तमम्।। ५।।

पूर्ववत् कामशक्त्याख्यमुद्धरेत् देवि सुन्दरीम्।

लोहिता[6] क्षकारः, रुद्रयोगिनी मकारः, पूर्ववत् कामराजविद्यावत्।

भृग्वीशं गगनं हान्तं कालमिन्द्रं महेश्वरम्। वामाक्षिवह्निचन्द्राढ्यं वाग्भवं परमेश्वरि।। १।।

कामराजं शक्तिकूटं पूर्ववत्तु समुच्चरेत्।

भृग्वीशं सकारः, हान्तः क्षकारः, कालो मकारः। पूर्ववत्कामराजविद्यावत्।

१. 'टे देवि दुर्लभे' क. पाठः। २. 'वदाम्यहं' ख. पाठः। ३. 'शक्तो' क. पाठः। ४. 'शक्ति' क. पाठः। ५. 'नायिका' ख. पाठः। ६. 'लोहिता सकारः, रुद्रयोगिनी नकारः' क. पाठः।

विष्णुरीशस्ततो हान्तः कालेशः पृथिवी ततः। भुवनेशी ततः पश्चाद्वाग्भवं कथितं त्वयि।। १।।
कामराजं शक्तिकूटं पूर्ववत् कथितं प्रिये।

विष्णुरीशः अकारयुक्तो हकारः, कालेशो मकारः। सौभाग्यविद्यामाह श्रीक्रमे—

सौभाग्यं कथयिष्यामि शृणुष्वैकमनाः प्रिये। शक्तिः स्वयम्भूः शम्भुश्च शक्रश्च भुवनेश्वरी।। १।।
शिवो मादनरुद्रेन्द्रमहामाया ततः परम्। कामः शिवस्ततो ब्रह्मा इन्द्रश्च भुवनेश्वरी।। २।।
एषा तु परमा विद्या भक्तानां सुभगोदया[1]। त्रिकूटान्ते हंसबीजं तदा सप्तदशी भवेत्।।३।।
वाग्बीजं विजया माया ब्रह्मा शक्रस्तु पार्वती। मान्मथं शिवशक्तिश्च मादनो हर इन्द्रकः।।४।।
महामाया ततः पश्चाच्छक्तिर्मनुससर्गिका। चन्द्रः प्रजापतिः शक्रो महामाया ततः परम्।।५।।
अष्टादशाक्षरी विद्या महात्रिपुरसुन्दरी । सर्वान्ते हंससंयुक्ता विंशाक्षरी सदा भवेत्।। ६।।

श्रीदेव्युवाच

भाषा सृष्टिः स्थितिः संहृन्निराख्या पञ्च सुन्दरीः। कथयस्व प्रभो देव यदि ते रोचते मयि।। १।।

ईश्वर उवाच

शिवो मादन इन्द्रश्च शक्तिश्च भुवनेश्वरी। ब्रह्मा शिवेन्द्रौ शक्तिश्च महामाया ततः परा।। १।।
मादनेन्द्रौ शक्तिशिवौ महामाया तदन्तके।

शक्तिः सकारः। एषा भाषा (हकलसह्रीं कहलसह्रीं कलसहह्रीं)

शिवश्चन्द्रस्तथा कामः शक्रश्च भुवनेश्वरी। शिवेन्द्रकामरुद्राश्च चन्द्रश्च परमेश्वरी।। १।।
शक्तिः कामश्च इन्द्रश्च महामाया ततः परा।

(हसकह्रीं हलकहसह्रीं सकलह्रीं) इयं सृष्टिः।

शिवेन्द्रौ कामशक्ती च महामाया ततः परा। कामश्चन्द्रो महेशश्च इन्द्रः शक्तिश्च पार्वती।। १।।
ब्रह्मा महेश्वरः शक्तिः शक्रस्तु भुवनेश्वरी।

(हलकसह्रीं कसहलसह्रीं कहसलह्रीं) इति स्थितिरेषा।

शिवेन्द्रौ कामशक्ती च तत्परा भुवनेश्वरी। शिवशक्ती मादनेन्द्रौ शिवो वह्नीन्दुमायया।। १।।
शिवः शिवश्च कलहा वह्निमायेन्दुभूषिताः।

(हलकसह्रीं हसकलह्रीं हहकलह्रीं) इति एषा संहृतिः।

शक्रो ब्रह्मा चेन्दुबीजं महामाया ततः परा। वाग्भवं कथितं चैतत्कामराजं ततः शृणु।। १।।
शक्तिः शिवो[2] मादनेन्द्रौ तत्परा परमेश्वरी। शिवः शक्तिश्च[3] सोमश्च शून्यो ब्रह्मा महेश्वरी।।२।।

शून्यो हकारः। (लकसह्रीं सहकलह्रीं हससहकह्रीं) एषा निराख्या। देव्युवाच

स्वप्नावतीं मधुमतीं कथयस्व मयि प्रभो। इदानीं श्रोतुमिच्छामि यदि चास्ति[4] कृपा मयि।। १।।

ईश्वर उवाच

---

१. 'परमेशानि सुन्दरी सुभगोदया' ख. पाठः। २. 'वौ' क. पाठः। ३. 'वशक्तिश्च' ख. पाठः। ४. 'ते' ख. पाठः।

शिवो मादनशक्रौ च शक्तिश्च भुवनेश्वरी। महेशो ब्रह्म हंसश्च इन्द्रोऽपि भुवनेश्वरी॥ १॥
महेशः शक्तिः कामश्च पुरन्दरो वियत्तथा। अग्निमायाकलायुक्तं नादबिन्दुविभूषितम्॥२॥

हंसो हकारः, मायाकला ईकारः। (हकलसह्रीं, हकहलह्रीं, हसकलह्रीं)

एषा स्वप्नावती ख्याता कला पञ्चदशी यथा। ब्रह्मा महेश इन्द्रश्च शक्तिश्च भुवनेश्वरी॥ १॥
ब्रह्मा वियन्मरुच्छक्रस्तत्परा भुवनेश्वरी। मादनं सोमचन्द्रौ च शक्रश्च भुवनेश्वरी[1]॥२॥

(मरुत् यकारः। कहलसह्रीं कहलयह्रीं कससलह्रीं इति।)

एषा मधुमती ख्याता सर्वशास्त्रेषु गोपिता। वामकेश्वरविद्यैव त्रिकूटक्रमपाठिता॥ १॥
सौभाग्यायास्त्रिकूटेन पञ्चम्याः पञ्चकूटकम्। त्रिपुराया महाविद्या कूटैकादशनिर्मिता॥२॥
सारात्सारतरा विद्या कथितैकादशाक्षरी।

अथ पञ्चमी —

कामं विष्णुयुतं देवि शक्तिमायेन्द्रमेव च। महामायां ततः पश्चाद्वाग्भवं बीजमुद्धरेत्॥ १॥

विष्णुरकारः, शक्तिरेकारः, माया ईकारः।

वियच्चन्द्रस्ततः पश्चात् कलौ नकुलिवह्नि च। मायास्वरेण संयुक्तं नादबिन्दुकलान्वितम्॥ १॥
प्रथमं कामराजस्य कूटं परमदुर्लभम्। वियद्विष्णुयुतं कामो हंसः शक्रस्ततः परम्॥ २॥
महामाया ततः पश्चात् स्वप्नावतीति कथ्यते।

हंसो हकारः। एतद् द्वितीयं कामराजकूटम्।

मादनं शिवबीजं च वायुबीजं ततः परम्। इन्द्रबीजं ततः पश्चान्महामायां समुद्धरेत्॥ १॥

इति तृतीयम्। इयं मधुमती।

शिवबीजं तथा काममिन्द्रं देवीं नियोजयेत्। महामायां ततः पश्चाच्छक्तिकूटं समुद्धरेत्॥१॥
वाग्भवं प्रथमं देवि शक्तिकूटं च पञ्चमम्। मध्यकूटत्रयं देवि कामराजं मनोहरम्॥ २॥
कथिता पञ्चमी विद्या त्रैलोक्यसुभगोदया।

देवीं सकारम्। ईश्वर उवाच —

शृणु देवि महाभागे शक्तिकूटं सुदुर्लभम्। वाग्भवं प्रथमं कूटं कामराजं त्रिकूटकम्॥ १॥
शक्तिकूटं प्रवक्ष्यामि तव स्नेहाद्विशेषतः। जीवप्राणौ महादेवि मादनं तदनन्तरम्॥ २॥
इन्द्रबीजं ततः पश्चाद्भुवनेशी च पञ्चमम्।

इति वा शक्तिकूटम्,। जीवः सकारः, प्राणो हकारः।

अथवा देवदेवेशि सौभाग्यायाश्च वाग्भवम्। कूटत्रयं कामराजं शक्तिबीजं (कूटं) च पूर्ववत्॥१॥
एषा शक्त्या (प्रोक्ता) महादेवि पञ्चमी परमेश्वरी।

अस्यार्थस्तु—अस्य वाग्भवकूटं हित्वा सौभाग्यायाः प्रथमकूटं वाग्भवकूटे देयमित्यर्थः।

---

१. 'परमेश्वरी' क. पाठः। २. 'बीजं' क. पाठः।

वामनेत्रादिकूटं वा (रभवां?भगा) दिकूटमेव वा। अरिहा सिद्धदा विद्या सर्वदोषविवर्जिता।। १।।

भग एकार:। एतेनाष्टधा पञ्चमी वाग्भवशक्तिकूटभेदेन। यामले—

द्विविधा पञ्चमी विद्या पञ्चपञ्चाक्षरी परा। मध्ये षडक्षरं चैव शक्तिश्च चतुरक्षरा।। १।।

षडिति कामराजविद्यामध्यकूटमित्यर्थ:। शक्तिकूटमिति कामराजस्य शक्तिकूटमित्यर्थ:। एषा चतुर्धा वाग्भवकूटभेदात्, एतेन द्वादशधा भवति। तथा एतयोरष्टधा चतुर्धा व्यवस्थितयो: कामराजस्य तृतीयं कूटं तत्रैव—

कामबीजं महेशानि शिवबीजं तत: परम्। तदधो हंसबीजं तु इन्द्रबीजं विचिन्तयेत्।। १।।
महामायां तत: पश्चात् कूटं परमदुर्लभम्।

एषापि पूर्ववदष्टधा, अन्या चतुर्धा। तथा च तत्त्वबोधे— "कामाकाशपराशक्रा: संस्थानकृतरूपिणी।" परा सकार:। संस्थानकृतरूपिणी महामाया। तथा च तन्त्रे—

कामबीजं महेशानि शम्भुबीजं तत: परम्। तदधश्चन्द्रबीजं तु पृथ्वीबीजं ततो लिखेत्।। १।।
तदन्ते च महामाया कूटं परमदुर्लभम्।

एषा पूर्ववदष्टधा। अन्या चतुर्धा। तेन षट्त्रिंशद्रूपिणी पञ्चमी। (श्रीक्रमे—)

एतासां चैव विद्यानां प्राणं शृणु वरानने। रमां मायां हंसबीजं वाग्भवाद्ये नियोजयेत्।। १।।
शक्त्यन्ते तु महादेवि हंसं मायां रमां तथा। एभिर्युक्तेन देवेशि विद्याजपनमाचरेत्।। २।।

जपश्च सप्तवारमेव, दीपिन्यां तथा दर्शनात्। एतासामिति श्रीपूर्वोक्तश्रीक्रमोक्तविद्यानाम्। पञ्चम्यां तु विशषो यथा—

रमां मायां हंसबीजं वाग्भवाद्ये नियोजयेत्। शक्त्यन्ते तु महेशानि हंसं मायां रमा तथा।। १।।
कामराजत्रये देवि ककारं शक्रसंयुतम्। मायाबिन्द्वीश्वरयुतं सूर्यकोटिसमप्रभम् ।। २।।
प्रथमं कामकूटस्य चाद्ये नियोजयेदिदम्। वान्तं वह्निसमायुक्तं वामनेत्रेण भूषितम्।। ३।।
नादबिन्दुसमायुक्तं श्रियो बीजमुदाहृतम्। द्वितीयं कामराजं तु जपेदुक्त्वा तु सुन्दरीम्।।४।।
गगनं वह्निसंयुक्तं वामनेत्रसमन्वितम्। नादविन्दुसमायुक्तं मायाबीजं प्रकीर्तितम्।। ५।।
ज्वलदग्निनिभं बीजं शुद्धहाटकगृञ्जनम्। कुलाकुलमये मध्ये ध्येयं साक्षान्महेश्वरि।। ६।।
मधुमतीं जपेच्चापि सर्वकामफलप्रदाम्।

इति। अथ दीपिनी —

तारं लक्ष्मी च वाग्बीजं मान्मथं भुवनेश्वरीम्[१]। एतज्जप्त्वा तत: पश्चाद्वाग्भवाख्यं समुद्धरेत्।।१।।
प्रणवं भुवनेशानीं रमां कामं च वाग्भवम्। कामराजं ततो जप्त्वा त्रैलोक्यक्षोभकारकम्।।२।।
ओंकारं चैव वाग्बीजं रमां मन्मथमायया। स्वप्नावतीं महादेवि प्रजपेच्च समाहित:।। ३।।
प्रणवं चाधरं कामं रमां च भुवनेश्वरीम्। मधुमतीं ततो जप्त्वा मायां श्रीकूर्चबीजकम्।। ४।।
प्रणवाद्यं च देवेशि हंसबीजपुटीकृतम्। एतद्बीजं समुच्चार्य शक्तिकूटं ततो जपेत्।। ५।।
एषा तु दीपिनी विद्या अजपाप्राणरूपिणी।

---

१. 'रि' ग. पाठ:।

जपनियमस्तु—

जपेदादौ जपेत्पश्चात् सप्तवारमनुक्रमात्। कामराजादिविद्यानां दीपिनीं चैव कारयेत्॥ १॥
वाग्भवे कामराजे तु शक्तिकूटे सुरेश्वरि[१]।

तत्र क्रमः— वाग्भवशक्तिकूटयोर्दीपिनी पञ्चमीवद्बोद्धव्या, कामराजकूटे पुनः "प्रणवं भुवनेशानीं रमां कामं च वाग्भवम्। दीपिनी"मिति सर्वकूटेषु संबन्धः[२]। तथा च सौभाग्यादिविद्यामधिकृत्य योगिनीहृदये—

स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी। सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी ॥ १॥
तत्त्वातीतस्वभावा च विद्यैषा भाव्यते सदा। श्रीकण्ठदशकं तद्वदव्यक्तस्य हि वाचकम्॥२॥
प्राणभूतः स्थितो देवि तद्वदेकादशः परः।

सौभाग्यादिविद्यायाः प्रथमकूटे अकारचतुष्टयमीकारश्चेति पञ्च स्वराः, षट् व्यञ्जनानि। द्वितीयकूटे स्वरव्यञ्जनभेदेन त्रयोदश, तृतीयकूटेऽपि नव, एवं तेन मिलित्वा त्रयस्त्रिंशदक्षराणि, कूटत्रये बिन्दुत्रयं नादत्वेनैक इति मिलित्वा सप्तत्रिंशत्, तेन नादं विहाय षट्त्रिंशत्तत्त्वरूपिणी, नादयुक्ता चेत्तत्त्वातीता, इति संज्ञा सदा च तत्त्वातीतस्वभावा॥

अथ श्रीविद्याया भेदानामुद्धारः —

कामराजस्य विद्याया वाग्भवं तु विलिख्य च। शिवकामहरेन्द्राश्च भुवनेशीमतः परम्॥ १॥
लोपावाग्भवकूटं तु उन्मनी सकलेष्टदा।

कएईलह्रीं, हकहलह्रीं, हसकलह्रीं—इयमुन्मनी श्रीविद्या।

कामराजस्य विद्याया वाग्भवं तु विलिख्य च। उन्मान्याः कामराजं तु चन्द्रहंसौ तु मादनम्॥ १॥
भूमिश्च भुनेशानी वरुणेन समर्चिता।

भूमिश्च लः। कएईलह्रीं, हकहलह्रीं, सहकलह्रीं— इयं वरुणोपासिता श्रीविद्या।

शक्तिर्मादनयोर्मध्ये इन्द्रश्च भुवनेश्वरी। शिवयोर्मादनं माया तार्तीयं वरुणस्य च॥ १॥
धर्मराजोपासितेयं भोगमोक्षफलप्रदा।

कएकलह्रीं, हकहह्रीं, सहकलह्रीं— इयं धर्मराजोपासिता श्रीविद्या॥

चन्द्रो मादनयोर्मध्ये इन्द्रश्च भुवनेश्वरी। शिवचन्द्रेन्द्रमदना भूमिश्च भुवनेश्वरी॥ १॥
चन्द्रमादनशक्राश्च वह्नीन्द्रौ भुवनेश्वरी। वह्निनोपासिता विद्या भोगमोक्षफलप्रदा॥ २॥

सककलह्रीं, हसलकलह्रीं, सकलरलह्रीं— इयं वह्न्युपासिता श्रीविद्या॥

लोपावाग्भवमुच्चार्य तस्या वै कामराजकम्। सकला वह्निभूमिश्च भुवनेशीं समुद्धरेत्॥ १॥
नागराजोपासितेयं धर्मकामार्थमोक्षदा।

हसकलह्रीं, हसकहलह्रीं, सकलरलह्रीं— इयं नागराजोपासिता श्रीविद्या॥

मादनं शक्तिवह्नी च भूमिर्वह्निः सुरेश्वरी। शिवमादनभूमिश्च रहला भुवनेश्वरी॥ १॥
चन्द्रानलौ मादनेन्द्रवह्निश्च भुवनेश्वरी। वायूपासितविद्येयं चतुर्वर्गफलप्रदा॥ २॥

कएरलह्रीं, हकलरहलह्रीं, सरकलरह्रीं— इयं वायूपासिता श्रीविद्या॥

---

१. 'री' क. पाठः। २. कूटे स्वरसंबन्धः' क. ग. पाठः।

मादनं शक्तितुर्यौ च वह्नीन्द्रौ भुवनेश्वरी। शिवमादनसूर्येन्द्रवह्नयो भुवनेश्वरी॥ १॥

चन्द्रसूर्यौ कलौ वह्निर्भुवनेशीं समुद्धरेत्। बुधोपासितविद्येयं भोगमोक्षफलप्रदा॥२॥

कएईरलह्रीं, हकहलरह्रीं, सहकलरह्रीं — इयं बुधोपासिता श्रीविद्या॥

मादनं च शिवेन्द्रौ च भुवनेशमीमतः परम्। शिवमादनभूमिश्च शिवेन्द्रेन्द्रानलास्तथा॥ १॥

माया च कामराजस्य शक्तिकूटं समुद्धरेत्। ईशानोपासिता विद्या ह्यणिमाद्यष्टसिद्धिदा॥२॥

कहलह्रीं, हकलहललरह्रीं सकलह्रीं— इयमीशानोपासिता श्रीविद्या।....?(कएईलह्रीं, हसकहलह्रीं सकलह्रीं। इयं रत्युपासिता श्रीविद्या॥

कामराजाख्यविद्याया अनुलोमविलोमतः। नारायणोपासितेयं षट्कूटा भुवि दुर्लभा॥ १॥

कएईलह्रीं हसकहलह्रीं, सकलह्रीं, हसकहलह्रीं, कएईलह्रीं— इयं नारायणोपासिता श्रीविद्या।

कामराजाख्यविद्याया वाग्भवं तु समुद्धरेत्। शिवमादनसूर्येन्दुवह्निश्च भुवनेश्वरीं॥ १॥

लोपाया वाग्भवं चैव ब्रह्मणेयमुपासिता।

कएईलह्रीं, हकहसरह्रीं, हसकलह्रीं — इयं ब्रह्मोपासिता श्रीविद्या॥

लोपावाग्भवमुद्धृत्य ब्रह्मणः कामराजकम्। लोपावाग्भवकूटं तु जीवेनाराधिता त्वियम्॥ १॥

हसकलह्रीं, हकहसरह्रीं, हसकलह्रीं —इयं जीवोपासिता श्रीविद्या॥

जाग्रत्स्वरूपामायादिः पञ्चदश्युदितात्र तु। मायाश्रीबीजपूर्वा तु स्वप्नावस्थास्वरूपिणी॥ १॥

तारमायारमादिः स्यात् सा सुषुप्तिस्वरूपिणी। श्रीमहाषोडशार्णा तु तुरीया सम्प्रकीर्तिता॥ २॥

वैराग्यं च मुमुक्षुत्वं समाधिर्विमलं मनः। सदसद्वस्तुनिर्धारस्तुरीयाया इमाः कलाः॥ ३॥

वैराग्यरूपा तारादिः षोडशी परिकीर्तिता। मायादिः षोडशार्णा तु मुमुक्षुत्वस्वरूपिणी॥ ४॥

कामादिः षोडशार्णा स्यात् सा समाधिस्वरूपिणी। रमादिः षोडशी चित्तवैमल्यस्य स्वरूपिणी॥५॥

सदसद्वस्तुनिर्धारस्वरूपा वाग्भवादिका। पञ्चधा षोडशार्णा तु दुर्लभा भुवनत्रये॥ ६॥

परादिः षोडशीविद्या तुर्यातीता प्रकीर्तिता। भेदाः पूर्वोक्तरीत्या च ज्ञातव्यास्तन्त्रकोविदैः॥७॥

शुद्धाशुद्धविभेदेन द्विविधाः परिकीर्तिताः। उभयात्मकभेदाश्च शबलाश्च तथैव च॥ ८॥

अनुलोमाश्च या विद्याः शुद्धाः स्युः प्रतिलोमजाः। अशुद्धा इति विज्ञेया उभयात्मान एव च॥९॥

शुद्धाशुद्धाश्च शबला व्यत्यस्तव्या[1] कुलक्रमात्। एवं चतुर्विधा विद्या विज्ञेया देशिकोत्तमैः॥१०॥

अशेषेण महाविद्याभेदास्ते कथिताः शिवे।

इति श्रीविद्याया भेदनिरूपणम्॥ अथ पञ्चसिंहासनविद्याः। तत्र प्रथमं पूर्वसिंहासनविद्या, तत्राप्याद्या बाला।

श्रीज्ञानार्णवे— ईश्वर उवाच

त्रिपुरा त्रिविधा देवि बालां तु प्रथमां शृणु। यया विज्ञातया देवि साक्षात् सुरगुरुप्रभः॥ १॥

सूर्यस्वरं समुच्चार्य बिन्दुनादकलात्मकम्[2]। स्वरान्तं पृथिवीस्थं तु तुर्यस्वरसमन्वितम्॥२॥

---

१. 'स्ताव्याकु' ग. पाठः। २. 'लोत्सुकम्' क. ख. ग. पाठः।

बिन्दुनादकलाक्रान्तं सर्गवान् भृगुरव्ययः। शक्तस्वरसमोपेतो विद्येयं त्र्यक्षरी मता॥ ३॥
गङ्गातरङ्गकल्लोलवाग्गुम्फपददायिनी । महासौभाग्यजननी महासारस्वतप्रदा ॥ ४॥

इति। "ऐक्लींसौः" इति। तथा—

ऋषिरस्य महेशानि दक्षिणामूर्तिरव्ययः। न्यसेच्छिरसि पूज्यत्वात् पङ्क्तिश्छन्दो मुखे प्रिये॥५॥
देवता हृदये बालात्रिपुरा परमेश्वरी। बीजं तु वाग्भवं शक्तिस्तार्तीयं कीलकं तथा॥ ६॥
कामराजं महेशानि च्छन्दोन्यास उदाहृतः। नाभ्यादिपादपर्यन्तं गलादानाभि चापरम्॥ ७॥
मूर्धादिगलपर्यन्तं त्र्यक्षरीं विन्यसेत् क्रमात्। वामपाणितले चैकं दश पाणितले तथा॥ ८॥
उभयोः सम्पुटे विद्यात्रिबीजं[1] विन्यसेत् प्रिये। पञ्च बाणान् क्रमेणैव कराङ्गुलिषु विन्यसेत्॥ ९॥
अङ्गुष्ठादिकनिष्ठान्तं क्रमेण परमेश्वरि । थान्तद्वयं समालिख्य वह्निसंस्थं क्रमेण तु॥ १०॥
मुखवृत्तेन नेत्रेण वामेन परिमण्डितम्। बाणद्वयमिदं प्रोक्तं मादनं भूमिसंस्थितम्॥ ११॥
चतुर्थस्वरबिन्द्वाढ्यं नादरूपं वरानने। फान्तं शक्रेण संयुक्तं वामकर्णविभूषितम्॥ १२॥
बिन्दुनादसमायुक्तं सर्गवांश्चन्द्रमाः प्रिये❁। पञ्च बाणा महेशानि नामानि शृणु पार्वति॥ १३॥
क्षोभणो द्रावणो देवि तथाकर्षणसंज्ञकः। वश्योन्मादौ क्रमेणैव नामानि परमेश्वरि॥ १४॥
कामास्तत्रैव विज्ञेयास्तेषां बीजानि संशृणु। पराबीजं मध्यबाणं वाग्भवं परमेश्वरि ॥ १५॥
तुर्यबाणं ततश्चैव स्त्रीबीजं तु क्रमात् प्रिये✤। पञ्च कामाः क्रमाद् देवि नामानि शृणु वल्लभे॥१६॥
काममन्मथकन्दर्पमकरध्वजसंज्ञकाः । मीनकेतुर्महेशानि पञ्चमः परिकीर्तितः ॥ १७॥
एतान् विन्यस्य देवेशि करन्यासस्ततः परम्। मूलविद्याद्विरावृत्त्या सर्वाङ्गुलितलेष्वपि॥ १८॥
षडङ्गक्रमयोगेषु मातृकां विन्यसेत् ततः।

अत्र षडङ्गन्यासोत्तरं मातृकाषडङ्गमन्तर्मातृकान्यासं बहिर्मातृकान्यासं कुर्यादित्यर्थः। तथा—

एवं ध्यात्वा न्यसेत् पश्चाद्विद्यान्यासं सुरेश्वरि। कुर्वीत देहसन्नाहं त्रिभिर्बीजैः क्रमात् प्रिये॥ १९॥
करयोर्विन्यसेदादौ मणिमध्ये तलेऽग्रके[2]। दक्षे वामे च विन्यस्य कक्षकूर्परपाणिषु॥ २०॥
पुनर्दक्षे च वामे च पादयोश्च तथा न्यसेत्। नादान्ते[3] हृदये लिङ्गे न्यसेद्देवि ततः परम्॥ २१॥
एतेष्वङ्गेषु देवेशि संहारक्रमतो न्यसेत् । विद्यासृष्टिक्रमेणैव जानीहि परमेश्वरि ॥ २२॥
ततो न्यसेन्महेशानि नवयोन्यङ्कितं विधिम्[4]। कर्णयोश्चिबुके देवि शङ्खयोर्मुखमण्डले॥ २३॥
नेत्रयोर्नासिकायां च बाहुयुग्मे हृदि प्रिये। तथा कूर्परयोः कुक्षौ जान्वोर्जङ्घे च विन्यसेत्॥२४॥
पादयोर्देवि गुह्ये च पार्श्वहस्तस्तनद्वये। कण्ठे च नवयोन्याख्यं[5] न्यसेद्बीजत्रयात्मकम्[6]॥ २५॥
षडङ्गमाचरेद् देवि द्विरावृत्त्या क्रमेण तु। त्रिव्द्येकदशकत्रिद्विसंख्यया शैलसम्भवे ॥ २६॥
अङ्गुलीषु पुनर्देवि बाणान् कामांश्च विन्यसेत्। ललाटगलहृन्नाभिमूलाधारेषु वै क्रमात्॥२७॥

❁ 'द्रांद्रीक्लींब्लूंसः इति। ✤ 'ह्रींक्लींऐंव्लूंस्त्रीं। १. 'जैः' ग. पाठः। २. 'न्यतलाग्रके' ग. पाठः। ३. 'नाभ्यन्ते' ङ. पाठः।
४. 'ताभिधम्' ङ. पाठः। ५. 'ख्यां' ग. पाठः। ६. ' त्मिकां' ग. पाठः।

मूलेन व्यापकं कृत्वा प्राणायामं समाचरेत्।

इति। अत्र प्राणायामत्रयं कृत्वा ऋष्यादिकरषडङ्गन्यासान् विधाय ध्यायेत्।

ध्यायेद्देवीं महेशानि कदम्बवनमध्यगाम्। रत्नमण्डपमध्ये तु महाकल्पवनान्तरे।। २८।।
मुक्तातपत्रच्छायायां रत्नसिंहासने स्थिताम्। अनर्घ्यरत्नघटितमुकुटां रत्नकुण्डलाम्।। २९।।
हारग्रैवेयसद्रत्नचित्रितां कङ्कणोज्ज्वलाम्। पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम्⊘।।३०।।
वरदानरतां दिव्यां महासारस्वतप्रदाम्।

इति बाला।। अथ सम्पत्प्रदाभैरवी। श्रीज्ञानार्णवे– ईश्वर उवाच

यथा श्रीत्रिपुरा बाला तथा त्रिपुरभैरवी। सम्पत्प्रदा नाम तस्याः शृणु निर्मलमानसे।। १।।
शिवचन्द्रौ वह्निसंस्थौ वाग्भवं तदनन्तरम्। कामराजं[१] तथा देवि शिवचन्द्रान्वितं ततः।। २।।
पृथ्वीबीजान्तवह्न्याढ्यं तार्तीयं शृणु सुन्दरि। शक्तिबीजे महेशानि शिववह्नी नियोजयेत्।। ३।।
कुर्मायास्त्रिपुरेशानि हित्वा सर्गं तु बैन्दवम्। त्रिपुराभैरवी देवी महासम्पत्प्रदा प्रिये ।। ४।।

ह्स्रैं, हसकलरीं, ह्स्रौं इति।

अनया सदृशी विद्या त्रिषु लोकेषु दुर्लभा। मूलमन्त्रद्विरावृत्या षडङ्गन्यास ईरितः।। ५।। ध्यानम्–
उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिकां रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिं वरम्।
हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्तारबिन्दश्रियम्। देवीं बद्धहिमांशुखण्डमुकुटां वन्दे सुमन्दस्मिताम्।।६।।

इति सम्पत्प्रदा भैरवी।। अथ चैतन्यभैरवी, श्रीज्ञानार्णवे–

शृणु देवि प्रवक्ष्यामि पूर्वसिंहासनस्थिताम्। वाग्भवं बीजमुच्चार्य जीवप्राणसमन्वितम्।। १।।
सकला भुवनेशानीं द्वितीयं बीजमुद्धृतम्। जीवप्राणं बह्निसंस्थं शक्रस्वरविभूषितम्।। २।।
विसर्गाढ्यं महादेवि विद्यात्रैलोक्यमातृका। त्रैलोक्यमोहनी देवी परब्रह्मचिदात्मिका।। ३।।

स्हैं, सकलह्रीं, स्ह्रौः– इयं सकारादिरिति। अस्या ऋष्यादिकं प्राग्वत्। ध्यानम्–

उद्यद्भानुसहस्राभां नानालङ्कारभूषिताम्। मुकुटोर्ध्व[२]लसच्चन्द्रलेखां रक्ताम्बरान्विताम्।। १।।
पाशाङ्कुशधरां नित्यां वामहस्ते कपालिनीम्। वरदाभयशोभाढ्यां पीनोन्नतघटस्तनीम्।। २।।
एवं ध्यात्वा यजेद्देवीं प्रेत (पूर्व) सिंहासनस्थिताम्।

इति चैतन्यभैरवी।। अथ द्वितीया चैतन्यभैरवी श्रीज्ञानार्णवे–

एतस्या एव विद्याया बीजद्वयमुदाहृतम्। तदन्ते परमेशानि नित्यक्लिन्ने मदद्रवे।। १।।
एतस्या एव तार्तीयं रुद्रार्णा परमेश्वरि।

स्हैं सकलह्रीं नित्यक्लिन्ने मदद्रवे स्ह्रौः इति। अस्या ऋष्यादिकं प्राग्वत्। ध्यानम्–

चैतन्यभैरवीं ध्यायेत् पाशाङ्कुशकपालिनीम्। रक्तां[३] मुण्डस्रजं पञ्चप्रेतसिंहासनस्थिताम्।। १।।

इति द्वितीया चैतन्यभैरवी।। अथ कामेश्वरी भैरवी श्रीज्ञानार्णवे –

---

⊘ दधानामिति शेषः। १. 'बीजं' क. पाठः। २. 'टाग्र' ग. पाठः। ३. 'मुक्ता' क. पाठः।

शिवचन्द्रौ मादनान्तं पान्तं वह्निसमन्वितम्। शक्तिभिन्नं बिन्दुनादकलाढ्यं वाग्भवं प्रिये॥ १॥
सम्पत्प्रदाया भैरव्याः कामराजं[1] तथैव हि। सदाशिवस्य बीजं तु महासिंहासनस्य च॥ २॥

हसखफ्रें, हसकलरीं, हसौं इति। ऋष्यादिकं पूर्ववत्।

ध्यानमस्याः प्रवक्ष्यामि रिपुभारनिकृन्तनम्। उद्यत्सूर्यसहस्राभां चन्द्रचूडां त्रिलोचनाम् ॥ १॥
नानालङ्कारसुभगां सर्ववैरिनिकृन्तनीम् । वमद्रुधिरमुण्डालिकलितां रक्तवाससम्॥ २॥
त्रिशूलं डमरुं खड्गं तथा खेटकमेव च। पिनाकं च शरान् देवि पाशाङ्कुशयुगं क्रमात्॥ ३॥
पुस्तकं चाक्षमालां च शवसिंहासनस्थिताम्।

इति कामेश्वरीभैरवी॥ इति पूर्वसिंहासनदेवताः॥ अथ दक्षिणसिंहासनदेवताः। तत्रादावघोरभैरवी—

अघोरविद्यारूपं तु महापापनिकृन्तनम्। अघोरे वाग्भवं पश्चाद्घोरे तु भुवनेश्वरी ॥ १॥
सर्वतः शर्वसर्वेभ्यो घोरघोरतरे रमाम्[3]। नमस्तेऽतु रुद्ररूपेभ्यो देव्या बीजयुगं लिखेत्॥२॥
त्रिंशद्भिश्च त्रिभिर्वर्णैर्विद्येयं कथिता प्रिये।

"अघोरे ऐं घोरे ह्रीं सर्वतः शर्वसर्वेभ्यो घोरघोरतरे श्रीं नमस्तेऽस्तु रुद्ररूपेभ्यः क्लीं सौः"। अस्या ऋष्यादिषडङ्गन्यासध्यानानि प्राग्वत्, इत्यघोरभैरवी॥ अथ महाभैरवी— ईश्वर उवाच

शिवचन्द्रौ बह्निसंस्थौ वाग्भवेन समन्वितौ। नादबिन्दुसुसंयुक्तं प्रथमं बीजमुद्धृतम्॥ १॥
लोपाया वाग्भवं कूटं द्वितीयं बीजमुद्धृतम्। शिवचन्द्रौ बह्निसंस्थौ मनुस्वरसमन्वितौ॥ २॥
तृतीयं बीजमाख्यातं बिन्दुनादकलान्वितम्। हस्रैं हसकलह्रीं हस्रौ इति।
पूर्ववत् परमेशानि ऋष्यादिन्यासमेव च। मध्यकूटेन षड्दीर्घयुक्तेनाङ्गानि कल्पयेत्॥ १॥
आताम्रार्कसहस्राभां लसच्चान्द्रजटास्फुरत्। किरीटरत्नविलसच्चित्रचित्रितमौक्तिकाम्॥ २॥
स्फुरद्रुधिरपङ्काढ्यमुण्डमालाविराजिताम्। नयनत्रयशोभाढ्यां पूर्णेन्दुवदनान्विताम् ॥ ३॥
मुक्ताहारलताराजत्पीनोन्नतघटस्तनीम् । रक्ताम्बरपरीधानां यौवनोन्मत्तरूपिणीम् ॥ ४॥
पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम्। वरदानरतां नित्यां महाप्रेतासनस्थिताम्॥ ५॥

इति महाभैरवी॥ अथ ललिताभैरवी—

मायाबीजं समुद्धृत्य कामराजं तथोद्धरेत्। प्रेतबीजं समुद्धृत्य विद्येयं त्र्यक्षरी भवेत्॥ १॥

ह्रींक्लींहस्रौं इति।

पूर्वोक्ता एव मुन्याद्या आद्येनाङ्गक्रिया मता। उद्यत्सूर्यसहस्राभां माणिक्यमुकुटोज्ज्वलाम्॥ १॥
रत्नकुण्डलमुक्ता[6]लिपदकाङ्गदभूषणाम् । रत्नमञ्जीरसुभगां रक्तवस्त्रानुलेपनाम् ॥ २॥
पाशाङ्कुशौ पुस्तकं च दधतीमक्षमालिकाम्। बाल्यलीलापरां देवीं कुमारीरूपधारिणीम्॥ ३॥
सर्वाङ्गसुन्दरीं ध्यायेत् सर्वसम्पत्तिहेतवे।

---

१. 'बीजं' क.ख.ग. पाठः। २. 'स्रवत्' ग. पाठः। ३. 'घोरघोरतरे सर्वतः शर्वसर्वेभ्यः' ग. पाठः। ४. 'कारयेत्' क.ख. पाठः। ५. 'मण्डलान्विताम्' क. ख. पाठः। ६. 'मुण्डा' क. ख. पाठः।

इति ललिताभैरवी। अथ कामेशीभैरवी— "कामेश्वरीभैरवी स्यात् कामराजेन सुन्दरी।" क्लीं, इति।

ऋषिरस्याः कामदेवो गायत्री छन्द उच्यते। कामेश्वरीदेवता स्याद्बीजेनाङ्गक्रिया मता।। १।।

जपाकुसुमसङ्काशां धनुर्बाणधरां स्मरेत्। नानालङ्कारसुभगां मोहयन्तीं जगत्त्रयम्।। २।।

इति कामेश्वरीभैरवी।। अथ रक्तनेत्राभैरवी—

चन्द्रवाग्भवसंयुक्तं बीजं प्रथममीरितम्। सकला बह्निमायाभ्यां द्वितीयं बीजमीरितम्।। १।।

बालायाश्चैव तार्तीयं तृतीयं बीजमुद्धृतम्। सैं, सकलरीं, सौः— इति।

कुमार्या एव ऋष्यादिरस्याश्च परमेश्वरि। षड्दीर्घचन्द्रबीजेन षडङ्गन्यास ईरितः।। १।।

उद्यत्सूर्यसहस्राभ्रां माणिक्यमुकुटोज्ज्वलाम्। रत्नकुण्डलमुक्तालिपदकाङ्गदभूषणाम्।। २।।

रत्नमञ्जीरसुभगां रक्तवस्त्रानुलेपनाम्। पाशाङ्कुशौ पुस्तकं च दधानां चाक्षमालिकाम्।। ३।।

उन्मत्तयौवनप्रौढां पीनोन्नतघनस्तनीम्। नितम्बिनीं क्षाममध्यां प्रान्तरक्तसुलोचनाम् ।। ४।।

इति रक्तनेत्रा भैरवी। इति दक्षिणसिंहासनदेवताः।। अथ पश्चिमसिंहासनदेवताः। तत्रादौ षट्कूटा भैरवी—

शिवचन्द्रौ मादनं च भूमिर्वह्निस्तु डामरम्। वाक्शान्तिमनुभिर्युक्तं बीजत्रयमुदाहृतम्।। १।।

हसकलरडैं, हसकलरडीं, हसकलरडौः — इति।

ऋष्यादीन् पूर्ववन्न्यस्य द्विरावृत्त्या षडङ्गकम्। बालसूर्यप्रभां देवीं जपाकुसुमसन्निभाम्।। १।।

मुण्डमालावलीरम्यां बालसूर्यसमांशुकाम्[1]। सुवर्णकलशाकारपीनोन्नतपयोधराम्[2] ।। २।।

पाशाङ्कुशौ पुस्तकं च तथा च जपमालिकाम्। दधतीं भैरवीं ध्यायेत् प्रेतसिंहासनस्थिताम्।।३।।

इति षट्कूटाभैरवी।। अथ नित्याभैरवी—

षट्कूटाभैरवी देवी प्रतिलोमतया भवेत्। नित्या च भैरवी प्रोक्ता चतुर्वर्गफलप्रदा।। १।।

डरलकसहैं, डरलसकहीं, डरलकसहौः — इति।

पूर्वोक्ता एव मुन्याद्या ध्यानमस्या वदामि ते। पञ्चमुण्डसमासीनां मुण्डमालाविभूषिताम्।। १।।

आताम्रार्कायुताभायां रत्नभूषणभूषिताम्। पाशाङ्कुशाभयवरान् दधतीं भावयेच्छिवाम्।। २।।

इति नित्या भैरवी।। अथ मृतसञ्जीवनी —

मायां हंसः पदं चोक्त्वा सञ्जीवनि ततः परम्। जूंजीवं प्राणपदं[3] ग्रन्थिं कुरुयुगं ततः।। १।।

स्वाहान्ता कथिता विद्या मृतसञ्जीवनी परा।

ह्रींहंसः सञ्जीवनि जूंजीवं प्राणग्रन्थिं कुरु २ स्वाहा।

ऋषिः शुक्रः समाख्यातो गायत्री छन्द ईरितम्। मृतसञ्जीवनी देवी देवता परिकीर्तिता।। १।।

मायाबीजं तु बीजं स्यात् स्वाहा शक्तिरुदाहृता। हंसस्तु कीलकं प्रोक्तं मृतसञ्जीवनाय च।।२।।

विनियोगः समाख्यातस्त्रिचतुश्चैककं पुनः। षट्चतुर्द्विककेनैव षडङ्गानि समाचरेत्।। ३।।

दक्षिणामूर्तिसंहितायाम्— ईश्वर उवाच

---

१. 'कुलाम्' ग. पाठः। २. 'घनस्तनीम्' क. ग. पाठः। ३. 'प्राणग्रन्थि' क. ख. पाठः।

देवि पश्चिमवक्त्रेण मयाद्यापि प्रजप्यते। विद्याचतुष्टयं साक्षादमृतानन्दविग्रहम् ॥ १॥
महासिंहासनगतं तत्र सञ्जीवनीं शृणु। शक्तिबीजं समालिख्य शिवचन्द्रौ समालिखेत्॥ २॥
अनुस्वारविसर्गाभ्यां मण्डितौ क्रमतः प्रिये। सञ्जीवनि[1] च जूं जीवं प्राणग्रन्थिस्थमालिखेत्॥३॥
कुरुशब्दस्त्रिशः सौः सौः वह्निजायान्वितो मनुः। विंशत्यर्णेति।

ह्रींहंसः सञ्जीवनि[2] जूं हंसः कुरु कुरु कुरु सौः सौः स्वाहा इति।

ऋषिः शुक्रः समाख्यातो गायत्रं छन्द उच्यते। सञ्जीवनी देवता स्याच्छक्तिरस्यादिबीजकम्॥१॥
चतुष्कं त्रितयं पञ्च पञ्चकं चतुरेव हि। त्रिकं च क्रमतो देवि षडङ्गानि प्रविन्यसेत्॥ २॥
कर्पूराभां हीरमुक्ताभूषणैर्भूषिताम्बराम् । ज्ञानमुद्रामक्षमालां दधतीं चिन्तयेत् पराम्॥ ३॥

इति मृतसञ्जीवनी॥ अथ मृत्युञ्जयपरा—

अथ वक्ष्ये महेशानि मृत्युञ्जयपरां पराम्। वदद्वन्दूं वादिनीति वाङ्मध्ये निक्षिपेत् प्रिये॥ १॥
हंसकं वाग्भवं देवि क्लिन्ने क्लेदिनि चालिखेत्। महाक्षोभं कुरुद्वन्दं शिवचन्द्रकलानलाम्॥२॥
वामाक्षिबिन्दुनादाङ्कां तारबीजं ततो वदेत्। मोक्षं कुरुयुगं हंसं शक्रस्वरविसर्गवत्॥ ३॥

वदवदवाग्वादिनि हसैं, क्लिन्ने क्लेदिनि महाक्षोभं कुरु २ हस्रीं, ओं मोक्षं कुरु २ हसौः इति।

इयं सञ्जीवनी देवी ऋषिरस्याः शिवः प्रिये। गायत्रं छन्द आख्यातं देवतेयं तु भैरवी॥ १॥
आदिकूटं भवेद्बीजं मध्यकूटं तु कीलकम्। अन्त्यकूटं भवेच्छक्तिः साक्षान्मृत्युविनाशनी॥२॥
नवशक्राष्टवर्णैस्तु षडङ्गानि प्रविन्यसेत्। ध्यात्वा चावाहयेद्देवीं कदम्बवनमध्यगाम्॥ ३॥
पुस्तकं वामहस्तेन दक्षिणेनाक्षमालिकाम्। बिभ्रतीं कुन्दधवलां कुमारीं चिन्तयेत् पराम्॥ ४॥

इति मृत्युञ्जयपरा॥ अथ वज्रप्रस्तारिणी— ईश्वर उवाच

परां क्लिन्ने वाग्भवं च तत्क्रोमात्मकमक्षरम्। ततो नित्यमदप्रान्ते द्रवे मायां च संलिखेत्॥१॥

ह्रींक्लिन्ने ऐंक्रों नित्यमदद्रवे ह्रीं— इति।

वज्रेशी रविवर्णेयं ऋषिर्ब्रह्मास्य सन्मनोः। छन्दो विराट् च वज्रेशी देवता परिकीर्तिता॥ १॥
पञ्चमं च चतुर्थं च बीजशक्ती क्रमेण तु। तार्तीयं कीलकं देव्यास्ततोऽङ्गानि प्रविन्यसेत्॥ २॥
आद्यन्तबीजं सन्त्यज्य द्विकं चैकेकरूपकम्। द्विकं द्विकं त्रिकं[3] चैव षडङ्गानि प्रकल्पयेत्॥३॥
ध्यात्वा चावाहयेद्देवीं कदम्बवनमध्यगाम्। रक्तां चन्द्रकलाचारुमुकुटां वरभूषणाम् ॥ ४॥
महातारुण्यगर्वाढ्यलोचनत्रयशोभिताम् । शोणिताब्धितरत्पोतमहायन्त्रोपरि स्थिताम् ॥ ५॥
दाडिमं सायकांश्चैव पाशं चैव सृणिं तथा। चापं कपालं दधतीं शोणमाल्यानुलेपनाम्॥६॥
स्मरेद्रक्ततरां देवीमुपचारैः समर्चयेत्।

इति वज्रप्रस्तारिणी॥ इति पश्चिमसिंहासनदेवताः॥ अथोत्तरसिंहासनदेवताः। तत्रादौ भुवनेश्वरीभैरवी—

..................................................। (?)

---

१. 'नीच' क. ख. पाठः। २. 'नी जूंसः कुरु' क. पाठः। ३. 'द्विकं' ख. पाठः।

लोपावाग्भवमुच्चार्य प्रेतबीजं समुद्धरेत्। रेफं शिवाधो निःक्षिप्य भुवनेशी च भैरवी।। १।।

हस्रैं, हसकलह्रीं हस्रौं इति।

कुमार्या एवं ऋष्याद्या आद्येनाङ्गक्रिया मता। जपाकुसुमसङ्काशां दाडिमीकुसुमप्रभाम्।। २।।
चन्द्रलेखाजटाजूटां त्रिनेत्रां रक्तवाससम् । नानालङ्कारसुभगां पीनोन्नतघनस्तनीम्।। ३।।
प्रेतासनसमासीनां मुण्डमालाविभूषिताम्। पाशाङ्कुशवराभीतीर्धारयन्तीं शिवां श्रये ।। ४।।

इति भुवनेशीभैरवी।। अथ कमलेश्वरीभैरवी— "भुवनेशी च चन्द्राद्या कमलेशी तथा भवेत्।।" सहैं, सहकलह्रीं सह्रौं— इति। अन्यत्सर्वं भुवनेशीभैरवीवत्। इति कमलेशीभैरवी।। अथ सिद्धकौलेशभैरवी—

हस्रैं हस्रीं च हस्रौः च सिद्धकौलेशभैरवी। कुमार्या एव मुन्याद्या ध्यानमस्या वदामि ते।। १।।
आताम्रार्कसहस्राभां त्रिनेत्रां चन्द्रसन्मुखीम्। चन्द्रखण्डस्फुरद्रत्नमुकुटां क्षाममध्यमाम् ।। २।।
नितम्बिनीं स्फुरद्रत्नवसनां रक्तभूषणाम् । उन्मत्तयौवनप्रौढां पीनोन्नतघनस्तनीम् ।। ३।।
असृक्पङ्काढ्यमुण्डस्रङ्मण्डिताङ्गीं सुभूषणाम्। पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम्।।४।।
वरदं दधतीं ध्यायेत् प्रेतसिंहासनस्थिताम्।

इति सिद्धकौलेशभैरवी।। अथ डामरभैरवी— ईश्वर उवाच

उत्तरास्येन देवेशि मयाद्यापि प्रजप्यते। महासिंहासनगता भैरवी डामरेश्वरी ।। १।।
पूर्वोक्तभैरवीदेव्याः कामकूटे परां शिवाम्। हित्वोच्चरेत् तदा विद्यां महासिंहासनेश्वरीम्।।२।।

हसैं, हक्लीं, हसौः— इति।

पूर्वोक्ता एव मुन्याद्या ध्यानमस्या वदामि ते। बन्धूककुसुमाभासां पञ्चमुण्डाधिवासिनीम्।। १।।
स्फुरच्चन्द्रकलारत्नमुकुटां मुण्डमालिनीम् । त्रिनेत्रां रक्तवसनां पीनोन्नतघनस्तनीम्।। २।।
पुस्तकं चाक्षमालां च वरदं चाभयं क्रमात्। दधतीं संस्मरेन्नित्यमुत्तराम्नायमानिताम्।। ३।।

इति डामरभैरवी।। अथ कामिनीभैरवी—

सम्पत्प्रदाया भैरव्या वह्निं त्यक्त्वा समुद्धरेत्। कामिनीभैरवी चेयं भयविध्वंसिनीति वा।। १।।

हसैं, हसक्लीं, हसौ—इति।

पूर्वोक्ता एव मुन्याद्या ध्यानमस्या वदामि ते। आताम्रार्का युता भासां रत्नभूषणभूषिताम्।। १।।
पाशाङ्कुशाभयवरान् धारयन्तीं शवासनाम्। मुण्डमालावलीरम्यां चिन्तयेद्भैरवीं पराम् ।।२।।

इति कामिनीभैरवी। इत्युत्तरसिंहासनदेवताः।। अथोर्ध्वसिंहासनदेवतास्तत्रादौ प्रथमसुन्दरी—ईश्वर उवाच

अथेशानेन वक्त्रेण मयाद्यापि प्रजप्यते। विद्यानां पञ्चकं देवि त्रिषु लोकेषु दुर्लभम्।। १।।
वाग्भवं शिवसंयुक्तं वाग्भवे मध्यमं शृणु। हकालान्तें[1] महेशानि शिवबीजं तु संलिखेत्।।२।।
रेफवामाक्षिबिन्द्विन्दुघटितं तु तृतीयकम्। हसानुग्रहसर्गाढ्यं विद्यैका सुन्दरी प्रिये ।। ३।।

हैं, हकलह्रीं, हसौः— इति प्रथमसुन्दरी।। अथ द्वितीयसुन्दरी—

---

१. 'ह्रैं' क. पाठः।

अहसाद्यैर्जपेन्मन्त्री रवितुर्यमनस्वरैः। अन्त्यं ससर्गमाद्ये हि बिन्दुनादकलात्मिके॥ १॥
इयं द्वितीया देवेशि सुन्दरी परिकीर्तिता।

अहसैं, अहसीं, अहसौः इति द्वितीयसुन्दरी॥ अथ तृतीयसुन्दरी—

केवलं वाग्भवं देवी वाग्भवे मध्यमं शृणु। हसएहससस्त्रांश्च वाग्भवेन च योजयेत्॥ १॥
हत्रयं कलहल्लेखां शक्तिकूटं शृणु प्रिये। चतुष्कं शिवबीजानां रेफोऽनुग्रहसर्गवान्॥ २॥
एवं तृतीया देवेशि सुन्दरी चतुरक्षरा॥

ऐं, हसएहसहस्रैं हहहकलह्रीं, हहहहरौः, इति तृतीयसुन्दरी॥ अथ चतुर्थसुन्दरी—

कलान्ते शिवयुग्मं तु तथा जीवत्रयं शिवे। परया पिण्डितं कुर्यात् कूटमेतत् त्रिधेरयेत्॥ १॥
वाग्भवे कामराजे च शक्तिबीजे च संलिखेत्। चतुर्थी सुन्दरी ख्याता भोगमोक्षप्रदायिनी॥ २॥

कलहहसससहैं (ह्रीं), कलहहसससह्रीं, कलहहसससह्रौं, (ह्रीं)— इति चतुर्थसुन्दरी। अथ पञ्चमसुन्दरी

जीवः शिवयुगं जीवः क्ष्माक्षकारशिवेन्दुमत्। एतदाद्यं च मध्यं च हसयुक्क्ष्माक्षहेन्दुमत्॥ १॥
अन्त्यं तु हसलक्षेन्दुहेन्द्वाकाशविभूषितम् । त्रिपुरेशीमनोरेषा पञ्चमी सुन्दरी भवेत् ॥ २॥

सहहसलक्षहैं, हसहसलक्षहर्सीं, हसलक्षसहसहौः— इति पञ्चमसुन्दरी।

सम्पत्प्रदाभैरवीवद्ध्यायेत् पञ्चकमुत्तमम्। ऋष्यादिपूजा विज्ञेया त्रिपुरेशीव नान्यथा॥ १॥

इत्यूर्ध्वसिंहासनविद्याः। इति पञ्चसिंहासनविद्यानिरूपणम्। अथ पञ्चपञ्चिकागणस्तत्रादौ पञ्चलक्ष्म्यः, तत्रादौ श्रीविद्यालक्ष्मीः —

षोडशार्णां महाविद्यां समुच्चार्य विधानवित्। महालक्ष्मीश्वरीवृन्दमण्डितासनसंस्थिता॥ १॥
सर्वसौभाग्यजननीपादुकां पूजयामि च।

इति श्रीविद्यालक्ष्मीः॥ अथैकाक्षरलक्ष्मीः —

वरुणान्तं वह्निसंस्थं दीर्घनेत्रविभूषितम्। बिन्दुनादसमायुक्तं लक्ष्मीमन्त्र उदाहृतः॥ १॥ श्रीं इति।
ऋषिर्भृगुर्निचृच्छन्दस्तथा श्रीर्देवता प्रिये। शतुर्ये बीजशक्ती च कीलकं रेफ उच्यते॥ २॥
षड्दीर्घयुक्स्वबीजेन षडङ्गानि समाचरेत्। ध्यायेत् ततः श्रियं रम्यां सर्वदेवनमस्कृताम्॥३॥
तप्तकार्तस्वराभासां दिव्यरत्नविभूषिताम्। आसिच्यमानाममृतैर्मुक्तारत्नद्रवैरपि ॥ ४॥
शुभ्राभ्राभेभयुग्मेन मुहुर्मुहुरपि प्रिये । रत्नौघबद्धमुकुटां शुद्धक्षौमाङ्गरागिणीम् ॥ ५॥
पद्माक्षीं पद्मनाभेन हृदि चिन्त्यां स्मरेद्बुधः। एवं ध्यात्वा जपेद्देवीं पद्मयुग्मधरां सदा॥ ६॥
वरदाभयशोभाढ्यां चतुर्बाहुं सुलोचनाम्।

इति लक्ष्मीः॥ अथ महालक्ष्मीः —

प्रणवं पूर्वमुच्चार्य हरीमात्मकमक्षरम्। श्रीपुटं चाथ कमले कमलाये प्रसीद च॥ १॥
लायेमध्यगतां भूमिं[२] रुद्रस्थाने तु योजयेत्। प्रसीद पूर्वबीजानि सम्पुटत्वेन योजयेत्॥२॥

---

१. 'द्यो' क. पाठः। २. 'कमलाय प्रसीद च लयेमध्यगता भूमिरू०' क.ग.पाठः।

महालक्ष्मीहृदन्तोऽणुरष्टाविंशतिवर्णवान्।

ऊँश्रींह्रींश्रीं कमले कमलालये प्रसीद प्रसीद श्रींह्रींश्रींऊँ महालक्ष्म्यै नमः– इति।

दक्षः प्रजापतिश्चास्य ऋषिश्छन्दस्तथैव च। गायत्री देवता लक्ष्मीर्हृदयं परिकीर्तितम्।। १ ।।

द्वितीयं च तृतीयं च बीजशक्ती क्रमेण तु। प्रणवः कीलकं देवि ततोऽङ्गानि प्रविन्यसेत्।।२ ।।

अङ्गानि पूर्ववद्देवि न्यसेन्मन्त्री समाहितः। रत्नोद्यद्वसुपात्रं च पद्मयुग्मं च हेमजम्।। ३ ।।

[1]अग्ररत्नावलीराजदादर्शं दधतीं पराम् । चतुर्भुजां स्फुरद्रत्ननूपुरां मुकुटोज्ज्वलाम् ।। ४ ।।

ग्रैवेयाङ्गदहाराढ्यकङ्कणां रत्नकुण्डलाम् । पद्मासनसमासीनां दूतीभिर्मण्डितां सदा ।। ५ ।।

शुक्लाङ्गरागवसनां महादिव्याङ्गनानताम्। एवं ध्यात्वार्चयेद्देवीमिति।

इति महालक्ष्मीः।। अथ त्रिशक्तिलक्ष्मीः –

श्रीबीजं च पराबीजं कामबीजं समालिखेत्। इयं त्रिशक्तिर्देवेशि त्रिषु लोकेषु दुर्लभा।। १ ।।

श्रींह्रींक्लीं– इति।

ऋषिर्ब्रह्मास्य गायत्री छन्दोऽपि कथितं प्रिये। त्रिशक्तिर्देवताङ्गानि द्विरावृत्त्या यजेत् प्रिये।। १ ।।

(?)..............................ध्यायेत्सर्वसमृद्धिदाम्। नवहेमस्फुरद्भूमौ रत्नकुट्टिममण्डपे।। २ ।।

महाकल्पवनान्तःस्थे रत्नसिंहासने वरे । कमलासनशोभाढ्यां रत्नमञ्जीरकुण्डलाम् ।। ३ ।।

स्फुरद्रत्नलसन्मौलिं रत्नकुण्डलमण्डिताम्। अनर्घ्यरत्नघटितनानामण्डन[2]भूषिताम् ।। ४ ।।

दधतीं पद्मयुगलं पाशाङ्कुशधनुःशरान्। षड्भुजामिन्दुवदनां दूतीभिः परिवारिताम्।। ५ ।।

चारुचामरहस्ताभी रत्नादर्शसुपाणिभिः। ताम्बूलस्वर्णपात्रीभिर्भूषापेटीसुपाणिभिः ।। ६ ।।

'तप्तकार्तस्वराभासाम्' इति। इति त्रिशक्तिलक्ष्मीः।। अथ सर्वसाम्राज्यलक्ष्मीः –

अथ वक्ष्ये महेशानि[3] सर्वसाम्राज्यदेवताम्। यस्या आराधने विष्णुरभूल्लक्ष्मीपतिः स्वयम्।। १ ।।

चन्द्रेशमादनक्ष्मेशवह्निदीर्घाक्षिमण्डितम् । विध्व[4]क्रूरेश्वरीयुक्तं विद्येयं वैष्णवी प्रिये ।। २ ।।

श्रीबीजसम्पुटं कुर्यात् सर्वसाम्राज्यदायिनी।

श्रींसहकलह्रींश्रीं इति।

ऋषिर्हरिस्तथा छन्दो गायत्री चास्य सन्मनोः। देवता मोहनी लक्ष्मीर्महासाम्राज्यदायिनी।। १ ।।

बीजं कूटं समाख्यातं शक्तिः श्रीबीजमुच्यते। षड्भिराद्यैः स्वरैर्भित्त्वा षडङ्गानि प्रविन्यसेत्।।२ ।।

अतसीपुष्पसङ्काशां रत्नभूषणभूषिताम्। शङ्खचक्रगदापद्मशार्ङ्गबाणधरां करैः।। ३ ।।

षड्भिः कराभ्यां देवेशि वरदाभयशोभिताम्। एवमष्टभुजां ध्यात्वेति।

इति सर्वसाम्राज्यलक्ष्मीः। इति पञ्चलक्ष्म्यः।। अथ पञ्चकोशविद्याः– तत्र श्रीविद्याकोशेश्वरी– ऊँऐंह्रींश्रीं, मूलम्।

महाकोशेश्वरीवृन्दमण्डितासनसंस्थिता। सर्वसौभाग्यजननीपादुकां पूजयामि च।। १ ।।

---

१. 'आग्रय' ख. पाठः। २. 'भूषण' क.ख. पाठः। ३.'महादेवि' क.ख. पाठः। ४.'विद्वक्रूर' क. पाठः। 'बिन्दु' ग. पाठः।

इति श्रीविद्याकोशेश्वरी॥

अथ श्रीकोशविद्यानां चतुष्कं शृणु पार्वति। यस्य विज्ञानमात्रेण पुनर्जन्म न विद्यते॥ १॥

श्रीविद्या च परज्योतिः परनिष्कलदेवता। अजपा मातृका चैव पञ्च कोशाः प्रकीर्तिताः॥२॥

प्रणवं पूर्वमुच्चार्य परां हंसःपदं लिखेत्। ततः सोऽहं शिरो देवि वसुवर्णेयमीरिता ॥३॥

"ओंह्रींहंसःसोऽहं स्वाहा" इति।

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्रं छन्द उच्यते। परज्योतिर्मयी साक्षाद्देवता परिकीर्तिता ॥४॥

प्रणवान्त्यद्वयं बीजशक्ती शेषं तु कीलकम्। स्वाहा तु हृदयं सोऽहं शिरो हंसः शिखा भवेत्॥५॥

मायया कवचं तारबीजेन नयनत्रयम्। मृज्यान्मन्त्रेण देवेशि समग्रेणास्त्रकं भवेत्॥ ६॥

ध्यानं तु प्रपञ्चयागकरणे प्रपञ्चितमिति परज्योतिः कोशेश्वरी॥ अथ परनिष्कलदेवता कोशेश्वरी —

अथ वक्ष्ये महेशानि परनिष्कलदेवताम्। यस्याः स्मरणमात्रेण चिदानन्दायते पुनः॥ १॥

अनुग्रहादिर्देवेशि बिन्दुनादकलात्मकः। परनिष्कलदेवीयं परब्रह्मस्वरूपिणी ॥ २॥

शुक्लाम्बरपरीधाना शुक्लमाल्यानुलेपना। ज्ञानमुद्राङ्किता योगिपतिवृन्देन सेविता॥ ३॥

ध्येयेति शेषः।

ऋषिर्ब्रह्मास्य गायत्रं मनोश्छन्दः क्रमाद्भवेत्। ब्रह्मैव देवता बीजशक्ती अऊ क्रमेण तु॥ ४॥

मकारः कीलकं मोक्षफलदा ज्ञानदायिनी। स्वरद्वन्द्वस्य मध्ये तु क्षिप्त्वा त्यक्त्वा चतुष्टयम्॥ ५॥

ऋॠऌॡ च देवेशि षडङ्गानि प्रविन्यसेत्।

इति परनिष्कलदेवता॥ अथाजपाकोशेश्वरी —

अजपाराधनं देवि कथयामि तवानघे। यस्य विज्ञानमात्रेण परब्रह्मैव देशिकः ॥ १॥

हंसःपदं परेशानि प्रत्यहं जपते नरः। मोहबद्धो न जानाति मोक्षस्तस्य न विद्यते॥ २॥

श्रीगुरोः कृपया देवि जायते जप्यते तदा। उच्छ्वासनिःश्वासतया तदा बन्धक्षयो भवेत्॥ ३॥

उच्छ्वासे चैव निःश्वासे हंस इत्यक्षरद्वयम्। तस्मात् प्राणस्तु हंसाख्य आत्माकारेण संस्थितः॥ ४॥

षट्श्वासैश्च भवेत् प्राणः षट्प्राणैर्नाडिका मता (?) षष्टिनाड्या अहोरात्रं जपसंख्याजपामनोः॥ ५॥

एकविंशतिसाहस्रं षट्शताधिकमीश्वरि। जपते प्रत्यहं प्राणी सदानन्दमयीं पराम्॥ ६॥

उत्पत्तिर्जप आरम्भो मृतिरस्य निवेदनम्। विना जपेन देवेशि जपो भवति मन्त्रिणः॥ ७॥

अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी। श्रीगुरोः कृपया देवि लभते नान्यथा प्रिये॥ ८॥

एवं जपं महेशानि प्रत्यहं विनिवेदयेत्। गणेशब्रह्मविष्णुभ्यो हराय परमेश्वरि ॥ ९॥

जीवात्मने क्रमेणैव तथा च परमात्मने। षट् शतानि सहस्राणि षडेव च तथा पुनः॥ १०॥

षट् सहस्राणि च पुनः सहस्रं च सहस्रकम्। पुनः सहस्रं गुरवे क्रमेण तु निवेदयेत्॥ ११॥

जपं निवेदयित्वा तमहोरात्रभवं प्रिये। सहजं परमेशानि न्यासं कुरु विचक्षणे॥ १२॥

ऋषिर्हंसोऽव्यक्तपूर्वं गायत्रं छन्द उच्यते। देवता परमादिस्तु हंसो हं बीजमुच्यते।। १३।।
स: शक्ति: कीलकं साऽहं प्रणवस्तत्त्वमेव हि। नभ: स्थानं तथा श्वेतो वर्णस्तु परमेश्वरि।। १४।।
उदात्त: स्वर इत्येवं मनोरस्य प्रकीर्तितम्। मोक्षार्थे विनियोग: स्यादेवं जानीहि पार्वति।। १५।।
तत: षडङ्गविन्यासं कुर्याद् देहस्य शुद्धये। सूर्यं सोमं तथा देवि निरञ्जनमतः परम्।। १६।।
निराभासं चतुर्थ्यन्तस्वाहान्तान् क्रमतो न्यसेत्। कवचान्तान् प्रविन्यस्य ततोऽनन्तपदं स्मरेत्।।१७।।
तनुसूक्ष्मचतुर्वर्णानुक्त्वा ङेन्तं प्रचोदयात् । स्वाहान्तेनेव नयनमव्यक्तपदपूर्वक: ।। १८।।
प्रबोधात्मा चतुर्थ्यग्निजायान्तोऽस्त्रं निगद्यते। अस्य हंसस्य देवेशि निगमागमपक्षकौ।। १९।।
अग्नीषोमावथो वापि पक्षौ तार: शिरो भवेत्। बिन्दुत्रयं शिखा नेत्रे मुखे नाद: प्रतिष्ठित:।।२०।।
शिवशक्तिपदद्वन्दं कालाग्निपार्श्वयुग्मकम् । अयं परमहंसस्तु सर्वव्यापी प्रकाशवान्।। २१।।
सूर्यकोटिप्रतीकाश: स्वप्रकाशेन भासते। संहाररूपी हंसोऽयं विवेकं दर्शयत्यपि।। २२।।
अजपा नाम गायत्री त्रिषु लोकेषु दुर्लभा।

इत्यजपाकोशेश्वरी।। मातृका प्रागेव प्रपञ्चिता। इति पञ्च कोशदेवता:।। अथ पञ्च कल्पलता: —

अथ वक्ष्ये महेशानि विद्या: कल्पलता: प्रिये। यासां विज्ञानमात्रेण पलायन्ते महापद:।। १।।
श्रीविद्या पारिजातेशी पञ्चकामेश्वरी तथा। पञ्चबाणेश्वरी देवी कुमारी पञ्च कीर्तिता:।। २।।

"ऊँऐंह्रींश्रीं मू० महाकल्पलतेश्वरीवृन्दमण्डितासनसंस्थितसर्वसौभाग्यजननीश्रीविद्याकल्पलताश्रीपादुकां पूजयामि।" इति श्रीविद्याकल्पलतेश्वरी।। अथ पारिजातेश्वरी—

सम्पत्प्रदाया भैरव्या वाग्भवं बीजमालिखेत्। तारेण परया देवि सम्पुटीकृत्य मन्त्रवित्।। १।।
सरस्वत्यै हृदन्तोऽयं रुद्रार्णो मनुरीरित:।

"ऊँह्रींऐंह्रींऊँ सरस्वत्यै नम:" इति।

ऋषि: स्याद्दक्षिणामूर्तिर्गायत्रं छन्द ईरितम्[1]। पारिजातेश्वरी वाणी देवता परिकीर्तिता।। २।।
तृतीयं च द्वितीयं च बीजशक्ती च तारकम्। कीलकं परमेशानि महासारस्वतप्रदम्।। ३।।
षड्दीर्घस्वरसम्भिन्नबीजेनाङ्गानि विन्यसेत्। हंसारूढां लसन्मुक्ताधवलां शुभ्रवाससम्।। ४।।
शुचिस्मितां चन्द्रमौलिं वज्रमुक्ताविभूषणाम्। विद्यां वीणां सुधाकुम्भमक्षमालां च बिभ्रतीम्।।५।।

इति पारिजातेश्वरी।। अथ पञ्चबाणेश्वरी —

अथ वक्ष्ये महेशानि पञ्चबाणेश्वरीं शिवाम्। त्रिपुरेशीमन्त्रमध्ये बाणा: प्रोक्ता महेश्वरि।। १।।
तैरेव पञ्चभिर्बाणैर्विद्या पञ्चाक्षरी भवेत्। "द्रांद्रींक्लींब्लूंस:"। इति।
ऋषिरस्यास्तु मदनो गायत्रं छन्द उच्यते। कामेश्वरीव बीजादि देवता चेयमीश्वरी।। २।।
व्यस्तै: समस्तैरङ्गानि बाणै: पञ्चभिराचरेत्। उद्यद्दिवाकराभासां नानालङ्कारभूषिताम्।। ३।।

---

१. 'उच्यते' क. पाठ:।

बन्धूककुसुमाकाररक्तवस्त्राङ्गरागिणीम्। इक्षुकोदण्डपुष्पेषु विराजितभुजद्वयाम्।। ४।।

इति पञ्चबाणेश्वरी।। अथ पञ्चकामेश्वरी —

अथ वक्ष्ये पञ्चकामनायिकां विश्वमातरम्। पूर्वोक्तपञ्चकामैस्तु पञ्चकामेश्वरी भवेत् ।। १।।

ऋषिः सम्मोहनो नाम गायत्रं छन्द उच्यते। देवतेयं कामदा च बीजशक्ती तु कीलकम् ।। २।।

अन्त्यमेतैर्न्यसेन्मन्त्री व्यस्तैश्चैव समस्तकैः। अङ्गानि पूर्ववत् कामबाणन्याससद्वयं भवेत्।। ३।।

रक्तां रक्तदुकूलाङ्गलेपनां रक्तभूषणाम्। पाशाङ्कुशौ धनुर्बाणान् पुस्तकं चाक्षमालिकाम्।। ४।।

वराभीती च दधतीं त्रैलोक्यवशकारिणीम्।

इति पञ्चकामेश्वरी।। अथ कुमारी —

अथ वक्ष्ये महेशानि कुमारीं विश्वमातरम्। कामेश्वरीं भगवतीं त्रैलोक्याकर्षणक्षमाम्।। १।।

वाग्भवं त्रिपुरेशान्या हित्वा तत्र क्षिपेत् सुधीः। कामशक्तिद्वयान्तस्तु विद्येयं त्र्यक्षरी भवेत्।।२।।

"क्लींऐंसौः" इति।।

त्रिपुरेशीवदृष्यादि बीजशक्ती क्रमेण तु। आद्यन्ते कीलकं मध्यं महावश्यकरी भवेत्।। ३।।

द्विरावृत्त्या षडङ्गानि इति। तथा —

उद्यत्सूर्यसहस्राभां माणिक्यवरभूषणाम्। स्फुरद्रत्नदुकूलाढ्यां नानालङ्कारभूषिताम्।। ४।।

इक्षुकोदण्डबाणाँश्च पुस्तकं चाक्षमालिकाम्। दधतीं चिन्तयेन्नित्यं सर्वराजवशङ्करीम्।। ५।।

इति पञ्चकल्पलताविद्याः।। अथ पञ्चकामदुघाः— "ओंऐंह्रींश्रीं मूलं महाकामदुघेश्वरीवृन्दमण्डितासनसंस्थित-सर्वसौभाग्यजननीश्रीविद्याकामदुघाश्रीपादुकां पूजयामि।" इति श्रीविद्याकामदुघा।। "ह्रीं हंसः सञ्जीवनि जूं जीवं प्राणग्रन्थिस्थं कुरु कुरु सः स्वाहा।" ऋष्यादिन्यासध्यानानि प्रागेवोक्तानि। इत्यमृतपीठेश्वरी।। अथ सुधासूः— "ऐंब्लूंओं जूंसः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा" ऋष्यादिच्छन्दोन्यासादि प्राग्वत्।

अमृतामृतरश्म्योघसन्तर्पितचराचराम्। भवानि भवशान्त्यै त्वां भावयाम्यमृतेश्वरीम्।। १।।

इत्येवं सुधासूः। अथान्नपूर्णा —

शिवाग्निवामनयनबिन्दुनादकलात्मकम्। श्रीकामयुगलं प्रोक्त्वा हृदन्ते भगवत्यपि।। १।।

माहेश्वरि चतुर्वर्णमन्नपूर्णे तथा लिखेत्। चतुर्वर्णं वह्निजायातारद्यो मनुरीरितः।।२।।

द्विदशार्णा महेशानि इति। "ओंह्रींश्रींक्लीं नमो भवति माहेश्वरि अन्नपूर्णे स्वाहा"। अयं मन्त्रः प्रणवादिः।

ऋषिर्ब्रह्मास्य मन्त्रस्य उष्णिक्छन्दोऽभिधीयते। अन्नपूर्णेश्वरी देवी देवता परिकीर्तिता।। ३।।

बीजं शक्तिः कीलकं च हृल्लेखादिकमुच्यते। षड्दीर्घमायया कुर्यात् षडङ्गानि महेश्वरि।।४।।

उद्यत्सूर्यसमाभासां विचित्रवसनोज्ज्वलाम्। चन्द्रचूडामन्नदाननिरतां रत्नभूषिताम्।। ५।।

सुवर्णकलशाकारस्तनभारनतां पराम्। रुद्रताण्डवसानन्दां द्विभुजां परमेश्वरीम्।। ६।।

वरदाभयशोभाढ्यामन्नदानरतां सदा।

इत्यन्नपूर्णेश्वरी। इति पञ्च कामदुघाविद्या:।। अथ पञ्च रत्नेश्वरीविद्या:। तत्रादौ श्रीविद्यारत्नेश्वरी— "४ मूलं महारत्नेश्वरीवृन्दमण्डितासनसंस्थितसर्वसौभाग्यजननीश्रीविद्यारत्नेश्वरीश्रीपादुकां पूजयामि।" इति श्रीविद्यारत्नेश्वरी।। अथ सिद्धलक्ष्मीरत्नेश्वरी— "ॐऐंह्रींश्रींफ्रेंफ्रेंख्फ्रेंऐं क्ष्मरीं महाचण्डतेज:सङ्कर्षिणि कालिमन्थाने ह्रीं स: स्वाहा। खफ्रेंह्रींश्रीं सर्वसिद्धयोगिनि हसखफ्रें ह्रींश्रींनित्योदितायै सकलकुलचक्रनायिकायै भगवत्यै चण्डिकपालिन्यै ह्रींश्रींहूंख्फ्रेंह्रींहूंह्स्फ्रेंश्रेंक्रोंक्लींस: खफवयरें परमहंसि निवार्णमार्गदे देवि विषमोपप्लवप्रशमनि सकलदुरितारिष्टक्लेशदमनि सर्वापदम्भोधितारिणि सकलशत्रुप्रमथिनि देवि आगच्छ २ हस २ बल २ नररुधिरान्त्रवसाभक्षिणि मम शत्रून् मर्दय २ खाहिं २ त्रिशूलेन भिन्धि २ छिन्दि २ खड्गेन ताडय २ छेदय २ वदकवलह्रीं हसक्षमलवरयूं हसक्षमलवरयीं सहक्षमलवरयीं मम सकलमनोरथान् साधय २ परमकारुणिके देवि भगवति महाभैरवरूपधारिणि त्रिदशवरनमिते महामन्त्रमात: प्रणतजनवत्सले देवि महातिकालनाशिनि ह्रीं प्रसीद मदनातुरां[१] कुरु २ सुरासुरकन्यकां ह्रींश्रींक्रों फट् ठ:ठ: हसखफ्रें फ्रेंफ्रें महारत्नेश्वरीवृन्दमण्डितासन संस्थितसर्वसौभाग्यजननीश्रीसिद्धमहालक्ष्मीश्रीपादुकां पूजयामि।" इति सिद्धलक्ष्मी:।। अथ मातङ्गी रत्नेश्वरी—

अथात: सम्प्रवक्ष्यामि मातङ्गी रत्नदेवताम्। वाग्भवं कामराजं च सर्गवान् भृगुरुत्तमे।। १।।
अनुग्रहेण संयुक्त: पुनराद्यं परां लिखेत्। श्रीबीजं तारकं चैव नमो भगवतीति च।। २।।
मातङ्गीश्वरि सर्वान्ते मनोहरि जनादिकम्। सर्वराजवशं चान्ते करि सर्वमुखान्तकम्।। ३।।
रञ्जिनीति तत: सर्वस्त्रीशब्दं च ततो वदेत्। पुरुषान्ते वशं चोक्त्वा कर्यन्ते सर्वदुष्टत:।। ४।।
मृगान्ते वशमालिख्य सर्वलोकपदं लिखेत्। शैलजे वशमालिख्य करिशब्दं ततो वदेत्।। ५।।
परां श्रियं कामबीजं वाग्भवं च समालिखेत्। सप्ततिश्च त्रयो वर्णा मातङ्गीविग्रहा: प्रिये।। ६।।

"ऐंक्लींसौ: ऐंह्रींश्रीं ओंनमो भगवति मातङ्गीश्वरि सर्वजनमनोहरि सर्वराजवशङ्करि सर्वमुखरञ्जिनि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वलोकवशङ्करि ह्रींश्रींक्लींऐं।।"

इयं मतङ्गविद्यानां राज्ञी मोक्षार्थसिद्धिदा। ऋषिर्मतङ्गो भगवान् गायत्री छन्द उच्यते।। ७।।
देवता नादमूर्तिस्तु मातङ्गी परमेश्वरी[२]। कामबीजं वाग्भवं च बीजशक्ती च कीलकम्।। ८।।
तार्तीयं देवदेवेशि षडङ्गान्यथ विन्यसेत्। आद्यबीजत्रयेणैव द्विरावृत्त्या षडङ्गकम् ।। ९।।
अम्भोजार्पितदक्षाङ्घ्रिक्षौमां ध्यायेन्मतङ्गिनीम्। लसद्वीणालसन्नादश्लाघान्दोलितकुण्डलाम्।।१०।।
दन्तपङ्क्तिप्रभारम्यां शिवां सर्वाङ्गसुन्दरीम्। कदम्बपुष्पदामाढ्यां वीणावादनतत्पराम् ।।११।।
श्यामाङ्गीं शङ्खवलयां ध्यायेत् सर्वार्थसिद्धये।

इति मातङ्गीरत्नेश्वरी।। अथ भुवनेश्वरीरत्नेश्वरी, सा तु प्रागेव प्रपञ्चिता। अथ वाराहीरत्नेश्वरी दक्षिणामूर्तिसंहितायाम्—

पञ्चमीं रत्नदेवेशीं कथयामि शृणु प्रिये। यस्या: स्मरणमात्रेण पवनोऽयं स्थिरो भवेत्।। १।।
वाग्भवं बीजमुच्चार्य गलानुग्रहबिन्दुभि:। नादेन भूषितं बीजं पार्थिवं चोच्चरेत्तत:[३]।। २।।

१. 'नभरां' क. ख. पाठ:। २. 'भुवनेश्वरि' क. ख. पाठ:। ३. 'चोद्धरेत्' ख. पाठ:।

पुनराद्यं नमोऽन्ते च भगवति समालिखेत्। वार्तालियुग्मं वाराहि पुनरेतद्द्वयं लिखेत्।। ३।।
वाराहमुखि च द्वन्द्वं सन्धिहीनं ततः परम्। अन्धे चान्धिनि सप्तार्णं हृदन्तेन भवेत्प्रिये।। ४।।
रुन्धे रुन्धिन्यतो हृच्च जम्भे जम्भिनि हृत्ततः[1]। मोहे मोहिनि हृच्चापि स्तम्भे स्तम्भिनि हृत्ततः।।५।।
एतदुक्त्वा महेशानि सर्वदुष्टप्रदुष्ट च। सानामन्तं[2] च सर्वेषां सर्ववागिति चित्त च।। ६।।
चक्षुर्मुखगति प्रोक्त्वा जिह्वास्तम्भं कुरुद्वयम्। शीघ्रं वश्यं कुरुद्वन्द्वं वाग्भवं पार्थिवं पुनः।। ७।।
ठकारस्य चतुष्कान्ते कवचास्त्राग्निवल्लभा। चतुर्दशोत्तरशतं मन्त्रवर्णा भवन्ति हि।। ८।।

"ऐग्लौंऐं नमो भगवति वार्तालि २ वाराहि २ वाराहमुखि २ अन्धे अन्धिनि नमः, रुन्धे रुन्धिनि नमः, जम्भे जम्भिनि नमः, मोहे मोहिनि नमः, स्तम्भे स्तम्भिनि नमः, सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुख– गतिजिह्वास्तम्भं कुरु २ शीघ्रं वश्यं कुरु २ ऐंग्लौंठठठठहुं फट् स्वाहा"। ११४ वर्णाः।

चतुश्चत्वारिंशतिभिर्पदन्यासस्तु कीर्तितः। मातृकावन्न्यसेद्वक्त्रे पदानि दश मन्त्रवित्।। ९।।
दोःपत्सन्धिषु साग्रेषु न्यसेद्विंशतिसंख्यकान्। पदार्णान्यथ विन्यस्य पार्श्वयोरेकमुत्तमम् ।। १०।।
अनेनैव प्रकारेण मातृकावन्न्यसेत् सुधीः। ततः षडङ्गविन्यासं कुर्यात् देहविशुद्धये।। ११।।
वार्ताल्यास्तु पदद्वन्द्वं हृदयं च ततः परम्। वाराहियुगलं देवि शिरोमन्त्र उदाहृतः।। १२।।
वाराहमुखियुगलं शिखा सप्ताक्षरं ततः। कवचं च ततः सप्तवर्णैर्नेत्रं न्यसेत् क्रमात्।। १३।।
प्रत्यग्रारुणसङ्काशपद्मान्तर्गतवासिनीम्[3]। इन्द्रनीलमहातेजःप्रकाशां विश्वमातरम्।। १४।।
रुण्डं च मुण्डमालाढ्यनवरत्नविभूषिताम्। अनर्घ्यरत्नघटितमुकुटश्रीविराजिताम्।। १५।।
कौशेयार्धोरुकां चारुप्रवालमणिभूषणाम्। हलेन मुसलेनापि वरदेनाभयेन च।। १६।।
विराजितचतुर्बाहुं कपिलाक्षीं सुमध्यमाम्। नितम्बिनीमुत्पलाभां कठोरघनसत्कुचाम्।। १७।।
कोलाननाम्[4]..............................।

इति वाराहीरत्नेश्वरी।। इति पञ्चपञ्चिकागणः। अथ षोडशनित्याविवरणम् –

अथ वक्ष्ये महेशानि नित्याविवरणं महत्। कामेश्वरीमहाभेदा बहवः सन्ति पार्वति।। १।।
तत्र कामेश्वरी नित्या कथ्यते भुवि दुर्लभा। त्रिपुरेशीं समुच्चार्य तारान्ते हृत्पदं ततः।। २।।
कामेश्वरिपदं चोक्त्वा त्विच्छाकामफलप्रदे। सर्वसत्त्ववशं प्रोक्त्वा करि सर्वजगत्पदम्।। ३।।
क्षोभान्ते तु करे हूं हूं बाणांश्च त्रिपुरेश्वरीम्। विपरीतां समालिख्य विद्या षट्त्रिंशदक्षरा(?)।।४।।

"ऐंक्लींसौः ओं नमः (हृत्) कामेश्वरीच्छाकामफलप्रदे सर्वसत्त्ववशङ्करि सर्वजगत्क्षोभकरे हूंहूंद्रांद्रींक्लींब्लूंसः सौःक्लींऐं।"

आद्यभागत्रयेणैव द्विरावृत्त्या षडङ्गकम्। कामेश्वरीवद्ध्यादि ध्यानयन्त्रार्चनादिकम्।। ५।।

इति कामेश्वरीनित्या।। अथ भगमालिनीनित्या –

अथ वक्ष्ये महेशानि विद्यां श्रीभगमालिनीम्। वाग्भवं भगशब्दान्ते भुगे वाग्भवमेव च।। १।।

---

१. 'तथा' क. ख. पाठः। २. 'सनान्तानं' ग. पाठः। ३. 'पद्मान्तः स्थशिवस्थिताम्' ग. पाठः। ४. 'लोलाननां' ग. पाठः।

भगिन्यन्ते वाग्भवं च भगोदरि च वाग्भवम्। भगक्लिन्ने[1] वाग्भवं वाग्भवादौ भगावहे।। २।।
भगगुह्ये वाग्भवं च भगयोनि च वाग्भवम्। भगन्यन्ते पातनीति वाग्भवं भगसर्व च।। ३।।
पदे वाग्भवमालिख्य ततो भगवशङ्करि। वाग्भवं भगरूपे तद्भगिन्येव च वाग्भवम्।। ४।।
भगक्लिन्ने वाग्भवं च भगस्वान्ते समालिखेत्। रूपे सर्वभगानीति मे ह्यानय च वाग्भवम्।।५।।
भगक्लिन्नद्रवे चान्ते भगं क्लेदय चालिखेत्। भगं द्रावय चालिख्य भगामोघे भगेति च।। ६।।
विच्चे भगं क्षोभयेति सर्वसत्त्वान्भगेश्वरि। वाग्भवं भगब्लूं च वाग्भवं भगजं लिखेत्।। ७।।
वाग्भवं च भगब्लूं च वाग्भवं भगभें लिखेत्। वाग्भवं च भगब्लूं च वाग्भवं भगमों लिखेत्।।८।।
भगक्लिन्ने च सर्वाणि भगान्यथ च मे लिखेत्। वाग्भवं च भगब्लूं च वाग्भवं भगहें लिखेत्।।९।।
वाग्भवं च भगब्लूं च वाग्भवं भगहें लिखेत्। भगक्लिन्ने च सर्वाणि भगान्यथ च मे लिखेत्।।१०।।
वशमानय चालिख्य भगपञ्चकमन्मथम्। भगान्तरे भगान्तेऽथ हरब्ले[2] मात्मकमालिखेत्।। ११।।
भगान्ते (पञ्च?प्रथ) मं कामं ततो वै भगमालिनीम्। ङेन्तामुच्चार्य विद्येयं त्रैलोक्यवशकारिणी।।१२।।
चतुरधिकविंशत्या द्विशतेन च मण्डिता। वर्णानां भगमालेयं नित्या सा फलसिद्धिदा।। १३।।

मन्त्रोद्धारस्तु सुगमः।

ऋषिरस्यास्तु सुभगो गायत्रं छन्द एव च। देवतेयं तु बीजं तु हरब्लेमात्मकं प्रिये।। १४।।
शक्तिः स्त्रींबीजकं ब्लूं तु कीलकं परमेश्वरि। षड्दीर्घस्वरभेदेन न्यसेदङ्गानि देशिकः।। १५।।
कामन्यासं तथा बाणन्यासं कुर्यात्तु पूर्ववत्। कदम्बवनमध्यस्थामुद्यत्सूर्यसमद्युतिम्।। १६।।
नानाभरणसम्पन्नां त्रैलोक्याकर्षणक्षमाम्। पाशाङ्कुशौ पुस्तकं च तौसी[3] खीगतलेखनीम्।। १७।।
वरदं चाभयं चैव दधतीं विश्वमातरम्।

इति भगमालिनी।। अथ नित्यक्लिन्ना —

भुवनेशीं समुच्चार्य नित्यक्लिन्ने मदद्रवे। बह्निजाया च विद्येयं रुद्रवर्णा महोत्कटा[4]।। १।।

"ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा" इति।

एकेन च तथा द्वाभ्यां द्वाभ्यां द्वाभ्यां क्रमात्प्रिये। द्वाभ्यां द्वाभ्यां षडङ्गानि विन्यसेद् देशिकोत्तमः।।२।।
रक्तां रक्ताङ्गवसनां चन्द्रचूडां त्रिलोचनाम्। विद्युद्वक्त्रां महाघूर्णलोचनां रक्तभूषिताम्।। ३।।
पाशाङ्कुशौ कपालं च महाभीतिहरं तथा। दधतीं संस्मरेन्नित्यां पद्मासनविराजिताम्।। ४।।

इति नित्यक्लिन्ना नित्या।। अथ भेरुण्डा —

अथ वक्ष्ये महेशानि भेरुण्डां परमेश्वरीम्। भेराकारं समुच्चार्याङ्कुशाभ्यां तं च वेष्टयेत्।। १।।
अन्त्यहीनं चवर्गं तु चतुर्धा रेफमण्डितम्। अनुग्रहेन्दुबिन्द्वाढ्यं तारस्वाहोदरस्थितः ।। २।।
मनुर्दशार्णो देवेशि महाविषहरो भवेत्। "ओंक्रोंभेःक्रोंच्रौंछ्रौंज्रौंझ्रौं स्वाहा।"

---

१. 'माले' ग. पाठः। २. 'हरेमा' क. पाठः। ३. 'तौशिखी' क. पाठः। ४. 'ल्कया' क. पाठः।

ऋषिरस्य महाविष्णुर्गायत्रं छन्द उच्यते। देवतेयं पराशक्तिस्तृतीयं बीजमुच्यते ॥ ३॥
वह्निजाया च शक्तिः स्यात् कीलकं सृणिरेव च। षड्दीर्घस्वरभेदेन बीजेनैव षडङ्गकम्॥ ४॥
चन्द्रकोटिप्रतीकाशां स्रवन्तीममृतद्रवैः। नीलकण्ठां त्रिनेत्रां च नानाभरणभूषिताम् ॥ ५॥
इन्द्रनीलस्फुरत्कान्तिं[1] शिखिवाहनशोभिताम्। पाशाङ्कुशौ कपालं च च्छुरिकां वरदाभये।।६॥
बिभ्रतीं हेमसम्बद्धगारुडाङ्गदभूषिताम्।

इति भेरुण्डा नित्या॥ अथ वह्निवासिनी नित्या —

शृणु देवि प्रवक्ष्यामि नित्यां वै वह्निवासिनीम्। परां विलिख्य वह्न्यन्ते वासिन्यै नम इत्यपि।।१॥
अष्टार्णोऽयं महेशानि पुरुषार्थप्रदो मनुः। ''ह्लींवह्निवासिन्यै नमः'' इति।
ऋषिरस्य वसिष्ठः स्याद्गायत्री छन्द उच्यते। आद्यन्ते बीजशक्ती च कीलकं मध्य एव च।।२॥
देवि पदत्रयेणैव द्विरावृत्याङ्गकं न्यसेत्। ध्यायेत्तां च सुवर्णाभां नानालङ्कारभूषिताम्॥ ३॥
पाशाङ्कुशौ स्वस्तिकं च शक्तिं च वरदाभये। दधतीं रत्नमुकुटां त्रैलोक्यतिमिरापहाम्॥ ४॥

इति वह्निवासिनी नित्या॥ अथ महा (विद्ये? वज्रे)श्वरी नित्या —

अथ वक्ष्ये महेशानि[2] महा (विद्ये ? वज्रे)श्वरीं परम्। नित्यक्लिन्नां समालिख्य मुखे तारं समालिखेत्॥ १॥
हृल्लेखान्ते करोमात्म चन्द्रबीजं विसर्गवत्। चतुर्दशाक्षरी विद्या......................॥

''ओंह्रींक्रोंसः नित्यक्लिन्ने मदद्रवे स्वाहा'' इति।

..............................ऋषिर्ब्रह्मा निगद्यते। गायत्रं छन्द आख्यातं देवता परमेश्वरी॥ २॥
आद्यन्ते बीजशक्ती तु हृल्लेखा कीलकं भवेत्। चतुष्केण च युग्मेन युग्मेन युगलेन च।।३॥
युगलेन च युग्मेन न्यसेदङ्गानि देशिकः। जपाकुसुमसङ्काशां रक्तांशुकविराजिताम्॥ ४॥
माणिक्यभूषणां नित्यां नानाभूषाविभूषिताम्। पाशाङ्कुशौ कपालस्थसुधापानविघूर्णिताम्॥ ५॥

अभयं दधतीं ध्यायेत्। इति महा (विद्ये ? वज्रे) श्वरी नित्या॥ अथ शिवदूती नित्या —

अथ दूतीं प्रवक्ष्यामि त्रैलोक्याकर्षणक्षमाम्। भुवनेशीं समुच्चार्य शिवदूत्यै नमो लिखेत्॥ १॥
सप्तार्णा शिवदूतीयं त्रैलोक्यस्वामिनी प्रिये। ''ह्रीं शिवदूत्यै नमः'' इति।
ऋषी रुद्रस्तु गायत्री छन्दोऽस्या देवता शिवा। आद्यन्ते बीजशक्ती च मध्ये कीलकमुच्यते।।२॥
विद्याभागत्रयेणैव द्विरावृत्याङ्गकं न्यसेत्। दूर्वानिभां त्रिनेत्रां च महासिंहसमासनाम्॥ ३॥
शङ्खारिबाणचापांश्च सृणिपाशौ वराभये। दधतीं चिन्तयेन्नित्याम्॥

इति शिवदूती नित्या॥ अथ त्वरिता नित्या —

अथ वक्ष्ये महेशानि त्वरितां सिद्धिदायिनीम्। तारं परान्ते कवचं खेचछेक्षः समालिखेत्॥ १॥
स्त्रींहूमात्मकमुच्चार्य क्षे परमस्त्रकं लिखेत्। त्वरिता रविवर्णेयं भोगमोक्षफलप्रदा ॥ २॥

''ओंह्रींहुंखेचछेक्षः स्त्रींहूंक्षेह्रीं फट्'' इति।

---

१. 'न्ति' ग. पाठः। २. 'महादेवि' क. ख. पाठः।

ऋषिरीशो विराट्छन्दो देवतेयं च पार्वति। कवचं स्त्रीशक्तिबीजे कीलकं च प्रकीर्तितम्॥ ३॥
चछेयुग्मं हृच्छिरस्तु छेक्ष:युग्मं शिखा तत:। क्ष:स्त्रींयुग्मं च कवचं स्त्रींहूमात्मयुगं तथा॥ ४॥
हूंक्षे नेत्राणि विन्यस्य क्षेफडस्त्रं प्रकीर्तितम्। श्यामाङ्गीं रक्तसत्पाणिचरणाम्बुजशोभिताम्॥ ५॥
वृषलाहिसुमञ्जीरां कण्ठरत्नविभूषिताम्। स्वर्णांशुकां स्वर्णभूषां वैश्याहिद्वन्द्वमेखलाम्॥ ६॥
तनुमध्यां पीनवृत्तकुचयुग्मां वराभये। दधतीं शिखिपिच्छानां वलयाङ्गदशोभिताम्॥ ७॥
गुञ्जारुणां नृपाहीन्द्रकेयूरां रक्तभूषणाम्। द्विजनागस्फुरत्कर्णभूषां मत्तारुणेक्षणाम्॥ ८॥
नीलकुञ्चितधम्मिल्लवनपुष्प[1] कलापिनीम्। कैरातीं शिखिपत्राढ्य[2]निकेतनविराजिताम्॥ ९॥
स्फुरत्सिंहासनप्रौढां स्मरेद्भयविनाशिनीम्। इति त्वरितानित्या॥ अथ कुलसुन्दरी—
अथ वक्ष्ये महेशानि विद्यां श्रीकुलसुन्दरीम्। बालाख्या त्रिपुरेशानी सर्वसिंहासने स्थिता॥ १॥
ब्रह्मविष्णुमहेशाद्यै: पूज्या सा कुलसुन्दरी। इति कुलसुन्दरी। अथ नित्यानित्या —
अथ वक्ष्ये परां नित्यां पुरुषार्थप्रदायिनीम्। त्रिपुरेशीं समुच्चार्य नित्याख्यां भैरवीं तथा॥ १॥
हुङ्कारत्रितयं बाणा विद्येयं, सा नवाक्षरी।

"ऐंक्लींसौ: हसकलरडैं हसकलरडीं हसकलरडौ: हुंहुंहुंद्रांद्रींक्लींब्लूंस:" इति। अन्यत् त्रिपुरेशीवत्। इति नित्या॥

अथ नीलपताका —

अथ वक्ष्ये महेशानि विद्यां नीलपताकिनीम्। तारं हृत्पदमाभाष्य कामेश्वरिपदं तत:॥ १॥
कामाङ्कुशे पदं चोक्त्वा तत: कामपताकिके। भगवत्यथ नीलान्ते पताके च भगान्तिके॥२॥
वति हृन्मन्त्रमालिख्य ततोऽस्त्विति च मे लिखेत्। परमान्ते तथा गुह्ये ह्रींकारत्रितयं लिखेत्॥३॥
मदने मदनान्ते च देहे त्रैलोक्यमालिखेत्। आवेशय तथा लेख्यं कवचास्त्राग्निवल्लभा॥ ४॥
षष्ट्यर्णा परमेशानि देवी नीलपताकिनी।

"ओंहृत्कामेश्वरि कामाङ्कुशे कामपताकिके भगवति नीलपताके भगवति नमोऽस्तु मे परमगुह्ये ह्रींह्रींह्रीं मदने मदनदेहे त्रैलोक्यमावेशय हुंफट् स्वाहा॥"

रक्तां रक्तांशुकप्रौढां नानारत्नविभूषिताम्। इन्द्रनीलस्फुरन्नीलपताकां कमले स्थिताम्॥ १॥
कामग्रैवेयसंलग्नसृणी च वरदाभये। दधतीं परमेशानीं त्रैलोक्याकर्षणक्षमाम्॥ २॥

इति नीलपताका नित्या॥ अथ विजया नित्या —

अथ वक्ष्ये परां विद्यां जयदां विजयां सदा। शिवचन्द्राखपान्ताग्निरुद्रस्वरविभूषिताम्॥ १॥
बिन्दुनादकलाक्रान्तं विजयायै नमो लिखेत्। "हसखफ्रें विजयायै नम:" इति।
ऋषिरस्या: शिवश्छन्दो गायत्रं देवता स्वयम्। बीजं हृन्मध्यवर्णांस्तु बीजशक्ती तु कीलकम्॥२॥
षड्दीर्घस्वरसम्भिन्नबीजेनैव षडङ्गकम्। एकवक्त्रां दशभुजां सर्पयज्ञोपवीतिनीम्॥ ३॥
दंष्ट्राकरालवदनां नरमालाविभूषिताम्। अस्थिचर्मावशेषाढ्यां वह्निकूटसमप्रभाम्॥ ४॥

---

१. 'ष्पां' क. पाठ:। २. 'द्य' क. पाठ:।

व्याघ्राम्बरां मह्यप्रौढशवासनविराजिताम्। रणे स्मरणमात्रेण भक्तेभ्यो विजयप्रदाम्।। ५।।
शूलं सर्पं च ढक्कासिसृणिघण्टाशनिद्वयम्। पाशमग्निमभीतिं च दधानां विजयां स्मरेत्।। ६।।

इति विजया नित्या।। अथ सर्वमङ्गला—

अथ वक्ष्मे महेशानि नित्यां वै सर्वमङ्गलाम्। जीवं वारुणताराढ्यं सर्वान्ते मङ्गलापदम्।। १।।
ङेन्तं हृदयमालिख्य नवार्णा सर्वमङ्गला। "स्वौं सर्वमङ्गलायै नमः" इति।।
ऋषिश्छन्दो महेशानि गायत्रं छन्द उच्यते। विद्याभागत्रयेणैव द्विरावृत्त्या षडङ्गकम्।। १।।
शुभ्रपद्मासने[1] रम्यां चन्द्रकुन्दसमद्युतिम्। सुप्रसन्नां शशिमुखीं नानारत्नविभूषिताम्।। २।।
अनन्तमुक्ताभरणां स्रवन्तीममृतद्रवम्। वरदाभयशोभाढ्यां स्मरेत् सौभाग्यवर्धिनीम्।। ३।।

इति सर्वमङ्गला।। अथ ज्वालामालिनी —

ज्वालामालां प्रवक्ष्यामि पुरुषार्थप्रदां सदा। ओंकारबीजमुच्चार्य नमो भगवतीति च।। १।।
ज्वालामालिनि देव्यन्ते सर्वभूतान्तसं लिखेत्। हारकारि च के जातवेदसीति ज्वलन्ति च।।२।।
ज्वलयुग्मं प्रज्वलेति युगं हूमात्मकं त्रि (द्वि) धा। वह्निं द्विधा च कवचमस्त्रं चापि समालिखेत्।।३।।
चत्वारिंशद्वर्णरूपा वस्वर्णं च क्रमाद्वदेत्।

"ओंनमो भगवति ज्वालामालिनि देवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल २ प्रज्वल २ हूँहूँहूँ फट्"— इति।।

रेफास्त्रे बीजशक्ती तु कीलकं कवचं प्रिये। रविसूर्यशरागाष्टवेदैरङ्गानि विन्यसेत् ।। १।।
द्वन्द्वशः परमेशानि वह्निवर्णेन वेष्टयेत्। उद्यद्विद्युल्लता[2]कान्तिस्वर्णाभरणभूषिताम्।। २।।
महासिंहासनप्रौढां ज्वालामालां करालिनीम्। अरिशङ्खौ खड्गखेटे त्रिशूलं डमरुं तथा।। ३।।
पानपात्रं च वरदं दधतीं संस्मरेद् यजेत्। इति ज्वालामालिनी नित्या।। अथ विचित्रा नित्या—
अथ वक्ष्ये महादेवि विचित्रां विश्वमातरम्। यस्याः स्मरणमात्रेण पलायन्ते महापदः।। १।।
चक्रानुग्रहबिन्द्विन्दुभूषितं मनुमालिखेत्। "चक्रौं" इति।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते। विचित्रा देवता बीजं ककारः कीलकं च तु।। १।।
तारराजस्तु[3] शक्तिः स्यात् पुरुषार्थप्रदायिनी। षट्दीर्घस्वरभेदेन न्यसेदङ्गानि देशिकः ।। २।।
शुभ्राङ्गी ज्ञानदा नित्यं विचित्रवसना सदा। विचित्रतिलका नित्यं विचित्रकुसु[4]मोज्ज्वला।। ३।।
वरदाभयशोभाढ्या नानारत्नधरा क्वचित्। इति विचित्रा नित्या।। इति षोडश नित्याः।

।। इति श्रीमहामहोपाध्यायभगवत्पूज्यपादश्रीगोविन्दाचार्यशिष्य-श्रीभगवच्छङ्कराचार्यशिष्य-
श्रीविष्णुशर्माचार्यशिष्य-श्रीप्रगल्भाचार्यशिष्य-श्रीविद्यारण्ययति-
विरचिते श्रीविद्यार्णवाख्ये तन्त्रे सप्तमः श्वासः।। ७।।



१. 'शुभ्रवस्त्रामनोर' क.ख. पाठः। २. 'लसत्कान्ति' क.ख. पाठः। ३. 'रारुस्तु' क. पाठः। ४. 'कुङ्कुमो' क. पाठः।

अथ

# श्रीविद्यार्णवतन्त्रे

## अष्टमः श्वासः



अथायतनविद्या —

ब्राह्म्यं च वैष्णवं सौरं बौद्धं शैवं च दर्शनम्। पूर्वे च दक्षिणे पश्चादुदगूर्ध्वं क्रमेण च।। १।।

आयतनानि पञ्च स्युः पृष्ठे शाक्तं तदूर्ध्वतः।

तत्र प्रथमं ब्राह्म्यं दर्शनब्रह्मगायत्री पूर्वायतनविद्या —

अथो वदामि गायत्रीं तत्त्वरूपां त्रयीमयीम्। यया प्रकाश्यते ब्रह्म सच्चिदानन्दलक्षणम्।। १।।

प्रणवाद्या व्याहृतयः सप्त स्युस्तत्पदादिका। चतुर्विंशत्यक्षरात्मा गायत्री शिरसा सह।। २।।

सर्ववेदोद्धृतः सारो मन्त्रोऽयं समुदाहृतः।

इति ब्राह्म्यं दर्शनम्।। अथ वैष्णवदर्शनदक्षिणायतनविद्या— अस्य श्रीनारायणमन्त्रस्य साध्यनारायण ऋषिर्गायत्री छन्दः, श्रीमहाविष्णुर्देवता, ओं बीजं, नमः शक्तिः, नारायणायेति कीलकं, श्रीविद्याङ्गत्वेन विनियोगः। ॐ क्रुद्धोल्काय नमः, महोल्हाय०, वीरोल्काय०, द्युल्काय[१]०, चण्डोल्काय०, सहस्रोल्काय०, इति षडङ्गन्यासः। ध्यानम् —

उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम्।। १।।

कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभोद्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे।।२।।

"ॐ नमो नारायणाय" इति वैष्णवदर्शनदक्षिणायतनविद्या।। अथ सौरदर्शनपश्चिमायतनविद्या— अस्य श्रीसूर्यमन्त्रस्य देवभाग ऋषिर्गायत्री छन्दः श्रीआदित्यो देवता ओं बीजं, आदित्यः शक्तिः, घृणिः कीलकं, श्रीविद्याङ्गत्वेन विनियोगः। ॐ सत्यतेजोज्वालामालिने हुंफट्स्वाहा, ब्रह्मतेजोज्वालामालिने हुंफट्स्वाहा, विष्णुतेजोज्वालामालिने हुंफट्स्वाहा, रुद्रतेजोज्वालामालिने हुंफट्स्वाहा, अग्नितेजोज्वालामालिने हुंफट्स्वाहा, सर्वतेजोज्वालामालिने हुंफट्स्वाहा,— इति षडङ्गमन्त्राः। ध्यानम् —

रक्ताब्जयुग्माभयदानहस्तं केयूरहाराङ्गदकुण्डलाढ्यम्।
माणिक्यमौलिं दिननाथमीडे बन्धूककान्तिं विलसत्त्रिनेत्रम्।। १।।

"ॐ घृणिःसूर्य आदित्योम्" इति सौरदर्शनपश्चिमायतनविद्या।। अथ बौद्धदर्शनोत्तरायतनविद्या—अस्य श्रीबौद्धमन्त्रस्य बुद्ध ऋषिः, त्रिष्टुप्छन्दः, श्रीबोद्धो[२] देवता, ओं बीजं, स्वाहा शक्ति ह्रीं कीलकं, श्रीविद्याङ्गत्वेन विनियोगः। ॐ, ह्रीं, तारय, तारय, स्वाहा— ओंह्रीं तारय तारय स्वाहा— इति षडङ्गन्यासः। ध्यानम् —

पुरा पुराणान[३]सुरान् विजेतुं सम्भावयन् पीठ र[४]चिह्नवेषम्।
चकार यः शास्त्रममोघकल्पं तं मूलभूतं प्रणमामि बुद्धम्।। १।।

---

१. 'विद्यो' क. 'विद्युु' ग. पाठः। २. 'बुद्धो' ग. पाठः। ३. 'णाम' ख. पाठः। ४. 'पीवर' ग. पाठः।

"ओं ह्रीं तारय तारय स्वाहा"— इति बौद्धदर्शनोत्तरायतनविद्या।। अथ शैवदर्शनोर्ध्वायतनविद्या—अस्य श्रीशिवमन्त्रस्य वामदेव ऋषिः, पङ्क्तिश्छन्दः, परमशिवो देवता, ओं बीजं, नमः शक्तिः, शिवाय कीलकं, श्रीविद्याङ्गत्वेन विनियोगः। सर्वज्ञाय० नित्यतृप्ताय० अनादिबोधाय० स्वतन्त्राय० नित्यमलुप्तशक्तये० नित्यमनन्तशक्तये—इति षडङ्गन्यासः। ध्यानम् —

नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गामृतात्मने। चतुर्मूर्तिवपुष्काय भासिताङ्गाय शम्भवे।। १ ।।

इति शैवदर्शनोर्ध्वायतनविद्या।। अथ शक्तिदर्शनविद्या तु प्रधानविद्यैव, केचिद्भुवनेश्वरीं वदन्ति, तद्विधानं प्रागेवोक्तम्। इत्यायतनविद्याः।। अथ समयविद्याः— "ऐंक्लींसौःओं नमः (हृत्) कामेश्वरि इच्छाकामफलप्रदे सर्वसत्त्ववशङ्करि सर्वजगत्क्षोभकरि (रे) हूंहूंद्रांद्रींक्लींब्लूंसः सौःक्लींऐं"।। १ ।। "ऐंह्रीं सर्वकामार्थसाधिनि वज्रेश्वरि वज्रपदे वज्रपञ्जरमध्यगते ह्रीं क्लिन्ने ऐंक्रों नित्यमदद्रवे ह्रीं वज्रनित्यायै नमः।।२।। ततो भगमालिनीविद्या।।३।। "क्लीं भगवति ब्लूं नित्ये कामेश्वरि ह्रीं सर्वसत्त्ववशङ्करि सः त्रिपुरभैरवि ऐं विच्चे क्लीं महात्रिपुरसुन्दर्यै नमः।।४।। इति चतुःसमयविद्याः।। अथाम्नायविद्यान्यासः—

पूर्वदक्षिणपाश्चात्यैरुदगूर्ध्वक्रमेण च। पञ्चवक्त्रैः शिवप्रोक्ताः पञ्च चाम्नायदेवताः।। १ ।।

पञ्चसिंहासनप्रौढाः सर्वकामफलप्रदाः।

इति। तत्रादौ पूर्वाम्नायविद्या उन्मनी—ओं अस्य श्रीउन्मनीमन्त्रस्य दक्षिणामूर्तिर्ऋषिः, पङ्क्तिश्छन्दः, श्रीउन्मनी देवता, ह्स्रीं बीजं, कलह्रीं शक्तिः, स्ह्रीं कीलकं, श्रीविद्याङ्गत्वेन विनियोगः। द्विरावृत्या षडङ्गानि। ध्यानं सम्पत्प्रदाभैरवीवत्। "ह्स्रीं स्ह्रींश्रींकलह्रीं" इत्युन्मनी पूर्वाम्नायविद्या।। अथ दक्षिणाम्नायविद्या— अस्य श्रीभोगिनीमन्त्रस्य दक्षिणामूर्तिऋषिः, पङ्क्तिश्छन्दः, भोगिनी देवता, ऐं बीजं, स्रौं शक्तिः, क्लीं कीलकं, श्रीविद्याङ्गत्वेन विनियोगः। ऐं क्लिन्ने, क्लीं, मदद्रवे, कुले, ह्सौः—इति षडङ्गानि, ध्यानमघोरभैरवीवत्। "ऐं क्लिन्ने क्लीं मदद्रवे कुले ह्सौः"— इति दक्षिणाम्नायभोगिनी विद्या।। अथ पश्चिमाम्नायविद्या— अस्य श्रीकुब्जिकामन्त्रस्य रुद्र ऋषिः गायत्री छन्दः कुब्जिका देवता, हसौः बीजं, हसखफ्रें शक्तिः, हसूं कीलकं श्रीविद्याङ्गत्वेन विनियोगः। ऐंह्रींश्रीं हसखफ्रें हसौःओं नमो भगवति हसखफ्रें कुलिके ह्स्रांह्स्रूं अघोरे घोरे अघोरमुखि छ्रां छ्रीं किणिकिणि विच्चे हसौः हसखफ्रें श्रीह्रींऐं—इति षडङ्गानि। ध्यानं षट्कूटाभैरवीवत्। इति पश्चिमाम्नायविद्या कुब्जिका।। अथोत्तराम्नायविद्या कालिका— अस्य श्रीकालिकामन्त्रस्य भैरव ऋषिः, उष्णिक् छन्दः, श्रीकालिका देवता खफ्रें बीजं ईश्वरी शक्तिः, महाचण्डयोगेश्वरि कीलकं, श्रीविद्याङ्गत्वेन विनियोगः। खफ्रां खफ्रीमिति षडङ्गन्यासः। ध्यानं भुवनेश्वरीभैरवीवत्। "खफ्रें महाचण्डयोगेश्वरि" इत्युत्तराम्नायविद्या कालिका।। अथोर्ध्वाम्नायक्रमः— तत्र पराप्रासादमन्त्रः, तदङ्गत्वेन महाषोढान्यासं कुर्यात्। महाषोढान्यासेऽपि कामरतिन्यासः—अन्तःकामकला—बहिःकामकला-महाशक्तिन्यास-मूलषोडशार्णविद्यान्यासाष्टात्रिंशत्कलान्या सानामकरणेऽधिकारो नास्ति तान् न्यासानग्रे वदिष्यामः। इदानीं महाषोढान्यासो वक्ष्यते। तत्रादावष्टा त्रिंशत्कलान्यासः — तद्यथा —

ईशानादीन् न्यसेन्मूर्ध्नि चाङ्गुष्ठादिषु देशिकः। ईशानाख्यं तत्पुरुषमघोरं तदनन्तरम्।। १ ।।

वामदेवाह्वयं सद्यमासां बीजक्रमान् विदुः। ओंकाराद्यैः[1] पञ्चह्रस्वैर्विलोमात् संयुतं वियत्।।२।।

---

१. 'औं' क. पाठः।

तत्तदङ्गुलिभिर्भूयस्तत्तद्बीजादिकान् न्यसेत्। शिरोवदनहृद्गुह्यपाददेशे यथाक्रमम् ॥ ३॥
ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु ताः। ईशानाद्या ऋचः सम्यङ्गुलीषु यथाक्रमम्॥ ४॥
अङ्गुष्ठादिकनिष्ठान्तं न्यसेद्देशिकसत्तमः। मूर्धास्यहृदयाम्भोजगुह्यपादेषु वा पुनः॥ ५॥
वक्त्रेषूर्ध्वादि विन्यसेद्भूयोऽङ्गानि प्रकल्पयेत्। तारपञ्चकमुच्चार्य सर्वज्ञाय हृदीरितम्॥ ६॥
अमृते तेजोमालिनि तृप्तायेति पदं पुनः। तदन्ते ब्रह्मशिरसे शिरोऽङ्गज्ज्वलितान्ततः॥ ७॥
शिखिशिखाय परतोऽनादिबोधाय तच्छिखा। वज्रिणे वज्रहस्ताय[1] स्वतन्त्राय तनुच्छदः॥ ८॥
सौंबौं[2]हौमिति सम्भाव्य परतोऽलुप्ताशक्तये। नेत्रमुक्तं श्लींपशुहुं फंडन्तोऽनन्तशक्तये॥ ९॥
अस्त्रमुक्तं षडङ्गानि कुर्यादेवं समाहितः। ततः प्रविन्यसेद्विद्वानष्टात्रिंशत्कलास्तनौ॥ १०॥
पूर्वदक्षिणपाश्चात्यसौम्यमध्येषु पञ्चसु। वक्त्रेषु पञ्च विन्यसेदीशानस्य कलाः क्रमात्॥ ११॥
ईशानः सर्वविद्यानां शशिनी प्रथमा कला। ईश्वरः सर्वभूतानामङ्गदा तदनन्तरम्॥ १२॥
ब्रह्माधिपतिशब्दान्ते ब्रह्मणोऽधिपतिः पुनः। ब्रह्मेष्टदा तृतीया स्याच्छिवो मे अस्तु तत्परा॥१३॥
मरीचिः कथिता तन्त्रे चतुर्थी च सदाशिवोम्। अंशुमालिन्यथ परा प्रणवाद्या नमोन्तकाः॥१४॥
पूर्वपश्चिमयाम्योदग्वक्त्रेषु तदनन्तरम्। चतस्रो विन्यसेन्मन्त्री पुरुषस्य कलाः क्रमात्॥ १५॥
आद्या तत्पुरुषायेति विद्महे शान्तिरीरिता। महादेवाय शब्दान्ते धीमहि स्यात् ततः परम्॥ १६॥
विद्या द्वितीया कथिता तन्नो रुद्रः पदं ततः। प्रतिष्ठा कथिता पश्चात् तृतीया स्यात् प्रचोदयात्॥१७॥
निवृत्तिस्तत्पदाः सर्वाः प्रणवाद्या नमोन्तकाः। हृद्ग्रीवांसद्वये नाभौ कुक्षौ पृष्ठे च वक्षसि॥१८॥
अघोरस्य कला ह्येता अष्टौ मन्त्री यथाविधि। अघोरेभ्यस्तमा पूर्वमीरिता प्रथमा कला॥ १९॥
अथ घोरेभ्य इत्यन्ते मोहा स्यात् तदनन्तरम्। घोरान्ते स्यात् क्षमा पश्चात् तृतीया परिकीर्तिता॥२०॥
घोरतरेभ्यो निद्रा स्यात् सर्वतः शर्वतत्परा। व्याधिस्तु पञ्चमी प्रोक्ता सर्वेभ्यस्तदनन्तरम्॥२१॥
मृत्युर्निगदिता षष्ठी नमस्ते अस्तु तत्परा। क्षुधा स्यात् सप्तमी प्रोक्ता रुद्ररूपेभ्यस्तृष्णिका॥२२॥
गुह्यलिङ्गोरुयुगलजानुजङ्घास्फिचोर्युगे। कट्यां पार्श्वद्वये चैव वामदेवकला न्यसेत् ॥ २३॥
प्रथमा वामदेवाय नमोन्ता स्याद्रजा कला। स्याज्ज्येष्ठाय नमो रक्षा द्वितीया परिकीर्तिता॥२४॥
स्याद्रुद्राय नमः पश्चात् तृतीया रतिरीरिता। कालाय[3] नम इत्यन्ते मालिनी परिकीर्तिता॥२५॥
कला काम्या[4] पञ्चमी स्यात् ततो विकरणाय च। नमः संयमिनी षष्ठी कथिता तदनन्तरम्॥२६॥
बलक्रिया समादिष्टा बल[5]विकरणाय च। नमो वृद्धिरष्टमी स्याद्बलान्ते च स्थिरा कला॥२७॥
पश्चात् प्रमथनायान्ते नमो रात्रिरुदीरिता। सर्वभूतदमनाय नमोऽन्ते भ्रामिणी कला॥ २८॥
मनोन्ते मोहिनी प्रोक्ता तन्त्रज्ञैर्द्वादशी कला। उन्मनाय नमः पश्चाज्ज्वरा[6] प्रोक्ता त्रयोदशी॥२९॥
प्रणवाद्याश्चतुर्थ्यन्ता नमोन्ताः परिकीर्तिताः। पाददोस्तलनासासु मूर्ध्नि बाहुयुगे न्यसेत्॥३०॥

१.'धराय'ख. पाठः। २.'चौं'ख. पाठः। ३.'कलाय' ग.पाठः। ४.'कलकाम्या' क.पाठः। ५.'कला' ग.पाठः। ६.'जरा'ग.पाठः।

सद्योजातोद्भवाः सम्यगष्टौ मन्त्री कलाः क्रमात्। सद्योजातं प्रपद्यामि सिद्धिः स्यात् प्रथमा कला॥३१॥
सद्योजाताय वै भूयो नमः स्यादृद्धिरीरिता[1]। भवे द्युतिस्तृतीया स्यादभवे तदनन्तरम्॥ ३२॥
लक्ष्मीश्चतुर्थी कथिता ततोऽनादिभवे भवेत्[2]। मेधा स्यात् पञ्चमी प्रोक्ता कला भूयो भवस्य माम्॥३३॥
प्रज्ञा समाहिता षष्ठी भवान्ते तु प्रभा कला। उद्भवाय नमः पश्चात् सुधा[3] स्यादष्टमी कला॥३४॥
प्रणवाद्याश्चतुर्थ्यन्ताः कलाः सर्वा नमोन्तकाः। अष्टात्रिंशत्कलाः प्रोक्ताः पञ्चब्रह्मपदादिकाः[4]॥३५॥
इति विन्यस्तदेहोऽसौ भवेद्गङ्गाधरः स्वयम्। अनन्तचन्द्रभुवनो बिन्दुर्बिन्दुयुगान्वितः॥३६॥
श्रीप्रासादपरामन्त्रो भुक्तिमुक्तिफलप्रदः। पराप्रासादमन्त्रस्तु सादिरुक्तः कुलेश्वरि॥ ३७॥
प्रकाशानन्दरूपत्वात् प्रत्यक्षफलदो यतः। इति।

अनन्तचन्द्रो नादबिन्दुः, भुवन औकारः बिन्दुर्हकारः, बिन्दुयुगः सकारस्तेन "हसौः" इति सिद्धम्। इदं सादिश्चेत् "स्हौं" इति सिद्धम्। इदं बीजद्वयं विसर्गयुक्तमिति क्वचिदुद्धारः।

परशम्भुद्धऋर्षिः प्रोक्तो गायत्री छन्द ईरितम्। अर्धनारीश्वरो देवो देवता परिकीर्तिता॥ १॥
षट्दीर्घयुक्तबीजेन षडङ्गानि प्रविन्यसेत् । महाषोढाह्वयं न्यासमङ्गषोढापुरःसरम्॥ २॥
एतदङ्गतया[5] कुर्यात् सिद्धिकामः समाहितः। इति।

श्रीकुलार्णवे –

अङ्गषोढां कुलेशानि कुर्यात् पूर्वोक्तवर्त्मना। महाषोढाह्वयं न्यासं ततः कुर्यात् समाहितः॥ १॥

इति। अत्राङ्गषोढाष्टात्रिंशत्कलान्यासस्तदुद्धारः प्रागेवोक्तः। केवलपञ्चब्रह्मन्यास इत्यपरे।

महाषोढाभिधस्यास्य ऋषिर्ब्रह्मा समीरितः। जगती छन्द आख्यातमर्धनारीश्वरः प्रभुः॥ १॥
देवता च समुद्दिष्टा श्रीविद्याङ्गतया तथा। विनियोगः समाख्यातः सर्वागमविशारदैः॥ २॥

अथाङ्गन्यासः। तत्राङ्गुष्ठयोः ओंऐंह्रींश्रींहसौंस्हौंहौं ईशानाय नमः। तर्जन्योः ५ हें तत्पुरुषाय नमः। मध्यमयोः ५ हुंअघोराय नमः। अनामिकयोः ५ हिं वामदेवाय नमः। कनिष्ठिकयोः ५ हं सद्योजाताय नमः एवं मूर्धवदनहृद्गुह्यपाददेशेषु क्रमेण न्यसेत्। ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिममुखेषु च। पुनरङ्गुष्ठादिकनिष्ठान्तम्। पुनरपि मूर्धास्यहृदयाम्भोजगुह्यपादेषु। पुनरप्यूर्ध्वादिमुखादिषु विन्यस्य हसांहसींमित्यादिना षडङ्गन्यासः। ततः स्हांस्हीमित्यादिनापि षडङ्गन्यासः। ततः ५ सर्वज्ञाय, ५ अमृतते जोमालिनि नित्यतृप्ताय, ५ ब्रह्मशिरसे स्वाहा ज्वलितशिखिशिखायानादिबोधाय, ५ वज्रिणे वज्रहस्ताय[6] स्वतन्त्राय, ५ सौंवोंहौंनित्यमलुप्तशक्तये, ५ श्रींश्लींपशुहुंफट् नित्यमनन्तशक्तये– इति षडङ्गमन्त्रानङ्गुष्ठादितलान्तं करयोर्विन्यस्य हृदयादिषडङ्गेष्वपि न्यसेत्। ततः प्रागुक्तरीत्या अष्टात्रिंशत्कला अपि विन्यस्य ध्यायेत्। ध्यानमग्रे वक्ष्यते। अथ महाषोढान्यासः–

प्रपञ्चो भुवनं मूर्तिर्मन्त्रदैवतमातरः। महाषोढाह्वयो न्यासः सर्वन्यासोत्तमोत्तमः॥ १॥

तत्रादौ प्रपञ्चन्यासः– औंऐंह्रींश्रींहसौःस्हौःअं प्रपञ्चरूपायै श्रिये नमः, इत्यादिप्रयोगः प्रागुक्तरीत्यावगन्तव्यः। इति प्रपञ्चन्यासः॥ कुलार्णवे–

---

१. 'वृद्धि' ग. पाठः। २. 'बोद्भवम्' ख. 'वेद्भवम्' ग. पाठः। ३. 'मेधा' क. ख. पाठः। ४. 'कलादिकाः' क. पाठः। ५. 'ङ्गतयोःकुर्यात्' ख. पाठः। ६. 'धराय' ग. पाठः।

त्रितारमूलसकलप्रपञ्चस्य स्वरूपतः। आयै पराम्बादेव्यै च नमोऽस्तु व्यापकं न्यसेत्।। १।।

इति। "५ मूलं० सकलप्रपञ्चस्वरूपायै पराम्बादेव्यै नमोऽस्तु" इति व्यापकं न्यसेदित्यर्थः। तथा–

प्रपञ्चन्यास एवं स्याद्भुवनन्यास उच्यते। त्रितारमूलविद्यान्ते अमांइमतलं भवेत्।। १।।
लोकं च निलयं चैव शतकोटिपदं ततः। गुह्याद्ययोगिनीमूल[१]देवतान्तेऽयुतं वदेत्।। २।।
वदेदाधारशक्त्यम्बादेव्यै हृत्पादयोर्न्यसेत्।

इति। "५ अंआंइं अतललोकनिलयशतकोटिगुह्याद्ययोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः" इति पादयोर्न्यसेदित्यर्थः।

ईमुमूं वितलं लोकगुह्यान्ते शतसंज्ञकम्। शेषं च पूर्ववत् प्रोक्त्वा गुल्फयोर्विन्यसेत्प्रिये।। ३।।
ऋंॠंऌंसुतलं परमगुह्यं वाचिन्त्यसंज्ञकम्। शेषं च पूर्ववत् प्रोक्त्वा जङ्घयोर्विन्यसेत् प्रिये।। ४।।
ॡंएंऐं महातलं च महागुह्यादितन्त्रकम्। शेषं च पूर्ववत् प्रोक्त्वा देवि जान्वोः प्रविन्यसेत्।।५।।
ओमौं तलातलपरमगुह्यं स्वाधिष्ठानकम्। शेषं च पूर्ववत् प्रोक्तमूर्वोर्देवेशि विन्यसेत्।। ६।।
अंअः रसातलं चैव रहस्यं ज्ञानसंज्ञकम्। शेषं च पूर्ववत् प्रोक्त्वा गुह्यदेशे प्रविन्यसेत्।। ७।।
कवर्गमपि पातालं सरहस्यतरं क्रियाम्। शेषं च पूर्ववत् प्रोक्त्वा मूलाधारे प्रविन्यसेत्।। ८।।
चवर्गं भूरतिरहस्यं च श्रीडाकिनीमपि। शेषं च पूर्ववत् प्रोक्त्वा स्वाधिष्ठाने न्यसेत् प्रिये।। ९।।
टवर्गं भुवर्महारहस्यपदान्ते[२] राकिणीमपि। शेषं च पूर्ववत् प्रोक्त्वा नाभिदेशे न्यसेत् प्रिये।। १०।।
तवर्गं स्वर्गपरमरहस्यं लाकिनीमपि। शेषं च पूर्ववत् प्रोक्त्वा हृदये विन्यसेत् प्रिये।। ११।।
पवर्गं च महोगुप्तं काकिनीमपि च क्रमात्। शेषं च पूर्ववत् प्रोक्त्वा तालुमूले न्यसेत् प्रिये।।१२।।
यवर्गं च जनं गुप्ततरं श्रीशाकिनीमपि। शेषं च पूर्ववत् प्रोक्त्वा आज्ञायां विन्यसेत् प्रिये।।१३।।
शवर्गं च तपश्चातिगुप्तं श्रीहाकिनीमपि। शेषं च पूर्ववत् प्रोक्त्वा ललाटे विन्यसेत् प्रिये।।१४।।
लंक्षः सत्यमहागुप्तं याकिनी[३]मपि च प्रिये। शेषं च पूर्ववत् प्रोक्त्वा ब्रह्मरन्ध्रे न्यसेत् प्रिये।।१५।।
त्रितारमूलमन्त्रान्ते चतुर्दशभुवं वदेत्। नाधिपायै श्रीपराम्बादेव्यै हृद् व्यापकं न्यसेत्।। १६।।
कृत्वैवं भुवनन्यासं मूर्तिन्यासमथाचरेत्। केशवो नारायणो माधवगोविन्दविष्णवः।। १७।।
मधुसूदनसंज्ञश्च स्यात् त्रिविक्रिमवामनौ। श्रीधरस्तु हृषीकेशः पद्मनाभो दामोदरः।। १८।।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः। अक्षराद्येष्टदेशानी उग्रोर्ध्वनयना तथा।। १९।।
ऋद्धिश्च रूपिणी लुप्ता लून[४] दोषैकनायिका। ऐकारिणी चौघवती सर्वःगमाङ्गनप्रभा।।२०।।
अस्थिमालाधरा चेति सम्प्रोक्ताः स्वरदेवताः। भवः शर्वश्च रुद्रश्च पशुपतिश्चोग्र एव च।।२१।।
महादेवस्तथा भीम ईशानस्तत्पुरुषाह्वयः। अघोरसद्योजातौ च वामदेव इतीरिताः।।२२।।
करभद्रा खगबला गरिमादिफलप्रदा। धर्मप्रशमनी पङ्क्तिनासा चन्द्रार्धहारिणी।।२३।।

१. 'मूले' क. ख. पाठः। २. 'तद' क. पाठः। ३. 'यक्षिणीं' क. ख. पाठः। ४. 'लूत' क. ख. पाठः। ५. 'चौर्व' ग. पाठः।

छन्दोमयी जगत्स्थाना झरत्तारा[1] ततः परम्। ज्ञानानादा[2] ढङ्कढक्काधरा ठङ्कारडामरी।। २४।।
कभादीनां ठडान्तानां वर्णानां देवतास्त्विमाः। ब्रह्मा प्रजापतिर्वेधाः परमेष्ठी पितामहः।। २५।।
विधाता च विरिञ्चिश्च स्रष्टा च चतुराननः। हिरण्यगर्भ इत्युक्ताः क्रमाद् ब्रह्मादयोऽप्यमी।।२६।।
यक्षिणी रञ्जनी[3] लक्ष्मीर्वज्रिणी शक्तिधारिणी। षडाधारालया सर्वनायिका हासिताननाः।। २७।।
ललिता च क्षमा चेति प्रोक्ता यवर्गदेवताः। त्रितारमूलमन्त्रान्ते स्वराद्यक्षरशक्तिकान्।। २८।।
चतुर्थीनमसा युक्तान् मस्तके चानने न्यसेत्। स्वस्कन्धपार्श्वकुक्ष्यू[4]रुजानुजङ्घापदेषु च ।। २९।।
दक्षादिवामपर्यन्तं विन्यसेत् परमेश्वरि। कभाद्यर्णयुतान् मन्त्री ठडान्तान् शक्तिसंयुतान्।। ३०।।
पादपार्श्वबाहुकण्ठ[5]पञ्चवक्त्रेषु विन्यसेत्। दशाधारेषु ब्रह्मादीन् यादीन् शक्तियुतान् न्यसेत्।। ३१।।
त्रितारमूलमन्त्रान्ते श्रीत्रिमूर्त्यात्मिका न्यसेत्। आयै पराम्बादेव्यै च नमः स[6]व्यापकं न्यसेत्।।३२।।
त्रितारमूलं अंआइं एकलक्षं च कोटि च। भेदश्च प्रणवाद्येकाक्षरात्माखिलमन्त्रतः।। ३३।।
ततोऽधिदेवतायै स्यात् सकलं च फलप्रदम्। आयै तथैककूटेश्वर्यम्बादेव्यै नमो वदेत्।।३४।।

इति। अत्र मूर्तिन्यासोत्तरं मन्त्रन्यासोद्धारक्रमः प्रदर्शितः। "ओऐंह्रींश्रींह्सौःस्हौः अंआइं एकलक्षकोटि भेदप्रणवाद्येकाक्षरात्मकाखिलमन्त्राधिदेवतायै सकलफलप्रदायै एककूटेश्वर्यम्बादेव्यै नमः" इति मूलाधारे न्यसेदिति प्रयोगः।। तथा –

ईमुमूमादि हंसादिद्विकूटं पूर्ववत्परम्। ऋंॠलृमादि वह्न्यादित्रिकूटं पूर्ववत्परम्।। ३५।।
लृमेमैं च चतुर्लक्षं चन्द्रादि पूर्ववत्परम्। ओमौंमंमः पञ्चलक्षं सूर्यादि पूर्ववत्परम्।। ३६।।
कंखंगं चैव षड्लक्षं स्कन्दादि पूर्ववत्परम्। घंङंचं सप्तलक्षं गणेशादि पूर्ववत्परम्।। ३७।।
छंजंझमष्टलक्षं वटुकादि पूर्ववत्परम्। ञंटंठंनवलक्षं च ब्रह्मादि पूर्ववत्परम् ।। ३८।।
डंढंणं दशलक्षं च विष्ण्वादि[7] पूर्ववत्परम्। तंथंदमेकादशलक्षं रुद्रादि पूर्ववत्परम्।। ३९।।
धंनंपं द्वादशलक्षं वाण्यादि[7] पूर्ववत्परम्। (फंबंभं त्रयोदशलक्षं लक्ष्म्यादि पूर्ववत्परम्)।।४०।।
मंयंरं चतुर्दशलक्षं गौर्यादि पूर्ववत्परम्। लंवंशं पञ्चदशलक्षं दुर्गादि पूवर्वत्परम्।। ४१।।
षंसंहं षोडशलक्षं त्रैपुरादि च पूर्ववत्। त्रितारमूलमन्त्रान्ते सकलां मातृकां वदेत्।। ४२।।
सकलादि च मन्त्राधिदेवतायै पराम्बिका। देव्यै हृद्व्यापकं कुर्यान्मन्त्रन्यासे[8] महेश्वरि।।४३।।
आधारलिङ्गयोर्नाभिहृत्कण्ठाज्ञेन्दुतत्परः। निरोधिकायामर्धेन्दौ बिन्दौ चैव कलापदे।। ४४।।
उन्मन्यादिषु वक्त्रेषु नादनादान्तयोरपि। ध्रुवमण्डलदेशे च विन्यसेत् कुलनायिके।। ४५।।
त्रितारमूलमन्त्रान्ते सर्वमन्त्रात्मिकापदम्। आयै देव्यै परादि स्यात् पूर्ववद्व्यापकं न्यसेत्।।४६।।

इति मन्त्रन्यासः। अथ देवतान्यासः–

मन्त्रन्यासं विधायेत्थं देवतान्यासमाचरेत्। त्रितारमूलमन्त्रान्ते अमां सहस्रकोटि च।। ४७।।

---

१. 'जगत्तारा' क. ख. ग. पाठः। २.' ज्ञानदाच' ग. पाठः। ३. 'ना' क. ख. पाठः। ४. 'कट्यूरु' ख. पाठः। ५. 'कर्ण' ग. पाठः। ६. 'नमसा' ग. पाठः। ७. 'बाणादि' ग. पाठः। ८. 'सो' क. ख. पाठः।

योगिनीकुलशब्दान्ते सेवितायै पदं वदेत्। निवृत्त्यम्बापदं देव्यै नम इत्युच्चरेत् प्रिये।। ४८।।

प्रयोगस्तु "ओंऐंह्रींश्रींह्सौःस्हौः सहस्रकोटियोगिनीकुलसेवितायै निवृत्त्यम्बादेव्यै नमः" इत्यादि।

इईं योगिनीप्रतिष्ठां च शेषं पूर्ववदुच्चरेत्। उऊं तपस्विविद्यां च शेषं पूर्ववदुच्चरेत्।। ४९।।
ऋॠं शान्ति[1] तथा शान्तिं शेषं पूर्ववदुच्चरेत्। ऌॡं मुनिं तथा शान्त्यतीतां शेषं च पूर्ववत्।। ५०।।
एऐं देवं च हृल्लेखान्ते शेषं पूर्ववदुच्चरेत्। ओंऔं रक्षःकुलान्ते च गगनां पूर्ववत् प्रिये।। ५१।।
अंअः विद्याधरं रक्तां शेषं पूर्ववदुच्चरेत्। कंखं सिद्धं महोच्छुष्मां शेषं पूर्ववदुच्चरेत्।। ५२।।
गंघं साध्यं करालां च शेषं पूर्ववदुच्चरेत्। ङंचं तथाप्सरोजयां शेषं पूर्ववदुच्चरेत्।। ५३।।
छंजं गन्धविजयां शेषं पूर्ववदुच्चरेत्। झंञं गुह्यकशब्दान्ते अजितां पूर्ववत्परम्।। ५४।।
टंठमपराजितायक्षा शेषं च पूर्ववत्परम्। डंढं किन्नरवामाम्बा शेषं च पुर्ववत्परम्।। ५५।।
णंतं च पन्नगं ज्येष्ठां शेषं च पूर्ववत्परम्। थंदं च पितृरौद्र्यम्बा शेषं च पूर्ववत् परम्।। ५६।।
धंनं गणेशमायां च शेषं च पूर्ववत्परम्। पंफं भैरवशब्दान्ते कुण्डली पूर्ववत् परम्।। ५७।।
बंभं बटुककाली च शेषं च पूर्ववत्परम्। मंयं च क्षेत्रशब्दान्ते कालरात्री च पूर्ववत्।। ५८।।
रंलं प्रमथभगवती शेषं च पूर्ववत्परम्। वंशं ब्रह्मापि सर्वेश्वर्यम्बा शेषं च पूर्ववत्।। ५९।।
षंसं विष्णुं च सर्वज्ञा शेषं च पूर्ववत्परम्। हंलं रुद्रः सर्वकर्त्री शेषं च पूर्ववत्परम्।। ६०।।
क्षं चराचरशक्तिं च शेषं च पूर्ववत्परम्। अङ्गुष्ठगुल्फजङ्घासु जानूरुकटिपार्श्वके ।। ६१।।
स्तनकक्षकरस्कन्धकर्णमूर्धसु च क्रमात्। दक्षभागादिवामान्तं विन्यसेत् कुलनायिके।। ६२।।
त्रितारमूलमन्त्रान्ते सकलां मातृकां वदेत्। समस्तदेवताधिं च पायै श्री च पराम्बिकाम्।। ६३।।
देव्यै नम इति ब्रूयाद् व्यापकं विन्यसेत् प्रिये। देवतान्यास एवं स्यान्मातृन्यास[2]स्तथोच्यते।।६४।।
त्रितारमूलमन्त्रान्ते कवर्गानन्तकोटि च। भूचरीकुलशब्दान्ते सहितायै[3] पदं वदेत् ।। ६५।।
आंक्षामन्ते मङ्गलाम्बादेव्यै नम इतीरयेत्। आंक्षामन्ते तु ब्रह्माण्यम्बादेव्यै च पदं वदेत्।।६६।।
अनन्तकोटिभूतेति कुलान्ते सहिताय[4] च। अंक्षं मङ्गलनाथाय अंक्षमन्तेऽसिताङ्ग च।। ६७।।
भैरवान्ते तु नाथाय नम इत्युच्चरेत् प्रिये। चवर्गं खेचरीमीलां चर्चिकां च महेश्वरीम्।।६८।।
वेतालं चेति इलं च चर्चिकं रुरुमेव च। शेषं च पूर्ववत् प्रोक्त्वा ततो वक्ष्ये महेश्वरि।।६९।।
टवर्गं पातालचरीमूंहां योगेश्वरीं वदेत्। कौमारीं पिशाचमूंहां वदेद्योगेशचण्डकौ ।।७०।।
तवर्गं दिक्चरीं ॠंसां हरसिद्धां च वैष्णवीम्। अपस्मारं हरसिद्धिं क्रोधं च पूर्ववत् परम्।।७१।।
पवर्गं सहचरीं ॡंषां भट्टिनी वादि राहि च। ब्रह्मराक्षसलॄंषं च भट्टोन्मत्तादि पूर्ववत्।। ७२।।
यवर्गं गिरिचरीमैंशां ततः किलिकिलेति च। इन्द्राणीं वटुकं[5] एंशं किलिकिलान्ते कपालिनम्।।७३।।
शवर्गान्ते वनचरीमौंवां कालादिरात्रि च। चामुण्डां प्रेतमोंवं च कालरात्रश्च[6] भीषणः।।७४।।

---

१. 'ऋक्षं' क.ख.पाठः। २. 'तवो' ग.पाठः। ३. 'सेवितायै' ग.पाठः। ४. 'सेविताय' ग.पाठः। ५. 'चेट' ख.पाठः। ६ 'त्रिश्च' ग.पाठः।

लक्षं जलचरीमंलां भीषणाममलां तथा। महालक्ष्मी शाकिनीं च अंलं पश्चाच्च भीषणम्।७५॥
संहारभैरवं चैव शेषं पूर्ववदुच्चरेत्। त्रितारमूलमन्त्रान्ते मातृभैरवशब्दतः ॥ ७६॥
अधिपायै परादेव्यै नमोऽन्तं व्यापकं न्यसेत्। मातृन्यासं महेशानि अष्टाधारेषु विन्यसेत्।७७॥
एवं न्यस्ततनुर्देवि ध्यायेद् देवमनन्यधीः। अमृतार्णवमध्यस्थस्वर्णद्वीपे[1] मनोरमे॥ ७८॥
कल्पवृक्षवनान्तःस्थे नवमाणिक्यमण्डपे । नवरत्नमये श्रीमत्सिंहासनगताम्बुजे ॥ ७९॥
त्रिकोणान्तःसमासीनं चन्द्रसूर्यसमप्रभम्। अर्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम्॥ ८०॥
कोटिकन्दर्पलावण्यं सदा षोडशवार्षिकम्। मन्दस्मितमुखाम्भोजं त्रिनेत्रं चन्द्रशेखरम्॥ ८१॥
दिव्याम्बरस्रगालेपं दिव्याभरणभूषितम्। पानपात्रं च चिन्मुद्रां त्रिशूलं पुस्तकं करैः॥ ८२॥
विद्यासंसिद्धि[2]बिभ्राणं सदानन्दमुखेक्षणम्। महाषोढोदिताशेषदेवतागणसेवितम् ॥ ८३॥
एवं चित्ताम्बुजे ध्यायेदर्धनारीश्वरं शिवम्। पुंरूषं वा स्मरेद् देवि स्त्रीरूपं वा विचिन्तयेत्॥ ८४॥
अथवा निष्कलं ध्यायेत् सच्चिदानन्दलक्षणम्। सर्वतेजोमयं ध्यायेत् सचराचरविग्रहम्॥ ८५॥
ततः सन्दर्शयेन्मुद्रादशकं परमेश्वरि। योनिं लिङ्गं च सुरभि हेतिमुद्राचतुष्टयम्[3]॥ ८६॥
वनमालां नभोमुद्रां महामुद्रामिति क्रमात्। इति

ततः शिरसि श्रीगुरुं ध्यायेत्। यथा —

सहस्रदलपङ्कजे सकलशीतरश्मिप्रभं वराभयकराम्बुजं विमलगन्धपुष्पाम्बरम्।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं स्मरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुम्॥ १॥

इति। अथ महाषोढान्यासफलं श्रीकुलार्णवे—

एवं न्यासे कृते देवि साक्षात् परशिवो भवेत्। मन्त्री न चात्र सन्देहो निग्रहानुग्रहक्षमः॥ १॥
महाषोढाह्वयं न्यासं यः करोति दिने दिने। देवाः सर्वे नमस्यन्ति तं नमामि न संशयः॥ २॥
महाषोढाह्वयं न्यासं यत्र[4] मन्त्री न्यसेत्ततः। दिव्यक्षेत्रं समुद्दिष्टं समन्ताद् दशयोजनम्॥ ३॥
कृत्वा न्यासमिमं देवि यत्र गच्छति मानवः। तत्र श्रीर्विजयो लाभः सन्मानं पौरुषं प्रिये॥ ४॥
महाषोढाकृतन्यासं नोद्वीक्ष्य योऽभिवन्दते। षण्मासान्मृत्युमाप्नोति यदि त्राता शिवः स्वयम्।५॥
वज्रपञ्जरनामानमेनं न्यासं करोति यः। दिव्यान्तरिक्षभूशैलजलारण्यनिवासिनः॥ ६॥
उद्दण्डभूतवेतालदेवरक्षोग्रहादयः[5]। भयग्रस्तेन मनसा नेक्षन्ते साधकं प्रिये ॥ ७॥
महाषोढाह्वयं न्यासं ब्रह्मविष्णुशिवादयः। देवाः सर्वे प्रकुर्वन्ति ऋषयश्च मुनीश्वराः॥ ८॥
बहुनोक्तेन किं देवि सुशिष्याय प्रकाशयेत्। अक्षयां लभते सिद्धिं रहसि न्यासमाचरेत्॥ ९॥
अस्मात्परतरः साक्षाद्देवताभावसिद्धये। लोके नास्ति न सन्देहः सत्यं सत्यं न संशयः॥ १०॥
ऊर्ध्वाम्नायप्रवेशश्च पराप्रासादचिन्तनम्। महाषोढापरिज्ञानं नाल्पस्य तपसः फलम्॥ ११॥

---

१. 'मध्योद्यत्स्वर्णद्वीपोपशोभिते' क. पाठः। 'मणिद्वीपे' ग. पाठः। २. 'संसदि' ख. पाठः। ३. हेतिमुद्राः कपालज्ञानशूलपुस्तकाख्याः।
४. 'यः स' ख. पाठः। ५. 'यक्षोरगादयः' ग. पाठः।

इति महाषोढान्यासः।। अथ तुरीयविद्या— सा तु परा षोडशी "सौःश्रींह्रींक्लींऐंसौःओंह्रींश्रीं कएईलह्— सकहलसकलह्रीं सौःऐंक्लींह्रींश्रींसौः" इति तुरीयविद्या।। अथ चरणविद्याः —

प्रणवं च त्रितारं हंसः शिवह्सौः पदम्। सोऽहं तुरीयविद्यां च[1] चिदानन्दपदं ततः।। १२।।
तथा ज्योतिरहं चेति प्रथमं परिकीर्तितम्। प्राग्वत् सर्वं समुच्चार्य सच्चिदानन्दशब्दतः।। १३।।
ततो ज्योतिरहं चेति द्वितीयं परिकीर्तितम्। ततः प्राग्वत् समुच्चार्याहमेवास्मीति चोच्चरेत्।।१४।।
तृतीयं तु समुद्दिष्टं चरणत्रयमीरितम्। सङ्घट्टमुद्रया मूर्ध्नि विन्यसेद् देशिकोत्तमः।। १५।।

इति चरणत्रयम्।। अथ शम्भुचरणम् —

प्रणवं च त्रितारं च प्रणवं योऽहमस्म्यथ। अहमस्मीति ब्रह्माहमस्मि सोऽहं समीरयेत्।। १६।।
स्वच्छप्रकाशशब्दान्ते परिपूर्णपरापर। महाप्रकाशपर्यन्ते पूर्णानन्दपदं ततः।। १७।।
नाथश्रीपादुकामन्ते पूजयामीति मूर्धनि।

न्यसेदिति शेषः। इति शम्भुचरणम्।। पञ्चाम्बास्तु प्रागेव प्रपञ्चिताः। उन्मनाकाशादिनवनाथाः आत्मानन्दादिनवनाथाः स्वपारम्पर्यादिक्रमश्च प्रागेवोक्ताः। अथ षोडश मूलविद्याः —

(१) प्रणवादित्रितारं च स्वच्छेति पदमीरयेत्। प्रकाशपरिपूर्णेति परापरमहापि च ।। १।।
सिद्धविद्याकुलं योगि मायाबीजं कुलेति च। योगिनीमूलविद्याश्रीपादुकां पूजयामि च।। २।।
(२) श्रीप्रासादपराबीजं स्वात्मानं बोधयद्द्वयम्। पराप्रासादबीजं च श्रीप्रासादपरेति च ।। ३।।
अम्बेति मूलविद्याश्रीपादुकां पूजयामि च। (३) प्रणवादित्रितारं च वाग्भवं मकरध्वजः।। ४।।
क्लिन्ने क्लेदिनिशब्दान्ते महामदपदद्रवे। कामराजद्वयं मोहयद्वयं कामराजहृत् ।। ५।।
वह्निजायामियं विद्यातिरहस्यातियोगिनी। (४) प्रणवादित्रितारं च हंसः[2] स्वच्छेति वै वदेत्।।६।।
आनन्दपरमं हंसःपदं च परमात्मने। स्वाहा ह्सौ ह्सौं[3] विद्येयं शम्भवी मूलपूर्विका।। ७।।
(५) प्रणवादित्रितारं च माया नित्यं स्फुरत्तेति[4]। त्मचैतन्यानन्दमयि महाबिन्दुपदं वदेत्।। ८।।
व्यापकान्ते मातृपदं स्वरूपिणिपदं वदेत्। प्रणवादित्रितारं ह्रीमियं[5] वै कथिता बुधैः।। ९।।
हृल्लेखामूलविद्येति[6] (६) प्रणवादि त्रितारकम्। स्वच्छप्रकाशात्मिके च मायां कुलमहापदम्।।१०।।
मालिनीवाक्कुलगर्भ[7]मातृके भुवनेश्वरीम्। समयान्ते च विमले श्रीबीजमियमीश्वरि।। ११।।
समयान्ते च विमलमूलविद्येति कथ्यते। (७) तारं तारत्रयं हंसस्ततो नित्यप्रकाश च।। १२।।
आत्मिके कुलकुण्डेति लिनि आज्ञापदं ततः। सिद्धे[8] महाभैरवीति आत्मनं बोधयद्द्वयम्।।१३।।
अम्बे च भगवत्यन्ते माया ह्रुमियमीश्वरि। परबोधिनि मूलान्ते विद्या स्यात् परमेश्वरि।।१४।।
(८) तारं तारत्रयं तारं मोक्षं कुरु इतीरयेत्। कुलश्चाक्षरीमूलविद्येति परिपठ्यते।। १५।।
(९) तारं तारत्रयं प्रोक्त्वा लोपा पञ्चदशाक्षरी। चैतन्यत्रिपुरामूलविद्येयं परमेश्वरि।। १६।।

---

१. 'सच्चि' ग. पाठः। २. 'हः सः' ग. पाठः। ३. 'हसक्षौं' ग. पाठः। ४. 'रन्त्विति' ख. पाठः। ५. 'रमी' ग. पाठः।
६. 'चिल्लेखा' ग. पाठः। ७. 'र्भ' क. ख. ग. पाठः। ८. 'सिद्धि' ग. ख. पाठः।

(१०) तारं तारत्रयस्यान्ते वाग्भवं बीजमुद्धरेत्। शुद्धसूक्ष्म-निराकार-निर्विकल्पपदं ततः॥ १७॥
परब्रह्मस्वरूप्यन्ते णिक्लीमन्ते परापदम्। नन्दशक्तिपदं बालातृतीयं बीजमुद्धरेत् ॥ १८॥
इयं तु शाम्भवानन्दनाथानुत्तरकौलिनी। मूलविद्येति कथिता सर्वागमविशारदैः ॥ १९॥
(११) तारं तारत्रयं हंसः सोहं स्वच्छान्तनन्द च। परमान्ते हंसपरमात्मने बह्निवल्लभा ॥ २०॥
गुरूत्तमविमर्शिनी मूलविद्या समीरिता।(१२) तारं तारत्रयस्यान्तेऽप्यनामाख्यपदं भवेत्॥ २१॥
व्योमातीतपदं नाथपरापरपदं ततः। व्योमातीतपदं व्योमेश्वर्यम्बापदमुद्धरेत् ॥ २२॥
अनामाख्या मूलविद्या प्रोक्तेयं परमेश्वरी। (१३) तारं तारत्रयं वाणीं ईईउं बीजमुद्धरेत्॥ २३॥
प्रोक्ता सङ्केतसाराख्या मूलविद्या महेश्वरि। (१४) तारं तारत्रयं मायां ततो भगवतीति च॥२४॥
विच्चे वाग्वादिनी चेति कामराजं महाह्वद। महामातङ्गिनि वाणीं क्लिन्ने ब्लूंस्त्रीं लिखेदियम्॥२५॥
अनुत्तरादिवाग्वादिनीविद्या परिकीर्तिता। (१५) तारं तारत्रयं प्रासादपरां खेचरीं ततः॥ २६॥
सम्पत्प्रदाया मध्यं तु श्रीप्रासादपरां लिखेत्। इयं तु कथिता मूलविद्यानुत्तरशाङ्करी॥ २७॥
(१६) तुरीयविद्यामुच्चार्य सर्वानन्दमयादिकम्। उद्धरेत् परमेशानि महात्रिपुरसुन्दरी॥ २८॥
मूलविद्येयमीशानि प्रोक्ताभीष्टफलप्रदा। इति षोडश विद्याः॥

अथ षडाधारविद्याः, तत्र परेश्वरमन्त्रः —

तारपञ्चकमुद्धृत्य सरहस्त्रौं वाग्भवं ततः। फ्रेंबीजं च ततो लेख्यं परेश्वरमनुर्मतः॥ १॥
आज्ञायां कर्णिकामध्ये परेश्वरमनुं न्यसेत् इति परेश्वरमन्त्रः॥

अथ विच्चेश्वरमन्त्रः —

तारपञ्चकमुच्चार्य हस्रूं वाग्भवमुद्धरेत्। कुब्जिके फ्रें विशुद्धौ तु विच्चेश्वरमहामनुः॥ १॥

इति विच्चेश्वरमन्त्रः। अथ हंसेश्वरमन्त्रः —

तारपञ्चकमुच्चार्य हस्त्रैं[1] वाग्भवमुद्धरेत्। कुब्जिकायै पदं चैव ह्सफ्रं विच्चे तथैव च॥ १॥
हंसेश्वरमहामन्त्रस्त्वनाहतपदे स्थितः। इति हंसेश्वरमन्त्रः॥

अथ संवर्तेशमन्त्रः —

तारपञ्चकमुद्धृत्य ह्रांह्रींह्रूंह्रीं तथैव च। हस्त्रींक्ष्मांक्ष्रीं तथैव क्ष्रीं किणिद्वन्द्वमतः परम्॥ १॥
हसफ्रां हसफ्रमतो हस्फ्रीं विच्चे ह्रौं च हसद्वयम्। हसफ्रें हसक्षमलवयरूं प्रणवमेव च॥ २॥
हसक्षमलवान् प्रोच्य यरां हस तथैव च। क्षमलान् वयरूं चैव तद्बीजं वामनेत्रयुक्॥ ३॥
वाग्भवं च ततो हस्त्रींहसूहस्रां च ततः परम्। ह्रींहंह्रांह्रां ततो वाणीं नित्ये भगवतीति च॥४॥
हसफ्रं कुलेश्वरि ह्रांह्रूंह्रींह्रांह्रींहुं ततः परम्। ह्रोंहौंङ्वणनान् मे च क्ष्मांक्ष्मींक्ष्मूंक्ष्मस्तथैव च॥ ५॥
क्ष्म्रंश्रींफट् च हस्त्रौं फ्रें च अघोरमुखि चोच्चरेत्। कुब्जिकायै ततश्छ्रां छ्रूंछ्रीं घोरे च ततः परम्॥६॥

---

१. 'हसयईं' ख. पाठः।

अघोरे वायुवह्नीन्द्रान् वंसहं च किणिद्वयम्। महाकिणियुगं विच्चे संवर्तेशमहामनुः।। ७।।
स्वाधिष्ठाने महाचक्रे न्यस्तव्यः साधकोत्तमैः। इति संवर्तेश्वरमन्त्रः।।

अथ द्वीपेश्वरमन्त्रः —

तारपञ्चकमुच्चार्य हसफ्रूं वाग्भवं ततः। रिगटिनि पदं चैव पिङ्गटिनि पदं ततः।। १।।
विच्चे मन्त्रोऽयमुदितो द्वीपेशस्य वरानने। मणिपूरकचक्रे तु न्यस्तव्यः साधकोत्तमैः।। २।।

इति द्वीपेश्वरमन्त्रः।। अथ नवात्मेश्वरमन्त्र —

तारपञ्चकमुच्चार्य सहक्षमलवेति च। रयूं नमो भगवति हस्फ्रें बीजमतः परम्।। १।।
कुब्जिकायै ततो ह्रां ह्रूं ह्रीं ङञणनमे। अघोरमुखि छ्रां छ्रूं छ्रीं किणिद्वन्द्व किणिद्वयम्।।२।।
विच्चे नवात्मेश्वरस्य मन्त्रः स्यान्मूलपङ्कजे। इति नवात्मेश्वरमन्त्रः।। इति षडन्वयशाम्भवमन्त्राः।।

ततो ध्यानम्—

सहस्रसूर्यसङ्काशो महादीप्ति[1]धरो गुरुः। षडन्वयेश्वरः श्रीमान् परशम्भुरजोऽव्ययः।। १।।
षडाननस्फुरन्नेत्रत्रयषट्कसमन्वितः । द्वीपिचर्मकटिस्फारमुण्डमालाविभूषणः ।। २।।
नरास्थिरत्नपारिजातपुष्पमालासमावृतः। ब्रह्मनाभिकजाङ्गुष्ठो दंष्ट्राविस्तृतलापनः[2]।। ३।।
विचित्राभरणैर्युक्तः सर्ववित्पशुपाशहृत्। शूलासीषुशक्तिसृणिवरधारी महातनुः ।। ४।।
कपालफलचापारिपाशाभयकराम्बुजः[3]। देवावृतः पितृवने क्रीडाकृन्मानसोत्तरे ।। ५।।
एवं परेश्वरीं ध्यायेत् स्तनभारविराजिताम्। इति ध्यात्वाभिसम्पूज्य मूलविद्याद्वयं पुनः।। ६।।
समभ्यस्य समर्प्याथ चरणद्वितयं स्मरेत्।

रश्मिक्रमः प्रागेव प्रपञ्चितः।। अथोर्ध्वाम्नायमन्त्रभेदा अग्रे वक्ष्यन्ते। अथ तन्त्रान्तरे समयाविद्याः, यथा—

श्रीविद्या बगला चैव कालरात्रिस्तथैव च। जयदुर्गा च्छिन्नमस्ता समयाः पञ्च कीर्तिताः।। १।।

श्रीविद्या प्रागुक्ता। अथ बगला—अस्य श्रीबगलामुखीमन्त्रस्य नारद ऋषिः, जगती छन्दः, श्रीबगलामुखी देवता, ह्लींबीजं, स्वाहा शक्तिः, कीलय कीलकं, श्रीविद्याङ्गत्वेन विनियोगः, ओंह्लीं बगलामुखि, सर्वदुष्टानां, वाचं मुखं पदं स्तम्भय, जिह्वां कीलय, बुद्धिं विनाशय ह्लींओंस्वाहा, इति षडङ्गमन्त्राः। ध्यानम्।

मध्ये सुधाब्धिमणिमण्डपरत्नवेद्यां सिंहासनोपरिगतां परिपीतवर्णाम्।
पीताम्बराभरणमाल्यविभूषिताङ्गीं देवीं भजामि धृतमुद्गरवैरिजिह्वाम्।।१।।

"ओंह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लींओं स्वाहा" इति बगलामुखी।। अथ कालरात्रिः— अस्य श्रीकालरात्रिमन्त्रस्य भैरव ऋषिः[4]अनुष्टुप् छन्दः, श्रीकालरात्रिर्देवता, ह्रीं बीजं, स्वाहा शक्तिः, हुं कीलकं श्रीविद्याङ्गत्वेन विनियोगः, षड्दीर्घयुक्तेन मायाबीजेन षडङ्गन्यासः। ध्यानम्—

आरक्तभानुसदृशीं यौवनोन्मत्तविग्रहाम्। चतुर्भुजां त्रिनयनां भीषणां चन्द्रशेखराम्।। १।।
प्रेतासनसमासीनां भजतां सर्वकामदाम्। दक्षिणे चाभयं पाशं वामे भुवनमेव च।। २।।

१. 'दैपि' क.। 'द्वीपि' ख. पाठः।। २. 'विश्रुतपापनः' क. पाठः।। ३. 'रोद्यतः' र्घ्य' ४. 'उष्णिक' ग. पाठः।

रक्तदण्डधरां देवीं कालरात्रिं विचिन्तयेत्।

"ऐंह्रींक्लींश्रींकालेश्वरि सर्वजनमनोहारि सर्वमुखस्तम्भिनि सर्वराजवशङ्करि सर्वदुष्टनिर्दलिनि सर्वस्त्रीपुरुषाकर्षिणि बन्दिशृङ्खलांस्त्रोटय त्रोटय सर्वशत्रूञ्जम्भय २ द्वेष[1] निर्दलय २ सर्वं स्तम्भय २ उवाच २ उच्चाटय २ सर्ववश्यं कुरु २ सर्वकालरात्रिकामिनि गणेश्वरि हुंफट् स्वाहा" इति कालरात्रिः।। अथ जयदुर्गा— अस्य जयदुर्गामन्त्रस्य नारद ऋषिगार्यत्री छन्दः, जयदुर्गा देवता, ओं बीजं स्वाहा शक्तिः, रक्षिणि कीलकं श्रीविद्याङ्गत्वेन विनियोगः। ओं,दुर्गे,दुर्गे,रक्षणि, स्वाहा, ओं दुर्गे दुर्गे रक्षिणि स्वाहा, इति षडङ्गमन्त्राः।। ध्यानम्—

कीलालाभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुखण्डां
शङ्खं चक्रं कृपाणं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम्।
सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं
ध्यायेद् दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः।। १ ।। इति।

"ओं दुर्गे दुर्गे रक्षिणि स्वाहा" इति जयदुर्गा।। अथ च्छिन्नमस्ता—अस्य त्रिशक्तिमन्त्रस्य भैरव ऋषिः सम्राट् छन्दः श्रीवज्रवैरोचनीया देवता ह्रीं बीजं, स्वाहा शक्तिः, फट् कीलकं श्रीविद्याङ्गत्वेन विनियोगः। ओं आं खड्गाय स्वाहा, ओं ऊं सुखड्गाय स्वाहा, ओं ऊं श्रींविराजाय[2] स्वाहा, ओं ऐं पाशाय स्वाहा, ओंऔंअङ्कुशाय स्वाहा, ओं अः असुरान्तकाय[3] स्वाहा—इति षडङ्गमन्त्राः। ध्यानम् —

स्वनाभौ नीरजं ध्यायेच्छुद्धं विकसितं सितम्। तत्पद्मकोशमध्ये तु मण्डलं चण्डरोचिषः।। १।।
जापाकुसुमसङ्काशं नवबन्धूकसन्निभम् । रजःसत्त्वतमोरेखायोनिमण्डलमण्डितम् ।। २।।
मध्ये तु तां महादेवीं सूर्यकोटिसमप्रभाम्। छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम्।। ३।।
प्रसारितमुखां भीमां लेलिहानोग्रजिह्विकाम्। पिबन्तीं रौधिरीं धारां निजकण्ठसमुद्भवाम्।। ४।।
विकीर्णकेशपाशां च नानापुष्पसमन्विताम्। दक्षिणे च करे कर्त्रीं मुण्डमालाविभूषिताम्।। ५।।
दिगम्बरां महाघोरां प्रत्यालीढपदस्थिताम्। अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम्।। ६।।
रतिकामोपविष्टां च केचिद्[5] ध्यायन्ति मन्त्रिणः। सदा षोडशवर्षीयां पीनोन्नतपयोधराम्।। ७।।
विपरीतरतासक्तौ ध्यायेद्रतिमनोभवौ । योनिमुद्रासमारूढां विचित्रासनसंस्थिताम् ।। ८।।
वर्णिनीडाकिनीयुक्तां वामदक्षिणयोगतः। इति।

"श्रींक्लींह्रींऐं वज्रवैरोचनीये ह्रींह्रींफट्स्वाहा" इति च्छिन्नमस्ता। इति समयाविद्याः।।

गायत्रीं तु समुच्चार्य तत्तदावृतिदेवताः। पूजनीयाः प्रयत्नेन सर्वकामार्थसिद्धये।। १।।

इति वचनाच्छ्रीचक्रावरणदेवीनां गायत्र्यः प्रोच्यन्ते —

ओं तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात्,— इति गणपतिगायत्री।। आपदुद्धरणाय विद्महे बटुकेश्वराय धीमहि तन्नो वीरः प्रचोदयात्, — इति बटुकगायत्री।। ओं दिगम्बराय विद्महे कपालहस्ताय धीमहि तन्नः क्षेत्रपालः प्रचोदयात्,— इति क्षेत्रपालगायत्री। ओं व्यापिकायै विद्महे नानारूपायै धीमहि तन्नो योगिनी प्रचोदयात्— इति योगिनीगायत्री। ओं देवराजाय विद्महे वज्रहस्ताय धीमहि तन्नः शक्रः प्रचोदयात्—

१. 'शेषं' क.ख. पाठः। २. 'कालाभ्रा' ग. पाठः। ३. 'वज्राय' ग. पाठः। ४. 'सुरक्षसुरक्षाय' ग.पाठः। ५. 'सदा' ग.पाठः।

इतीन्द्रगायत्री। रुद्रनेत्राय विद्महे शक्तिहस्ताय धीमहि तन्नो वह्निः प्रचोदयात्, इति वह्निगायत्री। ओं वैवस्वताय विद्महे दण्डहस्ताय धीमहि तन्नो यमः प्रचोदयात्,—इति यमगायत्री। ओं निशाचराय विद्महे खड्गहस्ताय धीमहि तन्नो निर्ऋतिः प्रचोदयात्,— इति निर्ऋतिगायत्री। शुद्धहस्ताय विद्महे पाशहस्ताय धीमहि तन्नो वरुणः प्रचोदयात्,—इति वरुणगायत्री। सर्वप्राणाय विद्महे यष्टिहस्ताय धीमहि तन्नो वायुः प्रचोदयात्— इति वायुगायत्री। यक्षेश्वराय विद्महे गदाहस्ताय धीमहि तन्नो यज्ञः प्रचोदयात्— इति कुबेरगायत्री। सर्वेश्वराय विद्महे शूलहस्ताय धीमहि तन्नो रुद्रः प्रचोदयात्— इति शिवगायत्री। चतुराननाय विद्महे वेदवक्त्राय धीमहि तन्नो ब्रह्मा: प्रचोदयात्— ब्रह्मगायत्री। पातालवासिने विद्महे सहस्रवदनाय धीमहि। तन्नोऽनन्तः प्रचोदयात् इत्यनन्तगायत्री। शतकोटिने विद्महे महावज्राय धीमहि तन्नो वज्रं प्रचोदयात्,— इति वज्रगायत्री। तीक्ष्णभल्लाय विद्महे दीर्घदण्डाय धीमहि तन्नः शक्तिः प्रचोदयात् इति शक्तिगायत्री। शत्रुघ्नाय विद्महे दीर्घकायाय धीमहि तन्नो दण्डः प्रचोदयात्— इति दण्डगायत्री। तीक्ष्णधाराय विद्महे त्रिमूर्त्यात्मकाय धीमहि तन्नः खड्गः प्रचोदयात्— इति खड्गगायत्री। जगदाकर्षणाय विद्महे महापाशाय धीमहि तन्नः पाशः प्रचोदयात्—इति पाशगायत्री। वशीकरणाय विद्महे महाङ्कुशाय धीमहि तन्नोऽङ्कुशः प्रचोदयात्,—इत्यङ्कुशगायत्री। अयःसारायै विद्महे दीर्घगात्र्यै धीमहि तन्नो गदा प्रचोदयात्— इति गदागायत्री। तीक्ष्णशिखाय विद्महे महाकायाय धीमहि तन्नः शूलं प्रचोदयात्— इति शूलगायत्री। रमावासाय विद्महे सहस्रपत्राय धीमहि तन्नः पद्मं प्रचोदयात्—इति पद्मगायत्री। सुदर्शनाय विद्महे महाज्वालाय धीमहि तन्नश्चक्रं प्रचोदयात्,— इति सुदर्शनगायत्री। अणिमासिद्ध्यै विद्महे वराभयहस्तायै धीमहि तन्नः सिद्धिः प्रचोदयात्,— इत्यणिमागायत्री। लघिमासिद्ध्यै विद्महे निधिवाहनायै धीमहि तन्न लघिमा प्रचोदयात्— इति लघिमागायत्री। महिमासिद्ध्यै विद्महे महासिद्ध्यै धीमहि तन्नो महिमा प्रचोदयात्,— इति महिमागायत्री। ईशित्वसिद्ध्यै विद्महे जगद्व्यापिकायै धीमहि तन्नः सिद्धिः प्रचोदयात्,— इतीशित्वगायत्री। वशित्वसिद्ध्यै विद्महे शोणवर्णायै धीमहि तन्नः सिद्धिः प्रचोदयात्—इति वशित्वगायत्री। प्राकाम्यसिद्ध्यै विद्महे निधिवाहनायै धीमहि तन्नः सिद्धिः प्रचोदयात्,—इति प्राकाम्यगायत्री। इच्छासिद्ध्यै विद्महे पद्महस्तायै धीमहि तन्नः सिद्धिः प्रचोदयात्,३। भुक्तिसिद्ध्यै विद्महे महासिद्ध्यै धीमहि तन्नः सिद्धिः प्रचोदयात्,३। रससिद्ध्यै विद्महे भक्तवत्सलायै धीमहि तन्नः सिद्धिः प्रचोदयात्, ३। मोक्षसिद्ध्यै विद्महे महानिर्मलायै धीमहि तन्नः सिद्धिः प्रचोदयात्— इति सिद्धीनां गायत्र्यः।

ब्रह्मशक्त्यै विद्महे पीतवर्णायै धीमहि तन्नो ब्राह्मी प्रचोदयात्, ३। श्वेतवर्णायै विद्महे शूलहस्तायै धीमहि तन्नो माहेश्वरी प्रचोदयात् ३। शिखिवाहनायै विद्महे शक्तिहस्तायै धीमहि तन्नः कौमारी प्रचोदयात्, ३। श्यामवर्णायै विद्महे चक्रहस्तायै धीमहि तन्नो वैष्णवी प्रचोदयात् ३। श्यामलायै विद्महे हलहस्तायै धीमहि तन्नो वाराही प्रचोहयात्,३। श्यामवर्णायै विद्महे वज्रहस्तायै धीमहि तन्न ऐन्द्री प्रचोदयात्, ३। कृष्णवर्णायै विद्महे शूलहस्तायै धीमहि तन्नश्चामुण्डा प्रचोदयात्,३। पीतवर्णायै विद्महे पद्महस्तायै धीमहि तन्नो लक्ष्मीः प्रचोदयात्,३—इति मातृगायत्र्यः।।

सर्वसंक्षोभिण्यै विद्महे वरहस्तायै धीमहि तन्नो मुद्रा प्रचोदयात्,३। सर्वविद्राविण्यै विद्महे महाद्राविण्यै धीमहि तन्नो मुद्रा प्रचोदयात्, ३। सर्वाकर्षिण्यै विद्महे महामुद्रायै धीमहि तन्नो मुद्रा प्रचोदयात्,३। सर्ववशङ्कर्यै विद्महे महावश्यायै धीमहि तन्नो मुद्रा प्रचोदयात्,३। सर्वोन्मादिन्यै विद्महे महामायायै धीमहि तन्नो मुद्रा प्रचोदयात्,३। महाङ्कुशायै विद्महे शोणवर्णायै धीमहि तन्नोमुद्रा प्रचोदयात्,३। सर्वखेचर्यै विद्महे

गगनवर्णायै धीमहि तन्नो मुद्रा प्रचोदयात्,३। बीजरूपायै विद्महे महाबीजायै धीमहि तन्नो मुद्रा प्रचोदयात्,२। महायोन्यै विद्महे विश्वजनन्यै धीमहि तन्नो मुद्रा प्रचोदयात्,३। त्रिखण्डायै विद्महे त्रिकात्मिकायै धीमहि तन्नो मुद्रा प्रचोदयात्,—इति मुद्रागायत्र्यः।।

कामाकर्षिण्यै विद्महे रक्तवस्त्रायै धीमहि तन्नः कला प्रचोदयात्,३। बुद्ध्याकर्षिण्यै विद्महे बुद्ध्यात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। अहङ्काराकर्षिण्यै विद्महे तत्त्वात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। शब्दाकर्षिण्यै विद्महे सर्वशब्दात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। स्पर्शाकर्षिण्यै विद्महे स्पर्शात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। रूपाकर्षिण्यै विद्महे रूपात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। रसाकर्षिण्यै विद्महे रसात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। गन्धाकर्षिण्यै विद्महे गन्धात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। चित्ताकर्षिण्यै विद्महे चित्तात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। धैर्याकर्षिण्यै विद्महे धैर्यात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। स्मृत्याकर्षिण्यै विद्महे स्मृतिस्वरूपिण्यै धीमहि तन्नः कला प्रचोदयात्,३। नामाकर्षिण्यै विद्महे नामात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। बीजाकर्षिण्यै विद्महे बीजात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३। आत्माकर्षिण्यै विद्महे आत्मस्वरूपिण्यै धीमहि तन्नः कला प्रचोदयात्,३। अमृताकर्षिण्यै विद्महे अमृतस्वरूपिण्यै धीमहि तन्नः कला प्रचोदयात्,३।। शरीराकर्षिण्यै विद्महे शरीरात्मिकायै धीमहि तन्नः कला प्रचोदयात्,३—इति कामाकर्षिण्यादीनां गायत्र्यः।।

अनङ्गकुसुमायै विद्महे रक्तकञ्चुकायै धीमहि तन्नो देवी प्रचोदयात्,३। अनङ्गमेखलायै विद्महे पाशहस्तायै धीमहि तन्नो देवी प्रचोदयात्,३। अनङ्गमदनायै विद्महे शरहस्तायै धीमहि तन्नो देवी प्रचोदयात्,३। अनङ्गमदनातुरायै विद्महे धनुर्हस्तायै धीमहि तन्नो देवी प्रचोदयात्,३। अनङ्गरेखायै विद्महे दीर्घकेशिन्यै धीमहि तन्नो देवी प्रचोदयात्,३। अनङ्गवेगिन्यै विद्महे सृणिहस्तायै धीमहि तन्नो देवी प्रचोदयात्,३। अनङ्गाङ्कुशायै विद्महे नित्यक्लेदिन्यै धीमहि तन्नो देवी प्रचोदयात्,३। अनङ्गमालिन्यै विद्महे सुप्रसन्नायै धीमहि तन्नो देवी प्रचोदयात्,३—इत्यष्टदलदेवतानां गायत्र्यः।।

सर्वसंक्षोभिण्यै विद्महे बाणहस्तायै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वविद्राविण्यै विद्महे कार्मुकहस्तायै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वविकर्षिण्यै विद्महे शोणवर्णायै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वाह्लादिन्यै विद्महे जगद्व्यापिन्यै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वसंमोहिन्यै विद्महे जगन्मोहिन्यै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वस्तम्भिन्यै विद्महे जगत्स्तम्भिन्यै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वजृम्भिण्यै विद्महे जगद्रञ्जिन्यै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्ववशङ्कर्यै विद्महे............(?)। सर्वरञ्जिन्यै विद्महे वैडुर्यवर्णायै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वोन्मादिन्यै विद्महे जगन्मायायै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वार्थसाधिन्यै विद्महे पुरुषार्थदायै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वसंपत्प्रपूरिण्यै विद्महे संपदात्मिकायै धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वमन्त्रमय्यै विद्महे मन्त्रमात्रे धीमहि तन्नः शक्तिः प्रचोदयात्,३। सर्वद्वन्द्वक्षयङ्कर्यै विद्महे कालात्मिकायै धीमहि तन्नः शक्तिः प्रचोदयात्,३— इति चतुर्दशारदेवतागायत्र्यः।।

सर्वसिद्धिप्रदायै विद्महे श्वेतवर्णायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वसंपत्प्रदायै विद्महे महालक्ष्म्यै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वप्रियङ्कर्यै विद्महे कुन्दवर्णायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वमङ्गलकारिण्यै विद्महे मङ्गलात्मिकायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वकामप्रदायै विद्महे कल्पलतात्मिकायै धीमहि तन्नो

देवी प्रचोदयात्,३। सर्वदुःखविमोचिन्यै विद्महे हर्षप्रदायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वमृत्युप्रशमन्यै विद्महे सर्वसञ्जीविन्यै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वविघ्ननिवारिण्यै विद्महे सर्वकामायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वाङ्गसुन्दर्यै विद्महे जगद्योन्यै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वसौभाग्यदायिन्यै विद्महे जगज्जनन्यै धीमहि तन्नो देवी प्रचोदयात्,३—इति बहिर्दशारदेवतागायत्र्यः।।

सर्वज्ञायै विद्महे महामायायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वशक्त्यै विद्महे महाशक्त्यै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वैश्वर्यप्रदायै विद्महे ऐश्वर्यात्मिकायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वज्ञानमय्यै विद्महे ज्ञानात्मिकायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वव्याधिविनाशिन्यै विद्महे औषधात्मिकायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वाधारस्वरूपिण्यै विद्महे आधारात्मिकायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वपापहरायै विद्महे सर्वतीर्थस्वरूपिण्यै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वानन्दमय्यै विद्महे महानन्दायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वरक्षास्वरूपिण्यै विद्महे सर्वरक्षणायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वेप्सितफलप्रदायै विद्महे फलात्मिकायै धीमहि तन्नो देवी प्रचोदयात्,३—इत्यन्तर्दशारदेवतागायत्र्यः।।

वशिनीदेव्यै विद्महे पुस्तकहस्तायै धीमहि तन्नो वाचा प्रचोदयात्,३। कामेश्वर्यै विद्महे वाग्देव्यै धीमहि तन्नो वाचा प्रचोदयात्,३। मोदिनीदेव्यै विद्महे महावाण्यै धीमहि तन्नो वाचा प्रचोदयात्,३। विमलादेव्यै विद्महे मालाधरायै धीमहि तन्नो वाचा प्रचोदयात्,३। अरुणावाग्देव्यै विद्महे श्वेतवर्णायै धीमहि तन्नो वाचा प्रचोदयात्,३। जयिनीदेव्यै विद्महे महावागीश्यै धीमहि तन्नो वाचा प्रचोदयात्,३। सर्वेश्वर्यै विद्महे सर्ववागीश्यै धीमहि तन्नो वाचा प्रचोदयात्,३। कौलिनीदेव्यै विद्महे कुलमार्गगायै धीमहि तन्नो वाचा प्रचोदयात्,३—इत्यष्टारदेवतागायत्र्यः।।

महाबाणिन्यै विद्महे पुष्पात्मिकायै धीमहि तन्नो बाणा प्रचोदयात्,३। पुष्पचापिन्यै विद्महे पुण्ड्रात्मिकायै धीमहि तन्नश्चापा प्रचोदयात्, ३। पुष्पपाशिन्यै विद्महे पाशच्छेदिन्यै धीमहि तन्नः पाशिनी प्रचोदयात्,३। अङ्कुशिन्यै विद्महे पुष्पात्मिकायै धीमहि तन्नः सृणिः प्रचोदयात्,३। इत्यष्टारान्तरालचक्रदेवतागायत्र्यः।।

कामरूपवासिन्यै विद्महे रुद्रशक्त्यै धीमहि तन्नः कामेश्वरी प्रचोदयात्,३। जालन्धरस्थायै विद्महे विष्णुशक्त्यै धीमहि तन्नो वज्रेश्वरी प्रचोदयात्,३। पूर्णपीठस्थायै विद्महे ब्रह्मशक्त्यै धीमहि तन्नो भगमालिनी प्रचोदयात्,३— इति त्रिकोणाग्रस्थदेवतागायत्र्यः।। अथ चक्रेश्वरीणां गायत्र्यः—

त्रिपुरादेव्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात्,३। त्रिपुरेश्वर्यै विद्महे कामेश्वरी धीमहि तन्नः क्लिन्ना प्रचोदयात्,३। त्रिपुरसुन्दर्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात्,३। त्रिपुराश्रियै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात्,३। त्रिपुरमालिन्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात्,३। त्रिपुरवासिन्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात्,३। त्रिपुरासिद्धायै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात्,३। त्रिपुराम्बायै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात्,३। महात्रिपुरसुन्दर्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात्,३— इति चक्रेश्वरीगायत्र्यः।। अथ षोडशनित्यानां गायत्र्यः।।

कामेश्वर्यै विद्महे नित्यक्लिन्नायै[1] धीमहि तन्नो नित्या प्रचोदयात्,३। भगमालिन्यै विद्महे सर्ववशङ्कर्यै

१. 'कामेश्वर्यै धीमहि' क. पाठः।

धीमहि तन्नो नित्या प्रचोदयात्,३। नित्यक्लिन्नायै विद्महे नित्यमदद्रवायै धीमहि तन्नो नित्या प्रचोदयात्,३। भेरुण्डायै विद्महे विषहरायै धीमहि तन्नो नित्या प्रचोदयात्,३। वह्निवासिन्यै विद्महे सिद्धिप्रदायै धीमहि तन्नो नित्या प्रचोदयात्,३। महावज्रेश्वर्यै विद्महे वज्रनित्यायै धीमहि तन्नो नित्या प्रचोदयात्,३। शिवदूत्यै विद्महे शिवङ्कर्यै धीमहि तन्नो नित्या प्रचोदयात्,३। त्वरितायै विद्महे महानित्यायै धीमहि तन्नो नित्या प्रचोदयात्,३। वागीश्वर्यै (कुलसुन्दर्यै) विद्महे कामेश्वर्यै धीमहि तन्नो नित्या प्रचोदयात्,३। नित्याभैरव्यै विद्महे नित्यानित्यायै धीमहि तन्नो योगिनी प्रचोदयात्,३। नीलपताकायै विद्महे महानित्यायै धीमहि तन्नो देवी प्रचोदयात्,३। विजयादेव्यै विद्महे महानित्यायै धीमहि तन्नो देवी प्रचोदयात्,३। सर्वमङ्गलायै विद्महे चन्द्रात्मिकायै धीमहि तन्नो नित्या प्रचोदयात्,३। ज्वालामालिन्यै विद्महे महाज्वालायै धीमहि तन्नो नित्या प्रचोदयात्,३। विचित्रायै विद्महे महानित्यायै धीमहि तन्नो देवी प्रचोदयात्,३। (ललितागायत्री षोडशी) इति षोडशनित्यानां गायत्र्यः।।

अथ षड्दर्शनगायत्र्यः—

ब्रह्मगायत्री स्पष्टैव।। नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात्,३। आदित्याय विद्महे मार्तण्डाय धीमहि तन्नः सूर्यः प्रचोदयात्,३। शिवगायत्री तु प्रागेव दर्शिता। महासिद्धाय विद्महे सर्वज्ञाय धीमहि तन्नो बुद्धः प्रचोदयात्,३। सर्वसम्मोहिन्यै विद्महे विश्वजनन्यै धीमहि तन्न शक्तिः प्रचोदयात्,३— इति षड्दर्शनगायत्र्यः।। अथ समयविद्यानां गायत्र्यः—

सर्वोन्मन्यै विद्महे विश्वजनन्यै धीमहि तन्नो देवी[1] प्रचोदयात्,३। इति पूर्वसमया।। बगलाम्बायै विद्महे ब्रह्मास्त्रविद्यायै धीमहि तन्नः स्तम्भिनी प्रचोदयात्,३। इति दक्षिणसमया।। कालरात्र्यै विद्महे कालेश्वर्यै धीमहि तन्नो मोहिनी प्रचोदयात्,३। इति पश्चिमसमया।। तन्त्रान्तरेषु जयदुर्गा—कुब्जिका—प्रत्यङ्गिरा—दुर्गाः पश्चिमसमये देवता इति।। तथा—नारायण्यै विद्महे दुर्गायै धीमहि तन्नो गौरी प्रचोदयात्,३। इति जयदुर्गागायत्री।। कुब्जिकायै विद्महे नरान्त्रमालायै धीमहि तन्नो देवी प्रचोदयात्,३। इति कुब्जिकागायत्री।। अपराजितायै विद्महे प्रत्यङ्गिरायै धीमहि तन्न उग्रा प्रचोदयात्,३। इति प्रत्यङ्गिरागायत्री।। महादेव्यै विद्महे दुर्गायै धीमहि तन्नो देवी प्रचोदयात्,३। इति दुर्गागायत्री।। इति पश्चिमसमयदेवतानां गायत्र्यः।। अथोत्तरसमयानां गायत्र्यः— वज्रवैरोचिन्यै विद्महे छिन्नमस्तायै धीमहि तन्नो देवी प्रचोदयात्,३। इति छिन्नमस्तागायत्री।। कालिकायै विद्महे श्मशानवासिन्यै धीमहि तन्नो घोरे प्रचोदयात्,३। इति कालीगायत्री।। तारायै विद्महे छिन्नमस्तायै धीमहि तन्नो देवी प्रचोदयात्,३। इति तारागायत्री।। आम्नायविद्यानां गायत्र्योऽत्रैवान्तर्भूता बोद्धव्याः।। अथ पञ्चपञ्चिकागणगायत्र्यः—

श्रीविद्यायै विद्महे महाश्रियै धीमहि तन्नः श्रीः प्रचोदयात्,३। लक्ष्म्यै देव्यै विद्महे श्रीदेव्यै धीमहि तन्नः श्रीः प्रचोदयात्,३। महालक्ष्म्यै विद्महे महाश्रियै धीमहि तन्नः श्रीः प्रचोदयात्,३। त्रिशक्तिलक्ष्म्यै विद्महे महाभैरव्यै धीमहि तन्नः श्रीः प्रचोदयात्,३। साम्राज्यलक्ष्म्यै विद्महे जयङ्कर्यै धीमहि तन्नः श्रीः प्रचोदयात्,३। इति पञ्चलक्ष्म्यः।। अथ पञ्चकोशाः —

श्रीविद्यायै विद्महे महाकोशेश्वर्यै धीमहि तन्नः कोशा प्रचोदयात्,३। परज्योतिषे विद्महे प्रणवात्मिकायै धीमहि तन्नः कोशा प्रचोदयात्,३। परनिष्कलायै विद्महे परशाम्भव्यै धीमहि तन्नः कोशा प्रचोदयात्,३। अजपायै विद्महे हंसात्मिकायै धीमहि तन्नः कोशा प्रचोदयात्,३। मातृकायै विद्महे वागीश्वर्यै धीमहि तन्नः कोशा प्रचोदयात्,३। इति पञ्चकोशाः।। अथ पञ्चकल्पलताः—

---

१. 'शक्तिः' ग. पाठः।

श्रीविद्यायै विद्महे कल्पतलेश्वर्यै धीमहि तन्नः कल्पलता प्रचोदयात्,३। त्वरितागायत्री प्रागेवोक्ता। स्वच्छन्दसंग्रहे।। त्वरितादेव्यै विद्महे महादेव्यै धीमहि तन्नः कल्पलता प्रचोदयात्,३। पारिजातेश्वर्यै विद्महे कामप्रदायै धीमहि तन्नः कल्पलता प्रचोदयात्,३। त्रिकूटायै विद्महे जगज्जनन्यै धीमहि तन्नः कल्पलता प्रचोदयात्,३। पञ्चबाणेश्यै विद्महे सर्वसङ्क्षोभिण्यै धीमहि तन्नः कल्पलता प्रचोदयात्,३। इति पञ्चकल्पलताः। अथ पञ्चकामदुघानां गायत्र्यः —

श्रीविद्यायै विद्महे कामदुघेश्वर्यै धीमहि तन्नः कामदुघा प्रचोदयात्,३। अमृतपीठेश्यै विद्महे अमृतेश्वर्यै धीमहि तन्नः कामदुघा प्रचोदयात्,३। सुधासूत्यै विद्महे सुधात्मिकायै धीमहि तन्नः कामदुघा प्रचोदयात्,३। अमृतेश्वर्यै विद्महे विश्वदीपिन्यै धीमहि तन्नः कामदुघा प्रचोदयात्,३। अन्नपूर्णायै विद्महे सर्वसञ्जीविन्यै धीमहि तन्नः कामदुघा प्रचोदयात्,३। इति पञ्चकामदुघाः।। अथ पञ्चरत्नविद्यानां गायत्र्यः—

श्रीविद्यायै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्,३। सिद्धलक्ष्म्यै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्,३। मातङ्गिन्यै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्,३। भुवनेश्वर्यै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्,३। वाराह्यै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात्,३। इति पञ्चपञ्चिकागणगायत्र्यः।। अथ श्रीचक्रनिर्माणप्रकारोऽत्र प्रदर्श्यते—

प्रस्तारोऽत्र त्रिधा प्रोक्तः श्रीचक्रस्य तथेश्वरि। मेरुकैलासभूसंज्ञा भेदास्तस्य त्रिधा भवेत्।। १।।
मेरुप्रस्तारकं यन्त्रं नित्यातादात्म्यकं स्मृतम्। मातृकायास्तु कैलासप्रस्ताराख्यं सुरेश्वरि।। २।।
भूप्रस्तारं महादेवि वशिन्यात्मकमुत्तमम्। सृष्टिक्रमं मेरुचक्रं कैलासं चार्द्धमेरुकम्।। ३।।
संहाराख्यं महेशानि भूप्रस्तारं स्थितिक्रमम्। एकैकस्य तु चक्रस्य त्रिभेदास्तु भवन्ति हि।। ४।।
सृष्ट्यादिभेदैर्देवेशि संहारं कौलिकं मतम्। सृष्टिक्रमं तु समयमतं स्यात् स्थितिसंज्ञकम्।। ५।।
शुद्धं तु कथितं देवि रहस्यातिरहस्यकम्। मेरुचक्रे तु संहारक्रमपूजा न विद्यते ।। ६।।
सृष्टिक्रमेण देवेशि पूजनीयं प्रयत्नतः। संहारपूजा कैलासप्रस्तारेऽत्र[१] विधीयते ।। ७।।
भूप्रस्तारे महेशानि स्थितिपूजा सदोत्तमा। स्थितिक्रमो गृहस्थस्य संहारो वनिनो यतेः।। ८।।
ब्रह्मचारिण उत्पत्तिः स्त्रियः शूद्रस्य चेष्टतः[२]। इति।

श्रीरुद्रयामले—

ततः कुङ्कुमसिन्दूरैः कार्यं यन्त्रं तु योगिना। सौवर्णे राजते ताम्रे स्फाटिके वैद्रुमे तथा।। १।।
चक्रे तथोक्तविधिना पूज्या देवी वरोत्तमैः। इति।

इति। श्रीतन्त्रराजे—

रत्ने हेमनि रूप्ये वा ताम्रे दृषदि च क्रमात्। कृत्वा चक्रस्य निर्माणं स्थापयेत् पूजयेदपि।। १।।
लक्ष्मीकान्तियशःपुत्रधनारोग्यादिसिद्धये।। इति।

दृषदि गण्डकीशिलायाम्। दक्षिणामूर्तौ—"गण्डकीभवपाषाणे स्वर्णे रजतताम्रयोः।" इति।। रत्नसागरे—

यावज्जीवं सुवर्णे स्याद्रूप्ये द्वाविंशतिः प्रिये। ताम्रे द्वादशकं वर्षं तदर्धं भूर्जपत्रके।। १।।अन्यत्र—
ताम्रे द्वादशकं वर्षं स्फटिकादौ तु सर्वदा। तेषां मध्ये स्फाटिकं तु सर्वसिद्धिप्रदं भवेत्।। १।।

---

१. 'संहारे' क. पाठः। २. 'चेष्टितः' ग. पाठः।

इति। लक्षसागरे —

भूमौ सिन्दूररजसा रचितं सर्वकामदम्। सुवर्णरचितं यन्त्रं सर्वराजवशङ्करम्।। १।।
रजतेन कृतं यन्त्रमायुरारोग्यकामदम्। ताम्रे तु रचितं यन्त्रं सर्वैश्वर्यप्रदं मतम्।। २।।
क्लृप्तं मरकते यन्त्रं सर्वशत्रुविनाशनम्। लोहत्रयोद्भवं यन्त्रं सर्वसिद्धिकरं मतम्।। ३।।
देव्युवाच।
लोहत्रयोद्भवं यन्त्रं कथं कार्यं महेश्वर। तन्मे वदस्व कृपया यद्यहं तव वल्लभा।। ४।।
ईश्वर उवाच।
भागा दश सुवर्णस्य रजतस्य तु षोडश। ताम्रस्य रविभागेन पीठं कुर्यान्मनोहरम्।। ५।।
तस्मिन् पीठे तु निर्माणं श्रीचक्रस्य तु कारयेत्। शान्तिदं पुष्टिदं प्रोक्तं सर्वशत्रुनिवर्हणम्।।६।।
आयुरारोग्यजनकं कान्तिदं पुष्टिदं मतम्। त्रैविध्यं शृणु चक्रस्य भूप्रस्तारोऽर्ध्व[1] मेरुकम्।। ७।।
पातालवासिनां देवि प्रस्तारो निम्नरेखकः। ऊर्ध्वरेखो महाशान्तिर्मर्त्यलोकनिवासिनाम्।। ८।।
स्वर्गलोकादिवासानां यन्त्राणां मेरुसंज्ञकः। भूपुरं तु समारभ्य बैन्दवान्तं महेश्वरि ।। ९।।
क्रमात् समुन्नतं सर्वं मेरुरूपं मयोदितम्। समोर्ध्वरेखानवकमूर्ध्वरेखं प्रकीर्तितम्।। १०।।
निम्नरेखासमायोगाद्भूप्रस्तारो मयोदितः। यन्त्रबीजस्वरूपं ते मया स्नेहात् प्रकाशितम्।। ११।।
गोपितव्यं त्वया भद्रे स्वयोनिरिव सन्ततम्। इति।

श्रीतन्त्रराजे —

चतुरस्रं समारभ्य नवचक्राण्यनुक्रमात्। उन्नतोन्नतमामध्याच्चक्रं स्यान्निधनं[2] धनम्।। १।।
त्रित्रिक्रमादुन्नतं तदप्रजत्वं[3] श्रियं लभेत्। एकद्विषट्क्रमोन्नामः श्रिये कीर्त्यै च कल्पते[4]।।२।।
नवानि समरूपाणि सर्वाभीष्टार्थसिद्धये। इति।

कुलमूलावतारे —

उच्छ्रितं क्रमशो देवि वित्तप्राप्तिस्ततो मृतिः। भूचक्रे षोडशारं चाप्यष्टारं च समं भवेत्।। १।।
शेषमुन्नतमीशानि चार्थाप्त्यप्रजदं भवेत्। चतुरस्रं समं देवि षोडशारादिबिन्दुकम्।। २।।
मिथः समुन्नतं देवि श्रियै कीर्त्यै च कल्पते। चतुरस्रं समारभ्य बिन्द्वन्तं समरेखकम्।।३।।
तथा श्रीः कीर्तिरारोग्यममृतायोपकल्पते।

इति। तन्त्रराजे —

सीसकांस्यादिषु पुनः पूर्वोक्तविपरीतकृत्। फलकायां पटे भित्तौ स्थापयेन्न कदाचन।। १।।
स्थापितं यदि मोहेन लोभा[5]दज्ञानतोऽपि वा। कुलं वित्तमपत्यं च निर्मूलयति सर्वथा।।२।।

इति। लक्षसागरे— "वङ्गेऽथ सीसके लोहे न कर्तव्यं कदाचन।" इति। कुलमूलावतारे—

अग्निरङ्गुलविस्तारं प्राक्प्रत्यग्दक्षिणोत्तरम्। पलप्रमाणं कर्तव्यमर्च्चापीठं मनोहरम्।। १।।

---

१. 'रोर्ध्वं' क. ख. पाठः। २.'ने' क. पाठः। ३. 'सुप्रजत्वं' ख. पाठः। ४.'कल्प्यते' क. पाठः। ५.'भेना' क.ख.पाठः।

यवार्धोच्चं प्रकुर्वीत चतुरस्रं समन्ततः। तस्मिन् पीठे च निर्माणं श्रीचक्रस्य तु कारयेत्।।२।।

इति। सौत्रामणीतन्त्रे —

ऋजुरेखा भवेल्लक्ष्मीर्वक्ररेखा दरिद्रता। अग्निरङ्गुलविस्तारो यवार्धेनोच्छ्रितिर्भवेत्।। १ ।। इति।

अग्निरङ्गुलं हेमस्य रजतस्य तथैव च। ताम्रस्य पूर्वसंख्यैव माणिक्यादौ यथेच्छया।।२।।

पलं तु विंशत्युत्तरत्रिशतगुञ्जापरिमितम्। अङ्गुलप्रमाणं तु महाकपिलपञ्चरात्रे —

विन्यस्तैस्तिर्यगष्टाभिर्यवैर्मानान्तराङ्गुलम्। शालिभिर्वा ऋजुन्यस्तैस्त्रिभिर्मानान्तरं भवेत्।। १ ।।

इति। "वेदिकापीठशिविकारथादीनां विधिः पुनः। मानान्तराङ्गुलेनैव भवेन्नान्येन¹ केनचित्"।। इत्युक्ते श्रीचक्रस्य पीठशब्दवाच्यत्वान्मानाङ्गुलेनैव तत्प्रमाणं बोध्यम्। अत्र बिन्द्वाद्यष्टारान्तं चक्रत्रयं संहारात्मकं, दशारद्वयं चतुर्दशारं चक्रत्रयं स्थित्यात्मकं, तदुपरि अष्टदलादिभूपुरान्तं चक्रत्रयं सृष्ट्यात्मकम्। रुद्रयामले—

बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वस्रनागदलसंयुतषोडशारम्।

वृत्तत्रयं च धरणीसदनत्रयं च श्रीचक्रमेतदुदितं परदेवतायाः।। १ ।।

इति। सुभगोदये —

चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः। शिवशक्त्यात्मकं ज्ञेयं श्रीचक्रं शिवयोर्वपुः।। १ ।।

इति। श्रीभूतभैरवे —

योऽस्मिन् यन्त्रे महेशानि केसराणि प्रकल्पयेत्। योगिनीसहितास्तस्य हिंसां कुर्वन्ति भैरवाः।।१।।

इति वचनान्नात्र केसराणि। स्वच्छन्दसङ्ग्रहे— "कुर्याच्च स्थण्डिले यन्त्रं हस्तमात्रं सुसुन्दरम्"। इति।

तन्त्रराजे तु —

नवहस्तं त्रिहस्तं वा श्रीचक्रमभिषेचने। स्थण्डिले नित्यपूजायां हस्तमात्रं प्रशस्यते।। १ ।।

रत्नादिषु तु निर्माणे मानमिच्छावशाद्भवेत्। इति। तथा—

रक्तेन रजसापूर्य श्रीचक्रं भुवि पूरयेत्²। नश्यन्ति सर्वविघ्नानि प्राप्स्यते च यथेप्सितम्।। १।।

दशभागं सुवर्णस्य ताम्रस्य द्विदशं³ तथा। षड्गुणं (षोडश) रजतस्यापि चैतल्लोहत्रयं शुभम्।।२।।

चक्रेऽस्मिन् पूजयेद्यो हि स सौभाग्यमवाप्नुयात्। अणिमाद्यष्टसिद्धीनामधिपो जायतेऽचिरात्।।३।।

विद्रुमे रचिते यन्त्रे पद्मरागेऽथवा प्रिये। इन्द्रनीले च वैडूर्ये स्फटिके मरकतेऽपि वा।। ४।।

धनं पुत्रं तथा दारान् यशांसि लभते ध्रुवम्। ताम्रं तु कान्तिदं यन्त्रं सुवर्णं शत्रुनाशनम्।। ५।।

राजतं क्षेमदं चैव स्फाटिकं सर्वसिद्धिदम्। खण्डिते स्फुटिते भग्ने भ्रष्टे मानविवर्जिते।। ६।।

दग्धेऽनर्हपशुस्पृष्टे पतिते दुष्टभूमिषु । अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते ।। ७।।

दशस्वपि च नो कुर्युः सन्निधानं दिवौकसः। दग्धं च स्फुटितं यन्त्रं हृतं चौरेण वा प्रिये।। ८।।

उपवासं प्रकुर्वीत दिनमेकमतन्द्रितः। लक्षमात्रं जपेद्विद्यां होमतर्पणपूर्विकाम्।। ९।।

सद्भक्त्या च गुरुं तोष्य ब्राह्मणानपि भोजयेत्। लक्षमयुतमित्येके।।

---

१. 'न्यान्येन' क.। 'न्मानने' ख. पाठः। २. 'पूजयेत्' क. पाठः। ३. 'द्विशतं' ग. पाठः।

कदाचिल्लुप्तचिह्नं वा स्फुटता[1]दिविदूषितम्। भग्नं करोति यो मूर्खो मृत्युस्तस्य ध्रुवं भवेत्।।१।।
तस्माच्च तीर्थराजे वा गङ्गादिसरितां वरे। समुद्रे वा क्षिपेद् देवि अन्यथा दुःखमाप्नुयात्।। २।।

इति। दक्षिणामूर्तिसंहितायाम्—

रक्तासनोपविष्टस्तु यन्त्रोद्धारं[2] समाचरेत्। शक्त्योपविष्टां शक्तिं तु विलिखेद्विस्तृतां सकृत्।। १।।
वह्निना तां पुटीकुर्यात् सन्धिभेदक्रमेण तु। अग्नीशासुरवायव्यरेखा विस्तार्य योजयेत्।। २।।
दशकोणद्वयं देवि जायते तद्वदेव हि। मध्यकोणचतुष्कस्य रेखे आकृष्य बुद्धिमान्।। ३।।
कुर्यात् तत्सन्धिभेदेन मन्वस्रं जायते यथा। समत्रिकोणशक्त्यैकं सुखदं नेत्रयोर्यथा।। ४।।
सुश्रीकं सन्धिभेदेन ऋजुरेखाविजृम्भितम्। बहिरष्टदलं पद्मकिञ्जल्कं समालिखेत्।। ५।।
तद्वत् षोडशपत्रं हि विलिखेत् पद्ममुत्तमम्। सुवृत्तं परमेशानि ततो भूबिम्बमालिखेत्।। ६।।
चतुर्द्वारं विशोभाढ्यं पुष्पं तत्र विनिक्षिपेत्। इति।

काश्मीरे दर्पणे भूर्जे अर्चापीठं लिखेद्बुधः। शलाकया सुवर्णस्य मिश्रया घुसृणेन्दुभिः।। १।।
सिन्दूररजसा मिश्रैः पट्टे धातुमये लिखेत्। अथवा भूतले देवि सुरेखां कुङ्कुमेन वा।। २।।
सिन्दूररजसा वापि लिखेत् सर्वार्थसिद्धये। एतच्चक्रं महेशानि मध्ये बिन्दुविराजितम्।। ३।।
ततस्त्रिकोणं चाष्टारं दशारं च दशारकम्। मनुकोणं महेशानि मध्यचक्रमिदं प्रिये।। ४।।
बैन्दवादष्टकोणान्तं सर्वमध्यं सुरेश्वरि । चत्वारिंशद्भगैर्युक्तं त्रिभगैरपि पार्वति।। ५।।
वसुपत्रं कलापत्रं चतुरस्रं क्रमात् प्रिये। भगात्मकमिदं भद्रे नवयोन्यङ्कितं भवेत्।। ६।।

इति। ज्ञानार्णवे—

श्रीचक्रमपि देवेशि मेरुरूपं न संशयः। लकारः पृथिवीबीजं तत्रोर्वीपुरमुच्यते[3]।। १।।
सकारश्चन्द्रमा भद्रे कलाषोडशकात्मकः । तस्मात् षोडशपत्रं तु हकारः शिव उच्यते।। २।।
अष्टमूर्तिस्तथा[4] भद्रे तस्माद्वसुदलं भवेत्। ईकारस्तु महामाया भुवनानि चतुर्दश।। ३।।
पालयन्ती परा तस्माच्छक्रकोणं भवेत् प्रिये। शक्तिरेका दशस्थाने स्थित्वा सूते जगत्त्रयम्।।४।।
विश्वयोनिरिति ख्याता सा विष्णोर्दशरूपका। रकारात् परमेशानि चक्रं व्याप्य विजृम्भते।। ५।।
दशकोणपरा तस्माद्रकाराज्ज्योतिरव्ययः । कलादशान्वितो वह्निर्दशकोणप्रवर्तकः ।। ६।।
ककारान्मादनं देवि शिवं चाष्टस्वरूपकम्। योनिरस्य तदा चक्रे[5] वसुयोन्यङ्कितं भवेत्।। ७।।
अर्धमात्रा गुणान् सूते भेदरूपा यतस्ततः[6]। त्रिकोणरूपा योनिस्तु बिन्दुना बैन्दवं[7] भवेत्।। ८।।
कामेश्वरस्य रूपं तद्विश्वाधारस्वरूपकम् । श्रीचक्रं तु वरारोहे श्रीविद्यावर्णसम्भवम्।। ९।।

---

१. 'टना' ख. पाठः। २. 'चक्रो' क.ख. पाठः। ३. 'तेन भूबिम्ब उच्यते' ग. पाठः। ४. 'सदा' ग. पाठः। ५. 'चक्रं' ग. पाठः।
६. 'अर्धमात्रा गुणा तत्र नादरूपा यतःस्थितः' ग. पाठः। ७. 'भैरवी' क. ख. ग. पाठः।

तत्र प्राङ्मुख आसीनश्चक्रराजं समालिखेत्। भूप्रदेशे समे चाढ्ये[१] सिन्दूररजसाऽथवा।। १०।।
कुङ्कुमस्य रजोभिश्च भूमौ चक्रं समालिखेत्। ऋजुरेखं नेत्ररम्यं सन्धिभेदं सममृजु ।। ११।।
अथवा हेमरूप्याभ्यां ताम्रेण रत्न[२]धातुभिः। पट्टं विरच्य श्रीकाष्ठे रक्तचन्दनसम्भवे।। १२।।
पट्टं संस्थाप्य विलिखेद् लेखन्या हेमया प्रिये। रोचनाकुङ्कुमाभ्यां च कस्तूरीचन्दनेन्दुभिः।। १३।।
ईशानादग्निपर्यन्तमृजुरेखां समालिखेत्। ईशादग्नेस्तदग्राभ्यां रेखे आकृष्य देशिकः।। १४।
एकीकृत्य च वारुण्यां शक्तिरेका परा प्रिये। त्रिकोणाकाररूपेयं तस्या उपरि संलिखेत्।। १५।।
त्रिकोणाकाररूपं तु शक्तिद्वयमुदाहृतम्। पूर्वशक्त्यग्रभागे तु मानयष्टिवदालिखेत्।। १६।।
रेखान्तु परमेशानि वायुराक्षसकोणगाम्। सन्धिभेदक्रमेणैव तयोः शक्त्योस्ततः परम्।। १७।।
रेखे आकृष्य कोणाभ्यां तदग्रात् पूर्वगे कुरु। वह्निमण्डलमेतत्तु पूर्वाग्रं वीरवन्दिते।। १८।।
तच्च त्रयमभूदन्ते ततः शृणु वरानने। पूर्वशक्तीशवह्निभ्यां कोणाभ्यां सुरवन्दिते।। १९।।
पूर्वरेखां तु विस्तार्य तथा पश्चिमवह्नितः। वायुराक्षसकोणाभ्यां रेखां पश्चिमगां तथा।।२०।।
विस्तार्य योजद्देवि शक्तिभेदक्रमेण तु। योन्यग्रगां पूर्वदेशे[३] दक्षिणोत्तरतः क्रमात्।। २१।।
तदा रेखे योनिसंस्थे पश्चिमस्यां दिशि क्रमात्। कोणाग्रगां योजयित्वा दशकोणं तदा भवेत्।।२२।।
तथैव देवदेवेशि द्वितीय[४] दशकोणगम्[५]। ईशानवह्नितो रेखे पूर्वयोन्यग्रयोः क्रमात्।। २३।।
विस्तार्य योजयेत् पश्चात् पश्चिमायां दिशि क्रमात्। वायुराक्षसकोणाग्ररेखे विस्तार्य सुन्दरी।।२४।।
पश्चिमाग्रे तथा देवि योजयेदिन्द्रदिग्गते। एकाग्र[६]पूर्वकोणाग्रचुम्बिनीं तु मनोहराम्।। २५।।
योजयेद् देवदेवेशि यथाशक्त्युद्भवं भवेत्। दशकोणेषु[७] देवेशि त्यक्त्वा कोणचतुष्टयम्।।२६।।
दशकोणान्तयो[८]र्देवि मध्यरेखां प्रकाशयेत्। द्वे दक्षिणे विभागे तु तथा चोत्तरभागके।। २७।।
षट्कोणस्य ततो देवि सन्धिभेदक्रमेण तु। योनिं वह्निं च संयोज्य शक्रारं जायते तथा।।२८।।
कक्षामध्यगतां रेखां निजरूपां तु योजयेत्। ऋज्वाकृतिर्यथा देवि जायतेऽतिमनोहरा।। २९।।
सम्मुखं[९] पञ्चशक्त्यग्रं प्रागग्रं चतुरग्निकम्[१०]। बिन्दुत्रिकोणवस्वारं चक्रभेदा[११] द्वरानने।। ३०।।
मध्यचक्रं तु जानीहि दशारयुगलं तथा। शक्रयोन्यङ्कितं देवि बाह्यमध्यगतं भवेत्।। ३१।।
एतच्चक्रं महेशानि सर्वसौभाग्यदं भवेत्। सर्वसाम्राज्यदं देवि सर्वोपद्रवनाशनम्[१२]।। ३२।।
अनेकहयमाणिक्यसुवर्णपरिपूरकम्। महामोक्षप्रदं देवि वाग्विलासकरं महत्।। ३३।।
एतद्बाह्यं[१३] महेशानि वृत्तं पूर्णेन्दुसन्निभम्। तद्युतं कुरु पद्माक्षि वसुपत्रं मनोहरम्।।३४।।
ततः षोडशपत्रं तु विलिखेत् सुरसुन्दरि। चतुरस्रं चतुर्द्वारसहितं परमेश्वरि।। ३५।।

---

१. 'शुद्धे' ग. पाठः। २. 'बहु' ग. पाठः। ३. 'योन्यग्रां पूर्वदेशेतु' क. ख. ग. पाठः। ४. 'यां' ग. पाठः। ५. 'गाम्' क. ख. पाठः। 'एकत्र' ग. पाठः। ७. 'णस्य' ग. पाठः। ८. 'न्तरे' ग. पाठः। ९. 'स्वमुखं' ग. पाठः। १०. 'रग्रकं' क.ग.पाठः। ११. 'मेतत्' ग. पाठः। १२. 'सर्वापद्विनिवारणम्' ग. पाठः। १३. 'ह्ये' ग. पाठः। १४. 'तदन्ते कुरु मीनाक्षि' ग. पाठः।

चतुष्षष्टिर्यतः[1]कोट्यो योगिनीनां महाप्रभम्। चक्रेऽस्मिन् सविशेषास्ताः साधकं मानयन्ति हि।।३६।।
चतुरस्रं मातृकोणैर्मण्डितं सिद्धिहेतवे । मुक्तामाणिक्यघटितसमुज्ज्वल[2]विराजितम्।। ३७।।
त्रैलोक्यमोहनं नाम कल्पद्रुमफलप्रदम्। षोडशारं चन्द्रबिम्बरूपं तु स्वकलालयम्।। ३८।।
सर्वाशापूरकं देवि क्षरत्पीयूषवर्षवत् । अष्टपत्रं महेशानि जपाकुसुमसन्निभम् ।। ३९।।
सर्वसङ्क्षोभणं नाम सर्वकामप्रपूरकम्। एतत्त्रयं वरारोहे सृष्टिचक्रं वसुप्रदम् ।। ४०।।
पूर्वाम्नायादिदेव्या तु मण्डितं सर्वसिद्धिदम्। चतुर्दशारं देवेशि दाडिमीकुसुमप्रभम्।। ४१।।
अनन्तफलदं भद्रे सर्वसौभाग्यदं सदा। दशारं तप्तहेमाभं सिन्दूरसदृशं प्रिये।। ४२।।
सर्वार्थसाधकं चक्रं मनश्चिन्तितदं सदा। द्वितीयमपि पङ्क्त्यस्रं जपाकुसुमसन्निभम्।। ४३।।
सर्वरक्षाकरं चक्रं महाज्ञानमयं शिवे। एतत्त्रयं महेशानि स्थितिचक्रं सुखप्रदम्।। ४४।।
दक्षिणाम्नायपूज्यं[3] तु यथेप्सितफलप्रदम्। अष्टकोणं वरारोहे बालार्ककिरणारुणम्।। ४५।।
पद्मरागामलप्रख्यं सर्वरोगहरं सदा । उद्यत्सूर्यसहस्राभं बन्धूककुसुमप्रभम् ।। ४६।।
सर्वसिद्धिप्रदं चक्रं स्वकलालयमीश्वरि। त्रिकोणं सर्वसम्भूतिकारणं भूतिदं सदा।। ४७।।
बिन्दुचक्रं वरारोहे सर्वानन्दमयं प्रिये[4]। सदाशिवमयं चक्रनायकं परमेश्वरि ।। ४८।।
एतच्चक्रं तु संहाररूपं ब्रह्ममयं सदा। पश्चिमाम्नायसंसेव्यं त्रयमुत्तरसेवितम्[5]।। ४९।।
अस्मिंश्चक्रे षडध्वानो वर्तन्ते वीरवन्दिते। चक्रपत्रेषु[6] देवेशि पदाध्वा तु निगद्यते।। ५०।।
पत्रसन्धिविभेदे[7] तु भुवनाध्वा व्यवस्थितः। वर्णाध्वा मातृकारूपी कथयामि तवानघे।। ५१।।
वर्गाष्टकं मातृकाया दिक्षु सिद्धीर्यतः प्रिये। पार्थिवं तन्मयं विद्धि षोडशारं कलात्मकम्।। ५२।।
अष्टपत्रं कादिवर्गैः क्षान्तैः[8] दिक्षु विदिक्षु च। कादिढान्ताः शक्रवर्णाः शक्रकोणेषु संस्थिताः।। ५३।।
णकारादिभकारान्ता दशवर्णा दशारके। मकारादिक्षकारान्ता द्वितीये तु दशारके।। ५४।।
वर्गाष्टकं चाष्टकोणे त्रिकोणे कथयामि ते। अकथादित्रिकोणान्तं[9] हक्षयुग्मं तु मध्यमम्।। ५५।।
वर्णाध्वा कथितो देवि मातृकापीठरूपकः। षट्त्रिंशत्तत्त्वभंरितं[10] चक्रमूलानुरूपतः।। ५६।।
पञ्चसिंहासनोन्नद्ध[11]कलाध्वा चक्रपालनात्। सा बाला भैरवीयुक्ता महात्रिपुरभैरवी।। ५७।।
त्रिपुराद्यम्बिकाद्यान्ता[12] चक्रं व्याप्य विजृम्भते। मन्त्राध्वा च समाख्यातो निश्चयेन सदा प्रिये।।५८।।
एवं षडध्वविमलं श्रीचक्रं परिचिन्तयेत्। इति।

सुभगोदये —

षण्णवत्यङ्गुलायामं चतुरस्त्रं महीतलम्। तच्चतुर्धा विभज्यादौ चतुर्विंशाङ्गुलं क्रमात्।। १।।

---

१. 'कलाः' ग. पाठः। २. 'समस्थल' ग. पाठः। ३. 'पूर्वं' क.ग. पाठः। ४. 'परम्' ग. पाठः। ५. 'पूजितम्' ग. पाठः। ६. 'चक्रत्रयेषु' ग. पाठः। ७. 'यन्त्रसंधिविभागे' ग. पाठः। ८. 'क्षान्तैः' ग. पाठः। ९. 'त्रिरेखां तु' ग. पाठः। १०. 'रचितं' ग. पाठः। ११. 'द्धः' ग. पाठः। १२. 'कान्ते च' ग. पाठः।

गुहाननरसाङ्गाग्निवेदाग्नित्रिशरर्तुषु । तासां सम्मार्जयेत् भागानग्रयोरुभयोरिमान् ॥ २॥
सूर्ये गुणं निशानाथे वेदं सोमसुते कलाम्। जीवे पुराणं शुक्रे तु स्वरं राहौ शरं पुनः॥ ३॥
केतौ गुणं पञ्चशक्तिचतुर्वह्निक्रियान्तरे। रेखायुग्मं शनिं सूर्याद्धरावृत्ते नियोजयेत्॥ ४॥
केतूर्ध्ववृत्तं भूपुत्रं राहोरादित्यमानयेत्। चन्द्रात् केतुं कवेः सोमं बुधाद्राहुं गुरोः कुजम्॥ ५॥
केतोर्बुधं रवेः सौरिमेवं षट्चक्रसम्भवः। अष्टाष्टाङ्गुलमानेन बहिश्चक्रत्रयं लिखेत्॥ ६॥
वसुपत्रं कलापत्रं मेदिनीसदनत्रयम्। तत्र क्रमान्मध्ययोनिस्तिर्यग्रेखाः समन्ततः॥ ७॥
सार्धं च द्विगुणं चेति कुर्याद् वारत्रयं बुधः। सम्प्रदायविशेषेण क्षमा विश्वकलाश्रये॥ ८॥
मध्ये गुणत्रयमयं विलिखेद्वर्तुलत्रयम्। चक्रराजमिदं प्रोक्तं मध्ये बिन्दुविभूषितम्॥ ९॥
महासौभाग्यजननं भोगमोक्षफलप्रदम्[१]। सिन्दूररजसा भूमौ लिखित्वा चक्रमर्चयेत्॥ १०॥
अथवा हेमरूप्यादिपट्टे पीठोपरि स्थितम्। इति।

अयमुद्धारः स्थितिक्रमः, दक्षिणामूर्तिज्ञानार्णवयोः सृष्टिक्रम उद्धारः प्रदर्शितः। संहारक्रमेणोद्धारस्तु श्रीतन्त्रराजे —

भ्रमेण वृत्तं निष्पाद्यं सुसमे चतुरस्रके। प्रमृज्य तिर्यङ्मध्यस्थं सूत्रं तिर्यङ् निपातयेत्॥ १॥
सूत्राणि नव तेषु द्वे वृत्तस्पृष्टोभयान्तके। विधाय तद्द्वयोरन्तान्मध्यसूत्रान्ततः क्रमात्॥ २॥
कृते सूत्रचतुष्के तु षट्कोणं स्यात् त्रिसप्तगम्[२]। द्व्यष्टाग्रतः समारम्भान्नवम[३]प्रथमान्तरा॥३॥
कुर्यात् सूत्रचतुष्कं तु चतुर्मर्मानुगुण्यतः । नवमप्रथमाग्राभ्यां तुर्यसप्तमकावधि॥ ४॥
कुर्यात् सूत्रचतुष्कं[४] तु मर्माष्टकविभेदनात्। ततश्चतुर्थषष्ठान्तद्वयारम्भात् तथाष्टगम्॥ ५॥
द्वितीयगं च सूत्राणां चतुष्कं पातयेत् तथा। चतुर्मर्मानुगुण्येन ततः पञ्चमकान्तयोः॥ ६॥
तृतीयगं सूत्रयुगं कुर्यान्मर्मद्वयाश्रयम्। मार्जयेन्मध्यगं ब्रह्मसूत्रं स्याच्चक्रमुत्तमम् ॥ ७॥
बहिरष्टच्छदाम्भोजं तथा तद्द्विगुणच्छदम्। विधाय षड्भिर्वृत्तैश्च चतुरस्रं[५] तथाष्टभिः॥ ८॥
सूत्रैर्विधाय तस्यैव प्राक्प्रत्यग्द्वारसंयुतम्। दक्षिणोत्तरतो रेखात्रयात् स्थानद्वयं[६] तथा॥ ९॥
कोणेषु तिर्यक्सूत्रैश्च चतुर्भिस्तान्यनुक्रमात्। द्विधा कुर्याच्च चत्वारि पदानि परमेश्वरि॥ १०॥
ललिताचार्चक्रमिदं लभ्यं सद्गुरुतः क्रमात्। इति। आचार्यैरप्युक्तम् —

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः।
चतुश्चत्वारिंशद्वसुदलकलाश्रत्रिवलयत्रिरेखाभिः सार्धं तव शरण[७]कोणाः परिणताः॥ १॥

इति। चतुर्भिश्चतुःसंख्यासंख्येयैः श्रीकण्ठैः, शृणाति श्रीर्विषं कण्ठे यस्य सः श्रीकण्ठो हरस्ते कोणा अपि श्रीकण्ठास्तदात्मनः श्रीकण्ठात्मकैरित्यर्थः। शिवयुवतिभिः शक्तिभिः शक्त्यात्मकैरित्यर्थः। पञ्चभिः पञ्चसंख्यासंख्येयैः। अपिशब्दो भेदे। प्रभिन्नाभिः प्रकर्षेण भिन्नाभिः। प्रकर्षस्तु शिवशक्तिचक्रमध्ये बैन्दवमानस्य विद्यमानत्वात्, एतच्च समयिमतेन

१. 'लं लभेत्' क. पाठः। २. 'कम्' ख. पाठः। ३. 'मं' ख. पाठः। ४. 'ष्के' ख. पाठः। ५. 'स्रे' ख. पाठः।
६. 'यात्' ख. पाठः। ७. 'भवन' ग. पाठः।

सृष्टिक्रमेण पञ्चचक्रलेखने ज्ञेयम्। कौलमतेन संहारक्रमेण नवयोनिचक्रलेखने ऊर्ध्वाधोमुखतयावस्थितेः प्रभिन्नत्वं ज्ञेयं, तेनोभयं पृथक् पृथक् स्थितम्। शम्भोरिति पञ्चमी। शम्भुशब्देन चत्वारः श्रीकण्ठा उच्यन्ते। नवभिर्नवसंख्यैः। अपिशब्दो वक्ष्यमाणबाहुल्यं समुच्चिनोति। मूलप्रकृतिभिः प्रपञ्चस्य मूलकारणैरत एव तेषां योनिशब्दव्यवहारः। नवयोनयो नवधात्वात्मकाः। तथा चोक्तं कामिकायाम्– "त्वगसृङ्मांसमेदोऽस्थिधातवः शक्तिमूलकाः,। मज्जाशुक्रप्राणजीवधातवः शिवमूलकाः।। नवधातुरयं देहो नवयोनिसमुद्भवः"।। जीवधातूनामजीवाधिष्ठानत्वादोजोधातुरेव जीवधातुरित्युच्यते। यथोक्तं वाग्भट्टेन– "रज आदिशुक्रान्तानां धातूनां प्रसादश्रेष्ठो जीवाधारभूतो धातुरोजः इति (दशमो) धातुरेकैव परा शक्तिस्तदीश्वरी"। दशमी योनिर्बैन्दवस्थानं, तदीश्वरी तस्य देहस्येत्यर्थः।

एवं पिण्डाण्डमुत्पन्नं तद्ब्रह्माण्डं समुद्बभौ। पञ्च तानि च शाक्तानि मायादीनि शिवस्य तु।। १।।
माया च शुद्धविद्या च महेश्वरसदाशिवौ। पञ्चविंशतितत्त्वानि तत्रैवान्तर्भवन्ति ते ।। २।।

एकादशेन्द्रियाणि शब्दादितन्मात्रास्तच्छब्देन परमृश्यन्ते। "शिवशक्त्यात्मकं विद्धि जगदेतच्चराचरम्।" चरं पिण्डाण्डमचरं ब्रह्माण्डमित्यर्थः। हे भगवति चतुर्भिः श्रीकण्ठैः शम्भोः सकाशात् प्रभिन्नाभिः पञ्चभिः शिवयुवतिभिर्नवभिरपि मूलप्रकृतिभिः सार्धं परिणताः सन्तश्चतुश्चत्वारिंशदिति। अत्रेदमनुसन्धेयम्– अत्र चक्रे अष्टाविंशतिर्मर्मस्थानानि सन्धयस्तु चतुर्विंशतिः। ननु मर्माणि चतुर्विंतिरेव कथमष्टाविंशतिः।

द्विरेखासङ्गमस्थानं सन्धिरित्यभिधीयते। त्रिरेखासङ्गमस्थानं मर्म मर्मविदो विदुः।। १।।

इत्यष्टदलषोडशारमेखलात्रयभूपुरत्रयाणां शिवचक्राणां त्रिरेखासङ्गमस्थानत्वाभावेऽपि वाचनिकी मर्मसंज्ञा,। यथोक्तं चन्द्रज्ञानविद्यायाम् –

मन्वस्रद्विदशांराष्टकोणवृत्तचतुष्टयम्। अष्टाविंशतिमर्माणि चतुर्विंशतिसन्धयः।। १।। इति।

रुद्रयामले–

पृश्नयो नाम मुन्याद्याः सर्वे चक्रसमाश्रयाः। सेवमानाश्चक्रविद्यां देवगन्धर्वसेविताम्।। १।।
अंग्नीषोमात्मकं चक्रमग्नीषोममयं जगत्। अग्नवन्तर्बभौ भानुरग्नीषोममयं स्मृतम्।। २।।
त्रिखण्डं मातृकाचक्रं सोमसूर्यानलात्मकम्। त्रिकोणं बैन्दवं सौम्यमष्टकोणं च मिश्रकम्।। ३।।
चतुर्दशारं वह्नेस्तु चतुरस्रं च भानुमत्। एतत्प्रसादादिन्द्राद्या वसवोऽष्टौ मरुद्गणाः।। ४।।
ये ये समृद्धा लोकेस्मिंस्त्रिपुराचक्रसेवकाः। पुरत्रयं च चक्रस्य सोमसूर्यानलात्मकम्।। ५।।
महालक्ष्म्याः पुरं चक्रं तत्रैवास्ते तया शिवः। इति।

भैरवयामले चन्द्रज्ञानविद्यायां गौरीं प्रति महेश्वरेणोक्तम् –

साधु साधु महाभागे पृष्टं त्रैलोक्यसुन्दरि। गुह्याद् गुह्यतमं ज्ञानं न कुत्रापि प्रकाशितम्।। १।।
कलाविद्या पराशक्तिः श्रीचक्राकाररूपिणी। तन्मध्ये बैन्दवस्थानं तत्रास्ते परमेश्वरी।। २।।
सदाशिवेन सम्पृक्ता सर्वसत्त्वातिगा सती। चक्रं त्रिपुरसुन्दर्या ब्रह्माण्डाकारमीश्वरि ।। ३।।
पञ्चभूतात्मकं चैव तन्मात्रात्मकमेव च। इन्द्रियात्मकमेवं च मनस्तत्त्वात्मकं तथा।। ४।।
मायादितत्त्वरूपं च तत्त्वातीतं च बैन्दवम्। बैन्दवे जगदुत्पत्तिस्थितिसंहारकारिणी ।। ५।।

सदाशिवेन सम्पृक्ता तत्त्वातीता महेश्वरी। ज्योतीरूपा वराकारा यस्य देहोद्भवा: शिवे।। ६।।
किरणाश्च सहस्रं च द्विसहस्रं च लक्षणम्। कोटिरर्बुदमेतेषां परा संख्या न विद्यते।। ७।।
तमेवानुप्रविश्येव भाति लोकं चराचरम्। यस्या देव्या महेशानि भासा सर्वं विभासते।। ८।।
यद्भावरहितं किञ्चिन्न च यच्च प्रकाश्यते। तस्याश्च शिवशक्तेश्च चिद्रूपायाश्चितिं विना।। ९।।
आन्ध्यमापद्यते नूनं जगदेतच्चाराचरम् । तेषामनन्तकोटीनां मयूखानां महेश्वरि।। १०।।
मध्ये षष्ट्युत्तरं ते मे त्रिशतं किरणा: शिवे। ब्रह्माण्डं व्यश्नुवानास्ते सोमसूर्यानलात्मना।। ११।।
अग्नेरष्टोत्तरशतं षोडशोत्तरकं रवे:। षट्त्रिंशदुत्तरशतं चन्द्रस्य किरणा: शिवे।। १२।।
ब्रह्माण्डं भासयन्तस्ते पिण्डाण्डमपि शाङ्करि। दिवा सूर्यस्तथा रात्रौ सोमो वह्निश्च सन्ध्ययो:।।१३।।
प्रकाशयन्त: कालं ते तस्मात् कालात्मकास्त्रय:। षष्ट्युत्तरं च त्रिशतं दिनान्येव तु हायन:।।१४।।
हायनात्मा महादेव: प्रजापतिरिति श्रुत:। प्रजापतिर्लोककर्ता मरीचिप्रमुखान् मुनीन्।। १५।।
सृजत्येतांल्लोकपालांस्ते सर्वे लोकरक्षका:। संहारश्च हरायत्त उत्पत्तिर्भवनिर्मिता।। १६।।
रक्षा तु मृडसंलग्ना सृष्टिस्थितिलये शिव:। नियुक्त: परमेशान्या जगदेवं प्रवर्तते।। १७।।

इति। तमेवानुप्रविश्येत्यादिना ''तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं बिभाती'' ति श्रुत्यर्थ उक्त:।।

।। इति श्रीमहामहोपाध्यायभगवत्पूज्यपादश्रीगोविन्दाचार्यशिष्य-श्रीभगवच्छङ्कराचार्यशिष्य-श्रीविष्णुशर्माचार्यशिष्य-श्रीप्रगल्भाचार्यशिष्य-श्रीविद्यारण्ययतिविरचिते श्रीविद्यार्णवाख्ये तन्त्रेऽष्टम: श्वास:।। ८।।



अथ

# श्रीविद्यार्णवतन्त्रे

## नवमः श्वासः



अत्र "मेरुप्रस्तारकं यन्त्रं नित्यातादात्म्यकं स्मृतम्" इत्यत्र मेरुयन्त्रे सृष्टिक्रमेण पूजने तु प्रमाणमुक्तम्। तत्रायमर्थः— मध्याद्यणिमाद्यन्तपूजा सृष्टिपूजा, तत्र मध्यादि षोडशनित्यादीत्यर्थः। अत एव सृष्टिचक्रं षोडशनित्यातादात्म्यम्, तथा संहारचक्रं मातृकातादात्म्यं, स्थितिचक्रं वशिन्यादितादात्म्यमिति भावः। एवं श्रीचक्रराजमुद्धृत्य समष्टिविद्यया पुष्पाञ्जलिं दद्यात्। अथवा लोहरत्नादिनिर्मितं वा श्रीपर्ण्यादिसम्भवे पीठे पुरतः संस्थाप्य पुष्पं दद्यात्। समष्टिविद्या तु-प्रणवतारत्रयपूर्वकं मूलमन्त्रमुच्चार्य समस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुलकौलनिगर्भरहस्यातिरहस्यपरापररहस्ययोगिनी-युतश्रीचक्रपादुकां पूजयामि नमः, इति। प्रोक्तश्रीचक्रोद्धारस्तु उभयमतसाधारणः, परं तु कादिमते चतुरस्रे पूर्वपश्चिमद्वारद्वयमुक्तमिति विशेषः। लोपामुद्रोपासकानां विशेषः भैरवयामले—

लोपामुद्रोपासकैस्तु प्रोक्तश्रीचक्रमध्यतः। बिन्दुमध्ये प्रेतबीजं विलिखेत् परमेश्वरि ॥ १ ॥
तद्बाह्यस्थत्रिकोणेषु पूर्वदक्षिणसौम्यके। द्वारत्रयं प्रकर्तव्यं यथा द्वाराणि भूपुरे ॥ २ ॥
मन्वस्रबाह्यतश्चाष्टदलाग्रेषु महेश्वरि। ग्रन्थयस्तु प्रकर्तव्यास्त्रिशूलाष्टकमेव च ॥ ३ ॥
ग्रन्थयः प्रणवाभ्यां च सम्पुटत्वेन योजिताः। पूर्वादिग्रन्थिषु तथा पूजयेदष्ट भैरवान् ॥ ४ ॥
तदग्रेषु दश प्रोक्तान् बटुकान् पूजयेत् क्रमात्। त्रिशूलेषु महादेवि पूजयेदष्ट भैरवीः ॥ ५ ॥
वृत्तत्रये तु देवेशि भूर्भूवःस्वर्निवासिकाः। योगिनीः पूजयेत् तासां मन्त्रास्तु परमेश्वरि ॥ ६ ॥
पातालवासिनीभ्यस्तु योगिनीभ्यो नमो नमः। भूर्लोकवासिनीभ्यस्तु योगिनीभ्यो नमो नमः॥७॥
भुवर्लोकनिवासाभ्यो योगिनीभ्यो नमो नमः। (स्वर्लोकवासिनीभ्यस्तु योगिनीभ्यो नमो नमः)॥८॥

इति वृत्तत्रये पूज्यमिति विशेषः। अत्र सृष्टिस्थितिसंहारभेदेन प्रस्तारभेदेन च श्रीचक्रभेदा बहवः सन्ति, ते भेदा अग्रे वक्ष्यन्ते—इति तु सङ्क्षेपः। अत्र पात्रासादनपद्धतिर्लिख्यते— तत्र ध्यानमानसपूजान्ते स्वर्णादि पट्टे कुङ्कुमादिना पूजायन्त्रं विलिख्य स्वपुरतः संस्थाप्याभ्यर्च्य पात्रासादनं कुर्यात्। अत्र पूजायां पात्राण्यतीव प्रशस्तानि। तदुक्तं रुद्रयामले—

विना पात्रेण यः कुर्यात् प्रतिष्ठां याज्ञिकी[२] क्रिया। विफला जायते सर्वा वाहनादिधनापहा॥ १ ॥
बलिहीने तु दुर्भिक्षं गन्धहीने त्वभाग्यता। धूपहीने तथोद्वेगं वस्त्रहीने धनक्षयम् ॥ २ ॥
छत्रहीने हरेच्छत्रं वितानेन वको भवेत्। वितानं विमानं, तेन हीने।

---

१. 'वान्' क. पाठः। २. 'कां' ग. पाठः।

वेदिहीने तु नाशः स्यान्नगरस्य पुरस्य च। कलशैर्बन्धुनाशश्च भवेद्वै गिरिकन्यके ।। ३।।

कलशैर्हीने इत्यनुषज्यते।

तोरणानामभावे तु हन्याज्ज्ञातीन् सबान्धवान्। दक्षिणारहिते सर्वं व्यर्थं स्यान्नात्र संशयः।।४।।
मन्त्रविद्याविहीने तु संपूर्णमपि नश्यति । पात्रमन्त्रसमायुक्तं सर्वदोषापहं भवेत्।। ५।।

इति। अन्यत्रापि —

एकपात्रं न कर्तव्यं यदि साक्षान्महेश्वरः। मन्त्राः पराङ्मुखा यान्ति आपदश्च पदे पदे।। १।।
इह लोके दरिद्रः स्यात् परत्र नरकं व्रजेत्। आधारेण बिना भ्रंशो न च तृप्यन्ति देवताः।।२।।

इति तन्त्रान्तरवचनाच्चात्र तावत्पात्रतदाधारतत्प्रमाणतच्छोधनादिविचारः प्रदर्श्यते। तानि पात्राणि तन्त्रराजे— "त्रिलोहकाचमृत्पात्रे त्वेकस्मिन्नर्घ्यकल्पनम्" इति त्रिलोहः स्वर्णरजतताम्राणि। भैरवीतन्त्रे —

पात्रं काञ्चनकाचरूप्यजनितं मुक्ताकपालोद्भवं विश्वामित्रभवं च कामफलदं हैमं श्रिये स्फाटिकम्।
तारं प्रीतिदमिष्टसिद्धिजनकं श्रीनारिकेलोद्भवं कापालं स्फुटमत्रं सिद्धिजनकं मुक्तिप्रदं मौक्तिकम्।। १।।

इति। कुलार्णवे—

हेमरौप्यशिलाताम्रकपालालाबुमृन्मयम्। नारिकेलं च शङ्खं च मुक्ताशुक्तिसमुद्भवम्।। १।।
पुण्यवृक्षकृतं रम्यं पात्रं संलोलितं शुभम्।

इति। भैरवयामले —

तारपात्रं वरारोहे विज्ञेयं चोत्तमोत्तमम्। नारिकेलोद्भवं देवि ज्ञेयं चोत्तममध्यमम्।। १।।
काचपात्रं तु सुश्रोणि ज्ञेयं चोत्तमकन्यसम्। मध्यमोत्तमकं हैमं तारं मध्यममध्यमम्।। २।।
ताम्रपात्रादिकं चैव प्रोक्तं मध्यमकन्यसम्। कन्यसोत्तमकं बैल्वं ब्रह्मवृक्षजमेव च।। ३।।
कन्यसमध्यमं प्रोक्तं मृन्मयं कन्यसाधमम्।

इति। महाहारकतन्त्रे —

शृणु देवि प्रवक्ष्यामि नारिकेलविधिं शुभम्। पुरा वै निर्मितं पात्रं विश्वामित्रेण धीमता।। १।।
विश्वामित्रकपालं[१] तु सर्वपात्रोत्तमोत्तमम्। तस्मिन् सम्पूजयेच्चैव सिद्धयोऽष्टौ भवन्ति हि।।२।।
तस्य दर्शनमात्रेण चैकविंशतिकं कुलम्। उद्धरिष्यत्यसंदेहो गृहस्थो भवति प्रिये।। ३।।
ब्रह्महत्यादिपापानि तथा विश्वासघातकम्। दृष्ट्वा पात्रं नारिकेलं सर्वपापं प्रणश्यति ।। ४।।
कन्याकोटिप्रदानानि तथा हेमशतानि च। यो ददाति महेशानि राहुग्रस्ते दिवाकरे।। ५।।
तत्फलं कोटिगुणितं नारिकेलार्घ्यदानतः। अलाभे तस्य पात्रस्य चान्यपात्रैस्तु पूजयेत्।। ६।।
दृष्ट्वार्घ्यपात्रं देवेशि ब्रह्माद्या देवतागणाः। नृत्यन्ति सर्वयोगिन्यः प्रीताः सिद्धिं ददन्ति च।।७।।

इति। देवीपुराणे —

हेमराजतपात्राणि काष्ठमृच्छैलजानि च। रत्नादीनि च पात्राणि शुभरेखाङ्कितानि च।। १।।
अर्घ्यनैवेद्यपूजार्थं बलिदाने न कल्पयेत्।

१. 'मन्त्र' ग. पाठः। २. 'पात्रं' क. ख. पाठः।

इति। शिवरहस्ये —

हेमपात्रेण[1] सर्वाणि ईहितानि भवन्त्युमे। अर्घ्यं दत्वा तु रौप्येण आयू राज्यं सुतांल्लभेत्।। १।।
ताम्रपात्रेण सौभाग्यं धर्मं मृण्मयसम्भवे। सर्वालाभे तु माहेयं स्वहस्तघटितं यदि ।। २।।
आसनं चार्घ्यपात्रं च भग्नमासादयेन्न तु। सर्वत्र स्वर्णवत् ताम्रमर्घ्यपात्रे ततोऽधिकम्।। ३।।
पात्राधारास्तथा कार्याः पात्राणीवोत्तमानि च। बलिहोमक्रियार्थं हि विना पात्रं न सिद्ध्यति।। ४।।
षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्तितम्। मध्यमं तु त्रिभागोनं कनिष्ठं द्वादशाङ्गुलम्।। ५।।
वस्वङ्गुलविहीनं तु न पात्रं कारयेत् क्वचित्। नाभिविवररूपाणि पुण्डरीकाकृतीनि च।। ६।।
शङ्खनीलोत्पलाभानि पात्राणि परिकल्पयेत्। तत्तद्भूतसमानाभमण्डलाभानि कल्पयेत्।। ७।।
तदुक्तानि फलान्यत्र कारयेत् परमेश्वरि। यादृशं पात्ररूपं स्यादाधारं तादृगानयेत्।। ८।।

इति। देवीयामले—

वश्याकर्षणकर्माणि हेमपात्रे सुरेश्वरि। शान्तिके पौष्टिके चैव राजतं कारयेत् प्रिये।। १।।
लोहपात्रे समुन्नेये मारणोच्चाटने तथा। स्तम्भकार्येषु सर्वेषु विशेषेण तु मृन्मयम्।। २।।
मन्त्राणौषधिचूर्णैश्च घटितं पात्रमुत्तमम्। तत्पात्रेण वरारोहे देवतां यस्तु तर्पयेत्।। ३।।
षण्मासाभ्यन्तरे तस्य मन्त्रसिद्धिः प्रजायते। तथा मन्त्रार्णनक्षत्रवृक्षोत्थं पात्रमुत्तमम्।। ४।।
तेनोत्तमेन पात्रेण तर्पयेत् परदेवताम्। तथैव मन्त्रसिद्धिः स्यान्नात्र कार्या विचारणा।। ५।।
एतत्पात्रद्वयं देवि न वक्तव्यं कदाचन। मन्त्रर्क्षयोनिसम्भूतपात्रं चैवोत्तमोत्तमम्।। ६।।
परसिद्ध्याह्वानकरं तत्पात्रेण च तर्पणम्। पराभिचारशमनं स्वमन्त्राणां च सिद्धिदम्।। ७।।
अक्षरौषधिनक्षत्रयोन्युत्थानि महेश्वरि। पात्राणि श्रीगुरुमुखाज्ज्ञात्वार्चनविधौ क्षिपेत्।। ८।।
सर्वकार्येषु कर्तव्यं वैश्वामित्रं च सुव्रते। काष्ठपात्रं विजानीयान्मन्त्राराधनकर्मणि।। ९।।

इति। कुलार्णवे—

आदौ कुम्भं तथा शङ्खं श्रीपात्रं शक्तिपात्रकम्। गुरुपात्रं भोगपात्रं बलिपात्रमनुक्रमात् ।। १।।
स्ववामाग्रात् तथा स्थाप्यमित्येतत् पात्रपञ्चकम्। अङ्गं[2] वीरं तथा गुह्यं योगिनीपात्रमेव च।।२।।
आत्मनो गणनाथस्य बटुकक्षेत्रपालयोः। प्रोक्षणीसहितानि स्युर्नव पात्राणि सुव्रते ।। ३।।
स्थापयेत् पृष्ठतो देव्या दूतीपात्रचतुष्टयम्। पात्राण्यष्टादशैतानि देव्याः प्रीतिकराणि च।। ४।।
सामान्यार्घ्यविशेषार्घ्यावात्मश्रीचक्रमध्यतः । आद्यपङ्क्तेरधः स्थाप्यौ विधिवत् परमेश्वरि।। ५।।

इति। सामान्यार्घ्यलक्षणं भविष्यपुराणे—

रक्तबिल्वाक्षतैर्पुष्पैर्दधिदूर्वाकुशैस्तिलैः। सामान्यः सर्वदेवानामर्घ्योऽयं परिकीर्तितः।। १।।

रक्तमत्र कुङ्कुमम्।

श्रीमत्त्रिपुरसुन्दर्याः शङ्खं सामान्यकं भवेत्। अन्येषां देवि[3] देवानां सामान्यं चान्यदीश्वरि।।२।।

---

१. 'पात्राणि' क. ख. पाठः। २. 'लयाङ्गपात्रमित्यर्थः'। ३. 'अन्यासामपि' ग. पाठः।

अर्घ्यादिपञ्चपात्राणि तदधः स्थापयेद् बुधः। अर्घ्यपात्रं तु वायव्ये नैर्ऋत्यां पाद्यपात्रकम्॥ ३॥
आग्नेय्यां स्नानकलशमीशे त्वाचमनीयकम्। मध्ये तु मधुपर्कः स्यादित्येत्पात्रलक्षणम्॥ ४॥
आपः क्षीरं कुशाग्राणि अक्षता दधि तण्डुलाः। सहा सिद्धार्थका दूर्वा कुङ्कुमं रोचना निशा॥५॥
अर्घ्योऽयं देवदेव्यास्तु द्वादशाङ्ग उदाहृतः। सिद्धार्थः कुङ्कुमं दूर्वा लोष्टं लामज्जकं शशी॥६॥
अमूनि चात्र द्रव्याणि पाद्यस्य प्रवदन्ति षट्। इति।

सारसङ्ग्रहे— "पाद्यं श्यामकदूर्वाब्जविष्णुक्रान्ताद्भिरुत्तमम्।" इति। तथा —

फलकच्चोरकर्पूरकुष्ठैलोशीरकाणि च। अमून्याचमनीयस्य द्रव्याणि प्रवदन्ति षट् ॥ १॥
मधुपर्के घृतं क्षौद्रं दधि प्रोक्तं मनीषिभिः। दध्यभावे पयः कार्यं मध्वभावे तथा गुडः॥ २॥
घृते प्रतिनिधिर्नास्ति जलं तत्र समाचरेत्। अष्टगन्धं समालोड्य स्नानाम्भः साधु साधयेत्॥३॥
पयोदधिघृतानां च शर्कराक्षौद्रयोस्तथा। पृथक् पात्राणि पञ्च स्युरेकं पञ्चामृतस्य च॥ ४॥
षट् पात्राणि विशिष्टानि पुनराचमनीयकम्। सप्तमं कोष्ठ्यतोयस्य चाष्टमं नवमं तथा॥ ५॥
उद्वर्तनस्य देवेशि दशमं शुद्धपाथसः। एतानि दश पात्राणि सौरे शैवे च वैष्णवे॥ ६॥
गाणपत्ये च मुख्यानि उपपात्राणि शाक्तके। अर्घ्यादिपञ्चपात्राणि त्रिधा संस्थापयेद् बुधः॥ ७॥
पुनराचमनीयस्य पात्रद्वयमुदाहृतम्। पञ्चायतनपूजायां पञ्चधार्घ्यादिपञ्चकम् ॥ ८॥
विशेषावरणं देवि विशेषार्घ्येण तर्पयेत्। सामान्यावरणं देवि सामान्यार्घ्येण सुन्दरि ॥ ९॥
श्रीपात्रस्थामृतेनैव देवीनां पूजनं भवेत्। शक्तीनां शक्तिपात्रेण गुरूणां गुरुपात्रतः ॥ १०॥
योगिनीनां चतुःषष्टिं नवावरणयोगिनीः। योगिनीपात्रतोयेन तर्पयेत् कुलनायिके ॥ ११॥
अन्यानि भोग्यवस्तूनि भोगपात्रेण साधयेत्। भैरवस्य च पात्रेण भैरवांस्तर्पयेद् बुधः॥ १२॥
वटुकस्य च पात्रेण वटुकांस्तर्पयेत् ततः। बलिपात्रेण देवेशि बल्युत्सर्जनमाचरेत् ॥ १३॥
वाराहीकुरुकुल्लादिबलिदेवीश्च तर्पयेत्। अत्रादिपदेन नवदुर्गाबलिः।
पञ्चभूतबलिं चैव सर्वभूतबलिं तथा। राजराजेश्वरस्यापि बलिं तेनैव कारयेत् ॥ १४॥
वीराणां वीरपात्रेण तर्पणं समुदाहृतम्। गुह्यपात्रामृतेनैव तर्पयेद् गुह्ययोगिनीः ॥ १५॥
भोगाङ्गं भोगपात्रेण लयाङ्गं चाङ्गपात्रतः। ऊर्ध्वाम्नायक्रमं चैव श्रीविद्यावृन्दपूजनम् ॥ १६॥
विशेषार्घ्येण देवेशि तर्पयेद् भक्तिभावतः। अन्तर्यागं चात्मपूजां चान्तर्हवनमेव च ॥ १७॥
आत्मपात्रस्थतोयेन कुर्याद् देशिकसत्तमः। दूतीयागे प्रयोक्तव्यं दूतीपात्रचतुष्टयम् ॥ १८॥
कुलसद्भावभावाय शक्तिपात्राणि सुन्दरि। पञ्च वा षट् च सप्ताष्टौ नव वा स्थापयेद् बुधः॥ १९॥
खण्डितं स्फुटितं दग्धं मानहीनमसुन्दरम्। अपवित्रं करोद्भ्रष्टं पशुस्पृष्टं विवर्जयेत्॥ २०॥
सदा शुद्धाम्लतोयेन प्रक्षाल्य स्थापयेद् बुधः। न कुर्यात् पात्रसाङ्कर्यं द्रव्याणां च विशेषतः॥२१॥
ऊर्ध्वाम्नायगुरून् देवि विशेषार्घ्येण तर्पयेत्। रश्मिचक्रं च देवेशि नान्यपात्रेण तर्पयेत्॥ २२॥

अन्यस्य गुरुवर्गस्य गुरुपात्रेण तर्पणम्। पात्रं यत्र भवेत् तत्र प्रोक्षण्यद्भिः समाचरेत्।। २३।।
समष्टिव्यष्टियजनं शङ्खतोयेन वै भवेत्। क्षेत्राधिपस्य पात्रेण क्षेत्रपालबलिर्भवेत् ।। २४।।
गणनाथस्य पात्रेण गणेशस्य बलिर्भवेत्। मध्यदेव्या बलिं देवि श्रीपात्रेण विसर्जयेत्।। २५।।
श्रीविद्याया महेशानि पूजायां च विशेषतः। बल्याधाराणि पात्राणि शृणु वक्ष्ये समासतः।।२६।।
श्रीगुरोर्बलिपात्रं च वाराह्या बलिपात्रकम्। त्रीणि वै कुरुकुल्लाया बटुकादेश्चतुष्टयम्।। २७।।
पञ्च वै पञ्चभूतानामेकं भूतबलेस्ततः। राजराजेश्वरस्यैकमेकं देव्यास्ततः परम् ।। २८।।
एकं तु नव[1]दुर्गाया धूपदीपात्रसंयुतम्। इत्यष्टादश पात्राणि सर्वविघ्नहराणि च ।। २९।।
पात्रपञ्चकमाख्यातं सिद्धद्रव्यस्य शोधने। पूजाद्रव्यस्य रचनद्रव्यार्थं चैकपात्रकम् ।। ३०।।

''कस्तूरिकागरुसुधाकरकुण्डगोलोत्थजाङ्गलगुडैः सपटीरपङ्कैर्युक्तैः स्वयम्भूकुसुमेने''ति योगिनीतन्त्रवचनात्।

अन्यानि भोग्यवस्तूनां गन्धादीनां विशेषतः। मनोहराणि पात्राणि स्थापयेत् पूजयेदपि।। ३१।।
मार्तण्डस्यार्घ्यदाने तु बृहदर्घ्यं महेश्वरि। एकं प्रस्थजलाग्राहि एकं तर्पणपात्रकम्।। ३२।।
द्वारादिपूजने शस्तमेकं सामान्यपात्रकम्। तदेव रविपूजायां सामान्यार्घ्यं भवेत्प्रिये।। ३३।।
पिधानोद्धरणीयुक्तं कलशानां चतुष्टयम्। दुकूलवस्त्रसंवीतं बृहदाधारसंयुतम् ।। ३४।।
शुद्धोदकामृतक्षीरसमयामृतपूरितम्। स्ववामाग्रात् ततः स्थाप्यं देव्या दक्षिणभागतः ।। ३५।।

इति। शुद्धोदककलशलक्षणं तु मत्स्यपुराणे—

............................ दध्यक्षतसमन्वितम्। पञ्चरत्नसमायुक्तं पञ्चभङ्गदलान्वितम्।। १।।

पञ्च भङ्गदलानि —

चूताश्वत्थवटप्लक्षोदुम्बराणां च पल्लवाः। स्थापयेदव्रणं कुम्भं वरुणं तत्र विन्यसेत्।। २।।
गङ्गाद्याः सरितः सर्वाः समुद्रांश्च सरांसि च। गजाश्वरथ्यावल्मीकसङ्गमह्रदगोकुलात् ।। ३।।
मृदमानीय राजेन्द्र सर्वौषधिसमन्विताम्। स्नानार्थं विन्यसेत् तत्र यजमानश्च धर्मवित्।। ४।।
सर्वे समुद्राः सरितः सरांसि च नदा ह्रदाः। आयान्तु यजमानस्य दुरितक्षयकारकाः।। ५।।

इति। रुद्रयामले —

श्रीकामस्तु न्यसेत् सम्यग्देशवृत्तिकरं शुभम्। काञ्चनं घृतगोधूमान् दूर्वारोचनया सह।। १।।
एतानि पञ्च द्रव्याणि सर्वेषु कलशेषु च। विशेषार्घ्यादिपात्रेषु श्रीपात्रेषु विशेषतः।। २।।
दद्याच्छ्रीकीर्तिसारोग्यपुत्रायुर्जयसिद्धये।

इति। देवीपुराणे —

अग्निर्ब्रह्मा भवानी च गजवक्त्रो महोरगः। स्कन्दो भानुर्मातृगणा दिक्पालाश्च नवग्रहाः।। १।।
एषां घटेषु प्रत्येकं पूजयित्वा यथाविधि।

इति। गौतमीये —

---

१. 'वनदु' क. ख. पाठः।

हैमं रौप्यं तथा ताम्रं मार्तिक्यं वा स्वशक्तितः। षट्त्रिंशदङ्गुलं कुम्भं विस्तारोन्नतिशालिनम्॥ १॥
षोडशं द्वादशं वापि ततो न्यूनं न कारयेत्। अर्घ्यस्य त्रीणि पात्राणि पाद्यस्यापि त्रयं भवेत्॥२॥
तथैवाचमनीयानि पात्राणि च विभागशः।

इति। भैरवीतन्त्रे —

यो वाष्टाङ्गार्घ्यमापूर्य देव्या मूर्ध्नि निवेदयेत्। दशवर्षसहस्राणि दुर्गालोके महीयते ॥ १॥
आपः क्षीरं कुशाग्राणि दधि सर्पिः सतण्डुलाः। तिलाः सिद्धार्थकाश्चैव अष्टाङ्गार्घ्यः प्रकीर्तितः॥२॥
दारवेणार्घ्यपात्रेण दत्त्वार्घ्यं विधिवन्नरः। देव्यै तदा महाराज अग्निष्टोमफलं लभेत् ॥ ३॥
ताम्रपात्रार्घ्यदानेन पुण्डरीकफलं लभेत्। रौप्यपात्रेण दत्त्वा वै विष्णुयागफलं लभेत् ॥ ४॥
अर्घ्यं दत्त्वा तु रौप्येण आयू राज्यं शुभं लभेत्। दत्त्वा सौवर्णपात्रेण लभेद्बहु सुवर्णकम्॥५॥
हेमपात्रेण सर्वाणि ईहितानि लभेन्मुने।

इति। भैरवयामले —

पात्रद्वयं तु निर्माल्यवासिन्याः शिवदिक्स्थितम्। पञ्चायतनपूजायां दश पात्राणि वै क्षिपेत्॥ १॥

इति। भैरवीतन्त्रे —

छागादिबलिदाने तु नव पात्राणि स्थापयेत्। बलिपात्राणि[१] पञ्च स्युः रुधिरस्यैकपात्रकम्॥ १॥
अपरं मांसखण्डानां मस्तकाधारमेव च। एकं पक्वस्य मांसस्य..............................॥२॥

इति। रुद्रयामले —

अर्घ्यादिपञ्चपात्राणि कुमारीपूजने पृथक्। स्थापनीयानि यत्नेन यदीच्छेत् सिद्धिमात्मनः॥ १॥

इति। वाराहीतन्त्रे —

दम्पतीयजने चैव सुवासिन्याः प्रपूजने। योगिनीनां समर्चायां पञ्चाशन्मिथुनार्चने॥ १॥
यजने कालनित्याया धातुदैवतपूजने। गुरुमण्डलपूजायां दिनेशानां तथैव च ॥ २॥
वारेशार्चननक्षत्रदेवतार्चनयोस्तथा। अक्षरौषधिपूजायां जपमालाप्रपूजने ॥ ३॥
पुस्तकस्य च पूजायामग्निपूजाविधौ तथा। अर्घ्यादिपञ्चपात्राणि सम्पाद्यानि पृथक् पृथक्॥ ४॥

इति। कुण्डप्रकाशे —

होमे तु दश पात्राणि आज्यस्थालीद्वयं तथा। चरुस्थालीद्वयं चैव प्रणीता प्रोक्षणी तथा॥ १॥
स्रुक्स्रुवौ पूर्णपात्रं च होमद्रव्यस्य चापरम्। मुख्यान्येतानि पात्राणि..........................॥२॥

इति। नारदीये —

देवाग्रतः स्ववामाग्रे त्रिकोणं चन्दनाम्भसा। वृत्तेन वेष्टितं बाह्ये चतुरस्रेण चैव हि॥ १॥
विरच्य मुद्रया मत्स्यरूपया साधको भुवि। इति।

सारसङ्ग्रहे—

---

१. 'नव पात्राणि' क. पाठः। 'बलिपात्रेण' ग. पाठः।

त्रिकोणं वृत्तसंवीतं चतुरस्रेण वेष्टितम्। गन्धलिप्ते स्ववामाग्रे विदध्यान्मत्स्यमुद्रया।। १।।
सम्पूज्य गन्धैर्देवार्घ्यमण्डलाय नमोऽणुना। अङ्गानि चतुरस्रस्य कोणेषु पुरतस्तथा।। २।।
दिक्षु चास्त्रं समभ्यर्च्य शङ्खाधारं प्रविन्यसेत्। मूलेन क्षालितं शङ्खाधारं संस्थापयामि च।। ३।।
कालं सबिन्दुकं तद्वद्भुजङ्गेशं समुद्धरेत्। वह्न्यन्ते मण्डलायेति तथा धर्मप्रदेति च।। ४।।
दशकलात्मने प्रोक्त्वा नमो गन्धादिभिर्यजेत्। वह्नेर्दश कलास्तत्र प्रादक्षिण्येन पूजयेत्।। ५।।

इति। कुलार्णवे —

आधारेण विना भ्रंशो न च तृप्यन्ति मातरः। तस्माद् विधिवदाधारं कल्पयेत् कुलनायिके।। १।।
आधारं त्रिपदं प्राहुः षट्पदं वा चतुष्पदम्। अथवा वर्तुलाकारं कुर्याद् देवि मनोहरम्।। २।।

इत्येतानि सामान्यवचनानि, विशेषस्तु प्रागेवाभिहितः। रुद्रयामले —

धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी। सुश्रीः स्वरूपा[1] कपिला हव्यकव्यवहे तथा।। १।।
वह्नेश्चैताः कला ज्ञेया दश धर्मप्रदाः मताः।

इति। सारसङ्ग्रहे —

अस्त्रेण क्षालितं शङ्खं तत्र संस्थाप्य पूजयेत्। शङ्खमानं तु प्रादेशं चतुरङ्गुलमुच्छ्रितम्।। १।।
अर्घ्यपात्रमिति प्रोक्त्वा स्थापयामीति मन्त्रतः। अहमर्थप्रदायेति वदेत द्वादशेत्यपि।। २।।
कलात्मने पदं प्रोक्त्वा अर्घ्यपात्राय हृन्मनुः। अनेन शङ्खमभ्यर्च्य कलाः सूर्यस्य पूजयेत्।।३।।

इति। यामले —

तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः। सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा।।१।।
एता द्वादश सम्पूज्या रवेरर्थप्रदाः कलाः। इति।

सारसङ्ग्रहे —

ततः सुधामयैस्तोयैर्मूलान्ते मातृकां पठन्। विलोमां पूजयेत्तत्र[2] पूजकौ मनुनामुना।। १।।
अर्घ्यपात्रं पूरयामीत्युक्त्वा सम्पूरयेत् ततः।

इति। शारदातिलके —

.........................बिन्दुस्रुतसुधामयैः। तोयैः सुगन्धिपुष्पाढ्यैः पूजयेत्तं यथाविधि।। १।।

बिन्दुर्भ्रूमध्यं तत्र चन्द्रमण्डलस्य विद्यमानत्वात्। सारसङ्ग्रहे —

कर्णचन्द्रौ बिन्दुयुक्तौ कामप्रदपदं ततः। षोडशान्ते कलाशब्दमात्मने नम इत्यथ।। १।।
गन्धपुष्पैः समभ्यर्च्य कलाषोडशकं यजेत्।

इति। कर्ण उकारः, चन्द्रः सकारो, बिन्दुरनुस्वारस्तेन उँसँ इति। यामले—

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः। शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा।। १।।
पूर्णा पूर्णामृता कामदायिन्यः स्वरगाः कलाः। सोममण्डलमध्यस्थाः...........................।।२।।

---

१. 'सुरूपा' ग. पाठः। २. 'तस्मिन्' क. पाठः।

इति। सारसङ्ग्रहे —

प्राग्वत्तीर्थं समावाह्य मूलमन्त्रेण तत्र च। संयोज्य नेत्रमन्त्रेण पुष्पं न्यस्य शिखाणुना।। १ ।।
प्रदर्श्य गालिनीमुद्रां मुद्रया धेनुसंज्ञया। अमृतीकृत्य विधिवत् सुधाबीजेन साधकः ।। २ ।।
ध्यात्वेष्टदेवतां तत्र सकलीकृत्य देशिकः। अङ्गन्यासेन चास्त्रेण कलयेच्च दिशो दश ।। ३ ।।
नेत्रमन्त्रेण संवीक्ष्य मुद्रया शङ्खसंज्ञया। अवष्टभ्य (गुण्ठ्य) तदुद्दीप्य मुद्रया योनिरूपया।।४।।
गन्धपुष्पादिभिस्तत्र पूजयेदिष्टदेवताम्। षडङ्गानि च सम्पूज्य मन्त्रयेन्मूलमन्त्रतः।। ५ ।।
अष्टकृत्वस्ततश्चार्घ्यं छादयेन्मत्स्यमुद्रया।

इति। नारदीये— ''वीक्षणं नेत्रमन्त्रेण न चेन्मूलेन मन्त्रवित्।'' इति मूलेनेति पञ्चाङ्गपरं तत्र नेत्रमन्त्राभावात्। अत्रापि सर्वत्र तत्तदङ्गमन्त्राणामेवोपादानं हृदयादिपदैरिति अङ्गरूपैः[१]। कवचेनावगुण्ठ्येति तत्तन्मुद्रयेति शेषः। सारसङ्ग्रहे— ''तच्छङ्खस्थं जलं किञ्चित् कुम्भतोये विनिक्षिपेत्'' इति। शारदातिलके—

अर्घ्यस्योत्तरतः कार्यं पाद्यं साचमनीयकम्। मधुपर्कं च संस्थाप्य त्रिकोणेषु यथाक्रमम्।। १ ।।
एकैकपात्रं[२] मन्त्रेण ह्यष्टकृत्वोऽभिमन्त्रयेत्।

इति। उत्तरतन्त्रे— ''तद्दद्यात् कांस्यपात्रेण रौक्मश्वेतभवेन वा।'' इति श्वेतं रूप्यम्। वाराहपुराणे—

परमं यत्परं धाम मधुसंज्ञं तदुच्यते। तदाप्यते यदा तेन मधुपर्कः सदा स्मृतः।। १ ।।

इति। शारदायाम् —

दक्षिणे प्रोक्षणीपात्रमाधायाद्भिः प्रपूरयेत्। किञ्चिदर्घ्याम्बु सङ्गृह्य प्रोक्षण्यम्भसि निक्षिपेत्।। १ ।।

इति। नारदपाञ्चरात्रे— ''पुनराचमनीयार्थे पात्रं संस्थापयेत्ततः।'' इति प्रपञ्चसारे—

गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः। दूर्वा चेति क्रमादर्घ्यद्रव्याष्टकमुदीरितम्।। १ ।।

इति। अक्षतास्तण्डुलाः। नारदपाञ्चरात्रे विष्णोरर्घ्यमुक्तम् —

सिद्धार्थकास्तिला दूर्वाः सयवास्तिलतण्डुलाः। तोयक्षीरघृतोपेतमिदमर्घ्यमुदाहृतम्।।

इति। सिद्धार्थाः सर्षपाः। दूर्वाः पत्त्रत्रयान्विताः। ''पत्त्रत्रयान्विता दूर्वाः प्रशस्ता अर्घ्यकर्मणि।'' इति। सोमशम्भुवचनात्। प्रपञ्चसारे—

पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते। जातीलवङ्गकक्कोलैर्मतमाचमनीयकम्।।

जाती जातीफलम्। ''तथाचमनपात्रेऽपि दद्याज्जातीफलं मुने।'' इत्यगस्त्यसंहितावचनात्। जातीफलादीनि चूर्णितानि देयानि। ''चूर्णयित्वा यथान्यायं दद्यादाचमनीयकम्।'' इति फेत्कारिणीतन्त्रवचनात्। लिङ्गपुराणे—

कुशाग्राण्यक्षताश्चैव यवव्रीहितिलानि च। आज्यसिद्धार्थपुष्पाणि भसितं चार्घ्यपात्रके।। १ ।।
कुशपुष्पयवव्रीहिबहुमूलतमालकम् । दापयेत् प्रोक्षणीपात्रे भसितं प्रणवेन च।। २ ।।
उशीरं चन्दनं चैव पाद्ये चैव प्रकल्पयेत्। जातीकक्कोलकर्पूरबहुमूलतमालकम्।। ३ ।।
चूर्णयित्वा यथान्यायं क्षिपेदाचमनीयकम्। बहुमूलं दूर्वा।

---

१. 'त्यगस्त्यः' क. पाठः। २. 'त्रम' ग. पाठः।

सहस्रपरमा देवि शतमूला शताङ्कुरा। सर्वं हरतु मे पापं दूर्वा दुःस्वप्ननाशिनी।। १।।

शतशब्दस्य बहुत्ववाचकत्वात्। प्रपञ्चसारे—"शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम्।" इत्यत्र शुद्धाभिरित्युक्तेर्जात्यादि न देयमित्यवगम्यते। अर्घ्यादिद्रव्यालाभे तु शौनकः— "एषामभावे पुष्पादि तत्तद्भावनया क्षिपेत्।" इति। मन्त्रतन्त्रप्रकाशे— "द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः।" इति। भसितं तु शिवपूजायामेव। आद्याचारे (आद्याभावे) तु अनुकल्पास्तत्प्रमाणवचनानि च तत्प्रयोगे प्रदर्श्यन्ते।।

अथ पात्रासादनप्रयोगः— तत्रादौ शुद्धोदककलशस्थापनमत्र कालीमते प्रथमतः शङ्खस्थापनं कृत्वा तदनन्तरं कलशस्थापनं विधेयम्। कुलार्णवे —

शङ्खस्य वामभागे तु कलशस्थापनं भवेत्। मण्डले स्थापयेत् कुम्भं सौवर्णं राजतं तथा।। १।।
ताम्रं भूमिमयं वापि यद्वा लोहजवर्जितम्।

इति। कादिमते तु "आदौ कुम्भं तथा शङ्ख "मित्यादिरीत्या विधेयम्, इदं तु दीक्षायां वैपरीत्यं बोध्यम्। अत्र यथागुरूपदेशं कार्यमिति। स्ववामभागे त्रिकोणषट्कोणवृत्तचतुरस्रमण्डलं विरच्य पाशुपतास्त्रेण तन्मण्डलं प्रोक्ष्य ओंह्रींआधारशक्तये नमः इति त्रिकोणे, ओंअखण्डमण्डलाय नमः इति षट्कोणे, ओं सूर्यमण्डलाय नम इति वृत्ते, ओंसर्वतोव्यापकमण्डलाय नम इति चतुरस्रे, इति। कोणेषु कामरूपपीठाय नम इति त्रिकोणे, पूर्णगिरिपीठाय नम इति षट्कोणे, ओं जालन्धरपीठाय नम इति वृत्ते, ओं उडियानपीठाय नम इति चतुरस्रे,— इति सम्पूज्य, षट्कोणे मूलविद्यायाः षडङ्गानि, त्रिकोणकोणेषु मूलविद्यायाः कूटत्रयं, मध्ये सम्पूर्णमूलविद्यां पुनर्व्यस्तसमस्तकूटैर्मण्डलचतुष्टयं सर्वमेव पूजयेत्। ततः पाशुपतास्त्रेण सुवर्णादिनिर्मितमाधारं प्रक्षाल्य मण्डलोपरि संस्थाप्य ओंऐंह्रींश्रींमं धर्मप्रददशकलात्मने वह्निमण्डलाय श्रीपरदेवतायाः कलशाधाराय नमः, इति तदुपरि सम्पूज्य, तत्र वह्नेर्दश कला वृत्ताकारेण पूजयेत्। ४ यं धूम्रार्चिषे नमः, ४ रं ऊष्मायै नमः, ४ लं ज्वलिन्यै नमः, ४ वं ज्वालिन्यै नमः, ४ शं विस्फुलिङ्गिन्यै नमः, षं सुश्रियै नमः, ४ सं सुरूपायै नमः, ४ हं कपिलायै नमः, ४ ळं हव्यवहायै नमः, ४ क्षं कव्यवहायै नमः— इति सम्पूज्य "अभयेष्टकरा रक्ता आग्नेय्यो धर्मदाः कलाः" इति रीत्या ध्यात्वा, वह्नेः कला इहागच्छतागच्छतेति क्रमेणावाह्य वह्निकलानां प्राणा इह प्राणा इत्याद्यमुष्यपदस्थानयोजितप्राणप्रतिष्ठाविद्यया तासां प्राणप्रतिष्ठां विधाय, तदुपरि हेमादिनिर्मितं सुलक्षणं रक्तवस्त्रग्रीवं रक्तचन्दनचर्चितं पाशुपतास्त्रेण प्रक्षालितं कलशं संस्थाप्य, तत्र ४ अं अर्थप्रदद्वादशकलात्मने सूर्यमण्डलाय श्रीपरदेवतायाः कलशाय नमः, इति सम्पूज्य, सूर्यस्य द्वादशकला वृत्ताकारेण पूजयेत्। ४ कंभं तपिन्यै नमः, ४ खबं तापिन्यै नमः, ४ गंफं धूम्रायै नमः, ४ घंपं मरीच्यै नमः, ४ ङनं ज्वालिन्यै नमः, ४ चंधं रुच्यै नमः, ४ छंदं सुषुम्नायै नमः, ४ जंथं भोगदायै नमः, ४ झंतं विश्वायै नमः, ञंणं बोधिन्यै नमः, ४ टंढं धारिण्यै नमः, ठंडं क्षमायै नमः,— इति सम्पूज्य, "अभयेष्टकराः पीताः सौरा अर्थप्रदाः कलाः" इति रीत्या ध्यात्वा, प्राग्वत्तासां प्राणप्रतिष्ठां विधाय तन्मध्ये विलोममातृकासहितां मूलविद्यामुच्चरन् शुद्धोदकमापूर्य, ४ उं कामप्रदषोडशकलात्मने सोममण्डलाय श्रीपरदेवतायाः कलशामृताय नमः इति सम्पूज्य, सोमस्य षोडश कला वृत्ताकारेण पूजयेत्। ४ अं अमृतायै नमः, ४ आं मानदायै नमः, ४ इं पूषायै नमः, ४ ईं तुष्ट्यै नमः, ४ उं पुष्ट्यै नमः, ४ ऊं रत्यै नमः, ४ ऋं धृत्यै नमः, ४ ॠं शशिन्यै नमः, ४ ऌं चन्द्रिकायै नमः, ४ ॡं कान्त्यै नमः, ४ एं ज्योत्स्नायै नमः, ४ ऐं श्रियै नमः, ४ ओं प्रीत्यै नमः, ४ औं अङ्गदायै नमः, ४ अं पूर्णायै नमः, ४ अः पूर्णामृतायै

नमः— इति सम्पूज्य "अभयेष्टकराः श्वेताः सौम्याः कामप्रदाः कलाः" इति क्रमेण ध्यात्वा, प्राग्वत्तासां प्राणप्रतिष्ठां विधाय तन्मध्येऽधिबिन्द्वक्षतगजाश्वरथ्यावल्मीकसङ्गमह्रदगोकुलमृदः[१] काञ्चनगोघृतगोधूमदूर्वारोचनसर्वौषधीः संस्थाप्य, ४ अग्नये नमः, ४ ब्रह्मणे नमः, ४ भवान्यै नमः, ४ गजवक्त्राय नमः, ४ महोरगाय नमः, ४ स्कन्दाय नमः, ४ भानवे नमः, ४ मातृ[२]गणेभ्यो नमः, ४ दिक्पालेभ्यो नमः, ४ नवग्रहेभ्यो नमः, इति तज्जले सम्पूज्य तन्मध्ये[३] गन्धाष्टकं निक्षिप्य, तत्र ४ वं वरुणाय नमः, इति वरुणं पञ्चोपचारैराराध्य,

सर्वे समुद्राः सरितः सरांसि च नदा ह्रदाः। आयान्तु यजमानस्य दुरितक्षयकारकाः॥ १ ॥

इति। क्रोमित्यङ्कुशमुद्रया तीर्थान्याकृष्य

गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु॥ १ ॥

इत्यावाह्यावाहनादिपरमीकरणान्ता मुद्राः प्रदर्श्य, मूलमन्त्रेण वीक्ष्यास्त्रेण प्रोक्ष्य, तेनैव कुशैस्त्रिः सन्ताड्य कवचेनावगुण्ठ्य, वमिति धेनुमुद्रयामृतीकृत्य, तन्मुखे पञ्च पल्लवान्निक्षिप्य,

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्थिताः॥१ ॥
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः॥ २॥
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः।

इति ध्यात्वा, तदुपरि उद्धरणीसहितपिधानपात्रं संस्थाप्य सूक्ष्मवस्त्रेणाच्छादयेत्, इति शुद्धोदककलशस्थापनविधिः॥ अत्र क्षीरकलशस्थापनविधिस्तु शुद्धोदककलशस्थापनवदेव बोध्यः॥ ततो दूतीपात्रचतुष्टयं गृहीत्वा कुलगेहे गत्वा तत्र दूतीयजनं विधिवदाचर्य्य तदुत्पन्नकुण्डगोलाख्यं द्रव्यं गौप्येनैकैकस्मिन्पात्रे कृत्वा तदानीय, स्वाग्रे स्थापयित्वा, तत्रैवाद्यादिचतुष्टयमपि पृथक् पृथक् पात्रचतुष्टये संस्थाप्य पञ्चपात्रस्थद्रव्यपञ्चकस्य संस्कारं कुर्यात्। तद्यथा— तत्रादावाद्यस्य संस्कारः —

एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम्। कचोद्भवां ब्रह्महत्यां तेन ते.नाशयाम्यहम् ॥ १ ॥
सूर्यमण्डलसम्भूते वरुणालयसम्भवे। अमाबीजमये देवि शुक्रशापाद्विमुच्यताम्॥ २॥
वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि। तेन सत्येन मे देवि ब्रह्महत्यां व्यपोहतु॥ ३॥

ॐ ४ "वांवींवूंवैंवौंवः ब्रह्मशापविमोचिकायै सुधादेव्यै नमः" इति तदुपरि दशधा जपेत्। ४ "ह्रींश्रींक्रांक्रीं— क्रूंक्रैंक्रौंक्रः ब्रह्मशापं विमोचय अमृतं (स्रावय २) स्वाहा" इति दशधा जपेत्। ततो मूलविद्यां तदुपर्यष्टधा जपेदित्याद्यशुद्धिः॥ अथ द्वितीयशोधनम्—४ "ॐ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा॥" ४ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्" इति तदुपरि दशधा प्रजप्य मूलविद्यामपि दशधा जपेदिति द्वितीयशोधनम्॥ अथ तृतीयशोधनम्—४ "ओं त्र्यम्बकं[४] यजमाहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्" इति तदुपरि दशधा प्रजप्य मूलमन्त्रमपि दशधा जपेदिति तृतीयशोधनम्॥ अथ चतुर्थशोधनम्—

कृसरं मण्डलाकारं चन्द्रबिम्बनिभं शुभम्। चरुकं च मनोहारि शर्कराद्यैश्च पूरितम्॥ १ ॥
पूजाकाले देवताया मुद्रैषा परिकीर्तिता।

तच्छोधनं तु—४ "ओं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम्॥" इति तदुपरि दशधा प्रजप्य मूलविद्यामपि दशधा जपेदिति चतुर्थशोधनम्॥ अथ

१. 'लात्' ग. पाठः। २. 'तृका' क. पाठः। ३. 'पूजन्मध्ये' क. पाठः। ४. 'त्रियम्बकं'

पञ्चमशोधनम्—४ "ओं अमृते अमृतोद्भवे अमृतवर्षिणि शुक्रशापं प्रमोचय अमृतं स्रावय २ अमृतं कुरु २ स्वाहा" इति तदुपरि दशधा प्रजप्य मूलविद्यामपि दशधा जपेत्, इति पञ्चमशुद्धिः।। एवं सामान्यतः पञ्च द्रव्याणि संशोध्य घटादिपात्रेषु निक्षिप्य विशिष्य द्वितीयवारं शोधयेत्। ततो देवीपूजान्ते आत्मसमर्पणसमये तृतीयवारं शोधयित्वात्मसमर्पणं कुर्यात्। तच्च श्रीगुरुमुखादवगन्तव्यम्।

तदुक्तं कुलार्णवे—

आसवं पललं मत्स्यं मुद्रा गोलोत्थमेव च। एतानि पञ्च द्रव्याणि त्रिधा संशोधयेत्ततः।। १।।
शुद्ध्यन्ति नान्यथा देवि न चेदुक्तं प्रयाति च। इति।

त्रिप्रकारशोधनं न चेद् उक्तं श्रुतिस्मृतिपुराणादौ उक्तमेतत्पञ्चद्रव्यसंसर्गप्रयुक्तदोषं प्रयाति प्राप्नोतीत्यर्थः। दूतीयागविधिस्तु स्थूलपद्धत्यादौ बोद्धव्यः। स्वयम्भूशोधनं तु गोलोत्थशोधनवत् ज्ञेयम्।। अथ समयाशोधनं कुलार्णवे—

संविदासवयोर्मध्ये संविदेव गरीयसी। संवित्प्रयोगः कर्तव्यः पूजादौ साधकोत्तमैः।। १।।
कर्तव्या च महापूजा करणीयासुनिश्चितैः। इति

अयं प्रयोगः कुलीनैः सर्वत्र पूजादौ कर्तव्यः। अन्यत्रापि— "आनन्देन विना भ्रंशो न च तृप्यन्ति देवताः।" इति। सा च ब्राह्मणी क्षत्रिया वैश्या शूद्रा— इति चतुर्विधा शुक्लरक्तपीतकृष्णपुष्पभेदैः।

तासां शुद्धयस्तु —

संविदे ब्रह्मसम्भूते ब्रह्मपुत्रि सदानघे। भैरवाणां च तृप्त्यर्थं पवित्रा भव सर्वदा।। १।।

"ॐ ब्राह्म्यै नमः स्वाहा" इति तदुपरि दशधा प्रजप्य मूलमन्त्रमप्यष्टधा जपेदिति ब्राह्मीशुद्धिः।

सिद्धिमूलकरे देवि मूलबोधप्रबोधिनी। राजपुत्रवशङ्करि शत्रुकण्ठत्रिशूलिनि।। १।।

"ऐं क्षत्रियायै नमः स्वाहा" इति दशधा प्रजप्य मूलमप्यष्टधा जपेत्— इति क्षत्रियाशुद्धिः।।

अज्ञानेन्धनदीपाग्रे ज्ञानाग्रे ज्ञानरूपिणी। आनन्दाद्याहुतिं मत्वा सम्यग् ज्ञानं प्रयच्छ मे।। १।।

"ह्रींवैश्यायै नमः स्वाहा" इति दशधा प्रजप्य मूलमप्यष्टधा जपेदिति वैश्याशुद्धिः।।

नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि। त्रैलोक्यविजये मातः समाधिफलदा भव।। १।।

"श्रीं शूद्रायै नमः स्वाहा" इति दशधा प्रजप्य मूलमष्टधा जपेदिति शूद्राशुद्धिः।। अथ सामान्यतः सर्वासां शोधनप्रकारस्तु—मूलेन वीक्ष्यास्त्रेण प्रोक्ष्य, तेनैव कुशदूर्वादिना त्रिः सन्ताड्य, कवचेनावगुण्ठ्य वमिति अमृतीकृत्य ४ "ॐ अमृते अमृतोद्भवे अमृतवर्षिणि अमृतमाकर्षय त्वं सिद्धिं देहि स्वाहा" इति तदुपरि दशधा प्रजप्य मूलमष्टधा जपेत्। तदुपर्यावाहनादिदशमुद्राः प्रदर्श्य, शुद्धोदककलशस्थापनवत् कलशस्थापनं विधाय, विजयामृतेनापूर्य चन्द्रकलापूजादिकं सर्वं शुद्धोदककलशस्थापनवदेव विधाय, दिग्बन्धच्छोटिकातालत्रयपूर्वकं पार्ष्णिघात—करास्फोटनसमुदञ्चितवक्त्रैः पातालभूनभोलीनान् विघ्नान्निरस्य, मूलमन्त्रेण सप्तधा ब्रह्मरन्ध्रे तर्पयित्वा, सहस्रदलकमलकर्णिकामध्यवर्तिनं श्रीगुरुं सङ्केतविद्यया श्रीगुरुपादुकाविद्यान्ते श्रीगुरुपादुकां तर्पयामीति त्रिधा सन्तर्प्य, मूलान्ते श्रीपरदेवतां तर्पयामीति तत्त्वमुद्रया मूलदेवीं त्रिधा तर्पयित्वा, ४ मूलं "ऐंवदवद वाग्वादिनि मम जिह्वाग्रे स्थिरीभव सर्वसत्त्ववशङ्करि स्वाहा"— इति मन्त्रमुच्चरन् कलशात् पात्रान्तरेण गृहीतं विजयामृतं स्वयं प्राश्य, कलशोपर्युद्धरणीयुक्तपात्रेणाच्छाद्य तत्सर्वं सूक्ष्मवस्त्रेण च्छादयेदिति विजयाकलशस्थापनविधिः।।

अथानुकल्पद्रव्याणि कुलार्णवे —

आद्याभावे तु वटक[1] जले संयोज्य पूजयेत्। सतक्रं वटकं[2] वापि सङ्गृह्य च विचक्षणः।। १।।
गुडमिश्रेण तक्रेण तेन वा मधुभाजिना। सौवीरेणाथवा कुर्यादितत्कर्म न लोपयेत्।। २।।
द्वितीयाभावे लशुनमार्द्रकं नागरं तु वा। आधाय पूजयेद्देवीमन्यथा निष्फलं भवेत्।। ३।।

इति। वीरतन्त्रे –

लवणार्द्रकपिण्याकगोधूममाषपञ्चकम्। लशुनं च महेशानि द्वितीयप्रतिनिधौ स्मृतम्।। १।।
तृतीयादेरभावे तु योजयेदेतदेव हि।

इति। चतुर्थाद्यनुकल्पस्तु नास्ति। पञ्चमाद्यनुकल्पस्त्वपराजितापुष्पं हयारिपुष्पं च समानीय चन्दनादिनापराजितापुष्पमापूर्य हयारिकुसुमं तत्र संयोज्योभयं शिवशक्तिसमायोगत्वेन परिचिन्त्य कुलद्रव्योत्पत्तिं विभाव्य, तदुपरि यथाशक्त्या निजविद्यां जपित्वा तत्कुसुमद्वयं विशेषार्घ्यमध्ये निक्षिपेत्। अन्यान्यपि क्षीरादीन्यनुकल्पद्रव्याणि यथाधिकारमवधेयानि।।

अथ कालीमतरीत्या सामान्यार्घ्यस्थापनम् –

तत्र स्ववामाग्रे त्रिकोणवृत्तचतुरस्रमण्डलं चन्दनादिना यथासम्भवद्रव्येण रजोभिर्जलेन वा विरच्य पाशुपतास्त्रेण तन्मण्डलं सम्प्रोक्ष्य "ओंह्रीं आधारशक्तये नमः"– इति त्रिकोणमध्ये, एवं कोणत्रये वृत्ते चतुरस्रे च, ओं अखण्डमण्डलाय नमः। ओं पूर्णमण्डलाय नमः। ओं सर्वतोव्यापकमण्डलाय नम इति मण्डलं सम्पूज्य, पाशुपतास्त्रेण सुवर्णादिनिर्मितमाधारं प्रक्षाल्य मण्डलोपरि संस्थाप्य मं धर्मप्रददशकलात्मने वह्निमण्डलाय श्रीपरदेवतायाः शङ्खाधाराय नमः, इति शङ्खाधारं सम्पूज्य, वह्निरूपमाधारं विचिन्त्य पुनः पाशुपतास्त्रेण शङ्खं प्रक्षाल्याधारोपरि संस्थाप्य, अं अर्थप्रदद्वादशकलात्मने सूर्यमण्डलाय श्रीपरदेवतायाः शङ्खपात्राय नमः, इति शङ्खं सम्पूज्य, सूर्यरूपं शङ्खं सञ्चिन्त्य विलोममातृकां मूलतद्दिननित्याविद्यासहिता– मुच्चरन् शुद्धतोयेन त्रिभागं शङ्खं पूरयेद्भागमेकं विशेषपूरणार्थमवशेषयेत्। ततः उं कामप्रदषोडशकलात्मने सोममण्डलाय श्रीपरदेवतायाः शङ्खामृताय नमः– इति जलमध्ये सम्पूज्य, तज्जलं चन्द्ररूपं विचिन्त्य, सुगन्धपुष्पाक्षतयवकुशाग्रतिलश्वेतसर्षपदधिदूर्वादीनि शङ्खजले विन्यस्य "पृथिव्यां यानि तीर्थानि करस्पृष्टानि ते रवे। तेन सत्येन मे देव तीर्थं देहि दिवाकर।।" इति सूर्यमण्डलादङ्कुशमुद्रया तीर्थान्याकृष्य शङ्खजले विन्यस्य, "गङ्गे च यमुने चे" ति तीर्थान्यावाह्य आवाहनादिदशमुद्राः प्रदर्श्य, पञ्चोपचारैस्तानि सम्पूज्य, वषडिति गालिनीमुद्रां प्रदर्श्य, वौषडिति वीक्ष्य हुमित्यवगुण्ठ्य, अग्नीशासुरवायव्यमध्ये दिक्षु च मूलविद्यायाः षडङ्गानि सम्पूज्य तथैव षडङ्गमुद्राः प्रदर्श्य, दक्षाङ्गुष्ठं जले निक्षिप्य मत्स्यमुद्रयाच्छाद्य, जलं स्पृशन् मूलविद्यामष्टधा प्रजप्य, नाराचमुद्रया पाशुपतास्त्रेण संरक्ष्य, वमिति धेनुमुद्रयामृतीकृत्य, ऐमिति योनिमुद्रां प्रदर्श्य, श्रीमिति शङ्खमुद्रां फट् इति चक्रमुद्रां ह्रीमिति परमीकरणमुद्रां च प्रदर्श्य, तज्जलं तेजोमयं विचिन्तयेत्, इति शङ्खस्थापनम्।। अत्र कादिमतानुसारेण प्रधानकलशसामान्यविशेषपात्राणां स्थापनप्रकारमग्रे लेखिष्यामि श्रीपात्रस्थापनमपि वक्ष्यामि। शक्त्यादिपात्राणां स्थापनं तु सामान्यपात्रवदेव। विशेषस्तु विशेषार्घ्यबिन्दुं दत्त्वा तत्तन्मन्त्रेण दशधा २ प्रजपेत्। शक्तिपात्रं बालया, गुरुपात्रं गुरुपादुकाविद्यया, भोगपात्रं समष्टिविद्यया, सर्वेषां बलिपात्राणामभि[3]मन्त्रणं तत्तद्देवतामन्त्रैः, अङ्गपात्रं षडङ्गयुवतीमन्त्रैर्वीरपात्रं कामराजेन, गुह्यपात्रं वाग्भवेन, योगिनीपात्रं नवचक्रेश्वरीविद्याभिः सकृत्सकृदात्मपात्रमात्माष्टाक्षरेण, प्रोक्षणीपात्रं मूलषडङ्गमन्त्रैर्दूतीपात्रचतुष्टयं बालयैवाभिमन्त्रयेत्। तदुक्तं श्रीकुलार्णवे–

१. 'वटुकं' ग. पाठः। २. 'वटुकं' ग. पाठः। ३. 'मामभि' ग. पाठः।

शक्तिपात्रं वरारोहे दशधा प्रजपेत् सुधीः। करेणाच्छाद्य दक्षेण कुमारीं त्रिपुरेश्वरीम्॥ १॥
तथैव गुरुपात्रं च पादुकाविद्यया शिवे। समष्टिविद्यया देवि भोगपात्रेऽभिमन्त्रणम्॥ २॥
मनुर्भिर्बलिदेवीनां तत्पात्राणां सुरेश्वरि। षडङ्गयुवतीमन्त्रैरङ्गपात्रं सकृत्सकृत् ॥ ३॥
वीरपात्रं महादेवि कामराजेन सुव्रते। गुह्यपात्रं तु कुण्डल्या बीजेन परमेश्वरि॥ ४॥
नवचक्रेश्वरीभिश्च योगिनीपात्रमम्बिके। आत्माष्टाक्षरमन्त्रेण चात्मपात्रं महेश्वरि॥ ५॥
विद्याषडङ्गमन्त्रैश्च प्रोक्षणीपात्रमद्रिजे। कुमार्यैव महेशानि दूतीपात्रचतुष्टयम्॥ ६॥

इत्यादिप्रमाणवचनानि तत्तत्तन्त्रोक्तानि बोध्यानि तथैवार्घ्यादिपञ्चपात्राणामपि तत्तद्देवतात्मकमन्त्रैरभिमन्त्रणं बोध्यम्। यत्तु "अर्घ्ये षडङ्गमूलाभ्यां संसाध्य विधिवद्यजेत्"। इत्यादिक्रमस्तु सङ्क्षेपपूजायां ज्ञेयः। स क्रमस्तु—प्राग्वन्मण्डलं विलिख्य तत्राक्षतैः सम्पूज्य, तत्र क्षालितमाधारं संस्थाप्य तं वह्निरूपं[1] विचिन्त्य, तदुपरि अस्त्रक्षालितमर्घ्यादि संस्थाप्य, पात्रं सूर्यरूपं विचिन्त्य सम्पूज्य, तस्मिन् मूलविद्यासहितविलोममातृकामुच्चरन् जलेनापूर्य तज्जलं चन्द्ररूपं विचिन्त्य संपूज्य, तस्मिन् प्राग्वत् पात्रपञ्चके पृथक् पृथक् शोधितं द्रव्यपञ्चकं क्रमेण निक्षिप्य, षडङ्गमन्त्रैर्दशधा अग्नीशासुरवायव्यमध्ये दिक्ष्वित्यादिक्रमेणाक्षतैः सम्पूज्य श्रीविद्यायां तार्तीयकूटमन्यत्र तत्तद्देवतामन्त्रं दशधा प्रजप्य तज्जलं तेजोरूपं विचिन्तयेत्। इति कादिमते सङ्क्षेपतः पात्रासादनम्॥

विद्यातार्तीयकूटेन मूलदेव्याः षडङ्गकैः। दशधा जपपूजाभ्यामर्घ्यं संसाध्य पूजयेत्॥ १॥

इति कादिमतवचनात्। वस्तुतस्त्वयमापत्कल्पः, मुख्यपूजायामापत्कल्पो गर्हितस्तत्र मुख्यकल्प एव साधीयान्। कुमारीपूजनेऽर्घ्यादिपञ्चपात्राणामभिमन्त्रणं बालयैव, मालापूजाविधौ तु प्रासादेन[2], अक्षरौषधिपूजने पञ्चभूतमन्त्रैः, पञ्चायतनपूजायामपि तत्तत्पात्राणि तत्तन्मन्त्रैरेव, पञ्चाशन्मिथुनपूजायां च मातृकया, धातुदैवतपूजायां भैरव्या, कालनित्यायजने तत्तद्दिननित्याविद्यया, पुस्तकपूजायां तु प्रासादेनैव, अग्निपूजायां तन्मन्त्रेणैव, दम्पतीसुवासिनीयोगिनीनां यजनादिषु बालयैवाभिमन्त्रणं कुर्यात्। उद्धरणीपिधानानामपि पाशुपतास्त्रेण क्षालनं तेनैवाभिमन्त्रणम्। नैवेद्यपात्रादिभोग्यवस्तूनां पात्राणां तत्तद्देवतामूलमन्त्रषडङ्गमन्त्रेषूक्तास्त्रमन्त्रेण क्षालनं तेनैवाभिमन्त्रणं च। इदं सर्वं गुरुतः शास्त्रतश्च ज्ञात्वा पूजायां योजनीयमिति। नारवैश्वमित्राक्षरौषधिचूर्णघटितमन्त्रनक्षत्रवृक्षोत्थतादृशयोन्युत्थपात्राणां संस्कारः प्रागुक्तसङ्क्षेपकल्परीत्यैव ज्ञेयस्तेषु संस्कारबाहुल्ये प्रयोजनाभावात्। सिद्धद्रव्याणां संस्कारः प्रतिदिनं विधेयः। अन्यदिनसंस्कृतद्रव्यमन्यदिनपूजायां गर्हितं, स्वयम्भूकुसुमस्य तु संस्कृतस्य पुनरन्यदिने संस्कारो नास्ति। तदुक्तं कुलार्णवे—

स्वयम्भूकुसुमं सम्यक् शोधयित्वा तु देशिकः। निक्षिपेत्तेन पूजाया देव्याः सम्मीलनेन च॥१॥
तेन प्रीता महादेवी सर्वसिद्धिं ददाति च। अन्यानि सिद्धद्रव्याणि प्रत्यहं शोधयेद् बुधः॥२॥
एकस्मिन् दिवसे शुद्धमन्यस्मिन् गर्हितं भवेत्।

इत्येतेन सिद्धद्रव्याणि स्वयम्भूकुसुमरहितानि प्रत्यहं पूजायां नवीनान्येव प्रशस्तानीत्यर्थः। अत्र यन्त्रलिखनद्रव्यस्य शोधनम्— तत्र कस्तूर्यगुरुकर्पूरकुण्डगोलोद्भवद्रव्यकेसरगुडचन्दनस्वयम्भूकुसुमात्मकाष्टद्रव्याण्येकस्मिन् पात्रे

---

१. 'भूतं' क. पाठः। २. 'तत्त्वप्रासादेन' क. पाठः।

संस्थाप्यामृतेश्वरीदीपिनीविद्याभ्यां सप्तवारमभिमन्त्रयेत्। तदुक्तं भैरवीतन्त्रे—

कस्तूर्यगुरुकर्पूरगोलोत्थं जाङ्गलं गुडम्। मलयोत्थं महादेवि स्वयम्भूकुसुमं तथा॥ १॥

सर्वमेकत्र संयोज्य दीपिन्यामृतविद्यया। पृथक्पृथक् सप्तवारं हस्तं दत्त्वाभिमन्त्रयेत्॥२॥

तेन शुद्धं भवेद्द्रव्यं तेन द्रव्येण वै लिखेत्।

इति। अत्र गोलोत्थं स्वयम्भूकुसमं च प्राग्वत्पात्रान्तरेण शोधितमेव ग्राह्यम्॥

अथ कालीमतरीत्या कलशादिस्थापनम्— तत्र स्ववामाग्रे वक्ष्यमाणविशेषार्घ्यमण्डलवत् मण्डलं विरच्य तथैव सम्पूज्य, तत्र वक्ष्यमाणविधिना क्षालितमाधारं संस्थाप्य तथैव सम्पूज्य, सुवर्णादिरचितं कलशं धूपवासितं हुँहुँ ब्रह्माण्डचषकाय स्वाहा— इति वामकरेण प्रक्षालितं, ऐं सन्दीपिनि ज्वालामालिनि ह्रीं— इति सन्दीपिनीविद्यया योनिमुद्रया दीपितं, कवचेनावगुठितं, ओं नमः ह्रीं नमः क्षं नमः हं नमः सः नमः—इति विन्यस्य पञ्चमन्त्रं ओं २ श्रीमहात्रिपुरसुन्दर्या महाकलशं स्थापयामि— इति तत्र कलशं संस्थाप्य तत्र वक्ष्यमाणविशेषार्घ्यपात्रवत् सूर्यकलान्तं सम्पूज्य, तत्र वक्ष्यमाणविधिनैव कर्पूरादिसुवासितं पर्युषितपरिस्रुतपयः समापूर्य, तत्रान्नादिकं निक्षिप्य तन्मध्ये विशेषार्घ्ये वक्ष्यमाणं मण्डलं विभाव्य वक्ष्यमाण-विधिना सोमकलान्तं सम्पूज्य, तच्चतुरस्रं परितः ओं ३ हसखफ्रें पथिकदेवताभ्यो हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें ग्रामचण्डालिनि हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें पथिकदेवताभ्यो हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें दृष्टिचण्डालिनि हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें क्रोधचण्डालिनि हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें सृष्टिचण्डालिनि हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें स्पर्शचण्डालिनि हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें तपनवेधचण्डालिनि हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें घटचण्डालिनि हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें सर्वजनदृष्टिस्पर्शचण्डालिनि हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें निर्दोव (ष) चण्डालिनि हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें सर्वजनदृष्टिस्पर्शचण्डालिनि हुंफट् स्वाहा नमः। ओं ३ हसखफ्रें पशुपाशचण्डालिनि हुंफट् स्वाहा नमः। इति स्वाग्रादिप्रादक्षिण्येन पूजयेत्। इत्येवं दश दोषान्निरस्य ओं ३ कांकींकूंकैंकौंकः विकारशोषिणि अस्य विकारान् हन हन स्वाहा— इति हेतुमध्ये सम्पूज्य

स्वादिष्ठयादिभिः पूर्वमृग्भिः पञ्चभिरायतः। विष्णुर्योनिं त्रयेणैव त्रिभिष्ट्वादित्रयेण च॥ १॥

इमं म इति च द्वाभ्यां ता मन्देत्येकया तथा। श्रोणामेकेति चैकेन शुक्रशापं विमोचयेत्॥२॥

इति कुलार्णववचनादुक्तपञ्चदशमन्त्रैः सकृत्सकृदभिमन्त्रयेत्। मन्त्रास्तु ऋग्वेदे यथा— "स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुतः॥ १॥ रक्षोहा विश्वचर्षणिरभि योनिमयोहत। द्रुणा सधस्थमासदत्॥२॥ वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः। पर्षि राधो मघोनाम्॥३॥ अभ्यर्ष महानां देवानां वीतिमन्धसा। अभि वाजमुत श्रवः॥४॥ त्वामच्छा चरामसि तदिदर्थं दिवेदिवे। इन्दो त्वे न आशसः"॥५॥ (९। १। १—५) "विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते[1]॥ १॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा॥२॥ हिरण्मयी अरणी यं निर्मथतो अश्विना। तं ते गर्भं हवामहे दशमे मासि सूतवे"॥३॥ (१०। १८४। १—३) त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः। अग्ने दक्षैः पुनीहि नः॥ १॥ पुनन्तु मां देवजनाः पुनन्तु वसयो धिया। विश्वेदेवाः पुनीत मां जातवेदः पुनीहि माम्॥२॥ प्रप्यापयस्व प्रस्यन्दस्व सोम विश्वेभिरंशुभिः। देवेभ्य उत्तमं हविः"(९/६७/२६—२८)

१. 'दधामि ते' क पाठः।

इमम्मे गङ्गे यमुने सरस्वति शुतुद्रि[1]स्तोमं सचता परुष्ण्या।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया॥ १॥ (१०।७५।५)
सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति।
ये वै तन्वं विसृजन्ति धीरास्ते जनासोऽमृतत्वं भजन्ते॥ २॥
ता मन्दसाना मनुषो दुरोण आधत्तं रयिं सहवीरं वचस्यवे।
कृतं तीर्थं सुप्रयाणं शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतम्॥ १॥ (१०।४०।१३)
श्रोणामेकमुदकं गामवाजति मासमेकः पिंशति सूनंयाभृतम्।
आ निम्रुचः शकृदेको अपाभरत् किंस्वित् पुत्रेभ्यः पितरा उपावतुः॥४॥(१।१६१।१०)

इत्यभिमन्त्र्य, "ॐ ३ ह्रांह्रींह्वूंह्रैंह्रौंह्रः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतस्वरूपिणि अमृतं स्रावय २ शुक्रशापात् सुधां मोचय २ मोचिकायै नमः। ॐ ३ जूंसः स्वाहा" इति विद्ययाष्टवारमभिमन्त्र्य ॐ ३ सिद्धायै नमः, ॐ ३ रक्तायै नमः, ॐ ३ शुक्लायै नमः, ॐ ३ उत्पलायै नमः, इति चतुरस्रस्य चतुर्दिक्षु प्रादक्षिण्येन स्वाग्रादितः सम्पूज्य मध्यत्रिकोणं विशेषार्घ्ये वक्ष्यमाणरूपं विभाव्य, ॐ ३ हसक्षमलवरयूँ आनन्दभैरवाय वौषट् आनन्दभैरवश्रीपादुकां पूजयामि तर्पयामि नमः। ओं ३ सहक्षमलवरयीं आनन्दभैरव्यै वषट् आनन्दभैरवीश्रीपादुकां पूजयामि तर्पयामि नमः। एवं सर्वत्र। ॐ ३ सुरानन्दभैरवाय वौषट्० ॐ ३ सुरानन्दभैरव्यै वषट् सुरानन्दभैरवीश्री०। ॐ ३ अमृतानन्दभैरवाय० ॐ ३ अमृतानन्दभैरव्यै० ॐ ३ तरुणानन्दभैरवाय० ॐ ३ तरुणानन्दभैरव्यै०, ॐ ३ उन्मनानन्दभैरवाय० ॐ ३ उन्मनानन्दभैरव्यै०, ॐ ३ ज्ञानानन्दभैरवाय० ॐ ३ ज्ञानानन्दभैरव्यै०, ॐ ३ मुक्तानन्दभैरवाय० ॐ ३ मुक्तानन्दभैरव्यै०, ॐ ३ परमानन्दभैरवाय० ॐ ३ परमानन्दभैरव्यै०, ॐ ३ कालभैरवाय० ॐ ३ कालभैरव्यै०,— इति भैरवमिथुननवकं मध्ये दिक्षु च सम्पूज्य सन्तर्प्य मूलविद्यया वीक्षणमुद्रया संवीक्ष्यास्त्रमन्त्रेण प्रोक्ष्य अस्त्रमन्त्रेण कुशैस्त्रिः सन्ताड्य कवचमन्त्रेणाभ्युक्ष्याघ्राय वामनासारन्ध्रेण प्रविश्य ब्रह्मरन्ध्रं गत्वा, तत्रस्थचिच्चन्द्रमण्डलमध्यगतपरमा— मृतवारिधौ मिलित्वातन्मयेन राजदन्तविवरात् नेत्रमार्गेण विनिर्गतं तज्जलं विभाव्य, संरोधमुद्रया संरुध्य, कवचमन्त्रेणावगुण्ठनमुद्रयावगुण्ठ्य, वमिति धेनुमुद्रयामृतीकृत्य परमीकरणमुद्रया परमीकृत्य, तत्र देवीं ध्यात्वा गन्धपुष्पादिभिः सम्पूज्य मूलविद्ययाष्टवारमभिमन्त्र्य, ॐ ३ नमो भगवति माहेश्वरि २ वारुणीजलमूर्तये ऊर्ध्वबिन्दुग्राहिणि महालक्ष्मीश्वरिपरमधाग्नि परमाकाशतासुरि सोमसूर्याग्निभक्षिणि आगच्छागच्छ विश २ स्वभोगद्रव्यं गृहण २ स्वाहा, इति तत्कलशाब्दिन्दुं वामाङ्गुष्ठानामिकाभ्यां धृतद्वितीयखण्डेनादायोर्द्ध्वमुत्क्षिपेत्। ततः कलशवदनं पात्रान्तरेणाच्छाद्योद्धरणपात्रमादाय वामकरे निधाय, ॐ ३ अमोघायै नमः, ॐ ३ सूक्ष्मायै० ॐ ३ आनन्दायै०, ॐ ३ शान्त्यै नमः,— इति शक्तिचतुष्टयं वामकरस्थपात्रे सम्पूज्य कुम्भस्याच्छादनपात्रस्योपरि स्थापयेदिति कलशस्थापनं विधाय, ततः कलशदक्षिणभागे शुद्धोदकेन चतुरस्रवृत्तकोणात्मकं मण्डलं चन्दनादिलिप्तभूमौ वहन्नासापुटाध्वना त्रितारमुच्चरन् निर्माय प्रणवत्रितारादिनमोन्तया मूलविद्यया त्रिकोणमध्यं सम्पूज्य कूटत्रयेण त्रिषु कोणेषु स्वाग्रादिप्रादक्षिण्येन सम्पूज्य चतुरस्रे अग्नीशनिर्ऋतिवायव्यकोणेषु हृदयाद्यङ्गचतुष्टयं मध्ये नेत्रं प्रागादिचतुर्दिक्षु अस्त्रमिति षडङ्गमन्त्रैः सम्पूज्य, तत्र मूलेन क्षालितमाधारं संस्थाप्य ओंऐंह्रींश्रीं प्रथमकूटमुच्चार्य मं वह्निमण्डलाय धर्मप्रददशकलात्मने श्रीपरदेवतायाः

१. 'द्रु' क. पाठः। २. 'ग्रामे' क. पाठः। ३. 'वहन्नासाकरोर्ध्वपुटाभ्यां कराभ्यां' क. ग. पाठः।

सामान्यार्घ्याधाराय नमः, इति सम्पूज्य, (तत्र वक्ष्यमाणप्रकारेण वह्नेर्दश कलाः सम्पूज्य, तत्रास्त्रेण क्षालितं पात्रं संस्थाप्य ओंऐंह्रींश्रीं द्वितीयकूटमुच्चार्य अं सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने श्रीपरदेवतायाः सामान्यार्घ्यपात्राय नमः, इति पात्रं सम्पूज्य) तत्र वक्ष्यमाणप्रकारेण सूर्यस्य द्वादश कलाः सम्पूज्य, गन्धादिसुवासितशुद्धतोयेन प्रणवत्रितारमूलविद्यान्ते विलोममातृकामुच्चरंस्तत्पात्रमापूर्य, ओं ३ तृतीयकूटं उं सोममण्डलाय कामप्रदषोडशकलात्मने श्रीपरदेवतायाः सामान्यार्घ्यामृताय नमः, इति जलं सम्पूज्य वक्ष्यमाणप्रकारेण सोमस्य शोडष कलाः सम्पूज्य, तत्र प्राग्वत् सवितृमण्डलात्तीर्थमावाह्य कलशामृतबिन्दुं दत्वा, तत्र मूलेन गन्धपुष्पादिकं निक्षिप्य प्राग्वत् षडङ्गमन्त्रैः संपूज्य, हसक्षमलवरयूं, सहक्षमलवरयीं, इति नवात्मकमिथुनमन्त्रेण त्रिरभिमन्त्र्य, हसौं वरुणाय नमः स्हौं वारुणीदेव्यै नमः, इति वरुणमिथुनमन्त्रेण च त्रिरभिमन्त्र्य मूलेनाष्टधाभिमन्त्र्य धेनुयोनिमुद्रे प्रदर्शयेदिति सामान्यार्घ्यं विधाय, तत्समीपे सामान्यार्घ्यजलेन यक्षकर्दमादिगन्धद्रव्यमिश्रितेन भूमिं विलिप्य, तत्र वहच्छ्वासोर्ध्वपुटाभ्यां[1] चतुरस्रवृत्तषट्कोणत्रिकोणात्मकं मण्डलं विधाय, तन्मण्डलं शङ्खमुद्रामुद्रितवामकरेणावष्टभ्य तन्मध्यत्रिकोणमध्ये सबिन्दुतुर्यस्वरूपा कामकला विलिख्य ओंऐंह्रींश्रीं श्रीपरदेवताया विशेषार्घ्याधारमण्डलाय नमः, इति मण्डलं सम्पूज्य, ४ नमोन्तमूलेन त्रिकोणमध्यं सम्पूज्य, त्रिकोणाग्निकोणे ४ प्रथमकूटं नमः, वामे ४ द्वितीयं नमः, दक्षिणे ४ तृतीयं नमः— इति त्रिकोणं प्रादक्षिण्येन सम्पूज्य, पूजयित्वा षट्कोणकोणेषु प्रादक्षिण्येन स्वाग्रमारभ्य मूलकूटत्रयस्य द्विरावृत्या, चतुरस्रे प्राग्वत् षडङ्गानि सम्पूज्य, तच्चतुरस्रे स्वाग्रादिचतुर्दिक्षु मध्ये च प्रादक्षिण्येन ४ ग्लूं गगनरत्नाय नमः, ४ स्लूं स्वर्गरत्नाय नमः, ४ म्लूं मर्त्यरत्नाय नमः, ४ प्लूं पातालरत्नाय नमः, ४ न्लूं नागरत्नाय नमः, इति पञ्चरत्नानि सम्पूज्य, पुनः षट्कोणेषु स्वाग्रादिप्रादक्षिण्येन न्यासोक्तषडासनानि सम्पूज्य, चतुरस्रवृत्तषट्कोणत्रिकोणेषु ४ कामरूपपीठाय नमः, ४ जालन्धरपीठाय नमः, ४ पूर्णगिरिपीठाय नमः, ५ उड्यानपीठाय नमः, इति पीठचतुष्टयं सम्पूज्य, शाम्भवदीक्षावांश्चेच्चतुरस्रे स्वाग्रादिचतुर्दिक्षु मध्ये च पञ्चप्रणवपुटितैः प्रणवपञ्चकैः पूजयेत्। तद्यथा— ऐंह्रींश्रीं हसखफ्रें हसौः ऐं हसौः हसखफ्रें श्रींह्रींऐं नमः। एवं ५ ह्रीं ५ नमः, ५ श्रीं ५ नमः, ५ हसखफ्रें ५ नमः, ५ हसौः ५ नमः— इति सम्पूजयेत्। ततः मूलं० सर्वशक्तिमयीश्रीपरदेवतायाः पीठचतुष्टयात्मकार्घ्यमण्डलाय नमः,— इति समस्तं मण्डलं संपूज्य, तत्र मूलेन प्रक्षालितमाधारं गृहीत्वा, ४ श्रीपरदेवताया विशेषार्घ्याधारं स्थापयामीति मण्डलोपरि संस्थाप्य, ४ प्रथमकूटमुच्चार्य मं वह्निमण्डलाय धर्मप्रददशकलात्मने श्रीपरदेवताया विशेषार्घ्यपात्राधाराय नमः,— इत्याधारं संपूज्य, तदुपरि धूम्रार्चिरादिदशकलाः इहागच्छतागच्छत, इति वह्नेर्दशकलाः समावाह्य तासां प्राणप्रतिष्ठां कुर्यात्। तत्र पूर्वोक्तप्राणप्रतिष्ठामन्त्रेण ममपदस्थाने धूम्राचिरादीनामिति पदं निक्षिप्य प्राणप्रतिष्ठामन्त्रमाधारं स्पृशन् पठेदिति प्राणप्रतिष्ठां विधााय, ४ यं धूम्रार्चिषे नमः, ४ रं ऊष्मायै नमः, ४ लं ज्वलिन्यै नमः, ४ ज्वालिन्यै नमः, ४ शं विस्फुलिङ्गिन्यै नमः, ४ षं सुश्रिये नमः, ४ सं सुरूपायै नमः, ४ हं कपिलायै नमः, ४ ळं हव्यवाहायै नमः, ४ क्षं कव्यवाहायै नमः, इति ताः सम्पूज्य, स्वर्णादिरचितं पात्रमस्त्रेण प्रक्षाल्य, ४ श्रीपरदेवताया विशेषार्घ्यपात्रं संस्थापयामि नमः, इति तत्र संस्थाप्य, ४ द्वितीयकूटमुच्चार्य अं अर्कमण्डलायार्थप्रदद्वादशकलात्मने श्रीपरदेवताया विशेषार्घ्यपात्राय नमः— इति पात्रमध्ये संपूज्य, पूर्वोक्तमण्डलं विभाव्य पूर्ववत् पञ्चरत्नान्तं सम्पूज्य, तथैव पञ्चप्रणवैस्तमभ्यर्च्य,

---

१. 'पुटहस्ताभ्यां' क. पाठः।

तत्र सूर्यस्य द्वादश कलाः प्राग्वत् समावाह्य प्राग्वत् तन्नामपुरःसरं तासां प्राणप्रतिष्ठां विधाय वृत्ताकारेण प्रादक्षिण्येन ताः पूजयेत्। तद्यथा— ४ कंभं तपिन्यै नमः, ४ खंबं तापिन्यै नमः, ४ गंफं धूम्रायै नमः, ४ घंपं मरीच्यै नमः, ४ ङंनं ज्वालिन्यै नमः, ४ चंधं रुच्यै नमः, छंदं सुषुम्नायै नमः, ४ जंथं भोगदायै नमः, झंतं विश्वायै नमः, ४ ञंणं बोधिन्यै नमः, ४ टंढं धारिण्यै नमः, ४ ठंडं क्षमायै नमः— इति सम्पूज्य, कलशस्थं जलमुद्धरणपात्रेणोद्धृत्य मूलविद्यान्ते विलोममातृकामुच्चरन् तत्पात्रमापूर्य, तत्रालादिकं निक्षिप्य ऐं, इत्यङ्गुष्ठानामिकाभ्यां पुष्पेण तत्पात्रस्थं जलमालोड्य तत्पुष्पं निरस्य, क्लीमिति चन्दनागुरुकर्पूरकुङ्कुमरोचनाजटामांसीशिलारसात्मक-गन्धाष्टकपङ्कलोलितं चन्दनादिपङ्कलोलितं वा पुष्पं निक्षिप्य, सौः इति गालिनीमुद्रया निरीक्ष्य, ४ तृतीयकूटं उं सोममण्डलाय कामप्रदषोडशकलात्मने श्रीपरदेवताया विशेषार्घ्यामृताय नमः— इति पात्रस्थजलमध्ये सम्पूज्य तत्र पूर्वोक्तं मण्डलं विभाव्य, पूर्ववत् पञ्चरत्नान्तं सम्पूज्य, शाम्भवदीक्षायुक्तश्चेत्तथैव पञ्चप्रणवैः पूजयेत्। ततस्तत्र सोमस्य षोडशकलाः प्राग्वत् समावाह्य प्राग्वत् तन्नामपुरःसरं तासां प्राणप्रतिष्ठां विधाय वृत्ताकारेण स्वाग्रादिप्रादक्षिण्येन ताः पूजयेत्। तद्यथा— ४ अं अमृतायै नमः, ४ आं मानदायै०, ४ इं पूषायै०, ४ ईं तुष्ट्यै०, ४ उं पुष्ट्यै०, ४ ऊं रत्यै०, ८ ऋं धृत्यै०, ४ ॠं शशिन्यै०, ४ ऌं चन्द्रिकायै०, ४ ॡं कान्त्यै०, ४ एं ज्योत्स्नायै०, ४ ऐं श्रियै०, ४ ओं प्रीत्यै०, ४ औं अङ्गदायै०, ४ अं पूर्णायै०, ४ अः पूर्णामृतायै०,— इति सम्पूज्य पूजितमण्डलमध्यत्रिकोणमकथादित्रिरेखं विभाव्य, तत्कोणत्रये मूलविद्यायाः, कूटत्रयं मध्यस्थबिन्दौ कामकलां तत्पार्श्वतः सबिन्दू हक्षौ तत्पृष्ठे ळकारं तत्पार्श्वयोः हंसःवर्णौ विभाव्य पुष्पाक्षतगर्भितां योनिमुद्रां बद्ध्वा गुरूपदिष्टप्रकारेण मूलाधारात् कुण्डलिनीमुत्थाप्य, षट्चक्रभेदक्रमेण सुषुम्नावर्त्मना ब्रह्मरन्ध्रस्थचिच्चन्द्र-मण्डलसम्भूतमशेषरससम्भृतमापूरितं महापात्रं पीयूषरसमावह ऐंप्लूंग्लौंजूंसः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा— इति तस्मिन्नर्घ्यामृते पुष्पाक्षतप्रक्षेपेण तदमृतधारां संयोज्य, वमिति धेनुमुद्रां प्रदर्श्य, ओंह्रींहंसः स्वाहा— इत्यात्माष्टाक्षरमन्त्रेण त्रिरभिमन्त्र्य पुनरुच्चार्यात्मशक्तिश्रीपादुकां पूजयामीति जलमध्ये सम्पूज्य, पुनः प्रणवेन त्रिरभिमन्त्र्य हंसः अजपाशक्तिश्री० इति संपूज्य, मातृकया बिन्दुरहितया त्रिरभिमन्त्र्य पुनस्तामुच्चार्य मातृकासरस्वतीश्री०, इति जलमध्ये संपूज्य, मूलतार्तीयकूटेन दशधाभिमन्त्र्य पुनस्तार्तीयकूटमुच्चार्य त्रिपुरामृतेश्वरीश्री०, इति जलमध्ये संपूज्य, ४ हसक्षमलवरयूं सहक्षमलवरयीं, इत्यानन्दभैरवमिथुनविद्याभ्यां त्रिरभिमन्त्र्य, ४ हसक्षमलवरयूं आनन्दभैरवाय वौषट् आनन्दभैरवश्रीपादुकां पूजयामि तर्पयामि नमः, इति त्रिः सम्पूज्य सन्तर्प्य, ४ सहक्षमलवरयीं सुधादेव्यै वषट् सुधादेवीश्री० इति सम्पूज्य सन्तर्प्य, हसौं वरुणाय नमः स्हौं वारुणीदेव्यै नमः— इति वरुणमिथुनविद्याभ्यां त्रिरभिमन्त्र्य, ४ पुनः पृथगुच्चार्य वरुणश्रीपा० वारुणीदेवीश्रीपा० इति सम्पूज्य सन्तर्प्य, ततो बालया वक्ष्यमाणषोडशनित्यामन्त्रैश्च सकृत्सकृदभिमन्त्र्य, तद्दिननित्याविद्यया तत्तत्तिथिनित्याविद्यया च पृथक् पृथक् त्रिरभिमन्त्र्य, प्रासादपरापराप्रासादमन्त्राभ्यामूर्ध्वाम्नायदीक्षितश्चेत् हसौःस्हौः इति मन्त्राभ्यां त्रिरभिमन्त्र्य, ततश्चरणादिदीक्षितश्चेच्चरणकुल[1]योगिनीविद्याभ्यां त्रिस्त्रिरभिमन्त्र्य, ततः सौः इत्यनुत्तरपराविद्यया दीक्षितश्चेत्तया त्रिरभिमन्त्र्य, पूर्णाभिषिक्तश्चेत्कामकलाविद्यया त्रिरभिमन्त्र्य, षडन्वय-शाम्भवदीक्षायुक्तश्चेत् तद्विद्याभिस्त्रिरभिमन्त्र्य, ततो वक्ष्यमाणपाञ्चभौतिकमन्त्रैस्त्रिरभिमन्त्र्य, सृष्ट्यादिदशकला

१. 'कुशल' क. ख. पाठः।

जलमध्ये समावाह्य, प्राग्वत् तन्नामपुरःसरं तासां प्राणप्रतिष्ठां विधाय, वामदेव ऋषिः जगती छन्दः सूर्यो देवता "ओं हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्"।। इत्यनयर्चा सकृदभिमन्त्र्य, पुनरुच्चार्य ब्रह्मणे नमः इति जलमध्ये सम्पूज्य, ४ कं सृष्ट्यै नमः इत्यादिप्रागुक्तकलामातृकान्यासोक्तप्रकारेण कचवर्गकलाः सम्पूज्य, ततः टतवर्गोत्थजरादिदशकलाः समावाह्य प्राग्वत्तासां प्राणप्रतिष्ठां विधाय "ओं प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा।" इत्यनचा ऋचा सकृदभिमन्त्र्य, पुनरुच्चार्य विष्णवे नमः इति संपूज्य टं जरायै नमः इत्यादि ताः सम्पूज्य, पुनः पयवर्गोत्थकलास्तीक्ष्णाद्याः समावाह्य प्राग्वत् तासां प्राणप्रतिष्ठां विधाय, त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः अनुष्टुप् छन्दः त्र्यम्बकरुद्रो देवता "ओं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात।।" इत्यभिमन्त्र्य, पुनरुच्चार्य रुद्राय नमः इति सम्पूज्य पं तीक्ष्णायै नमः इत्यादिभिः सम्पूज्य पुनः षकारादिक्षकारान्तपञ्चवर्णोत्थाः पीतादिपञ्चकलाः समावाह्य, प्राग्वत् तासां प्राणप्रतिष्ठां विधाय गायत्र्याभिमन्त्र्य पुनरुच्चार्य ईश्वराय नमः इति सम्पूज्य षं पीतायै नमः इत्यादि ताः संपूज्य, ततः स्वरोत्था निवृत्त्यादिकलाः समावाह्य प्राग्वत् तासां प्राणप्रतिष्ठां विधाय "विष्णुर्योनिं कल्पयतु" इति मन्त्रस्य त्वष्टा गर्भकर्ता ऋषिरनुष्टुप् छन्दः श्रीविष्णुर्देवता सदाशिवप्रीत्यर्थे विनियोगः। "विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते"।। इत्यभिमन्त्र्य, पुनरुच्चार्य सदाशिवाय नमः इति जलमध्ये सम्पूज्य, अं निवृत्त्यै नमः इत्यादिना सम्पूज्य मातृकया द्विरभिमन्त्र्य, पुनरुच्चार्य मातृकासरस्वतीश्री० इति संपूज्य "४ ऐं अखण्डैकरसानन्दकरे परसुधामयि। स्वच्छन्दस्फुरणामत्र विधेह्यकुंलरूपिणि"।। इत्यनेन त्रिरभिमन्त्र्य। "क्लीं अकुलस्थामृताकारे सिद्धिज्ञानकरे परे। अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि।।" इति च त्रिरभिमन्त्र्य, "सौः त्वद्रूपेणैकरस्यत्वं दत्त्वा ह्येतत्स्वरूपिणि। भूत्वा परामृताकारे मयि चित्स्फुरणं कुरु।।" इति च त्रिरभिमन्त्र्य। "ऐंप्लूंह्रौं जूंसः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय २ स्वाहा" इत्यमृतेश्वरीविद्यया चतुर्वारमभिमन्त्र्य, पुनस्तामुच्चार्य अमृतेश्वरीश्री० इति सकृत् सम्पूज्य, ततः ऐं वदवद वाग्वादिनि ऐंक्लीं क्लिन्ने क्लेदिनि क्लेदय २ महाक्षोभं कुरु २ क्लींसौः मोक्षं कुरु २ सौः ह्सौः इति दीपिनीविद्यया पञ्चवारमभिमन्त्र्य, ततस्तत्र मूलविद्यामष्टधा जपित्वा तन्मध्ये चतुरस्रं पश्चिमद्वारं विचिन्त्य, तद्द्वारपार्श्वयोः कुलवटुकनाथतद्वल्लभाम्बाश्री० इति दक्षिणवामयोः सम्पूज्य तदन्तः प्राग्वत् षडासनानि सम्पूज्य, तन्मध्यत्रिकोणमध्यस्थबिन्दुमध्ये कामकलायां वक्ष्यमाणप्रकारेण देवीमावाह्य ध्यात्वा, षडङ्गन्यासयोगेन सकलीकृत्य, गन्धादिभिः संपूज्य, वक्ष्यमाणसमष्टियोगिनीमन्त्रेण त्रिः सकृद्वा पुष्पाञ्जलीं दत्त्वा धूपदीपौ निवेद्य, योनिधेनुमहायोनित्रिशिखापद्मसंक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाखेचरीबीजयोनिपाशाङ्कुशधनुर्बा– णाख्या अष्टादश मुद्राः प्रदर्श्य नमस्कारमुद्रया प्रणमेत्। अत्रतावत्कर्तुमशक्तश्चेदभिमन्त्रणपूजनयोरन्यतरत् कुर्यात्। अत्राप्यशक्तश्चेदात्माष्टाक्षरपूजान्तं कृत्वानन्दभैरवमिथुनं सम्पूज्य सन्तर्प्य सृष्ट्यादिकलापूजामारभ्य शेषं प्राग्वत् समापयेत्, इति विशेषार्घ्यस्थापनविधिः।। ततस्तत्परतस्तेनैव विधिना श्रीपात्राख्यं पात्रान्तरं स्थापयेत्। तेन मूलदेव्यतिरिक्तावरणदेवतास्तर्पयेत्। पूजासमर्पणादिकं मूलदेव्यास्तर्पणं च विशेषार्घ्येणैव। तत्रानङ्गकु–

---

१. 'ह्यमृतरूपिणि' ग. पाठः। २. 'ताद्रूप्येणै' ग. पाठः। ३. 'थें त' ग. पाठः।

कुसुमादिपर्यन्तमावरणत्रयपूजासमर्पणमर्घ्यदानं च सामान्यार्घ्यजलेनैव कुर्यात्— इति श्रीपात्रस्थापनविधिः।।

ततस्तदनुक्रमेणैव तदधः पङ्क्त्याकारेण पाद्याचमनीयमधुपर्कार्थं पात्रद्वयं शुद्धजलेनापूर्य, तृतीयं मधुपर्कद्रव्येणापूर्य तेषु विशेषार्घ्यजलं किञ्चित्किञ्चिद् दत्त्वा मूलविद्यया पृथक् पृथगष्टवारमभिमन्त्रयेत्। मधुपर्के तु कांस्यपात्रं प्रशस्तं ताम्रपात्रवर्जमन्यद्वा पात्रान्तरेणाच्छादितं कुर्यात्। गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्वाः सामान्यार्घ्ये निःक्षिपेत्। पाद्यपात्रे श्यामाकतण्डुलदूर्वाकमलापराजितापुष्पोशीररोचनाख्यद्रव्याष्टकं निः क्षिपेत्। आचमनीयपात्रे जातीफललवङ्गकक्कोलचूर्णानि निःक्षिपेत्। उक्तद्रव्याभावे तत्तद्वस्तुभावनया तण्डुलान् निःक्षिपेत्। मधुपर्कपात्रे दधिमधुघृतानि निःक्षिप्य विशेषार्घ्यबिन्दुना संस्कुर्यात्। दध्याद्यलाभे जलेनैव तद्भावनया पूरयेत्। ततः स्वदक्षिणाग्रे पाद्यादिपात्रविधानेनैव पुनराचमनीयपात्रमपि स्थापयेत्। अत्राप्यशक्तौ पाद्यादित्रयमेकस्मिन्नेव पात्रे दद्यात्। ततः स्वगुरुमुखादवगतविनियोगविधौ पात्रचतुष्टयं सामान्यार्घ्यविधिना प्रोक्षणीपात्रात् परतः स्थापयेत्। तेषां नामानि तु गुरुपात्रं, शक्तिपात्रं, वटुकपात्रं, आत्मपात्रं चेति। गुरुपादुकाविद्यया गुरुपात्रं, बालया शक्तिपात्रं, बटुकपात्रं तन्मन्त्रेणात्मपात्रमात्माष्टाक्षरमन्त्रेण चेति तत्तन्मन्त्रेण तत्तत्पात्रमष्टधाभिमन्त्रयेत्। ततः प्रोक्षणीपात्रोदकेन पात्रान्तरोद्धृतेन ओंऐंह्रींश्रींऐं प्रथमकूटमुच्चार्य आत्मतत्त्वात्मने नमः। ४ क्लीं द्वितीयं विद्यातत्त्वात्मने नमः। ४ सौः तृतीयं शिवतत्त्वात्मने नमः। ४ ऐंक्लींसौः समस्तमूलमुच्चार्य सर्वतत्त्वात्मने नमः, इति स्वात्मानं प्रोक्ष्य पुनर्मूलेन यागभूमिं यागोपकरणानि च श्रीचक्रं च प्रोक्ष्य सर्ववस्तुषु धेनुमुद्रां प्रदर्शयेत्— इत्यर्घ्यादिपात्रस्थापनविधिः।। अत्र श्रीपात्रस्थापनाशक्तौ विशेषार्घ्येणैव प्रोक्तपूजादिकं कुर्यात्।।

अथ सङ्क्षेपतः पात्रासादनप्रयोगः— तत्र स्ववामभागे चन्दनादिना त्रिकोणषट्कोणवृत्तचतुरस्रात्मकं मण्डलं विलिख्य, तत्र पीठचतुष्टयात्मकं सम्पूज्य, ४ मं धर्मप्रददशकलात्मने वह्निमण्डलाय श्रीपरदेवतायाः कलशाधाराय नमः, इति सम्पूज्य, तदुपरि प्रागादिप्रादक्षिण्येन प्राग्वत् धूम्रार्चिरार्चिरादिदशकलाः सम्पूज्य, तत्रास्त्रक्षालितं सुधूपितं कलशं स्थाप्य, ४ अं अर्थप्रदद्वादशकलात्मने सूर्यमण्डलाय श्रीपरदेवतायाः कलशपात्राय नमः— इति सम्पूज्य कलशोपरि प्रागादिप्रादक्षिण्येन तपिन्यादिद्वादशकलाः सम्पूज्य, तस्मिन्नधिकारिभेदेन[1] विहितं क्षीराज्यमध्वासवान्यतमं साङ्गं पृथक्पात्रेषु प्राक्संस्कृतं द्रव्यं मूलविद्यासहितविलोमानुलोममातृ- कामुच्चरन् समापूर्य, तत्र षडङ्गयुवती-गुरुपङ्क्तित्रय-षडशनित्या-तद्दिननित्या-रत्नेश्वरीः संपूज्य, ४ उं कामप्रदषोडशकलात्मने सोममण्डलाय श्रीपरदेवतायाः कलशामृताय नमः— इति च संपूज्य, प्रागादिप्रादक्षिण्येनामृतादिषोडशकलाः सम्पूज्य, तदमृतं परब्रह्ममयं सञ्चिन्त्योद्धरणीसहितपिधानपात्रेणाच्छाद्य सूक्ष्मवस्त्रेण समाच्छादयेदिति कलशस्थापनविधिः।। अन्यानि च पात्राणि एतदुक्तरीत्या तत्तन्मन्त्रैः स्थापयेदिति सङ्क्षेपः।।

**।। इति श्रीमहामहोपाध्यायभगवत्पूज्यपादश्रीगोविन्दाचार्यशिष्य-श्रीभगवच्छङ्कराचार्यशिष्य-श्रीविष्णुशर्माचार्यशिष्य-श्रीप्रगल्भाचार्यशिष्य-श्रीविद्यारण्ययतिविरचिते श्रीविद्यार्णवाख्ये तन्त्रे नवमः श्वासः।। ९।।**



१. 'कार' क. पाठः।

## अथ
# श्रीविद्यार्णवतन्त्रे
## दशमः श्वासः

अथात्मपूजा– तत्र स्वपुरतस्त्रिकोणमण्डले साधारं पात्रं संस्थाप्य, कलशोदकेनापूर्य विशेषार्घ्यबिन्दुं दत्त्वा, स्वदेहं चन्दनादिभिरलङ्कृत्यात्मानमिष्टदेवतारूपं ध्यायन् गुरुगणपतिपरदेवताः प्रणम्य मूलाधारादिब्रह्मरन्ध्रपर्यन्तं प्राग्वत् कुण्डलिनीं ध्यात्वा, तद्रूपिणीं मूलविद्यां परिभाव्य तत्तेजसा परिणतं स्वेष्टदेवतारूपं स्वदेहं भावयन् आत्मपूजां कुर्यात्। प्रागुक्तयोगपीठन्यासरीत्या स्वदेहं योगपीठत्वेन विभाव्य, हृत्कमलकर्णिकायां श्रीचक्राधिरूढां श्रीपरदेवतां विभाव्य, वक्ष्यमाणक्रमेण षोडशोपचारैराराध्य, पुष्पाञ्जलिपञ्चकं स्वदेहे समर्प्य धूपदीपौ निवेद्यान्तर्हवनं कुर्यात्। तत्र मूलाधारे त्र्यस्रं कुण्डं विभाव्य, तन्मध्ये कालाग्निमेव कामाग्निं वासनारूपेन्धनप्रज्वलितं प्राणादिपञ्चवायुभिः सन्धुक्षितं कुण्डलिनीरूपपरदेवताधिष्ठितं चिदग्निमण्डलं विभाव्य, प्रणवत्रितारादिमूलविद्यान्ते "धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा। सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम्" इदं जुहोमि स्वाहा– इति पुण्यपापकृत्याकृत्यसङ्कल्पविकल्पधर्मात्मकं हविःसप्तकं सप्तावृत्त्या हुत्वा, ततः प्रणवत्रितारादिमूलविद्यान्ते "प्रकाशामर्शहस्ताभ्यामवलम्ब्योन्मनीस्रुचम्। धर्माधर्मकलास्नेहं पूर्णवह्नौ[1] जुहोम्यहम्।" अधर्मे जुहोमि स्वाहेति पूर्णाहुतिं दत्त्वा निरस्तनिखिलप्रपञ्चो निष्कलब्रह्मरूपं साधकः कियत्क्षणं तिष्ठेत्। ततो देवीरूपमात्मानं ध्यात्वा श्रीगुरुपादुकां प्रणम्य शिरस्यन्नपूर्णां[2] ध्यात्वा तद्विद्यां यथाशक्ति जपित्वा समर्प्य प्राणायामर्ष्यादिकरषडङ्गन्यासपूर्वकं मूलविद्यामष्टोत्तरशतवारं जपित्वा जपं समर्प्य स्तुत्वा प्रणमेदित्यात्मपूजा।। अथ शक्तिशोधनम्। तदुक्तं भावचूडामणौ–

"अदीक्षितकुलासङ्गात् सिद्धिहानिः प्रजायते। बलाद्वा यत्नतो वापि अभिषेकं समाचरेत्।। १।।
आदौ बालां समुच्चार्य त्रिपुरायै समुच्चरेत्। नमःशब्दं समुच्चार्य इमां शक्तिं ततो वदेत्।। २।।
पवित्रं कुरु शब्दान्ते मम शक्तिं कुरु प्रिये। वह्निजायां समुच्चार्य शुद्धिमन्त्रः सुरेश्वरि ।। ३।।
तस्याः कर्णेऽभेदबुद्ध्या मायाबीजं समुच्चरेत्।" इति शक्तिशोधनम्।। ततः शोधितद्रव्यं तु अर्घ्ये निःक्षिपेत्।

तथा श्रीचक्रक्रमे–"पूर्वशोधितद्रव्यं तु गुप्तेनैव च सङ्क्षिपेत्।" इति। स्वतन्त्रे–

अर्घ्यद्रव्यमर्घ्यपात्रे निःक्षिप्य प्रयतः सुधीः। कुण्डगोलोद्भवं द्रव्यं स्वयम्भूकुसुमं तथा।। १।।
अर्घ्यं दत्वा महेशानि सर्वसिद्धीश्वरो भवेत्। सुधया चार्घ्यदानेन योगिनीनां भवेत् प्रियः।। २।।
महायोगी भवेद् देवि पीठप्रक्षालितैर्जलैः। इति।

भैरवतन्त्रे–

पञ्चमात्तु परं नास्ति शाक्तानां सुखमोक्षयोः। केवलैः पञ्चमैर्वापि सिद्धो भवति साधकः।। १।।

इति। तथा–

---

१. 'पूर्णवृत्तौ ग. पाठः। २. 'हपूर्णां' ख. पाठः।

पूजयेदथ पर्यङ्कमध्ये मण्डूकमप्यतः। कालाग्निरुद्रमाधारशक्तिं कूर्ममनन्तकम्[1] ॥ १॥
वराहं पृथिवीं कन्दं सुनालं केसराण्यपि। पद्मं च कर्णिकां चैव मण्डलं च समर्चयेत्॥ २॥
धर्मं वैराग्यमैश्वर्यं ज्ञानमज्ञानमेव च । अनैश्वर्यमवैराग्यमधर्ममपि पूजयेत् ॥ ३॥
ज्ञानविद्यात्मकं चैवमात्मनश्चापि पूजयेत्। गन्धपुष्पाक्षतादीनि दत्त्वा तत्र निधापयेत्[2]॥ ४॥
तत्रोपरि कुलं स्थाप्य पूजानुष्ठानमेव च। पूजयेच्च ततस्तस्यां पञ्च कामान् समाहितः॥ ५॥
ओङ्कारादिनमोन्तैश्च कुसुमैर्गन्धसंयुतैः । अर्चयित्वा चतुर्दिक्षु पूजयेत् कुलनायकम् ॥ ६॥
वाग्भवं कामराजं च स्त्रीबीजं कामराजकम्। ब्लूमात्मकं ततो दत्त्वा आधारशक्तिमुद्धरेत्॥ ७॥
श्रीपादुकां ततो दत्त्वा पूजयामि पदं ततः। अनेन मनुना तस्या ललाटे तु मनोहरम् ॥ ८॥
त्रिकोणं तत्र संलिख्य सिन्दूराद्यैर्वरानने। इति।

उत्तरतन्त्रे —

तस्या मूर्ध्नि त्रिकोणं च मन्त्रमालिख्य साधकः। महाप्रेतासनं मध्ये बालां च पूजयेत्ततः॥ १॥

ह्सौं सदाशिवमहाप्रेतपद्मासनाय नमः — इति पूजयेत्। कुलार्णवे—

गणेशं च कुलाध्यक्षं दुर्गां लक्ष्मीं सरस्वतीम्। त्रिकोणेषु तु सम्पूज्य वसन्तं मदनं प्रिये।।२॥
स्तनयोः पूजयेत् पश्चान्मुखे तस्याः सुधाकरम्। इति।

उत्तरतन्त्रे—

मौलौ गणेशं केशाग्रे कुलाध्यक्षं ललाटके। दुर्गां भ्रुवोस्तथा लक्ष्मीं रसनायां सरस्वतीम्॥ १॥ इति।

ज्ञानार्णवे—

दक्षपादादिमूर्धान्तं वाममूर्धादि सुन्दरि। पादान्तं पूजयेत् सर्वाः कला वै कामसोमयोः॥ १॥

"श्रद्धा प्रीती रतिश्चैवे"त्यादि मातृकाश्वासे द्रष्टव्याः। उत्तरतन्त्रे— "स्वरैरेवं प्रपूज्या हि सर्वकार्यार्थसिद्धये।" इति। ललितातन्त्रे—

भगे तदीये विज्ञेया नाड्यस्तिस्रः प्रवाहिकाः। एका तु वाहिका चान्द्री सौरी चान्या तु वाहिका॥ १॥
आग्नेयी चापरा ज्ञेया पूजयेत् तास्तु साधकः। अम्बु स्रवति चान्द्री सा पुष्पं स्रवति भानवी।।२॥
बीजं स्रवति चाग्नेयी तासु नामभिरर्चयेत्। वाग्भवाद्यैर्नमोयुक्तैः पूजयेत् सुप्रसन्नधीः॥ ३॥ इति।

उत्तरतन्त्रे—

पूजयेन्मदनागारे रक्तचन्दनचर्चिते। भगमालामनुं प्रोच्य त्रितारानन्तरं तथा॥ १॥
'ऐंह्रींश्रींऐंजूंब्लूं'[3] चैव क्लिन्ने चैव ततः परम् (?)। सर्वाणीति भगानीति वशमानय मे ततः।।२॥

ख्रींह्रींक्लींब्लूं[4] भगमालिन्यै नमः।

ऐंह्रींश्रीमिति मन्त्रेण गन्धाद्यैस्तां समर्चयेत्। इहाप्यावाहनं नास्ति जीवन्यासौ महेश्वरि।।३॥
अथैवं च विधानेन तां षोडशोपचारकैः। इष्टदेवीं प्रपूज्याथ सर्वसिद्धीश्वरो भवेत्॥ ४॥

---

१. 'रम्' ग. पाठः। २. 'निधूपयेत्' क.ख. पाठः। ३. 'ऐंक्लींसौःऐं' इति क. पाठः। ४. 'ब्लूं' इति क. पुस्तके नास्ति।

अर्चयेद् गन्धपुष्पाद्यैः स्वशिवं तदनन्तरम्। मूलमन्त्रं ततः ओंनमः शिवाय ततः परम्।।५।।
यजेत् तत्पुरुषाघोरसद्योजातादिसंज्ञकैः। तारं च शान्त्यतीतां च तदङ्गे तदनन्तरम्।।६।।
समग्रविद्यामुच्चार्य त्रिकोणं चैव पूजयेत्। इति।

उत्तरतन्त्रे–

अवधूतेश्वरीं कुब्जां कामाख्यां समयामपि। वज्रेश्वरीं कालिकां च तथा दिक्चरवासिनीम्।। १।।
महाचण्डेश्वरीं तारां पूजयेत्तत्र साधकः। तदनुज्ञां ततो लब्ध्वा दत्त्वा ताम्बूलमेव च।। २।।
शिवं च तत्र निःक्षिप्य गजतुण्डाख्यमुद्रया। धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा।।३।।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम्। स्वाहान्तोऽयं महामन्त्र आरम्भे परिकीर्तितः।। ४।।
ततो जपेत् स्त्रियं गच्छन् विद्यां त्रिभुवनेश्वरीम्। प्रकाशाकाशहस्ताभ्यावलम्ब्योन्मनीस्रुचा।।५।।
धर्माधर्मकलास्नेहपूर्ण[१]मग्नौ जुहोम्यहम्। स्वाहान्तोऽयं महामन्त्रः शुक्रत्यागे प्रकीर्तितः।।६।। इति।

ज्ञानार्णवे–

शिवशक्तिसमायोगो योग एव न संशयः। सीत्कारो मन्त्ररूपं च वचनं स्तवनं भवेत्।। १।।
आलिङ्गनं तु कस्तूरी कर्पूरं चुम्बनं भवेत्। नखदन्तक्षतादीनि पुष्पाणि विविधानि च।।२।।
मैथुनं तर्पणं विद्धि वीर्यपातो विसर्जनम्। इति।

कुलार्णवे–

आलिङ्गनं चुम्बनं च स्तनयोर्मर्दनं तथा। दर्शनस्पर्शने योनेर्विकारं(सो)लिङ्गघर्षणम्।। १।।
प्रवेशः स्थापनं शक्तेर्नव पुष्पाणि पूजयेत्[२]। इति।

यामले–

संयोगाज्जायते सौख्यं परमानन्दलक्षणम्। कुलामृतं प्रयत्नेन गृह्णीयाद् दुर्लभं नरः।। १।।
तेनामृतेन दिव्येन सर्वे तुष्टा भवन्ति हि। यत्कामं कुरुते मन्त्री तत् क्षणादेव सिद्ध्यति।।२।।

इति। ज्ञानार्णवे–

कुलद्रव्यं च संशोध्य शिवशक्तिमयं प्रिये। बीजामृतं परं ब्रह्म जपन्निक्षिप्य[३] सुन्दरि।। १।।
अर्घ्यपात्रामृतैर्यत्नान्निर्विकल्पः सदानघः। श्रीविद्याक्रममभ्यर्च्य परब्रह्ममयो भवेत्।। २।।
इति ते कथितं ज्ञानं सारं रम्यं[४] वरानने। सविकल्पस्तु सततं पापभाग्जायते नरः।। ३।।
विचिकित्सापरो मन्त्री जायते गुरुतल्पगः। अत एव वरारोहे निर्विकल्पः सदा भवेत्।। ४।। इति।

कुलार्णवे–

कुलामृतं समादाय तदर्घ्ये निक्षिपेद् बुधः। तदर्घ्येण समाराध्य पूजाशेषं समापयेत्।। १।।

शोधितस्य कुलामृतसंज्ञा। शोधनमन्त्रस्तु श्रीक्रमे–

ओंअमृते अमृतोद्भवे अमृतवर्षिणि प्रिये। देवि पदं शुक्रशापं प्रमोचय पदद्वयम्।। १।।

---

१. 'हं पूर्ण' क. ख. पाठः। २. 'योजयेत्' ग. पाठः। ३. 'जपं' ग. 'मयं' ख. पाठः। ४. 'सामरस्यं' घ. पाठः।

अमृतं स्रावयद्वन्द्वममृतं कुरुयुग्मकम्। स्वाहापदं ततो देवि शुक्रशुद्धिर्भवेत् प्रिये।।२।।
शुक्लैरक्षततण्डुलैः सुगन्धिकुसुमैर्युतैः। अर्घ्यद्रव्यैश्च देवेशि योनौ देवीं प्रपूजयेत्।।३।। इति।
उत्तरतन्त्रे—
धूपैर्दीपैश्च नैवेद्यैर्विविधैः कुलसाधकः। विधाय वन्दितां तां च तदुच्छिष्टं स्वयं चरेत्।। १।।
इति। शिवागमे च—
अविचारं[१] शक्त्युच्छिष्टं पिबेच्चक्रपुरो यदि। घोरं च नरकं याति कुलमार्गात् पतेद् ध्रुवम्।। १।।
तस्माद्विचार्य यत्नेन शक्त्युच्छिष्टं पिबेत् सुधीः। आनन्दं कारयेद्वीरस्तत्त्वं[२] निर्भ्रान्तितः पिबेत्।।२।।

इति सङ्क्षेपतः शक्तिशोधनं, विशेषस्त्वग्रे प्रयोगविधौ वक्ष्यते।। अथ पीठपूजा प्रयोगरूपे—तत्रार्घ्योदकेन श्रीचक्रमभ्युक्ष्य स्ववामतः पीठोपरि ४ गुरुपादुकाविद्यामुच्चार्य श्रीअमुकानन्दनाथश्रीपादुकां पूजयामीति सम्पूज्य, दक्षिणे गं गणपतिश्री० इति सम्पूज्य, सर्वाधस्तादारभ्यातलादिसप्तपातालादिभावनयोपर्युपरि ४ मण्डूकाय नमः, ४ कालाग्निरुद्राय नमः, ४ मूलप्रकृत्यै नमः, ४ आधारशक्तये०, ४ कूर्माय०, ४ वराहाय०, ४ अनन्ताय०, ४ पृथिव्यै०, अमृताम्भोनिधये०, ४ रत्नद्वीपाय०, ४ नानावृक्षमहोद्यानाय०, ४ कल्पवृक्षवाटिकायै०, हरिचन्दनवाटिकायै०, ४ मन्दारवाटिकायै०, ४ पारिजातवाटिकायै०, ४ पुष्परागरत्नप्राकाराय०, ४ पद्मरागरत्नप्राकाराय०, गोमेदरत्नप्राकाराय०, ४ इन्द्रनीलरत्नप्राकाराय०, ४ वज्ररत्नप्राकाराय०, ४ वैदूर्यरत्नप्राकाराय०, ४ माणिक्यमण्डपाय०, ४ सहस्रस्तम्भमण्डपाय नमः, ४ अमृतवापिकायै०, आनन्दवापिकायै०, ४ विमर्शवापिकायै०, ४ बालातपोद्गाराय०, ४ चन्द्रिकोद्गाराय०, ४ महाशृङ्गारपरिखायै०, ४ महापद्माटव्यै०, ४ चिन्तामणिगृहराजाय०, ४ पूर्वाम्नायपूर्वद्वाराय०, ४ दक्षिणाम्नायदक्षिणद्वाराय०, ४ पश्चिमाम्नायपश्चिमद्वाराय०, ४ उत्तराम्नायोत्तरद्वाराय०, ४ रत्नद्वीपवलयाय०, ४ महासिंहासनाय नमः। ततो महासिंहासनं पञ्चप्रेतमयं ध्यात्वा तस्य वायव्यादिकोणचतुष्टयगतपादचतुष्टयत्वेन स्थितान् ब्रह्मविष्णुरुद्रेश्वरान् पीतश्यामरक्तसितार्कप्रभांश्चतुर्भुजानुपविष्टांस्तेषां स्कन्धेषु सुलग्नमुत्तानशायिनमुदक्शीर्षं सदाशिवमिन्दुप्रभं ध्यात्वा पूजयेत्। तद्यथा—वायव्ये ४ लां पृथिव्याधिपतये ब्रह्मणे नमः ब्रह्मप्रेतासनश्री०, ईशाने ४ वामपामधिपतये विष्णवे नमः विष्णुप्रेतासनश्री०, आग्नेये ४ रां तेजोऽधिपतये रुद्राय नमः रुद्रप्रेतासनश्री०, नैर्ऋते ४ यां वाय्वधिपतये ईश्वराय नमः ईश्वरप्रेतासनश्री०, मध्ये ४ ह्सौः वियदधिपतये सदाशिवाय नमः सदाशिवमहाप्रेतासनश्री०— इति पञ्चप्रेतासनं सम्पूज्य, तस्य वायव्यादिकोणचतुष्टये धर्मादिचतुष्टयं तस्य पश्चिमादिचतुर्दिक्ष्वधर्मादिचतुष्टयं च प्रादक्षिण्येन सम्पूज्य, तन्मध्ये मायाविद्ये सम्पूज्य, तदुपरि पञ्चशत[३] फणविराजितायानन्ताय नम इति सम्पूज्य, तन्मध्ये मौलावष्टदलकमलं कामेश्वरीपीठं ध्यात्वा, पद्माय नमः इत्यादिपरेतत्त्वान्तं सम्पूज्याष्टदलकेसरेषु मध्ये च मोहिन्यादिनवशक्तीर्योगपीठन्यासोक्ताः सम्पूज्य, न्यासोक्तपीठमन्त्रेण समस्तं पीठं संपूज्य, तदुपरि श्रीचक्रं विभाव्य ४ समस्तप्रकटेत्यादिसमष्टियोगिनीमन्त्रेण समस्तचक्रं सम्पूज्य, बिन्दुचक्रे ४ मूलं ओंह्रौंक्लींऐं[४] भगवति ब्लूं नित्याकामेश्वरि स्त्रीं सर्वसत्त्ववशंकरि सः त्रिपुरभैरवि ऐंविच्चे ह्रींश्रीं श्रीमहात्रिपुरसुन्दर्यम्बाश्री०, इति पूर्णविद्यया त्रिः सम्पूज्य, पुनर्मूलेन त्रिः सम्पूज्य श्रीचक्रं पुरत्रयात्मकं ध्यात्वा, चतुरस्रत्रयषोडशदलाष्टदलात्मके प्रथमचक्रे ४ प्रथमकूटमुच्चार्य शरीरात्मने नमः, चतुर्दशारदशारद्वयात्मके मध्यचक्रे ४ द्वितीयं बुद्ध्यात्मने नमः, अष्टारत्रिकोणबिन्द्वात्मकान्तश्चक्रे ४ तृतीयं प्राणात्मने नमः, इति सम्पूज्य, पुनर्बाह्यतृतीये बाह्यमध्यान्तरभेदेन प्रोक्तक्रमेण कूटत्रयेण सम्पूज्य, तथा मध्यचक्रत्रये आभ्यन्तरत्रये च सम्पूज्य,

१ 'रात्' ग. पाठः। २ 'स्ततो' क. ख. पाठः। ३ 'पञ्चदश' ग. पाठः। ४ 'ओंह्रोंक्लींऐं' ग. पाठः।

त्रिकोणचक्रस्य कोणत्रये मध्ये च पीठचतुष्टयं सम्पूज्य, बिन्दुचक्रे महोड्यानपीठे हिरण्मयसहस्रदलकमलाय नमः, इति सम्पूज्य, चतुरस्रपद्मद्वये चतुर्दशारदशारद्वयाष्टार[1] त्रिकोणबिन्दुचक्रेषु षडासनानि संपूज्य, चतुरस्रे ४ नादशक्तिश्री०, षोडशदले बिन्दुशक्तिश्री०, अष्टदले ४ कलाशक्तिश्री०, चतुर्दशारे ४ ज्येष्ठाशक्तिश्री०, बाह्यदशारे ४ रौद्रीशक्तिश्री०, अन्तर्दशारे ४ वामाशक्तिश्री०, अष्टकोणे ४ विषघ्नीशक्तिश्री०, त्रिकोणे, ४ दूतरीशक्तिश्री०, बिन्दौ ४ सर्वानन्दाशक्तिश्री० इति नव शक्तीः संपूज्य, षट्त्रिंशत्तत्त्वात्मकं श्रीचक्रं ध्यात्वा ४ अं ५० शिवशक्तिसदाशिवेश्वरशुद्धविद्यामाया-कलाविद्यारागकालनियतिपुरुषप्रकृत्यहङ्कारबुद्धिमनः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपायूपस्थशब्दस्पर्शरूपरसगन्धा-काशवाय्वग्निसलिलपृथिव्यात्मने श्रीमहा– त्रिपुरसुन्दर्याः योगपीठाय नमः, इति समस्तं पीठं पुष्पाञ्जलिना सम्पूज्य, ततस्तदुपरि मध्ये प्रसूनतूलिकां कल्पयामीति पुष्पं निःक्षिप्य, तदुपरि ४ ह्रींश्रीं महात्रिपुरसुन्दर्याः सकलचैतन्यानन्दमयीं श्रीकामेश्वरकामेश्वरीमूर्तिं कल्पयामीति पुष्पादिप्रक्षेपेण ध्यानोक्तां मूर्तिं भावयन् शक्त्युत्थापनमुद्रां प्रदर्श्य, मूलमुच्चार्य परस्यै कामेश्वरकामेश्वरीमूर्त्यै नमः, इति कल्पितमूर्तिं पूजयेदिति योगपीठपूजा।।

अथ श्रीचक्रपूजा—तत्र प्रथमं स्वहृत्कमले श्रीचक्रं ध्यात्वा तन्मध्ये देवीं ध्यायेत्

ततो ध्यानं प्रवक्ष्यामि त्रिदशैः सेवनीयकम्। ततः पद्मनिभां देवीं बालार्ककिरणारुणाम्।। १।।
जपाकुसुमसङ्काशां दाडिमीकुसुमोपमाम् । पद्मरागप्रतीकाशां कुङ्कुमोदरसन्निभाम् ।। २।।
स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम्। कालालिकुलसङ्काशकुटिलालकपल्लवाम्।।३।।
प्रत्यग्रारुणसङ्काशवदनाम्भोजमण्डलाम्। किञ्चिदर्धेन्दुकुटिलललाटमृदुपट्टिकाम् ।। ४।।
पिनाकधनुराकारभ्रूलतां परमेश्वरीम्। आनन्दमुदितोल्लोललीलान्दोलितलोचनाम् ।। ५।।
स्फुरन्मयूखसङ्घातविलसद्धेमकुण्डलाम्। सुगण्डमण्डलाभोगजिते[2]न्द्वमृतमण्डलाम्।। ६।।
विश्वकर्मावि[3]निर्माणसूत्रसुस्पष्टनासिकाम्। ताम्रविद्रुमबिम्बाभरक्तोष्ठीममृतोपमाम्।। ७।।
दाडिमीबीजवज्राभदन्तपङ्क्तिविराजिताम्। रत्नद्वी(दी)पसमुद्भासिजिह्वां मधुरभाषिणीम्।। ८।।
स्मितमाधुर्यविजितमाधुर्यरससागराम् । अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।। ९।।
कम्बुग्रीवां महादेवीं मृणाललसितैर्भुजैः। मणिकङ्कणकेयूरभारखिन्नैः प्रशोभिताम्[4]।। १०।।
रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् । काराम्बुजनखज्योतिर्वितानितनभस्तलाम्[5]।। ११।।
मुक्ताहारलतोपेतसमुन्नतपयोधराम् । त्रिवलीवलनायुक्तमध्यदेशसुशोभिताम् ।। १२।।
लावण्यसरिदावर्त्ताकारनाभिविभूषिताम्। अनर्घरत्नघटितकाञ्चीयुक्तनितम्बिनीम्।। १३।।
नितम्बबिम्बद्विरदरोमराजीवराङ्कुशाम्। कदलीललितस्तम्भसुकुमारोरुमीश्वरीम्।। १४।।
लावण्यकदलीतुल्यजङ्घायुगलमण्डिताम्। गूढगुल्फपदद्वन्द्वप्रपदाजितकच्छपाम्।। १५।।
नूपुरैर्विलसत्पादपङ्कजातिमनोहराम् । ब्रह्मविष्णुशिरोरत्ननिर्घृष्टचरणाम्बुजाम् ।। १६।।
तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम्। शीतांशुशतसङ्काशकान्तिसन्तानहासिनीम्।। १७।।
लौहित्यजितसिन्दूरजपादाडिमरागिणीम्। रक्तवस्त्रपरीधानां पाशाङ्कुशकरोद्यताम् ।। १८।।

१.'सत्रिकोण' ग.पाठः। २. 'जीवे' ख. पाठः। ३. 'दि' क. पाठः। ४. 'प्रसेविताम्' ग. पाठः। ५. 'विराजितनभस्थलाम्' घ. पाठः।

रत्नपुष्पनिविष्टां च रक्ताभरणमण्डिताम्। चतुर्भुजां त्रिनेत्रां च पञ्चबाणधनुर्धराम्।। १९।।
कर्पूरशकलोन्मिश्रताम्बूलापूरिताननाम्। महामृगमदोद्दामकुङ्कुमारुणविग्रहाम्।। २०।।
सर्वशृङ्गारवेषाढ्यां सर्वाभरणभूषिताम्। जगदाह्लादजननीं जगद्रञ्जनकारिणीम्।। २१।।
जगदाकर्षणकरीं जगत्कारणरूपिणीम्। सर्वमन्त्रमयीं देवीं सर्वसौभाग्यसुन्दरीम्।। २२।।
सर्वलक्ष्मीमयीं नित्यां परमानन्दनन्दिताम्। एवं ध्यायेत् परेशानीं महात्रिपुरसुन्दरीम्।।२३।।

इत्येवं स्वैक्येन ध्यात्वा मूलविद्यया शिरसि पुष्पाञ्जलिं दत्त्वा, पुनर्हृदयकमले यथोक्तरूपां भगवतीं साङ्गां सावरणां ध्यात्वा, देवीं मानसैरुपचारैः सम्पूज्य नैवेद्यं दत्त्वा भोजनावसरेऽन्तर्वैश्वदेवं कुर्यात्।। तद्यथा– तत्र मूलाधारे आत्मान्तरात्मपरमात्मज्ञानात्मेत्यादिचतुष्टयक्लृप्तं चतुरस्रं कुण्डल्यग्निसमुज्ज्वलं कुण्डं ध्यात्वा, तत्र श्रीदेवतां ध्यात्वा तन्मुखे मूलविद्यान्ते ''अहन्तां जुहोमि स्वाहा'' इत्याद्यहन्तासत्यपैशुन्यकामक्रोधलोभमोहमदमात्सर्याणि सुषुम्नास्रुग्युक्तमनःस्रुवेण प्रत्येकं हुत्वा, पुनर्हृदयकमले भुक्तवतीं ध्यात्वा उत्तरापोशाना[1] दिसर्वोपचारैराराध्य, मूलविद्यां यथाशक्ति जपित्वा जपं समर्प्य मूलविद्यया व्यापकं विन्यस्य, कराभ्यां पुष्पाञ्जलिमादाय मातृकाम्भोजत्वेन कल्पयित्वा त्रिखण्डां मुद्रां बद्ध्वा, हृदि श्रीचक्रराजे देवीं यथोक्तरूपां सपरिवारां ध्यात्वा तेजोरूपतामापा[2]द्यान्तर्मुद्राप्रयोगेण मूलाधारात् कुण्डलिनीमुत्थाप्य तया सह षट्चक्रभेदक्रमेण हृदयान्तः स्फुरन्तीं तां तेजोमयीं सुषुम्नामार्गेण ब्रह्मरन्ध्रं नीत्वा, परतेजःसङ्गमेनामृतमहाम्बुधौ क्षणं विश्रम्य शिवशक्तिसामरस्यसुखमनुभूय, ४ हस्त्रैं हसकलह्रीं[3] हस्त्रौः नमः श्रीमहात्रिपुरसुन्दरि

''महापद्मवनान्तःस्थे कारणानन्दविग्रहे। सर्वभूतहिते मातरेह्येहि परमेश्वरि।। एह्येहि देवदेवेशि त्रिपुरे देवपूजिते। परामृतप्रिये शीघ्रं सान्निध्यं कुरु सिद्धये।। देवेशि भक्तसुलभे परिवारसमन्विते। यावत् त्वां पूजयिष्यामि तावत् त्वं सुस्थिरा भव।।''

इत्यावाहनमन्त्रमुच्चार्य वहन्नासापुटाध्वना त्रिखण्डामुद्रामुद्रितकरस्थपुष्पाञ्जलौ तत्तेजः समानीय,'श्रीपीठान्तः– कल्पितमूर्तेः शिरसि ब्रह्मरन्ध्रस्थाने सन्निवेश्य, कामेश्वराङ्कस्थां सावरणां श्रीमहात्रिपुरसुन्दरीं सर्वावयवभावेन ध्यायन् मूलमुच्चार्य श्रीमहात्रिपुरसुन्दरि इह तिष्ठ तिष्ठेति स्थापिन्या मुद्रया संस्थाप्य, तथैव इह संनिधेहि सन्निधेहीति सन्निधापनीयमुद्रया सन्निधाप्य, पुनस्तथैव सन्निरुध्यस्व २ इति सन्निरोधिन्या सन्निरुध्य, तथैव सम्मुखीभव २ इति तन्मुद्रया सम्मुखीकृत्य, तथैवावगुण्ठिता भव २ इति तन्मुद्रयावगुण्ठ्य, देव्यङ्गे षडङ्गविन्यासेन सकलीकृत्य, तथैव धेनुमुद्रयामृत-धारयाभिषेचनेनामृतीकृत्य, तथैव महामुद्रया, परमीकृत्य एता आवाहन्यादि- नवमुद्राः प्रदर्श्य, ततो मूलविद्यां पूर्वोक्तदीपिनीविद्यामकारादिक्षकारान्तां मातृकां चोच्चार्य मूलेन देवीं त्रिः सम्प्रोक्ष्य, ४ ''श्रींह्रींक्लींहंगणपकालिके सौः सकलह्रींक्लींह्रींक्रीं'श्रीं'' इति जीवन्यासविद्यया देव्या हृदयकमले जीवं संस्थाप्य प्राणप्रतिष्ठां कुर्यात्। तत्र पूर्वोक्तप्राणप्रतिष्ठामन्त्रेण देवीं हृदये स्पृशन् तन्मन्त्रं त्रिः सकृद्वा पठेदित्येवं प्राणप्रतिष्ठां विधाय, ततः सङ्क्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाखेचरीबीजयोन्याख्या नवमुद्राः ''द्रांद्रींक्लींब्लूंसःक्रों हसखफ्रें हसौं ऐं'' इत्येकैकबीजोच्चारणपूर्वकमेकैकां मुद्रां प्रदर्श्य, आंह्रीं इति पाशमुद्रां क्रोंक्रों इत्यङ्कुशमुद्रां धंधं इति धनुर्मुद्रां द्रांद्रींक्लींब्लूंसःयांरांलांवांसां, इति दशभिर्बीजैर्बाणमुद्रां च प्रदर्श्य, ४ मूलं श्रीमहात्रिपुरसुन्दरीपादुकां पूजयामीति देवीं सम्पूज्य, पुनः ४ मूलमुच्चार्य श्रीमहात्रिपुरसुन्दरीपादुकां तर्पयामीति सव्यहस्ताङ्गुष्ठानामिकाभ्यां

१. 'उक्तापासना' क. पाठः। 'उक्तोपा' ख. पाठः। २. 'माया' क. पाठः। ३. 'री' ग. पाठः। ४. 'ब्लींक्लीं' ग. पाठः।

विशेषार्घ्यबिन्दुभिस्त्रिवारादन्यूनमष्टोत्तरसहस्रावधि यथाशक्ति श्रीपरदेवताया मुखकमले तर्पयित्वा आसनादिषोडशोपचारान् कुर्यात्। ततो मूलविद्यामुच्चार्य भगवति श्रीमहात्रिपुरसुन्दरि तुभ्यमिदमासनं कल्पयामि अत्र आस्यतां भवत्येति वार्क्षपौष्पचार्मवास्त्रतैजसाद्यन्यतममासनं कल्पयित्वा देव्या वामभागे निवेश्य, सिंहासनपद्ममुद्रे प्रदर्श्य प्रणम्य, हंहंहं इदमिदं गृहाण स्वाहेति प्रार्थनमुद्रया निवेद्य मूलेन पुष्पाञ्जलिं दद्यात्। ततो मूलविद्यामुच्चार्य श्रीमहात्रिपुरसुन्दरि स्वागतमिति कुशलप्रश्नं कृत्वा, स्वागतकुशलमुद्रे प्रदर्श्य मूलेन पुष्पाञ्जलिं दद्यात्। ततो मूलं० श्रीमहात्रिपुरसुन्दरीपादुकायै अर्घ्यं कल्पयामि स्वाहेति देव्याः शिरसि सामान्यार्घ्यात् किञ्चिज्जलमुद्धृत्य दद्यात्। ततो निवेदनमन्त्रेण निवेद्यार्घ्यमुद्रां प्रदर्श्य पुष्पाञ्जलिं दद्यात्। ततः पाद्यपात्राज्जलमुद्धृत्य ४ मू० श्रीमहात्रिपुरसुन्दरीपादुकायै पाद्यं परिकल्पयामि नमः, इति देव्याः पादयोः पाद्यं दत्त्वा, प्राग्वन्निवेद्य पाद्यमुद्रां प्रदर्श्य पुष्पाञ्जलिं दद्यात्। एवमाचमनीयं परिकल्पयामि सुधेति मुखे, मधुपर्कं कल्पयामि सुधा, इति मुखे दत्त्वा तन्मुद्रे प्रदर्श्य, ततः पुनराचमनीयपात्रस्थशुद्धजलेन पूर्ववदाचमनीयं मुखे दत्त्वा, ततो रत्नपादुके उपनीय

"पादुके परिधायाम्ब त्रिपुरे रत्ननिर्मिते। स्नानमण्डपमायाहि स्नानार्थे शक्रदिग्गतम्॥"

इति प्रार्थ्य रत्नपादुके परिधाप्य स्नानमण्डपं नीत्वा स्नानवस्त्रं परिधाप्य कनकासने समुपवेश्य प्राग्वदर्घ्यपाद्याचमनीयानि दत्त्वा, ४ मूलमुच्चार्य श्रीमहात्रिपुरसुन्दरीपादुकायै स्नानीयं कल्पयामि नमः, इति सुगन्धितैलामलकादिस्नानीयद्रव्याणि परिकल्प्य प्राग्वन्निवेद्य, महाराजोपचारवदभ्यङ्गोद्वर्तनकेशप्रसाधनानि विधायोष्णोदकेन निर्मलस्नानं कारयित्वा वैदिकपौराणिकमन्त्रैः पञ्चगव्यैः पञ्चामृतेन च स्नपयित्वा, पुनः शुद्धजलेन स्नपयित्वा, इक्षुरसनारिकेलसलिलपनसाम्रादिविविधफलरसैः कर्पूरादिसुवासितैः स्नपयित्वा, पुनर्जलेनाभिषिच्य देवाङ्गनाभिः सुवर्णादिघटैर्नानातीर्थोपहृतैः सलिलैः स्नपयित्वा, प्राग्वत्पुष्पाञ्जलिं मूलेन दत्त्वा स्नानमुद्रां प्रदर्श्याचमनीयं कल्पयित्वा, केशाङ्गमार्जनार्थे वस्त्रं दत्त्वा जलप्रच्यवनं कारयित्वा, नानारत्नखचितं रत्नदुकूलद्वयं वमिति[1] प्रोक्ष्य मूलेनाभिमन्त्र्य बृहस्पतिदैवताभ्यां वासोभ्यां नमः, इति सम्पूज्य ४ मूलं श्रीमहात्रिपुरसुन्दरीपादुकायै वाससी परिकल्पयामि नमः, इति परिधाप्य वस्त्रमुद्रां प्रदर्श्य पुनराचमनीयनिवेदनं पुष्पाञ्जलिदानं च कृत्वा, पट्टसूत्रभवं स्वर्णादिरचितं वा कण्ठसूत्रं विष्णुदैवताय कण्ठसूत्राय नमः, इति पूजितं देव्यै समर्प्योपवीतमुद्रां प्रदर्श्य मू० श्रीमहात्रिपुरसुन्दरि

"पादुके परिधायाम्ब त्रिपुरे रत्ननिर्मिते। आगच्छ निर्मलं याम्यमलङ्कारस्य मण्डपम्॥"

इति प्रार्थ्यालङ्कारमण्डपं नीत्वा सिंहासने समुपवेश्यालङ्कारान् पुरतो निधाय वमिति प्रोक्ष्य मूलेनाभिमन्त्र्य, विष्णुदैवतेभ्योऽलङ्कारेभ्यो नमः, इति सम्पूज्य, मूलं श्रीमहात्रिपुरसुन्दरीपादुकायै मुकुटाद्यलङ्कारान् परिकल्पयामि नमः इति सामान्यत उत्सृज्य, विशेषतो मुकुटं परिकल्पयामि नमः, इत्यादि-मुकुट-ललाटाभरण-कर्णपूर-हार-ग्रैवेयकाङ्गुलीयक-प्रालम्बिका-रत्नसूत्राक्षरावली-कर्णोत्तंस-पार्श्वभूषण-नखद्योताङ्गुलीयककण्ठ-लम्बार्धहार-मृदुमारललन्तिकाङ्गद-केयूर-वलय-बाहुवेष्टन-सीमन्तिक-गण्डभूषण-भ्रूभूषण-नाभिभूषण-रत्नमाला-मणिमेखला। शृङ्खला-दन्तरत्न-कर्णक[2]-नीवीरत्न-जानुभूषण-पादाङ्गुलीयक-नूपुरगुच्छक-पादकटक-हंसक-क्षुद्रघण्टिका-मुखपत्रमिति चत्वारिंशद्भिरन्यैश्च चूडारत्नताटङ्कादिनानाविधैः स्त्र्यलङ्करणैरङ्कृत्य, पूर्ववन्निवेदनमन्त्रेण निवेद्य पुष्पाञ्जलिं दत्त्वाभरणमुद्रां प्रदर्श्य, रत्नपादुके उपनीय ४ मू० श्रीमहात्रिपुरसुन्दरि

---

१. 'तुभ्यमिति' ख. पाठः। २. 'कर्णिका' ख. पाठः।

"पादुकायुगमारुह्य पञ्चवाद्यपुरःसरम्। यागमण्डपमायाहि परिवारगणैः सह।।"

इति प्रार्थ्य च्छत्रचामरादिनानोपकरणहस्ताभिः शक्तिभिः सह यागमण्डपं नीत्वा, कामेश्वराङ्के भगवतीं समुपवेश्य परिवारदेवताश्च यथास्थानं समुपवेशयेत्।। "ततः श्रीचक्रमारूढां ध्यायेत् त्रिपुरसुन्दरी"मित्यादिप्रागुक्तरीत्या ध्यात्वा मूलेन पुष्पाञ्जलिं दत्त्वा चन्दनागरुकस्तूर्यादिगन्धपञ्चकं चूर्णघृष्टदाहजसमर्दजप्राण्यङ्गजमिति पञ्चविधं गन्धं तदन्यतमं वा प्राग्वत् प्रोक्ष्य विष्णुदैवताय गन्धाय नमः, इति सम्पूज्य, ४ मू० श्रीमहात्रिपुरसुन्दरीपादुकायै गन्धं परिकल्पयामीति गन्धं समर्प्य, प्राग्वन्निवेद्य गन्धमुद्रां प्रदर्श्य, पुष्पाञ्जलिं दत्त्वा सुगन्धरूपाणि नानाविधपुष्पाण्यानीय प्रोक्ष्य वनस्पतिदेवताभ्यः पुष्पेभ्यो नमः, इति सम्पूज्य ४ मू० श्रीमहात्रिपुरसुन्दरीपादुकायै पुष्पाणि परिकल्पयामि वौषडिति पुष्पाणि निवेद्य पुष्पमुद्रां प्रदर्श्य पुष्पाञ्जलिं दत्त्वा, धूपग्राहिण्यां धूपमानीय प्रोक्ष्य धेनुमुद्रयामृतीकृत्य क्लीं सुरभितेजसे स्वाहा, इति मन्त्रेण दशाङ्गं शर्कराघृतमिश्रितं गुग्गुलं वा निःक्षिप्य गन्धर्वदैवत्याय धूपाय नमः, इति धूपं सम्पूज्य, ४ मूलम्—

"वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्।।"

श्रीमहात्रिपुरसुन्दरीपादुकायै धूपं परिकल्पयामि नमः, इति धूपमुत्सृज्य धूममुद्रां प्रदर्श्य, वामभागे घण्टां निधायास्त्रेण प्रोक्ष्य धेनुमुद्रयामृतीकृत्य पुनरस्त्रेण गन्धादिभिः सम्पूज्य "ओंगजध्वनिमन्त्रमातः स्वाहा" इति घण्टामन्त्रेणाभिमन्त्र्य वामहस्तेन वादयन् दक्षिणहस्तेन धूपपात्रं चालयन् नीचैर्धूपं निवेद्य तत्पात्रं देव्या वामभागे निधाय, दीपपात्रं गोघृतेनापूर्य तस्मिन् कर्पूरगर्भिणीं वर्तिं निःक्षिप्य ह्रीमिति प्रज्वाल्य धेनुमुद्रयामृतीकृत्य विष्णुदैवत्याय दीपाय नमः, इति सम्पूज्य ४ मूलं "स्वप्रकाशो महादीपः सर्वत्र तिमिरापहः। सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम्"।। श्रीत्रिपुरसुन्दरीपादुकायै दीपं परिकल्पयामि नमः, इति दीपमुत्सृज्य दीपमुद्रां प्रदर्श्य प्राग्वन्निवेद्य घण्टावादनपूर्वकमुच्चैर्दीपं प्रदर्श्य तत्पात्रं देव्या दक्षिणभागे निवेश्य, देव्यग्रे चतुरस्रमण्डलं जलेन निर्माय स्वर्णादिपात्रं नानाव्यञ्जनभरितं षड्रसोपेतं पञ्चविधनैवेद्योपेतं तस्मिन् मण्डले साधारं निधाय, मूलेन निरीक्ष्यास्त्रेण प्रोक्ष्य तेनैव कुशैस्त्रिः सन्ताड्य कवचेनाभ्युक्ष्य "ओंजूंसः वौषट्" इत्यनेन सप्ताभिमन्त्रितेन जलेन पुनः प्रोक्ष्यास्त्रमन्त्रेण चक्रमुद्रां प्रदर्श्याधोमुखवामकरेण नैवेद्यं स्पृशन् यमिति बीजेन सप्तधा जपन् तद्गतदोषान् संशोध्य, अधोमुखदक्षकरेण स्पृशन् रमिति वह्निबीजं सप्तवारं जपन् तद्गतदोषान् सन्दह्य अधोमुखवामकरेण स्पृशन् वमिति बीजेन सप्तधाभिमन्त्रणेन तदमृतीकृत्य, मूलेन विशेषार्घ्यबिन्दुभिः प्रोक्ष्य विष्णुदैवत्याय नैवेद्याय नमः, इति संपूज्यास्त्रेण संरक्ष्य, मूलेन सप्तवारमभिमन्त्र्य "ओंक्लींकामदुघे अमोघे वरदे विच्चे स्फुर २ श्रींश्रींश्रीं" इति कामधेनुविद्यया धेनुमुद्रयामृतीकृत्य (महामुद्रया परमीकृत्य,) देव्यै प्राग्वत् पाद्याचमनीये दत्त्वा, मूलविद्यया देवीं सम्पूज्य पात्रान्तरे जलममृतीकृत्य, चुलुकेनादाय वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृशन् मूलमुच्चार्य साङ्गायै सायुधायै सपरिवारायै सर्वात्मिकायै भगवत्यै श्रीमहात्रिपुरसुन्दरीपादुकायै नैवेद्यं कल्पयामि नमः, इति नैवेद्योपरि चुलुकोदकं समर्पयेत्। ततः कृताञ्जलिः— मूलमुच्चार्य श्रीमहात्रिपुरसुन्दरि

"हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम्। पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि।।"

इत्यन्ते प्रागुक्तमनुना निवेद्य पात्रान्तरे जलममृतीकृत्य देव्या दक्षिणहस्ते तज्जलं किञ्चिद् दत्त्वा ओं अमृतोपस्तरणमसि स्वाहा, इति देवीं प्राशयित्वा, वामकरेण ग्रासमुद्रां विकचोत्पलसन्निभां दर्शयन् दक्षिणहस्तेन प्राणादिपञ्चमुद्राः प्रदर्शयेत्। तद्यथा—४ ऐंओं प्राणाय स्वाहा, इत्यङ्गुष्ठेन कनिष्ठानामिके स्पृशेत्। ४ क्लींओं अपानाय स्वाहा, इत्यङ्गुष्ठेन तर्जनीमध्यमे स्पृशेत्। ४ सौःओं व्यानाय स्वाहा, इत्यङ्गुष्ठेनानामिकामध्यमे स्पृशेत्। ४ ऐंक्लीं उदानाय

स्वाहा, इत्यङ्गुष्ठेनानामिकामध्यमातर्जनीः स्पृशेत्। ४ ऐंक्लींसौः समानाय स्वाहा, इत्यङ्गुष्ठेन सर्वाः स्पृशेत्,— इति प्राणादिपञ्चमुद्राः प्रदर्शयन् पञ्च ग्रासान् ग्राहयित्वा, कृताञ्जलिर्मूलविद्यामुच्चार्य ऐं आत्मतत्त्वव्यापिकाश्रीमहात्रिपुरसुन्दरी तृप्यतु। पुनः मूलं क्लीं विद्यातत्त्व०। ३ मूलं सौः शिवतत्त्व०। मूलं ऐंक्लींसौः सर्वतत्त्व०, इति तत्त्वैर्ग्रासचतुष्टयं ग्राहयित्वा कृताञ्जलिर्मूलविद्यामुच्चार्य नैवेद्यमुद्रां करद्वयेन प्रदर्शयन् ४ मू० श्रीमहात्रिपुरसुन्दरि—

"चित्पात्रे सद्धविः सौख्यविविधानेकभक्ष्ययुक्। निवेदयामि ते देवि सानुगायै जुषाण तत्॥"

इत्यनेन मन्त्रेण पुष्पाञ्जलिं समर्प्य नैवेद्यजातं तादात्म्येन सपरिवारायै देव्यै निवेदयेत्। ततः स्वर्णादिपात्रस्थं कर्पूरादिसुवासितं जलं धेनुमुद्रयामृतीकृत्य, ४ मू० श्रीमहात्रिपुरसुन्दरि

"नमस्ते देवदेवेशि सर्वतृप्तिकरं परम्। अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम्॥ अमृतानन्दसम्पूर्णं गृहाण जलमुत्तमम्॥" इति देव्यै जलं निवेद्यास्त्रमन्त्रेण जवनिकया भोजनस्थलं संवेष्ट्य घण्टां वादयन् भुञ्जानां परदेवतां ध्यायेत्। तद्यथा—

"ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समेता शिञ्जद्बालव्यजननिकरैर्वीज्यमाना सखीभिः।
नर्मक्रीडाप्रहसनपरा पङ्क्तिभोक्तॄन् हसन्ती भुङ्क्ते पात्रे कनकघटिते षड्रसान् चिद्विलासा॥"

इति ध्यात्वा, मूलविद्यां दशधा जपित्वा जलं समर्प्य भुक्तवतीं सन्तृप्तां देवीं विभाव्य, धेनुमुद्रया पात्रान्तरे जलममृतीकृत्य "ओं अमृतापिधानमसि स्वाहा" इति देव्या हस्ते उत्तरापोशानजलं दत्त्वा तया तत्प्राशितं विभाव्य गतसारं नैवेद्यं समुद्धृत्य नैर्ऋत्यां दिशि स्थापयेत्। ततोऽस्त्रमन्त्रेण तत्स्थानं प्रोक्षिण्यद्भिः संशोध्य, हस्तमुखप्रक्षालनार्थे देव्यै जलं दत्त्वा करोद्वर्तनार्थे सुगन्धचूर्णं च दत्त्वा गण्डूषाणि कारयित्वा कर्पूरशकलैर्दन्तधावनं कारयित्वा, पुनर्गण्डूषाणि कारयित्वा चरणप्रक्षालनमाचमनीयं च दत्त्वा कर्पूरादिनानासुगन्धमिश्रितं ताम्बूलमानीय प्रोक्ष्य वनस्पतिदैवत्याय ताम्बूलाय नमः, इति सम्पूज्य, मू० श्रीमहात्रिपुरसुन्दरीपादुकायै ताम्बूलं कल्पयामि नमः, इत्युत्सृज्य, ४ मूलं श्रीमहात्रिपुरसुन्दरि

"तमालदलकर्पूरपूगभारतरङ्गितम्। संशोधितं सुगन्धं च ताम्बूलं परिगृह्यताम्॥

इत्यन्ते 'ओंहंहंहं इदमिदमिदं गृहाण स्वाहा' इति देव्यै ताम्बूलं निवेद्य, योनिमुद्रया प्रणम्य, मूलं श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि, इति सम्पूज्य वक्ष्यमाणप्रकारेण पूजां विधाय, क्लीमिति नमस्कारमुद्रां बद्ध्वा मूलेन प्रदर्श्य प्रणम्य हूमिति त्यजेत्। शाक्तश्चेदनुलोमविलोमेन मूलविद्यया सम्पुटितैर्मातृकाक्षरैः शुद्धमातृकास्थानेषु देव्या देहे गन्धपुष्पाक्षतैः सम्पूजयेत्। षडङ्गपूजामपि देव्या देहे कुर्यात्— इति लयाङ्गपूजां विधाय सङ्क्षोभणयादिमुद्राः प्रदर्श्य, विशेषार्घ्यबिन्दुभिस्त्रिर्वामहस्तेन सन्तर्प्यावरणपूजां कुर्यात्॥

अथ लयाङ्गपूजा तु तन्त्रान्तरे—

समूलैर्मातृकावर्णैरनुलोमविलोमगैः। तत्तत्स्थानेषु देव्यङ्गे गन्धाम्भोभ्यक्तपुष्पकैः॥ १॥
पूजयित्वा प्रथमतः षडङ्गैः पूजयेत् सुधीः। लयाङ्गमेतत् संप्रोक्तं देवताभावसिद्धिदम्॥ २॥
षडङ्गावरणं चक्रे कल्पोक्तविधिना यजेत्। भोगाङ्गं तत्समुद्दिष्टं देवताप्रीतिकारकम्॥ ३॥

इति। अत्र लयाङ्गभोगाङ्गपूजा त्वावश्यकी "लयाङ्गं कल्पयेद् देहे देव्यास्तु परमेश्वरि" इति ज्ञानार्णवोक्तत्वात्, अत्र लयाङ्गभोगाङ्गे मतद्वयसम्मते। देवशुद्धौ विशेषमाह कुलार्णवे—

मूलमन्त्रेण दीपिन्या मालिन्याघ्योंदकेन च। त्रिवारं प्रोक्षयेदेवं देवशुद्धिरितीरिता॥ १॥

इदं तु कालीमते। कादिमते तु—

मूलमन्त्रेण दीपिन्या मधु (पर्का?मत्या) र्घ्यबिन्दुभिः। त्रिवारं प्रोक्षयेदेवं देवशुद्धिरितीरिता॥ १॥

इति त्रिपुरार्णवोक्तत्वात्। अत्र समष्टिपूजा व्यष्टिपूजा च कर्तव्या। तदुक्तं स्वच्छन्दसङ्ग्रहे—

समष्टिपूजा प्रारम्भे व्यष्टिपूजावसानके। कर्तव्या सिद्धिमिच्छद्भिर्देवताप्रीतिकारिणी॥ १॥
रश्मिरूपा महादेव्याः सर्वावरणदेवताः। स्वच्छादर्शे यथा यन्त्रे तथैव प्रतिबिम्बिताः॥२॥
प्रतिबिम्बितदेवानां पूजा शास्त्रोक्तमार्गतः। समष्टिपूजा सा प्रोक्ता व्यष्टिपूजा तथोच्यते॥ ३॥
रश्मिरूपा महादेव्या अत्र पूजितदेवताः। श्रीसुन्दर्यङ्गलीनास्ताः सन्तु सर्वसुखावहाः॥ ४॥
एवमुक्त्वा तु देव्यङ्गे विलीना यन्त्रदेवताः। बिम्बीभूता विभाव्यैवं तत्तत्स्थानेषु देशिकाः॥ ५॥
देव्यङ्गेषु यजेत् पुष्पैर्व्यष्टिपूजा समीरिता। इति।

आवरणपूजाप्रारम्भे तु ४ मूलं "संविन्मये परे देवि परामृतचरुप्रिये। अनुज्ञां देहि देवेशि परिवारार्चनाय मे॥"
इति पुष्पाञ्जलिं दत्त्वावरणपूजामारभेदिति सम्प्रदायः।

तारत्रयं ध्रुवो माया हंसःसोहं शुचिप्रिया। सर्वसौभाग्यजननीपादुकां पूजयामि च॥ १॥
नत्यन्तमनुना देव्यै दद्यात् पुष्पाञ्जलित्रयम्। प्रदर्शयेद्योनिमुद्रां ततः सम्प्रार्थयेद् बुधः॥ २॥
सर्वमन्त्रमये देवि सर्वदेवनमस्कृते। अनुज्ञां देहि देवेशि परिवारार्चनाय मे॥ ३॥
इति सम्प्रार्थ्य देव्यङ्गान्निर्याता[1] विस्फुलिङ्गवत्। वह्नेः समस्तावरणदेवता रश्मिरूपिणः॥४॥
देव्याज्ञया स्थिताः स्वस्वस्थानेषु परिचिन्तयेत्। मनुश्चन्द्रः कुबेरश्च लोपामुद्रा च कामराट्॥५॥
अगस्त्यनन्दिसूर्याश्च विष्णुस्कन्दशिवास्तथा। दुर्वासाश्च तथा शक्रः उन्मनी वरुणस्तथा॥ ६॥
धर्मराजोऽनलो नागराजो वायुर्बुधस्तथा। ईशानश्च रतिश्चैव तथा नारायणस्तथा॥ ७॥
ब्रह्मा जीवो महादेव्युपासकाः पञ्चविंशतिः। एतैरुपासिता विद्या जाग्रत्स्वप्नसुषुप्तिकाः॥ ८॥
तुरीया बिन्दुचक्रेऽस्मिन् विशेषार्घ्यामृतेन च। पूजनीयाः प्रयत्नेन तारत्रयपुटाः क्रमात्॥ ९॥
अमुकोपासिता श्री च विद्या श्रीपादुकां ततः। पूजयामि नमश्चोक्त्वा यजेत् पञ्चोपचारकैः॥ १०॥
पाशाङ्कुशधनुर्बाणधारिण्यो रक्तविग्रहाः। चिन्तनीयाः प्रयत्नेन सर्वसौभाग्यदा बुधैः॥ ११॥
दर्शयेद्योनिमुद्रां वै सर्वसौभाग्यवाक्प्रदाम्। अनेन क्रमयोगेन विद्यावृन्दं प्रपूजयेत्[2]॥ १२॥
विद्यावृन्दमयीं पूजां पुष्पाञ्जलिविधानतः। निवेदयेन्महादेव्यै तर्पणादि समाचरेत्॥ १३॥
एतस्मिन् समये देवि तिथिनित्याः समर्चयेत्। विभाव्य च महात्र्यस्रं दक्षपूर्वोत्तरक्रमात्॥ १४॥
रेखासु तिसृषु देवि[3] पञ्च पञ्च विभागतः। प्रतिपत्तिथिमारभ्य पौर्णमास्यन्तमद्रिजे॥ १५॥
एकैकां पूजयेन्नित्यां महासौभाग्यभाग्भवेत्। कृष्णपक्षे विचित्रादिकामेश्वर्यन्तमेव हि॥ १६॥
एकैकवृद्ध्या हान्या च दर्शान्तं क्रमतो यजेत्। कामेश्वर्यादिका नित्या विचित्रान्ताः क्रमाद्यजेत्॥१७॥

१. 'निर्गता' क. ख. पाठः। २. 'विचिन्तयेत्' ग. पाठः। ३. 'त्रिवु' देवेशि' क. ख. पाठः।

पञ्चोपचारैर्गन्धाद्यैः श्रीपात्रामृतबिन्दुभिः । तत्तद्विद्यां समुच्चार्य तारत्रितयसम्पुटाम् ॥ १८॥
उच्चार्यामुकनित्याश्रीपादुकां पूजयामि च। नमःपदं महादेवि सर्वत्रायं क्रमः स्मृतः ॥ १९॥
कामेश्वरी महानित्या ततो वै भगमालिनी। नित्यक्लिन्ना महानित्या भेरुण्डा वह्निवासिनी॥२०॥
महावज्रेश्वरी[१] नित्या शिवदूती तथैव च। त्वरिता च महादेवि ततो वै कुलसुन्दरी॥ २१॥
नित्या नीलपताका च विजया सर्वमङ्गला। ज्वालामालिन्यथ ततश्चित्रा त्रिपुरसुन्दरी॥ २२॥
रक्तां रक्तदुकूलाङ्गलेपनां रक्तभूषणाम्। पाशाङ्कुशौ धनुर्बाणान् पुस्तकं चाक्षमालिकाम्॥ २३॥
वराभीती च दधतीं त्रैलोक्यवशकारिणीम्। एवं कामेश्वरीं ध्यायेद् वश्यसौभाग्यवाक्प्रदाम्॥२४॥
कदम्बवनमध्यस्थामुद्यत्सूर्यसमद्युतिम् । नानाभूषणसम्पन्नां त्रैलोक्याकर्षणक्षमाम् ॥ २५॥
पाशाङ्कुशौ पुस्तकं च तौलिकागतलेखिनीम्। वरदं चाभयं चैव दधतीं विश्वमातरम्॥ २६॥
एवं ध्यायेन्महादेवीं भगमालां विचक्षणः। रक्तां रक्ताङ्गवसनां चन्द्रचूडां त्रिलोचनाम्॥ २७॥
स्विद्यद्वक्त्रां मदाघूर्णलोचनां रत्नमूर्छिताम्[२]। पाशाङ्कुशौ कपालं च महाभीतिहरं तथा॥ २८॥
दधतीं संस्मरेन्नित्यक्लिन्नां पद्मासनस्थिताम्। चन्द्रकोटिप्रतीकाशां स्रवन्तीममृतद्रवम् ॥ २९॥
नीलकण्ठां त्रिनेत्रां च नानाभरणभूषिताम्। इन्द्रनीलस्फुरत्कान्तिं शिखिवाहनशोभिताम्॥ ३०॥
पाशाङ्कुशौ कपालं च च्छुरिकां वरदाभये। दधतीं चिन्तयेद् देवीं भेरुण्डां विषनाशिनीम्॥३१॥
ध्यायेत् तप्तसुवर्णाभां नानालङ्कार[३]भूषिताम्। पाशाङ्कुशौ स्वस्तिकं च शक्तिं च वरदाभये॥३२॥
दधतीं रत्नमुकुटां देवीं वै वह्निवासिनीम् । जपाकुसुमसङ्काशां रक्तांशुकविराजिताम्॥ ३३॥
माणिक्यभूषणां नित्यां नानाभूषाविभूषिताम्। पाशाङ्कुशौ कपालस्थसुधापानविघूर्णिताम्॥ ३४॥
अभयं दधतीं ध्यायेन्महावज्रेश्वरीं[४] पराम् । दूर्वावर्णां त्रिनेत्रां च महासिंहसमासनाम्॥ ३५॥
शङ्खारिचापबाणांश्च सृणिपाशौ वराभये । दधतीं चिन्तयेन्नित्यां शिवदूतीं परां शिवाम्॥ ३६॥
श्यामाङ्गीं रक्तसत्पाणिचरणाम्बुजशोभिताम्। वृषलाहिसुमञ्जीरां फणारत्नविभूषिताम् ॥ ३७॥
पर्णांशुकां पर्णभूषां वैश्याहिद्वन्द्वमेखलाम्। तनुमध्यां पीनवृत्तकुचयुग्मां वराभये ॥ ३८॥
दधतीं शिखिपिच्छाभां वलयाङ्गदशोभिताम्। गुञ्जारुणां नृपाहीन्द्रकेयूरां रत्नभूषिताम्॥ ३९॥
द्विजनागस्फुरत्कर्णभूषां मत्तारुणेक्षणाम् । नीलकुञ्चितधम्मिल्लवरपुष्पां कपालिनीम् ॥ ४०॥
कैरातीं शिखिपिच्छाढ्यनिकेतनविराजिताम् । स्फुरत्सिंहासनप्रौढां संस्मरेत् त्वरितां बुधः॥ ४१॥
ध्यायेद् देवीं महेशानीं कदम्बवनमध्यगाम्। रत्नमण्डपमध्ये तु महाकल्पवनान्तरे॥ ४२॥
मुक्तातपत्रच्छायायां रत्नसिंहासने स्थिताम् । अनर्घरत्नघटितमुकुटां रत्नकुण्डलाम् ॥ ४३॥
हारग्रैवेयसद्रत्नचित्रितां कङ्कणोज्ज्वलाम्। हीरमुक्तालसद्भूषां शुक्लक्षौमविराजिताम् ॥ ४४॥
हीरमञ्जीरसुभगारक्तोत्पलपदाम्बुजाम् । शुभ्राङ्गरागसुभगां कर्पूरशकलोज्ज्वलाम् ॥ ४५॥

१. 'विद्येश्वरी' क. पाठः। २. 'रत्नभूषणाम्' ख. पाठः। ३. 'भरण' ग. पाठः। ४. 'विद्येश्वरी' क. पाठः।

पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम्। वरदानरतां दिव्यां महासारस्वतंप्रदाम् ॥ ४६॥
एवं ध्यायेन्महानित्यां देवेशीं कुलसुन्दरीम्।..........................................(?)॥ ४७॥
एवं नित्यां महादेवीं चिन्तयेद्देशिकोत्तमः। शुभ्रवस्त्रासनां रम्यां चन्द्रकुन्दसमद्युतिम्॥ ४८॥
सुप्रसन्नां शशिमुखीं नानारत्नविभूषिताम् । अनन्तमुक्ताभरणां स्रवन्तीममृतद्रवम् ॥ ४९॥
वरदाभयशोभाढ्यां स्मरेन्नीलपताकिकाम् । ..........................................(?)॥ ५०॥
ध्यायेद् देवीं महानित्यां स्वर्णाभरणभूषिताम्। उद्यद्विद्युल्लताकान्तिस्वर्णांशुकविराजिताम्॥ ५१॥
महासिंहासनप्रौढां ज्वालामालां करालिनीम्। अरिशङ्खौ खड्गखेटौ त्रिशूलं डमरुं तथा॥ ५२॥
पानपात्रं च वरदं दधतीं शत्रुनाशिनीम्। शुभ्राङ्गीं ज्ञानदां नित्यां विचित्रवसनां सदा॥ ५३॥
विचित्रतिलकां नित्यां विचित्रां कुङ्कुमोज्ज्वलाम्। वरदाभयशोभाढ्यां नानाशस्त्रधरां क्वचित्॥५४॥
बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम्। पाशाङ्कुशौ शरांश्चापं धारयन्तीं शिवां श्रये॥५५॥

इति षोडशनित्याध्यानानि॥

एतस्मिन् समये देवि गुरून् सम्पूजयेद् बुधः। प्राङ्मध्ययोन्यन्तराले गुरुपङ्क्तित्रयं यजेत्॥ १॥
गुरुमन्त्रेण नाम्नापि निजं सम्पूजयेद्गुरुम्। अङ्गुष्ठमध्यमाभ्यां च गुरून् सम्यक् प्रतर्पयेत्॥ २॥
आनन्दनाथशब्दान्ता अम्बान्ताः शक्तयः क्रमात्। गुरुन् सम्पूजयेद् देवि परमादिगुरूस्तथा॥ ३॥
परापरगुरूंश्चैव परमेष्ठिगुरूंस्तथा । गुरुशक्तीर्यजेद् देवि ततः श्रीगुरुपादुकाः ॥ ४॥
इति सामान्यतो देवि गुरुपात्रोदकैर्यजेत्। अथादिशिवनाथश्च ज्ञानाम्बा च सदाशिवः॥ ५॥
इच्छाम्बा ईश्वरश्चैव अम्बिका रुद्र एव च। रौद्री विष्णुस्तथा ज्येष्ठा ब्रह्मा वामा पराभिधाः॥६॥
रुद्रसंख्याश्च दिव्यौघाः सनकश्च सनन्दनः। सनातनश्चापि सनत्कुमारस्तु तथैव च ॥ ७॥
सनत्सुजातश्च विभुर्दत्तात्रेयोऽथ रोचनः। वामदेवस्तथा व्यासः शुकः सिद्धौघसंज्ञकाः॥ ८॥
परापराख्या गुरवो नृसिंहश्च महेश्वरः । भास्करश्च महादेवि ततस्तस्मान्महाशिवः ॥ ९॥
सदाशिवो मानवौघा अपराख्या महेश्वरि। एते सामान्यगुरवः श्रीनाथादीन् यजेत्ततः ॥ १०॥
परप्रकाशाभिधश्च ततः परशिवस्तथा । परशक्तिश्च कौलेशः शुक्लदेवी कुलेश्वरः ॥ ११॥
कामेश्वरी च दिव्यौघाः पराख्या गुरवः क्रमात्। भोगः क्लिन्नस्तु समयः सहजो वेदसंख्यकाः॥ १२॥
परापराख्याः सिद्धौघा गगनो विश्व एव च। विमलो मदनश्चैव भुवनो लील[1] एव च॥ १३॥
आत्मा प्रियो मानवौघा अपराख्या निजास्तथा। कामराजाख्यविद्याया गुरवोऽत्र प्रकीर्तिताः॥ १४॥
अज्ञातगुरुशिष्याणां कथ्यन्ते गुरवः क्रमात्। गुरुभ्यो नम इत्युक्त्वा पादुकाभ्यो नमो वदेत्॥ १५॥
तथैव परमेशानि परमाश्च परापराः। परमेष्ठिन आचार्यास्ततो निजगुरून् यजेत्॥ १६॥
परमादिशिवश्चैव कामेश्वर्यम्बिका तथा। दिव्यौघश्च महौघश्च सर्वाख्यस्तदनन्तरम्॥ १७॥

१. 'नील' क. पाठः।

प्रज्ञादेवी प्रकाशश्च दिव्यौघाः सम्प्रकीर्तिताः। लोपामुद्रा प्रभा माया दिव्यश्चित्रस्तथैव च॥ १८॥
कैवल्यानन्दनाथश्च देव्यात्मानन्दनाथकः । महोदयश्च सिद्धौघाश्चिदानन्दस्तथैव च ॥ १९॥
ऋद्ध्यम्बा च तथा विश्वः शक्त्यम्बा च रमा तथा। कमलश्च परश्चैव मनोहर इति क्रमात्॥२०॥
आत्मा च प्रमितश्चैव मानवौघाः प्रकीर्तिताः। लोपामुद्राख्यविद्याया गुरवश्च निजास्ततः॥ २१॥
परप्रकाशश्च तथा विमर्शस्तु परादिकः। कामेश्वरी[1] च मोक्षश्चाप्यमृतः पुरुषस्ततः ॥ २२॥
अघोरश्चैव दिव्यौघाः प्रकामः सद्गुरुस्तथा। सिद्धौघ उत्तमश्चैते चत्वारः परिकीर्तिताः॥ २३॥
सिद्धौघाश्च महेशानि तत उत्तमसंज्ञकः। परमाख्यश्च सर्वज्ञः सर्वसंज्ञश्च[2] सिद्धकः ॥ २४॥
गोविन्दः शङ्करश्चैते मानवौघाः प्रकीर्तिताः। श्रीविद्यामात्रगुरवस्ततो निजगुरुक्रमात् ॥ २५॥
एते तुरीयाविषये गुरवः सर्व एव हि । ज्ञानमुद्रासुधापूर्णकपालाढ्यकरद्वयाः ॥ २६॥
गुरवो रक्तवर्णाः स्युर्जटाभारशिरोधराः। एतान् पञ्चोपचारैस्तु यजेत् सङ्घट्टमुद्रया ॥ २७॥
गुरुक्रमं प्रपूज्याथ यजेदाम्नायदेवताः । वसुकोणे तु पूर्वादि श्रीपात्रामृतबिन्दुभिः ॥ २८॥
पूर्वाम्नायेश्वरीं देवीमुन्मनीं पूर्वदिग्गताम्। दक्षिणम्नायेश्वरीं च भोगिनीं दक्षिणे यजेत्॥ २९॥
पश्चिमाम्नायेश्वरीं च कुब्जिकां पश्चिमे यजेत्। उत्तराम्नायेश्वरीं च कालिकामुत्तरे यजेत्॥ ३०॥
ऊर्ध्वाम्नायेश्वरीं देवीं महात्रिपुरसुन्दरीम्। वराभयकरा रक्ताः पाशाङ्कुशधराः शुभाः॥ ३१॥
पञ्चोपचारैः सम्पूज्य योनिमुद्रां च दर्शयेत्। आम्नायं तु प्रपूज्याथ सम्यगायतनं यजेत्॥ ३२॥
अन्तर्दशारे पूर्वादि गुरुपात्रामृतेन च । ब्राह्म्यदर्शनगायत्रीं पूर्वायतनदेवताम् ॥ ३३॥
नारायणं वैष्णवाख्यं याम्यायतनदेवताम्। सौरदर्शनसूर्यं च पश्चिमायतनाधिपम् ॥ ३४॥
बौद्धदर्शनबुद्धं च उत्तरायतनाधिपम् । ऊर्ध्वायतनशैवाख्यदर्शनेशं शिवं यजेत् ॥ ३५॥
ऊर्ध्वायतनशाक्ताख्यदर्शनेशीं पराभिधाम्। शक्तिं यजेद्बिन्दुचक्रे देवताः परिचिन्तयेत्॥ ३६॥
वराभयकरा रक्ताः स्वस्वायुधकरद्वयाः । पञ्चोपचारैराराध्य लिङ्गमुद्रां प्रदर्शयेत् ॥ ३७॥
प्रपूज्यायतनं पश्चात् पञ्चरत्नं प्रपूजयेत् । बहिर्दशारे पूर्वादि श्रीपात्रामृतबिन्दुभिः ॥ ३८॥
श्रीविद्या सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी। वाराहीति महेशानि पञ्चरत्नं प्रकीर्तितम्॥ ३९॥
श्रीविद्यापूजनस्थाने चक्रराजे महेश्वरि । महारत्नेश्वरीवृन्दमण्डितासनसंस्थिता ॥ ४०॥
सर्वसौभाग्यजननीपादुकां पूजयामि च। इत्युच्चार्य यजेत्तत्र योनिमुद्रां प्रदर्शयेत्॥ ४१॥
पाशाङ्कुशकरा रक्ता निजायुधकरद्वयाः। पञ्चरत्नं प्रपूज्याथ पञ्च कल्पलता यजेत्॥ ४२॥
चतुर्दशारे पूर्वादि श्रीपात्रामृतबिन्दुभिः। श्रीविद्या त्वरिता चैव पारिजातेश्वरी तथा॥ ४३॥
त्रिकूटा पञ्चबाणेशी पञ्च कल्पलताः स्मृताः। पाशाङ्कुशकरा रक्ता निजायुधकरद्वयाः॥ ४४॥

---

१. 'कामेश्वरी च दिव्यौघा मोक्षश्चामृतसंज्ञकः। पुरुषोऽघोरवायौ च प्रकामः सद्गुरुस्तथा। सिद्धौघाश्च महेशानि तत उत्तम उद्धवः' क. ग. पाठः। २. 'सर्वः स्वस्थ' क. पाठः।

लतानां पूजनान्ते च पञ्चसिंहासनं यजेत्। अष्टपत्रे तु पूर्वादि श्रीपात्रामृतबिन्दुभिः।। ४५।।
बाला सम्पत्प्रदा चैव चैतन्या तदनन्तरम्। द्वितीया चैतन्यरूपा कामेशी तदनन्तरम्।। ४६।।
(उन्मनी च यजेदेताः पूर्वस्थां च दिशि क्रमात्। सिंहासनं च ब्रह्माख्यं यजेच्च तदनन्तरम्।। ४७।।
अघोरभैरवी चैव भैरवी च महादिका)। ललिताभैरवी चैव कामेशी भैरवी तथा ।। ४८।।
रक्तनेत्रा भोगिनी च विष्णुसिंहासनं ततः। दक्षिणे संस्थिताश्चैव यजेत् सौभाग्यहेतवे ।। ४९।।
षट्कूटाभैरवी नित्याभैरवी तदनन्तरम् । मृतसञ्जीविनी चैव मृत्युञ्जयपरा तथा ।। ५०।।
वज्रप्रस्तारिणी चैव कुब्जिका रौद्रमेव च। सिंहासनं यजेद्देवि पश्चिमायां दिशि क्रमात्।। ५१।।
सिंहासने तूत्तरे तु प्रयजेद्भुवनेश्वरीम् । कमलेशीभैरवीं च सिद्धकौलेशभैरवीम् ।। ५२।।
डामराख्यां भैरवीं च कामिनीभैरवीं तथा। कालिकामीश्वराख्यं च यजेत् सिंहासनं बुधः।। ५३।।
बिन्दुमध्ये महेशानि ऊर्ध्वसिंहासनस्थिताः। प्रथमा सुन्दरी चैव द्वितीया सुन्दरी तथा।। ५४।।
तृतीया सुन्दरी चैव चतुर्थी सुन्दरी तथा। पञ्चमी सुन्दरी चैव महात्रिपुरसुन्दरी ।। ५५।।
सदाशिवाख्यं देवेशि यजेत् सिंहासनं ततः। वराभयकरा रक्ताः पाशाङ्कुशकराः शुभाः।। ५६।।
सिंहासनाभ्यर्चनान्ते पञ्चकोशार्चनं भवेत्। षोडशारे तु पूर्वादि श्रीपात्रामृतबिन्दुभिः।। ५७।।
श्रीविद्या च परज्योतिः परनिष्कलशाम्भवी। अजपा मातृका चेति पञ्च कोशाः प्रकीर्तिताः।। ५८।।
कोशान्ते पूजयेल्लक्ष्मीः पञ्च सर्वसमृद्धये। चतुरस्रे तु पूर्वादि श्रीपात्रामृतबिन्दुभिः ।। ५९।।
श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च। त्रिशक्तिः सर्वसाम्राज्या लक्ष्म्यः पञ्च प्रकीर्तिताः।।६०।।
पाशाङ्कुशकरा रक्ता निजायुधकरद्वयाः। पञ्च लक्ष्मीः पूजयित्वा पञ्च कामदुघा यजेत्।।६१।।
सृष्टिचक्रे तु पूर्वादि श्रीपात्रामृतबिन्दुभिः । श्रीविद्यामृतपीठेशी सुधासूरमृतेश्वरी ।। ६२।।
अन्नपूर्णेति विख्याताः पञ्च कामदुघाः क्रमात्। पाशाङ्कुशसुधापात्रकलशा रक्तविग्रहाः।। ६३।।
पूजयित्वा कामदुघाः समयाः पञ्च पूजयेत्। स्थितिचक्रे तु पूर्वादि श्रीपात्रामृतबिन्दुभिः।। ६४।।
बगला कालरात्रिश्च जयदुर्गा तथैव च। वज्रवैरोचनी देवी समयाः पञ्च कीर्तिताः।। ६५।।
पाशाङ्कुशकरा रक्ता निजायुधकरद्वयाः। समयापूजनान्ते तु षडङ्गावरणं यजेत्।। ६६।।
संहारचक्रे अग्नीशासुरवायव्यकोणके । बिन्दुमध्ये चतुर्दिक्षु श्रीपात्रामृतबिन्दुभिः ।। ६७।।
मध्ये दिक्षु क्रमेणैव यजेत् सर्वार्थसिद्धये। सर्वज्ञा नित्यतृप्ता च तथानादिप्रबोधिनी।। ६८।।
स्वतन्त्रा च महाशक्तिर्नित्यालुप्ता तथैव च। नित्यानन्ता च कथिता तथा भोगषडङ्गके।। ६९।।
तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः । वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ।। ७०।।
एतानि तु महादेवि विशेषावरणानि वै। तुरीयोपासकानां च एतान्यावश्यकानि वै।। ७१।।
कूटविद्यासु वै तत्तद्गुरवस्तत्तदङ्गकम् । अत्र मध्यविधानीशे नवावृत्तिरथाम्बिके ।। ७२।।

देवि मध्यविधानीहावरणानि शृणु प्रिये। तुरीयोपासकानां च एतान्यावश्यकानि वै[1] ॥ ७३॥
अष्टारपार्श्वयोरग्रे सामान्यामृतबिन्दुभिः। उदीच्यां प्रयजेद्[2] देवि क्षोभणद्रावणौ ततः ॥ ७४॥
आकर्षवश्यबाणौ च दक्षिणे तु समर्चयेत्। अग्रे सम्मोहनं यष्ट्वा चिन्तयेद् बाणदेवताः॥ ७५॥
वराभयकरा रक्ताः सृणिबाणधनुर्धराः । अन्तर्दशारे देवेशि पार्श्वयोरग्रयोस्तथा॥ ७६॥
बाणवद् यजनं कुर्यात्पञ्चकामान् वरानने । काममन्मथकन्दर्पकरध्वजसंज्ञकाः ॥ ७७॥
मीनकेतुर्महेशानि पञ्च कामाः प्रकीर्तिताः । वराभयकरा रक्ताः पञ्चबाणधुनर्धराः॥ ७८॥
बहिर्दशारे षड्वाचः कामवत् पूजयेत् प्रिये। सामान्यपात्रसुधया लीना वागपरा परा॥ ७९॥
मध्यमा वाक् च पश्यन्ती वैखरीति प्रकीर्तिताः। ज्ञानमुद्राभयाः शुक्ला वीणापुस्तकपाणयः॥८०॥
चतुर्दशारचक्रे च पार्श्वयोरुभयोस्तथा। अग्रे च बिन्दुमध्ये च सामान्यामृतबिन्दुभिः ॥ ८१॥
वेदसंख्या अवस्थाश्च यजेत् सर्वार्थसिद्धये। जाग्रत्स्वप्नसुषुप्त्यश्च तुरीया च प्रकीर्तिताः॥ ८२॥
वराभयकरा रक्ता धृतपाशाङ्कुशाः शुभाः। अथाष्टदलमूले च वृत्ते वेष्टनया शिवे॥ ८३॥
सामान्यपात्रसुधया यजेद्वामादिदेवताः। वामा ज्येष्ठा तथा रौद्री अम्बिकेच्छा तथैव च॥ ८४॥
ज्ञाना क्रिया कुब्जिका च विम्वी चित्रा विषघ्निका। भूचरी खेचरी चैव जया च विजया तथा॥ ८५॥
नन्दा सुनन्दा देवेशि शक्तयः परिकीर्तिताः। दलाष्टमूलवृत्ते तु वामाद्या दिव्यभूषणाः॥ ८६॥
पाशाङ्कुशधरा रक्ता वरदानरतास्तथा । मुक्ताच्छत्रं शरच्चन्द्रचन्द्रिकारम्यचामरैः ॥ ८७॥
उशीरक्षिप्तचन्द्रार्कक्लृप्तव्यजनयुग्मकम्। प्रान्तमुक्तावलीराजत्स्वर्णादर्शं च पीठिकाम्॥ ८८॥
अलङ्कारमयीं पेटीं करण्डं शशिपूरितम्। नवरत्नस्फुरद्दीप्तिं ताम्बूलस्य करण्डकम् ॥ ८९॥
कर्पूरमृगनाभ्याढ्यकुङ्कुमक्षोदभाजनम् । चषकं स्वर्णरचितं[3] सुधाकुम्भं कमण्डलुम् ॥ ९०॥
मल्लिकामालतीजातीशतपत्राढ्यदामभिः। पूर्णं रत्नमयं भाण्डं कङ्कतीं गजदन्तजाम्॥ ९१॥
कज्जलस्य शलाकां च दधाना निजशक्तयः। ततः षोडशपत्राब्जमूलवृत्ते महेश्वरि ॥ ९२॥
वेष्टनत्वेन सामान्यसुधया रश्मिपूजनम्। विदध्याद्भावचिन्मायानाथेच्छातुष्टिपुष्टयः ॥ ९३॥
स्थितिमुक्ती भुक्तिश (?) सदसत्सदसदात्मिकाः। क्रियात्मज्ञानलोकाश्च देववेदौ तथैव च॥९४॥
संविज्जन्मस्पन्दसंज्ञानिस्पन्दाः कुण्डली तथा। शब्दवर्णस्वराश्चैव वर्गसंयोगमन्त्रकाः॥ ९५॥
भैरवी भूतरश्मिश्च रश्मिवृन्दं प्रकीर्तितम्। षोडशारमूलवृत्ते रक्ता भावादिरश्मयः॥ ९६॥
पाशाङ्कुशसुधाकुम्भपानपात्रधराः शुभाः । ततः षोडशपात्राब्जबाह्ये प्रथमवृत्तके ॥ ९७॥
वेष्टनत्वेन सामान्यसुधया योगिनीर्यजेत्। डाकिनी राकिणी चैव लाकिनी काकिनी तथा॥९८॥
शाकिनी हाकिनी चैव याकिनी योगिनी तथा। षोडशारबाह्यवृत्ते योगिन्यो डाकिनीमुखाः॥९९॥
पाशाङ्कुशकपालासिधारिण्यः शववाहनाः। मुण्डमालासमायुक्ता दंष्ट्राभीममुखाम्बुजाः॥ १००॥

१. इदं पद्यार्धं क. पुस्तके नास्ति। २. 'पूजयेत्' क. पाठः। ३. 'स्पर्शन' ख. पाठः।

चतुर्वक्त्रा रक्तवर्णा भीमरूपा[1] मदोद्धताः। मध्यवृत्ते वेष्टनत्वे सामान्यसुधया शिवे॥ १॥
भैरवीः पूजयेद् देवि भैरवी तदनन्तरम्। महाभैरव्यथ सिंहभैरवी धूम्रभैरवी ॥ २॥
भीमाद्योन्मनभैरव्यौ वशीकरणभैरवी। मोहनाख्या भैरवीति भैरव्यः कथिताः प्रिये॥ ३॥
षोडशारबहिर्मध्यवृत्ते तु भैरवीमुखाः। पाशाङ्कुशकरा[2] भीमाः कपालशूलपाणयः॥ ४॥
मुण्डमालाधरा रक्ता भीमदंष्ट्राः शवासनाः। ततः सामान्यसुधया भैरवान् दश पूजयेत्॥ ५॥
हेरुकं चैव वेतालं त्रिपुरान्तकमेव च। अग्निजिह्वं च कालान्तं करालं चैकपादकम्॥ ६॥
भीमरूपं महादेवि अचलं हाटकेश्वरम्। षोडशारान्त्यवृत्ते तु हेरुकाद्या दश स्थिताः॥ ७॥
भैरवा भीमदंष्ट्रास्यास्त्रिशूलटङ्कधारिणः। मेघश्यामाः शवारूढाः कपालदण्डधारिणः॥ ८॥
पूजनं कथितं मध्यविधावरणसंज्ञकम्। शृणु वक्ष्ये महादेवि नवावरणपूजनम् ॥ ९॥
एतच्चक्रं महेशानि मध्ये बिन्दुविराजितम्। ततस्त्रिकोणं चाष्टारं दशारं च दशारकम् ॥ १०॥
मनुकोणं महेशानि मध्यचक्रमिदं प्रिये। बैन्दवादष्टकोणान्तं सर्वमध्यमिदं भवेत्॥ ११॥
चत्वारिंशद्भगैर्युक्तं त्रिभगैरपि पार्वति। वसुपत्रं कलापत्रं चतुरस्रं क्रमात् प्रिये ॥ १२॥
भगात्मकमिदं सर्वं नवयोन्यङ्कितं भवेत्। चतुष्षष्टिर्यतः कोट्यो योगिनीनां महौजसाम्॥ १३॥
चक्रेऽस्मिन् सविशेषास्ताः साधकं मानयन्ति हि। विना गुरूपदेशेन साधकं भक्षयन्ति हि॥ १४॥
त्रैलोक्यमोहने चक्रे बाह्यरेखां समाश्रिताः। सामान्यपात्रसुधया पूजयेत् सिद्धिदेवताः॥ १५॥
चतुरस्रान्तरेखायां पश्चिमादिषु वै क्रमात्। द्वारेषु वायुकोणादिकोणेषु ह्यध ऊर्ध्वतः॥ १६॥
दक्षिणावर्तयोगेन यजेत् सर्वार्थसिद्धये। अणिमा महिमा चैव लघिमा गरिमा तथा॥ १७॥
ईशित्वं च वशित्वं च प्राकाम्यं भुक्तिरेव च। इच्छा प्राप्तिः सर्वकामा मोक्षसिद्धिः क्रमात् प्रिये।१८॥
सद्यःसन्तप्तहेमाभाः पाशाङ्कुशधराः शुभाः। महाभरणरत्नानि[3] ससुवर्णानि वै निधीन्[4]॥ १९॥
प्रयच्छन्त्यः साधकेभ्यः पद्मयुग्मधरास्तथा। त्रैलोक्यमोहने चक्रे मध्यरेखासमाश्रिताः॥ २०॥
तप्तजाम्बूनदाभासाः पञ्चाशत् पीठदेवताः। पाशाङ्कुशाभयवरकराः प्रकटरूपकाः॥ २१॥
ताः पूजयित्वा च ततो ब्राह्म्याद्याः सिद्धिवद्यजेत्। पूर्वद्वारादिद्वारेषु शुचिकोणादिषु क्रमात्।।२२॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराह्यैन्द्री च चामुण्डा महालक्ष्मीः क्रमात् प्रिये।२३॥
असिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्तसंज्ञकः। कपाली भीषणश्चैव संहारश्चाष्ट भैरवाः।।२४॥
कामरूपं च मलयं कौह्लाख्यं च कुलान्तकम्। चोहारपीठं देवेशि जालन्धरमतः परम्।।२५॥
उड्यानं देविकोट्टं च पीठाष्टकमुदाहृतम्। मातरो भैरवाङ्कस्थाः स्मेरवक्त्राः मदालसाः।।२६॥
ब्राह्मीप्रभृतयो दिव्या योगिन्याः प्रकटाः शुभाः। पाशाङ्कुशधराः सर्वाः क्रमेण दधतीः स्मरेत्।।२७॥
विद्यां शूलं च शक्तिं च चक्रं चैव गदां ततः। वज्रवैदूर्यमालाञ्च पद्मं च वरदं तथा॥ २८॥

१. 'महोद्धताः'ग.ख.ग.पाठः।२.'वरा'क.ग.पाठः। ३. 'भञ्जन'क. 'भोजनं'ख.पाठः।४.'ससुवर्णमहानिधीन्'ग.पाठः।५.'कोटं'ख.पाठः।

भैरवास्त्वसिताङ्गाद्याः पीठाष्टकनिवासिनः। शूलं कपालं प्रेतं च बिभ्राणाः क्षुद्रदुन्दुभिम्॥ २९॥
गजत्वगम्बरा भीमाः कुटिलालकशोभिनः। पाशाङ्कुशवराभीतिकराः पीठाष्टदेवताः॥ ३०॥
तत्र जाम्बूनदप्रख्या योगिन्यः प्रकटाः शुभाः। एवं तृतीयरेखायां सिद्धिवत् पूजयेत् प्रिये॥३१॥
मुद्रादेवीः प्रयत्नेन सर्वसङ्क्षोभणादिकाः। सर्वसङ्क्षोभिणी चैव सर्वविद्राविणी तथा॥ ३२॥
सर्वाकर्षणिका सर्ववशीकारिणिका तथा। सर्वोन्मादिनिका चैव ततः सर्वमहाङ्कुशा॥ ३३॥
सर्वखेचरिका सर्वबीजमुद्रा तथैव च। सर्वयोनिस्ततः सर्वत्रिखण्डा परिकीर्तिता॥ ३४॥
सर्वसङ्क्षोभिणीमुख्या मुद्रास्ताः सौम्यविग्रहाः। धृतपाशाङ्कुशाः सर्वाः स्वस्वमुद्राकरास्तथा॥३५॥
तप्तचामीकराभासा योगिन्यः प्रकटाः शुभाः। पाशाङ्कुशोत्पलाभीतिपाणयो रक्तविग्रहाः॥३६॥
प्रकटाः कामरूपादिचतुष्पीठादिदेवताः। अणिमासिद्धिपुरतश्चक्रेशीं त्रिपुरां यजेत्॥ ३७॥
पञ्चोपचारैराराध्य मुद्रामाद्यां च दर्शयेत्। एताः प्रकटयोगिन्यश्चतुरस्रे व्यवस्थिताः॥ ३८॥
त्रैलोक्यमोहिनीचक्रे समुद्राः सायुधास्तथा। सवाहनाश्च सपरिवाराश्चैव ससिद्धयः॥ ३९॥
साङ्गोपाङ्गाश्च सर्वोपचारैः सम्पूजितास्तथा। तर्पिताः सन्त्विति वदेज्जलं तत्र विनिःक्षिपेत्॥४०॥
अभीष्टसिद्धिं मे देहि त्रिपुरे देवपूजिते। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्॥ ४१॥
इत्युच्चार्य महादेव्यै दद्यात् पुष्पाञ्जलिं ततः। इति ते कथितं भद्रे प्रथमावरणार्चनम्॥ ४२॥
अथ वक्ष्ये महेशानि द्वितीयावरणार्चनम्। ततः षोडशपत्रेषु कामाकर्षिणिकां यजेत्॥ ४३॥
सामान्यपात्रसुधया पश्चिमादिक्रमेण तु। कामाकर्षिणिका चैव बुद्ध्याकर्षिणिका तथा॥ ४४॥
अहङ्काराकर्षिणी च शब्दाकर्षिणिका तथा। स्पर्शाकर्षिणिका चैव रूपाकर्षिणिका तथा॥४५॥
रसाकर्षिणिका चैव गन्धाकर्षिणिका तथा। चित्ताकर्षिणिका चैव धैर्याकर्षिणिका तथा॥४६॥
स्मृत्याकर्षिणिका चैव नामाकर्षिणिका तथा। बीजाकर्षिणिका चैवामृताकर्षिणिका तथा॥४७॥
आत्माकर्षिणिका चैव शरीराकर्षिणी तथा। सर्वाशापूरके चक्रे दलषोडशके स्थिताः॥४८॥
कामाकर्षिणिकाद्याश्च योगिन्यो गुप्तसंज्ञकाः। कलाषोडशरूपाश्च चन्द्रमण्डलमध्यगाः॥४९॥
स्वरवर्णा[1] रक्तवर्णाः स्रवत्पीयूषविग्रहाः। पाशाङ्कुश(धराः) सुधापूर्णकाश्मरीघटदानदाः[2](?)॥५०॥
चक्रेशीं त्रिपुरेशीं च कामाकर्षिणिकाग्रतः। यजेद्विद्राविणीं मुद्रां दर्शयेद्भाग्यहेतवे॥ ५१॥
एतास्तु गुप्तयोगिन्यः सर्वाशापूरके तथा। चक्रे समुद्रा इत्यादि देव्यै पुष्पाञ्जलिं क्षिपेत्॥५२॥
अभीष्टसिद्धिं मे देहि त्रिपुरे देवपूजिते। भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्॥ ५३॥
इत्युच्चार्य च देवेश्यै दद्यात्पुष्पाञ्जलिं ततः। सर्वसङ्क्षोभणे चक्रे दलाष्टविजृम्भिते॥ ५४॥
यजेत् सामान्यसुधया अनङ्गकुसुमादिकाः। पूर्वादिदिक्षु पत्रेषु आग्नेयादिविदिक्षु च॥ ५५॥
अनङ्गकुसुमानङ्गमेखला तदनन्तरम्। अनङ्गमदना पश्चादनङ्गमदनातुरा॥ ५६॥

---
१. 'भग्ना' क. ख. पाठः। २. 'काश्मीरचन्दनानना:' ख. पाठः।

अनङ्गरेखानङ्गवेगिन्यथानङ्गाङ्कुशा ततः। अनङ्गमालिनी ह्येता बन्धूककुसुमप्रभाः ॥ ५७॥
पाशाङ्कुशस्फुरत्कुन्दनीलोत्पलकराः शुभाः। अनङ्गकुसुमाग्रे तु यजेत् त्रिपुरसुन्दरीम्॥ ५८॥
चक्रेशीं दर्शयेन्मुद्रां सर्वाकर्षिणिकां ततः। एता गुप्ततराश्चैव योगिन्यः सर्वसं ततः[1]॥ ५९॥
क्षोभणे च तथा चक्रे समुद्रेत्यादिना ततः। देव्यै पुष्पाञ्जलिं दद्यादभीष्ठेति च मन्त्रवित्॥ ६०॥
चतुर्दशारके चक्रे सर्वसौभाग्यदाभिधे। सामान्याद्भिः पश्चिमादिवामावर्तक्रमेण च ॥ ६१॥
सर्वसङ्क्षोभिणीमुख्याः शक्तीर्वै पूजयेत् प्रिये। सर्वसङ्क्षोभिणी शक्तिः सर्वविद्राविणी तथा॥ ६२॥
सर्वाकर्षिण्यथ ततः सर्वाह्लादिन्यनन्तरम्। सर्वसम्मोहिनी सर्वस्तम्भिनी सर्वजृम्भिणी ॥ ६३॥
सर्ववशङ्करी शक्तिः तथा सर्वार्थरञ्जिनी। ततः सर्वोन्मादिनी च तथा सर्वार्थसाधिनी ॥ ६४॥
ततो वै सर्वसम्पत्तिपूरणी शक्तिरेव च । सर्वमन्त्रमयी शक्तिः सर्वद्वन्द्वक्षयङ्करी ॥ ६५॥
सर्वसौभाग्यदे चक्रे सर्वसङ्क्षोभिणीमुखाः। सम्प्रदायाख्ययोगिन्यः सर्वाभरणभूषिताः ॥ ६६॥
इन्द्रगोपनिभाः सर्वाः सगर्वोन्मत्तयौवनाः। पाशाङ्कुशौ दर्पणं च पानपात्रं सुधामयम्॥ ६७॥
बिभ्रत्यः सर्वसुभगाः साधकाभीष्टदायिकाः। सर्वसङ्क्षोभिणीपूर्वे यजेत् त्रिपुरवासिनीम्॥ ६८॥
सर्ववश्यकरीं मुद्रां दर्शयित्वा विचक्षणः। तत एताः सम्प्रदाययोगिन्य इति वै क्रमात्॥ ६९॥
देव्यै पुष्पाञ्जलिं दद्यात् ततः सर्वार्थसाधके। बहिर्दशारके चक्रे सामान्यसुधया शिवे॥ ७०॥
पूर्ववत् पूजयेद् देवि सर्वसिद्धिप्रदामुखाः। सर्वसिद्धिप्रदा देवी सर्वसम्पत्प्रदा तथा॥ ७१॥
सर्वप्रियङ्करी देवी सर्वमङ्गलकारिणी । सर्वकामप्रदा देवी सर्वदुःखविमोचिनी॥ ७२॥
सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी। सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी॥ ७३॥
सर्वार्थसाधके चक्रे कुलकौलाभिधाः पराः। सर्वसिद्धिप्रदाद्याश्च योगिन्यः सर्वकामदाः॥ ७४॥
जपाकुसुमसङ्काशाः स्फुरन्मणिविभूषिताः । महासौभाग्यगम्भीराः पीनवृत्तघनस्तनाः॥ ७५॥
रत्नपेटीविनिःक्षिप्तसाधकेप्सितभूषणाः। नानारत्नमयान् दीपान् दधत्यो हसिताननाः॥ ७६॥
पाशाङ्कुशधराः सर्वा रत्नदानपरास्तथा। सर्वसिद्धिप्रदाग्रे तु चक्रेशीं त्रिपुरां यजेत्॥ ७७॥
ततः सर्वोन्मादिनीं च मुद्रां सन्दर्शयेद् बुधः। एताश्च कुलकौलाख्ययोगिन्य इति पूर्ववत्॥७८॥
देव्यै पुष्पाञ्जलिं दद्यात्ततः षष्ठावृतिं यजेत्। सर्वरक्षाकरे चक्रेऽन्तर्दशारे महेश्वरि॥ ७९॥
सामान्यपात्रसुधया पश्चिमादिक्रमेण तु। सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा तथा॥ ८०॥
सर्वज्ञानमयी चैव सर्वव्याधिविनाशिनी। सर्वाधारस्वरूपा च सर्वपापहरा तथा॥ ८१॥
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी। पूजनीया प्रयत्नेन सर्वेप्सितफलप्रदा॥ ८२॥
सर्वरक्षाकरे चक्रे[2] निगर्भाख्याः शुभप्रदाः। सर्वज्ञाद्याश्च योगिन्यो ज्वलत्पावकतेजसः॥ ८३॥
उद्यत्सूर्यसहस्राभा मुक्तालङ्कारभूषिताः। पाशटङ्कायुधज्ञानमुद्रावरदसत्कराः ॥ ८४॥

१. 'सर्वतस्तथा' ग. 'संमता' ख. पाठः। २. 'सर्वकामप्रदा देव्यो' क.ग. पाठः।

सर्वज्ञापुरतो देवि यजेत् त्रिपुरमालिनीम् । देव्यै सन्दर्शयेद् देवि मुद्रां सर्वमहाङ्कुशाम् ।। ८५ ।।
एता निगर्भयोगिन्यः सर्वरक्षाकराभिधे । चक्रे समुद्रा इत्यादि दद्यात् पुष्पाञ्जलिं ततः ।। ८६ ।।
सर्वरोगहराष्टारचक्रे सामान्यबिन्दुभिः। पश्चिमादिक्रमेणैव वशिन्याद्या यजेत् क्रमात् ।। ८७ ।।
वशिनी कामेश्वरी च मोदिनी विमलारुणा। जयिनी सर्वेश्वरी च कौलिनी वागधीश्वरी ।। ८८ ।।
सर्वरोगहरे चक्रे रहस्याख्याः शुभप्रदाः। योगिन्यः कामदायिन्यो दाडिमीकुसुमप्रभाः ।। ८९ ।।
रक्तवस्त्रपरीधाना रक्तगन्धानुलेपनाः । नानाभरणसम्पन्नाः पञ्चबाणधनुर्धराः ।। ९० ।।
पुस्तकं वरदानं च दधाना वाक्प्रदा इमाः। यजेत् त्रिपुरसिद्धां च चक्रेशीं वशिनीपुरः ।। ९१ ।।
मुद्रां प्रदर्शयेत् सर्वखेचरीं भाग्यहेतवे। एता रहस्ययोगिन्य इत्यादि च महेश्वरि[1] ।। ९२ ।।
अभीष्टसिद्धिमिति च देव्यै पुष्पाञ्जलिं क्षिपेत्। अन्तराले महाचक्रे सर्वसिद्धिप्रदाभिधे ।। ९३ ।।
सामान्यपात्रसुधया यजेदायुधदेवताः। कामेश्वरस्य कामेश्या जृम्भका[2] बाणदेवताः ।। ९४ ।।
मोहकाश्चापदेव्यश्च पाशदेव्यो वशङ्कराः। स्तम्भकाख्या महादेवि तथैवाङ्कुशदेवताः ।। ९५ ।।
ततः श्रीपात्रसुधया निजाग्रादित्रिकोणके। वाग्भवाख्ये सूर्यचक्रे कामरूपे च पीठके ।। ९६ ।।
मित्रेशनाथात्मिका च तथा जाग्रदधिष्ठिता। रुद्रात्मशक्तिसहिता कामेशी सर्वसिद्धिदा ।। ९७ ।।
ततो वै कामराजाख्ये सोमचक्रे महेश्वरि। पीठे पूर्णगिरौ चैवोड्डीशनाथात्मिका ततः ।। ९८ ।।
तथा स्वप्नाधिष्ठिता च विष्णुशक्तिरुदीरिता। वज्रेश्वरी महादेवी ततस्तृतीयकोणके ।। ९९ ।।
शक्त्याख्ये वह्निचक्रे च पीठे जालन्धरे ततः। षष्ठेशनाथात्मिका च तथा सुषुप्त्यधिष्ठिता ।। १०० ।।
ब्रह्मात्मशक्तिरुदिता देवी श्रीभगमालिनी। बिन्दुमध्ये महेशानि कूटत्रयविजृम्भिते ।। १०१ ।।
समस्तव्योमचक्रे च पीठे चोड्यानसंज्ञके। चर्य्यानाथात्मिका चैव तुरीयाधिष्ठिता ततः ।। १०२ ।।
परब्रह्मात्मशक्तिः श्रीमहात्रिपुरसुन्दरी। सर्वसिद्धिप्रदे चक्रे योगिन्यः सिद्धिदायिकाः ।। १०३ ।।
अतिरहस्यसंज्ञास्ता आयुधाष्टकदेवताः। कामेश्वरीमुखास्तिस्रः कोणत्रयविराजिताः ।। २०४ ।।
आयुधाष्टकदेव्यस्ता यौवनोन्मत्तविग्रहाः। रक्ताः विद्युल्लताकारा उद्दामकुसुमान्विताः ।। १०५ ।।
नवरत्नविशोभाढ्याः स्वस्वायुधधराः क्रमात्। वराभये सुधापात्रं धारयन्त्यः सुखावहाः ।। १०६ ।।
कामेश्वरी शुक्लवर्णा शुक्लमाल्यानुलेपना। मुक्ताफलस्फुरद्भूषा नानाभरणभूषिता ।। १०७ ।।
पुस्तकं चाक्षसूत्रं च वरदं चाभयं तथा। दधती चाग्रकोणस्था रुद्रशक्तिः प्रकीर्तिता ।। १०८ ।।
वज्रेश्वरी कुङ्कुमाभा स्फुरद्रत्नविभूषणा। बालार्कवसना नीलकर्णचुम्बिविलोचना ।। १०९ ।।
इक्षुकोदण्डपुष्पेषुवरदाभयशोभिता । दक्षकोणस्थिता देवी विष्णुशक्तिरियं मता ।। ११० ।।
सद्यः सन्तप्तहेमाभा भगमाला सुशोभना। अनर्घरत्नघटितभूषणा भुवनेश्वरी ।। १११ ।।
पाशाङ्कुशज्ञानमुद्रावरदानकराम्बुजा । ब्रह्मशक्तिर्महेशानी तापत्रयनिकृन्तनी ।। ११२ ।।

१. 'महेशितुः' क. ग. पाठः। २. 'जम्भ' क. पाठः।

उदक्कोणस्थिता देवी सर्वकामफलप्रदा। चक्रेशीं त्रिपुराम्बां च कामेशीपुरतो यजेत्।। ११३।।
पञ्चोपचारैराराध्य बीजमुद्रां प्रदर्शयेत्। एता अतिरहस्याख्या योगिन्य इति पूर्ववत् ।। ११४।।
पुष्पाञ्जलिं प्रदद्याद्वै देव्यै देवि महेश्वरि। बिन्दुचक्रे महेशानि सर्वानन्दमयाभिधे ।। ११५।।
पश्चिमादिक्रमेणैव श्रीपात्रसुधया शिवे । कूटत्रयक्रमेणैव रतिः प्रीतिर्मनोभवा ।। ११६।।
पूजनीया प्रयत्नेन श्रीमत्त्रिपुरसुन्दरी । सर्वमन्त्रेश्वरी चैव सर्वचक्रेश्वरी तथा ।। ११९।।
सर्वतन्त्रेश्वरी चैव सर्वयोगेश्वरी तथा । (सर्वभोगेश्वरी चैव सर्ववीरेश्वरी तथा ।। ११८।।
सर्वपीठेश्वरी चैव सर्ववागीश्वरी तथा । सर्वविद्येश्वरी चैव सर्वसिद्धेश्वरी तथा ।। ११९।।
सर्वलोकेश्वरी चैव सर्वयोगेश्वरी तथा। (..........................) सर्वचक्रेश्वरी तथा[१]) ।। १२०।।
सर्वानन्दमये चक्रे परे शब्दातिगोचरे। परापररहस्याख्या योगिन्य इतिपूर्वकाः[२] ।। १२१।।
उद्यत्सूर्यसहस्राभा नानालङ्कारभूषिताः। पाशाङ्कुशधराः सर्वा ज्ञानमुद्राभये तथा ।। १२२।।
दधाना यौवनप्रौढाः पीनवृत्तघनस्तनाः। श्रीविद्याभिमुखाः सर्वा देवताः परिचिन्तयेत् ।। १२३।।
श्रीविद्यां चापि सर्वासामाभिमुख्ये स्थिता[३] स्मरेत्। अथवा रश्मयः सर्वा देवीरूपेण चिन्तयेत्।।१२४।।
श्रीचक्रे परमेशानि स्वतन्त्रे स्वस्वसंन्निभाः। चक्रेशीं[४] रतिपूर्वे[५] तु महात्रिपुरभैरवीम्।। १२५।।
पूजयित्वा ततः सर्वयोनिमुद्रां प्रदर्शयेत्। परापररहस्याख्या योगिनीत्यादिना प्रिये ।। १२६।।
देव्यै पुष्पाञ्जलिं दत्त्वा तर्पयेच्च त्रिधा त्रिधा।

।। इति श्रीमहामहोपाध्यायभगवत्पूज्यपादश्रीगोविन्दाचार्यशिष्य-श्रीभगव-
च्छङ्कराचार्यशिष्य-श्रीविष्णुशर्माचार्यशिष्य-श्रीप्रगल्भाचार्य-शिष्य-
श्रीविद्यारण्ययतिविरचिते श्रीविद्यार्णवाख्ये
तन्त्रे दशमः श्वासः।। १०।।



अथ

# श्रीविद्यार्णवतन्त्रे

## एकादशः श्वासः



अथोर्ध्वाम्नायावरणानि। तथा कुलार्णवे—

नवावरणपूजां च कृत्वा देवीं प्रतर्प्य च। षोडशैरुपचारैस्तु साङ्ग सावरणं शिवम्[1]।। १।।
पूजयेन्मूलमन्त्रेण गन्धपुष्पाक्षतादिभिः। महाषोढोदिताशेषपरिवारांश्च शाम्भवि ।। २।।
प्रणवादिनमोन्तेन तत्तन्नाम्ना प्रपूजयेत्। इति।

उत्तरतन्त्रे —

बिन्दावासनरूपेण स्थितं च परमं शिवम्। पराप्रासादमन्त्रेण तुरीयाविद्ययाथवा।। १।।
षोडशैरुपचारैस्तु पूजयेत् तर्पयेत् त्रिधा। गुरुपात्रामृतेनैवाथवा श्रीपात्रबिन्दुभिः।। २।।
पञ्चप्रणवमुच्चार्य शिवशक्त्यात्मकादि च। परमादिशिवश्री च पादुकां तर्पयामि च।। ३।।
तर्पयेद् दशधा प्रोक्तदशमुद्राश्च दर्शयेत्। बिन्दुचक्रे च पूर्वादिचतुर्दिक्षु च मध्यतः।। ४।।
गुरुपात्रामृतेनैव षडङ्गावरणं यजेत्। ईशतत्पुरुषाघोरवामसद्यादिमूलकैः ।। ५।।
षडङ्गावरणमिष्ट्वा[2] ब्रह्मविष्ण्वोस्तथैव च। रुद्रशम्भुपराणां च विश्रान्तिचरणान् यजेत्।। ६।।
आदिनाथादिगुरवो दिव्यसिद्धौघमानवाः। पूजनीयाः प्रयत्नेन सर्वकामार्थसिद्धये।। ७।।
ततोऽष्टकोणसन्धिस्थग्रन्थ्यष्टकविभेदतः। युग्मशः पार्श्वयुग्मेषु श्रीपात्रामृतबिन्दुभिः।। ८।।
कुलयोगिनिपूर्वादिमूलविद्यास्तु षोडश। धृतपाशाङ्कुशा रक्ता वरदाभयपाणयः।। ९।।
पूजयेत् तर्पयेच्चापि ततोऽन्तर्दशकोणके। चतुर्दिक्षु तथोर्ध्वाधः श्रीपात्रामृतबिन्दुभिः।। १०।।
यजेत् षडाधारविद्यास्तद्बाह्यस्थदशारके। ईशानस्य कला इष्ट्वा[3] मन्वस्रे पुरुषस्य तु।। ११।।
अघोरस्य कला ह्यष्टौ दलग्रन्थिषु संयजेत्। षोडशच्छदपद्मे तु वामदेवकला यजेत्।। १२।।
सद्योजातकला भूमिपुरे सम्पूजयेत् ततः। श्रीचक्रस्थान्तरालेषु केसरेषु च वै क्रमात्।। १३।।
चतुरस्रप्रक्रमेण सामान्यार्घ्यस्थबिन्दुभिः। महाषोढोदिताशेषदेवताः परिपूजयेत् ।। १४।।
सर्वावरणसम्पूर्णां सम्पूज्य तदनन्तरम्। इति।

दक्षिणामूर्तिसंहितायाम् —

नैवेद्यं षड्रसोपेतं कामधेनुपवित्रितम्। दद्यात् कर्पूरसहितं ताम्बूलं परशक्तये ।। १।।
नित्यहोमं प्रकुर्वीत पूर्वोक्तविधिना प्रिये। यथाशक्ति जपं कुर्यात् स्तुतिं च परमेश्वरि।।२।।

---

१. 'साङ्गां सावरणां शिवाम्' क. पाठः। २. 'यष्ट्वा' क. ग. पाठः। ३. 'यष्ट्वा' क. ग. पाठः।

आदिश्लोकद्वयेनापि तथा सौभाग्यदेवताम्। इति।

आदिश्लोकद्वयं तु—

श्रीमच्छ्रीकोशहृदयं पञ्चसिंहासनात्मकम्। फलं कल्पलतानां च चारुरत्नस्फुरत्कलम्[१]॥ १॥

चतुरायतनानन्दि चतुरन्वयकोशगम् । नित्यानन्दि परंब्रह्मधाम नौमि सुखाप्तये॥ २॥ इति।

तथा—

सौवर्णे रौप्यकांस्यादिपात्रे वसुदलं लिखेत्। गन्धेन चुलुकं मध्ये मुद्रां वा तत्र वै न्यसेत्॥ ३॥

वसुपत्रेषु चाज्येन पूरितान् नव दीपकान्। भ्रामयेद्रत्नविद्याभिस्त्रिधा भृत्वा[२] तु मस्तके॥ ४॥

मूलेन तां[३] स्मरेदन्ते सर्वविघ्नोपशान्तये। इति।

रत्नविद्या तु ज्ञानार्णवे—

गसौ च पमना: पश्चादिन्द्रस्था: क्रमश: शिवे। वामकर्णविशोभाढ्या बिन्दुभूषितमस्तका:॥ १॥

रमामायासम्पुटेन रत्नेशीयं नवाक्षरी।

"श्रींह्रींग्लूंस्लूंप्लूंम्लूंन्लूंह्रींश्रीं" इति। स्वच्छन्दसङ्ग्रहे—

प्रद्योतन ऋषि: प्रोक्तस्त्रिष्टुप् छन्द: प्रकीर्तितम्। रत्नेश्वरी देवता स्यान्मायाबीजं तु बीजकम्॥ १॥

श्रीबीजं शक्तिरुद्दिष्टा ग्लूँबीजं कीलकं स्मृतम्। स्वप्रकाशे तु देवेशि विनियोग: प्रकीर्तित:॥२॥

मायया दीर्घभाजा च षडङ्गानि प्रविन्यसेत्।

रत्नेश्वरीं रत्नविभूषिताङ्गीं माणिक्यमौलिं तरुणार्ककान्तिम्।
करैर्वहन्तीं नव रत्नदीपान् प्रकाशमानां मनसा स्मरामि॥ इति।

तथा —

समस्तचक्रचक्रेशीयुते देवि नवात्मिके। आरा(र्ति ?त्रि)कमिदं देवि गृहाण मम सिद्धये॥ १॥

मण्डलं वामत: कुर्यात् साधको भूमिजानुक:। वहत्पुटेन हस्ताभ्यां मण्डलोद्धारलक्षणम्॥ २॥

चतुरस्रे व्योमचक्रं क्रमेणानेन पूजयेत्। तारं च भुवनेशानीं व्यापकादि च मण्डलम्॥ ३॥

ङेन्तं वाग्भवहृन्मन्त्रो मनु: सूर्याक्षरो भवेत्। अन्नोदमिश्रं भागेन साधारं पुष्पपूजितम्॥ ४॥

संस्थाप्य पात्रं तत्रैव बलिं हरेत् । तारं परं सर्वविघ्नकृद्भ्य: सर्व च भू लिखेत्॥ ५॥

तेभ्यो हुंवह्निजाया च त्रिवारोच्चारणाद्बलि:। पूर्वोक्तबलिदानं तु कुर्याद्विघ्नोपशान्तये॥ ६॥

चतुर्धा बलिदानं तु त्रिषु लोकेषु दुर्लभम्। तत: कुमारी: सन्तर्प्य त्रिपुरेश्यानयाथवा[४]॥ ७॥

मयूखान् परमेश्वर्या: सम्भाव्य मनुवित्तम:। खेचर्या: शक्तिचक्रस्य स्वामिनीं संविदं[५] पराम्॥ ८॥

योजयेदात्मनि ज्ञानगहने कृपया गुरो:। शिवकोणे देशिकेभ्यो निर्माल्यं सिद्धये क्षिपेत्॥ ९॥

अर्घ्यपात्रं ततो देवि गुरवे गुरुमन्त्रवित्। नाममन्त्रेण च स्वस्य तर्पयेदुपदेशत:॥ १०॥

वाममार्गेण देवेशि तत्त्वमुद्राधर: शुचि:। पुनराधारगं कुर्यादाचारे दीपलक्षणम्॥ ११॥

---

१. 'लाम्' क. पाठ:। २ 'धृत्वा' ग. पाठ:। ३. 'वा' क. पाठ:। ४ 'नवाथवा' क. पाठ:। ५. 'संपदं' ग. पाठ:।

आरात्रिकस्य मध्यस्थं मूलेनैव तु भक्षयेत्। कपालिन्या वापि पात्रं तया[1] वापि समुद्धरेत्।। १२।।
द्वितीयं तत्त्वगं दक्षे संयोगेनैव पार्वति। तत्त्वत्रयेण संयोगात्तर्पयेत् स्वान्तवासिनीम्।। १३।।
प्रथमं ब्रह्मरूपत्वं द्वितीयं सर्वमन्त्रवित्। तृतीयमीशरूपं च विज्ञेयं मुनिसत्तमैः ।। १४।।
किञ्चिदुल्लास्य मुद्राभिः पञ्चभिः परमेश्वरि। श्रीगुरोराज्ञया देवि स्वयं श्रीत्रिपुरा भवेत्।। १५।।
अधोमुखानि सर्वाणि पात्राण्यग्नौ प्रतिष्ठयेत्। आकृष्य मन्त्रात् तत्रस्थं[2] शेषिकाभ्योऽक्षतादिकम्।।१६।।
दत्त्वा तु परमेशानि सुखीभूयान्न संशयः। अनर्घ्यमपि विज्ञेयमक्षरैः कथितं मया ।। १७।।
अलाक्षरेण न्यायेन चन्द्रदीपेन च प्रिये । गोपितव्यं त्वया भद्रे जननीजारगर्भवत् ।। १८।।

इति। अत्र नित्यहोमविधानं दीक्षाप्रकरणे वक्ष्यामः प्रयोगरूपम्। तथा दक्षिणामूर्तिसंहितायाम्—

शृणु देवि प्रवक्ष्यामि विद्यायन्त्रं समाहितः । सहस्रजन्मजं पापं हन्ति मासेन देशिकः।। १।।
पूजयेद्रत्नखचितैश्चम्पकैः स्वर्णजैः प्रिये। अवश्यं सर्वकालेषु परमाज्ञाधरो भवेत्।। २।।
नाशयेत् सर्वपापानि कोटिजन्मभवान्यपि। समुद्रलयां पृथ्वीं संप्राप्य सुखमेधते।। ३।।
नित्यं यः पूजयेद् देवीं चम्पकै रजतोद्भवैः। स बुद्धिमान् भवेद्देवि सर्वत्र विजयी भवेत्।। ४।।
पश्चिमाभिमुखं लिङ्गं वृषशून्यमथापि वा। स्वयम्भूबाणदेशे वा शैवस्थाने महेश्वरि।। ५।।
तत्र स्थित्वा जपेन्मन्त्रं प्रवालाक्षस्रजा तथा। मुक्तारुद्राक्षपद्माक्षस्फटिकोद्भवया तथा।। ६।।
माणिक्यपद्मरागादिमनोहर्य्या जपेद् बुधः। जात्वा लक्षैकमात्रे तु भूचर्य्यो विघ्नकारिकाः।। ७।।
तासामपि यदा नासौ क्षोभं याति मनागपि। तदा लक्षत्रयं कुर्यान्नियमेन शुचिर्बुधः।। ८।।
मानसेनाथवा वाचोपांशुना वा जपेत् सुधीः। मानसोच्चारणं देवि जपकोटिफलप्रदम्।। ९।।
उपांशूच्चारणं देवि वाचिकात् शतधा भवेत्। वाचिकं मुखमात्रं[3] स्याच्छ्रीगुरोराज्ञया प्रिये।। १०।।
तद्दशांशेन होमः स्यात् कुसुमैर्ब्रह्मवृक्षजैः । कुसुम्भपुष्पैर्जुहुयान्मधुरत्रयसम्प्लुतैः।। ११।।
सिद्धा भवति विद्येयं सर्वविद्यास्वरूपिणी। योनिकुण्डे भगाकारे वर्तुलेन्द्वर्धयोः प्रिये।। १२।।
नवत्रिकोणचक्रे वा चतुरस्रेऽथ वस्वरे। वाक्पतिर्योनिकुण्डे तु भगे चाकर्षणं भवेत्।। १३।।
वर्तुलं श्रीपदं देवि चन्द्रार्धे तु त्रयं भवेत्। नवत्रिकोणे महतीखेचरीसिद्धिवान् भवेत्।। १४।।
चतुरस्रे तु सकलं शुभजातं भवेत् सदा। शान्तिकं पौष्टिकं लक्ष्मीरारोग्यं वसुकोणके[4]।।१५।।
पद्माङ्के दश सिद्धीस्तु साधयेन्नात्र संशयः। मल्लिकामालवीभिश्च त्रिमध्वक्तैर्वचस्पतिः।। १६।।
करवीरज(या?पा)पुष्पैः सघृतैर्भुवनत्रये। योषिद्वश्या ततो देवि कर्पूरं कुङ्कुमं मदम् ।। १७।।
मृगस्य मिश्रितं कृत्वा कामसौभाग्यवान् भवेत्। चाम्पेयैः पाटलै रम्यैराम्रैरन्यैः फलैर्हुनेत्।।१८।।
सप्ताहं मासमात्रं वा लक्ष्मीः प्राप्नोति मान्त्रिकः। श्रीखण्डं चागरुं देवि कर्पूरं गुग्गुलं हुनेत्।।१९।।
समग्रपुरसुन्दर्यो वश्यास्तस्य भवन्ति हि। हुत्वा फलं त्रिमध्वक्तं खेचरत्वं चतुष्पथे।। २०।।

१. 'त्वया' क. पाठः। २. 'मन्त्रा तन्त्रस्यं' क. पाठः। ३. 'तुस्वमात्रं' क. पाठः। ४. 'च सुखादिकम्' क. ग. पाठः।

दधिक्षीरमधुसर्पिर्लाजान् हुत्वा न कालभाक्। अथवा नवलक्षं तु जपेद्विद्यां समाहितः।। २१।।
तद्दशांशेन होमस्तु पूर्वोक्तविधिना यजेत्। साधयेत् स्वर्गभूलोकपातालतलवासिनः।। २२।।
राजिकालवणाभ्यां तु क्षोभयेज्जगतीमिमाम्। दध्ना शताष्टकं हुत्वा कालमृत्युं विनाशयेत्।।२३।।
घृतक्षीरद्वयादायुष्यतोऽष्टशतकं हुनेत् । मध्वाज्यगुग्गुलेनैव राजेन्द्रं वशमानयेत् ।। २४।।
आरोग्यं घृतदूर्वाभ्यां हवनेन शताष्टकम्। मध्वाज्याक्तै रक्तवर्णैः करवीरैः सगुग्गुलैः।। २५।।
हुनेल्लक्षं वशीकुर्याद्विंशतिं धरणीभुजाम्। मध्वक्तकरवीरैस्तु साङ्गं भूपं वशं नयेत्।। २६।।
सप्तरात्रेण साज्येन शशिना पूर्ववद्यजेत्। पाटलैर्यूथिकाकुन्दैः शतपत्रैश्च जातिभिः।। २७।।
मालतीनववल्लीभिर्मल्लिकापद्मकिंशुकैः । पूजनाद्धवनाद्वापि मिश्रैर्वाऽमिश्रितैरपि ।। २८।।
सर्वसौभाग्यमाप्नोति बुद्ध्या वाक्पतिरुच्यते। मुचुकुन्दैर्बिल्वपत्रैः फलैरसितनीरजैः ।। २९।।
नागरै[1] राजचम्पैश्च सिद्धयोऽष्टौ भवन्ति हि। नारिकेलैश्च खर्जूरैर्द्राक्षाभिश्चूतसत्फलैः ।। ३०।।
मनसा चिन्तितं कार्यं साधकस्य तु होमतः। पूजनेन च होमेन श्रीविद्यां परितोषयेत्।। ३१।।
चरुं विकीर्य सर्वत्र कुमारीपूजनादिभिः। पूर्वोक्तबलिदानेन गुरुं सन्तोष्य च क्रमात्।। ३२।।
सुवासिनीश्च सम्पूज्य दद्याद्भूरि धनं सताम्। समग्रं कुसुमं होमे कूष्माण्डं बहुधा हुनेत्।। ३३।।
नारिकेलान्तरफलैः सकलैस्तु मनःप्रियम्। समग्रेणैव चूतस्य फलेन बदरं तथा।। ३४।।
पनसैः फलगर्भस्थैर्गर्भैर्विलोकितैर्हुनेत्। जम्बूफलं समग्रं स्याद् द्राक्षां चैव तथा हुनेत्।। ३५।।
रम्भाफलं मनोभागं लघु चेत् खण्डितं नहि। फलं लघु समग्रं स्यात् कस्तूरी कुङ्कुमं शशी।।३६।।
गुञ्जामात्रं हुनेद्देवि तिलराजीशतं हुनेत् । तथैव लवणं लाजा मुष्टिमात्रं हुनेद्बुधः ।। ३७।।
अन्नं तु ग्रासमात्रं हि पक्वान्नैश्च तथा हुनेत्। पूर्णं[2] तु क्रमुकार्धेन श्रीखण्डं क्रमुकाकृति।।३८।।
तथागुरु हुनेत्प्राज्यं मनःसन्तोषकारि यत् । तच्चतुर्गुणभेदन दधिदुग्धैर्हुनेत् सदा ।। ३९।
सर्वासामाहुतीनां तु मानं देवि मनःप्रियम्। कुण्डस्य पूजनं वक्ष्ये महाविघ्नविनाशनम्।। ४०।।
चतुर्विंशतिसंख्याभिरङ्गुलीभिः सुविस्तृतम्। खातं च रचयेत् कुण्डं सर्वत्र सुमनोहरम्।। ४१।।
चतुरस्रं सर्वनेत्रसुभगं मेखलास्ततः। सर्वत्रैकाङ्गुलं त्यक्त्वा तिस्रः कार्याः सुशोभनाः।। ४२।।
आदित्यवसुवेदानां संख्याङ्गुलिभिरुन्नताः । चतुरङ्गुलविस्तारास्तिस्रोऽपि परमेश्वरि।। ४३।।
कुण्डस्य पश्चिमे भागे योनिं कुर्यात् सुलक्षणाम्। रव्यङ्गुलिसुविस्तारा[3] वस्वङ्गुलिसुविस्तृताम्।।४४।।
मध्ये षडङ्गुलां देवि व्यङ्गुलोच्चां[4] मनोरमाम्। लक्षणं चतुरस्रस्य कथितं तव सुन्दरि।।४५।।
एतस्मिन्माने[5] यद्वान्यत् तदन्येषु यथा भवेत्। तेन मानेन सर्वाणि कुण्डानि रचयेद् बुधः।।४६।।
गोमयोदकसंलिप्ते पूर्वात्पश्चिमदिग्गताः[6]। दक्षिणाद्युत्तरान्तं तु तिस्रस्तिस्रश्च कारयेत्।। ४७।।
प्रणवेणाभ्युक्ष्य मध्ये कल्पयेद्यागविष्टरम्। शर्करां विकिरेत्तत्र त्रिकोणं तत्पुटं लिखेत्।।४८।।

---

१ 'गरैः' क.ग.पाठः। २ 'पूर्वं' क.पाठः। ३ 'स्तु' ख.पाठः। ४ 'ल्यु' ख.पाठः। ५ 'माति' क.पाठः। ६ 'तः' क.ग.पाठः।

तद्बहिर्वसुपत्रं च ततो भूमण्डलं लिखेत् । उपर्युपरि भेदेन तत्र पीठं समर्चयेत् ।। ४९।।
मण्डूकं च तथा रुद्रं कालाग्न्याद्यं ततः परम्। आधारशक्तिकूर्मौ च ततोऽनन्तं वराहकम्।। ५०।।
पृथिवीं च तथा कन्दं नालं पद्मं च कर्णिकाम्। पत्राणि केसराण्येवं तत्तत्स्थानेषु पूजयेत्।। ५१।।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं पीठदिक्षु च। अधर्मांश्चैव कोणेषु पीठस्य परिपूजयेत् ।। ५२।।
पुनस्तारेण सम्पूज्य यागविष्टरकं न्यसेत्। मध्ये ऋतुमतीं वेदमातरं वेदमस्तकाम्।। ५३।।
पुरुषाधिष्ठितां ध्यात्वा तद्योनौ सम्पुटस्थिताम्। वह्निं कुण्डे परिभ्राम्य किञ्चिदङ्गारकं त्यजेत्।।५४।।
अस्त्रमन्त्रेण सकलान् भूतान् सन्त्रासयेत् सुधीः। पश्चात् प्रज्वालयेद्वह्निं ज्ञानाग्नेः सङ्क्रमेण तु।। ५५।।
दीपाद्दीपान्तरन्यायात् स्फुरन्तं सर्वतो मुखम्। श्वासमार्गेण मनुविद्योनिमार्गेण सङ्क्षिपेत्।। ५६।।
कुण्डत्रिकोणमध्ये तु तत्र प्रक्षालयेच्छुचिम्। आदौ व्याहृतिभिः पश्चाद्वह्निमन्त्रेण च क्रमात्।। ५७।।
चितिपिङ्गलहनद्वन्दं दहद्वन्दं पच द्विधा। सर्वज्ञाज्ञापय स्वाहा मनुना प्रार्थयेत् ततः।। ५८।।
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्। सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्।। ५९।।
उपस्थानं विधायेत्थं जिह्वाङ्गानि प्रविन्यसेत्। सषशा वलरा यश्च रमस्वस्वरया(रयषष्ठस्वरा)न्विताः।।६०।।
बिन्दुनादाङ्किताः सप्त जिह्वार्णाः परिकीर्तिताः। पद्मरागा सुवर्णा च तृतीया भद्रलोहिता[१]।। ६१।।
लोहिता च तथा श्वेता धूमिनी च करालिका। क्रमेण योजयेद्बीजैर्विन्यसेत् परमेश्वरि ।। ६२।।
पल्लिङ्गगुदमूर्धास्यनासानेत्रेषु च क्रमात् । सुराश्च पितरश्चैव गन्धर्वा यक्षपन्नगाः।। ६३।।
पिशाचा राक्षसाश्चैव स्मर्तव्यास्तासु सप्तसु। सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठपुरुषस्तथा।। ६४।।
धूमव्यापी सप्तजिह्वो धनुर्धर इतीरितैः। ङेहृदन्तैः षडङ्गानि ततो मूर्त्यष्टकं न्यसेत्।। ६५।।
जातवेदः सप्तजिह्वो हव्यवाहन एव च। अश्वोदर्यश्चतुर्थः स्याद्वैश्वानर उमे ततः।। ६६।।
षष्ठः कौमारतेजाश्च विश्वदेवमुखौ न्यसेत् । मूर्धांसपार्श्वकट्यन्धुकटिपाश्वांसकेषु च।। ६७।।
ङेन्तास्तु सकला ज्ञेया अग्निमूर्त्यङ्गकाः क्रमात्। एवं विन्यस्तदेहः सन् पर्युक्ष्यार्घ्यजलेन च।।६८।।
दिक्षु दर्भैः परिस्तीर्य ततस्तु परिषेचयेत्। वैश्वानर ततो जातवेद पश्चादिहावह ।। ६९।।
लोहिताक्ष च सर्वान्ते कर्माण्यपि च साधय। स्वाहान्तोऽगुणरयं तारं वक्त्रे चितिपिङ्गलोऽर्चि[२] च।।७०।।
अनेन वह्निमभ्यर्च्य ततो जिह्वाः समर्चयेत्। मध्ये च कोणषट्के च ततोऽङ्गानि प्रपूजयेत्।।७१।।
मूर्तयो वसुपत्रेषु भूबिम्बे दिगधीश्वराः । पुनर्वैश्वानरं जप्त्वा त्रिनेत्रमरुणप्रभम् ।। ७२।।
शुक्लाम्बरं रक्तरत्नभूषणं पद्मसंस्थितम् । वरं शक्तिं स्वस्तिकं चाभीतिं हस्तैश्च बिभ्रतम्।।७३।।
अनेकहेममालाभिरङ्कितं संस्मरेद्बुधः । अर्घ्योदकेन पात्राणि प्रोक्षयेच्छुद्धये ततः।। ७४।।
उन्मुखीकृत्य सर्वाणि तत्र तत्र विनिक्षिपेत्। प्रणीताप्रोक्षणीयुग्मे जलं स्थाल्यां घृतं तथा।।७५।।
अन्यत् सर्वेषु पात्रेषु होमद्रव्याणि सङ्क्षिपेत्। स्रुक्पात्रे च स्रुवे पात्रे घृते पुष्पं विनिक्षिपेत्।।७६।।

१. 'रुद्र' इति पाठान्तरम्। २. 'चक्रं' क.ग. पाठः।

स्थालीं पूर्वा(धूपा)न्वितां कुर्यात् सर्वतो धूपयेत् प्रिये। मेखलासु च सर्वासु वेष्टयेद्दीपमालिकाः।।७७।।
त्रिपङ्क्त्या चाभितः कुण्डं ततो व्याहृतिभिर्हुनेत्। ब्रह्माणं दक्षिणेऽभ्यर्च्य हुनेद्वैश्वानराणुना।।७८।।
गर्भाधानादिसंस्कारं चिन्तयेत् सिद्धिहेतवे। अनेन विधिनाभ्यर्च्य श्रीचक्रं तत्र चिन्तयेत्।। ७९।।
तदन्तरे समावाह्य महात्रिपुरसुन्दरीम् । समस्तचक्रचक्रेशीसहितां होमयेत् ततः ।। ८०।।
दशाज्याहुतिभिः पश्चात् पूजनादिक्रमेण च। समस्तचक्रचक्रेशीः प्रकटाद्याश्च योगिनीः।। ८१।।
होमयेच्च घृतेनैव चैकैकामाहुतिं क्रमात् । ततः पूर्वोक्तसुद्रव्यैर्होमयेत् सुभगां पराम्।। ८२।।
हवनं पद्मरागायां सर्वसिद्धिप्रदं भवेत् । रुद्ररक्ता सुवर्णा च सर्वकामफलाप्तये ।। ८३।।
लोहियातां भवेच्छान्तिः स्तम्भनं च क्रमाद्भवेत्। उच्चाटनं च धूमिन्यां करालिन्यां च मारणम्।।८४।।
इति ते कथितं दिव्यं होमलक्षणमुत्तमम्। कृतं[१] विघ्नौघशमनं नान्यथा वरवर्णिनि।। ८५।।
दीपस्थानं समाश्रित्य जपहोमौ समाचरेत्। वसुकोष्ठं लिखेत् कूर्मं मध्ये स्थाने प्रकल्पयेत्।।८६।।
स्वरान् द्वन्द्वविभागेन पूर्वादिक्रमतो लिखेत्। काद्या वर्गास्तु सप्तैते पूर्वादिक्रमतो लिखेत्।।८७।।
ळक्षवर्णोऽष्टमे योज्यः कूर्मचक्रमिदं भवेत्। स्थानाक्षरं यत्र देवि सिद्धिस्तत्र न संशयः।। ८८।।
स्थानाक्षरं मुखं ज्ञेयं पार्श्वयोस्तस्य वै करौ। तत्र शून्यं फलं मध्यकोष्ठयुग्मं तु मृत्युदम्।।८९।।
उदरं कच्छपस्यैतत्पादौ तु पश्चिमौ क्रमात्। रोगहानिकरौ पुच्छं तयोर्मध्यगतं भवेत्।। ९०।।
दारिद्र्यदं दुःखदं च तस्माद्वक्त्रं समाश्रयेत्। तथैव सिद्धिर्नान्यत्र श्रीगुरोराज्ञया प्रिये।। ९१।।
देशं वा कल्पयेत् स्थानं नगरं ग्राममेव च। दीपावासोऽपि कर्तव्यः किं पुनर्हवने यजेत्।।९२।।

इति। स्वच्छन्दसङ्ग्रहे—

चक्रराजं समालिख्य सिन्दूररजसा प्रिये। स्वयम्भूकुसुमाक्तैश्च कुसुमैरक्षतैर्यजेत् ।।१।।
नवावरणदेवीनां गायत्रीभिः समन्ततः। गायत्रीं सम्यगुच्चार्य तदन्तेऽप्यमुकं ततः।। २।।
वशमानय मेऽन्ते च तत्तत्पल्लवमुच्चरेत्। ततश्चामुकदेवीश्रीपादुकां पूजयामि च।। ३।।
एवमाकर्षणे मोहे स्तम्भनोच्चाटकर्मसु। सप्ताहाभ्यन्तरे मन्त्री वाञ्छितं समवाप्नुयात्।।४।। इति।

**अस्यार्थः** — क्वचिद्विविक्ते देशे सिन्दूरादिरक्तद्रव्यैश्चक्रराजं विलिख्यार्घ्यस्थापनाद्यात्मपूजानन्तरं यथोक्तपीठपूजां विधाय स्वयम्भूकुसुमाक्तैरक्षतैः पुष्पैर्वावरणपूजां कुर्यात्। तत्र वश्ये तारत्रयपूर्वकतत्तद्गायत्रीमुच्चार्यामुकदेवि अमुकं मे वशमानय अथवा वशं कुरु कुरु वौषट् अमुकदेवीश्रीपादुकां पूजयामि, इति प्रयोगः। एवं प्रत्यावरणं प्रतिदेवीः पूजयेत्। आकर्षणे अमुकमाकर्षयाकर्षयेति,. एवं स्तम्भनादिप्रयोगेषु योजनीयमित्यर्थः।। तथा —

मूलाधारादिचक्रेषु श्रीचक्रं भावयन् पृथक्। तत्तद्भूतार्णकिरणैर्वृताश्चक्रस्थदेवताः ।। १।।

पार्थिवैः स्तम्भनं कुर्यादित्यादि प्राक्प्रोक्तफलानि ज्ञेयानि। दक्षिणामूर्तिसंहितायाम्—

अथातः सम्प्रवक्ष्यामि चक्रराजस्य साधनम्। एवं संसिद्धविद्याया विनियोगक्रमं शृणु।। १।।

---

१. 'कुतः' क. पाठः।

कृत्वा सिन्दूररजसा चक्रं तत्र विचिन्तयेत्। साध्यप्रतिकृतिं नाम लेखन्यैका[1] शुभा ततः।।२।।
ज्वलन्तीं तु क्षणाद् देवि मोहिता भयवर्जिता। त्यक्त्वा लज्जां समायाति ह्यथान्यत् कथ्यते प्रिये।।३।।
तन्मध्यसंस्थितो मन्त्री चिन्तयेदरुणप्रभम्। आत्मानं च तथा साध्यं तथा सौभाग्यसुन्दरः।। ४।।
अरुणैरुपचारैस्तु पूजयेन्मुद्रयाः वृतः। यस्य नाम्ना पुनः सम्यक् स भवेद् दास एव हि।। ५।।
अदृष्टस्त्रीनामवर्णांश्चक्रमध्ये विलिख्य तु। योनिमुद्राधरो भूत्वा वेगादाकर्षणं भवेत्।। ६।।
देवकन्यां राजकन्यां नागकन्यामथापि वा। गोरोचनाकुङ्कुमाभ्यां समभागं च चन्दनम्।। ७।।
अष्टोत्तरशतावृत्त्या तिलकं सर्वमोहनम्। पुष्पं फलं जलं चान्नं गन्धं वस्त्रं च भूषणम्।। ८।।
ताम्बूलं पूर्वजप्तं[2] च यस्मै सम्प्रेष्यते स तु। अङ्गना वीक्षणादेव दासी चास्य भवेत् प्रिये।।९।।
करवीरै रक्तवर्णैस्त्रिमध्वक्तैः प्रपूजयेत्। चिन्तयन् मासमात्रं हि साध्याख्यां ललनां ततः।। १०।।
इति कुर्वन् महेशानीं पूजयेदरुणप्रभाम्। सिन्दूररचिते चक्रे राजानं मोहयेत् क्षणात् ।। ११।।
त्रैलोक्यदुर्लभां चापि रम्भां वाकर्षयेद् द्रुतम्। चिताङ्गारेण चक्रं तु लिखेद्रक्तद्रवेण हि।। १२।।
बद्ध्वा बाहावथ क्वापि ज्वरं नाशयति क्षणात्। अर्कनिम्बद्रवाभ्यां तु लेखन्यार्कस्य संलिखेत्।।१३।।
गोमूत्रे स्थापयेत् तच्च भवेद्विद्वेषणं क्षणात्। धूपयेच्चन्दनं रात्रौ वस्त्रं वा धारयेत् ततः।। १४।।
अष्टोत्तरशतावृत्त्या मोहयेद्भुवनत्रयम् । लिप्तगोमयभूमौ तु लिखेद्रोचनया ततः।। १५।।
सुरूपां प्रतिमां रम्यां भूषाढ्यां परिचिन्तयेत्। तद्भालगलहृन्नाभिजन्ममण्डलयोजितम्[3]।। १६।।
जन्मनाम महाविद्यामङ्कुशान्तर्विदर्भिताम् । सर्वाङ्गसन्धिसंलीनं कामकूटं समालिखेत्।। १७।।
साध्याशाभिमुखो भूत्वा श्रीविद्यान्यासविग्रहः। क्षोभिणीबीजमुद्राभ्यां विद्यामष्टशतं जपेत्।।१८।।
योजयेत् तां कामगेहे चन्द्रसूर्यकलात्मके। सानुरागातिविमला कामसायकपीडिता ।। १९।।
त्रैलोक्यसुन्दरी नाम क्षणादायाति मोहिता। अथवा मातृकाचक्रं बाह्यं संवेष्ट्य मन्त्रवित्।।२०।।
चक्रं प्रपूजयेत् सम्यग् विद्यां पूर्णां च धारयेत्। अवध्यः सर्वदुष्टानां व्याघ्रादीनां न संशयः।।२१।।
श्रीखण्डागुरुकस्तूरीकर्पूरैश्च सकुङ्कुमैः । स्वनाम क्रमतो लेख्यं पूर्ववन्मातृकां लिखेत्।। २२।।
तेनाजरामरत्वं तु साधकस्य न संशयः । अनेनैव प्रकारेण रोचनागुरुकुङ्कुमैः ।। २३।।
चक्रं विलिख्य साध्यार्णं साधकार्णविदर्भितम्। त्रैलोक्यमोहनो मन्त्री भवत्येव न संशयः।।२४।।
कामकूटेन देवेशि सन्दर्भ्य पृथगक्षरम्। साध्यनाम्नस्त्रिकोणान्तर्मातृकां वेष्टयेद्बहिः।। २५।।
स्वर्णमध्यगतं धार्यं शिखायां यत्र कुत्रचित्। लोकपालाश्च राजानो दुष्टास्त्रैलोक्यसंस्थिताः।।२६।।
ते सर्वे वशमायान्ति सन्निपातादयो ज्वराः। अनेन विधिना नाम पुरीं सन्दर्भ्य सङ्क्षिपेत्।। २७।।
चतुष्पथे मध्यदेशे दिक्षु पूर्वादिषु क्रमात्। तस्य सौभाग्यमायाति राजानः किङ्कराः सदा।।२८।।
स्फुरत्तेजोमयीं पृथ्वीं प्रज्वलन्तीं चराचरम्। चक्रान्तश्चिन्तयेन्नित्यं मासषट्कं ततो नरः।। २९।।

१. 'कृत्वा लेखनीकां' ग. पाठः। २. 'पूर्ण' क. पाठः। ३. 'योषिताम्' क. पाठः।

तेन कन्दर्पसुभगो लोके भवति निश्चयात् । दृष्ट्याकर्षयते लोकान् विषं नाशयति ज्वरान्[१] ।।३०।।
तथा विषं च हरति दृष्ट्यावेशं करोति च। रात्रौ सिन्दूरलिखितं पूजयेदेकचित्ततः।। ३१।।
करोत्याकर्षणं दूराद्योजनानां शतादपि[२]। अखण्डं दिक्षु कोणेषु क्रमेण परिपूजयेत्।। ३२।।
यदा[३] तदैव लोकोऽयं वश्यो भवति नान्यथा। भूर्जपत्रे लिखेच्चक्रं रोचनागुरुकुङ्कुमैः।।३३।।
स्वनामदर्भितं कुर्याद् देशं वा पुट[४]भेदनम्। मण्डलं विषमस्थानं भूमौ चक्रं निधापयेत्।। ३४।।
धारयेद्वा ततो मन्त्री पुरं क्षोभयति क्षणात्। उन्मत्तरसलाक्षार्कक्षीरकुङ्कुमरोचनाः।। ३५।।
कस्तूर्यलक्तसहिता एकीकृत्य तु संलिखेत्। यन्नाम तस्य[५] देवेशि चौरजं व्याघ्रजं भयम्।।३६।।
ग्रहजं व्याधिजं चैव रिपुजं सिंहजं भयम्। अहिजं वाजिजं वास्ति सर्वान् मोहयति क्षणात्।।३७।।
रोचनाकुङ्कुमाभ्यां तु मध्यगां संलिखेद् बुधः। त्रिकोणोभयगां चैव साध्यनामाङ्कितामधः।। ३८।।
तच्चक्रं धारयेत् तस्मात् सप्ताहात् किङ्करो भवेत्। पीतद्रव्येण चक्रान्ते लिखेद्विद्यामधस्ततः।।३९।।
साध्यनाम विलिख्यैतत्पूर्वस्यां दिशि सङ्क्षिपेत्। तस्माद्ब्रह्मापि जीवोऽपि सर्वज्ञो मूकतां व्रजेत्।।४०।।
अनेन विधिना नीलीरसेन विलिखेच्च तत्। दक्षिणाभिमुखो मन्त्री बह्नौ दग्ध्वा रिपून् दहेत्।।४१।।
महिषाश्वपुरीषेण गोमूत्रेण च संलिखेत् । आरनालस्थितं कुर्याद्भवेद्विद्वेषणं क्षणात्।। ४२।।
साध्यनाम लिखेन्मध्ये काकपक्षेण सञ्चयेत्। संलिख्य रोचनाद्रव्यैराकाशे दृष्टिगं यथा।। ४३।।
शत्रूनुच्चाटयेदाशु हठोच्चाटोऽयमीरितः । महानीलीरसोद्भिन्नरोचनादुग्धमिश्रितैः ।। ४४।।
लाक्षारसैर्लिखेच्चक्रं चतुर्वर्णान् वशं नयेत्। अनेन विधिना नीरे स्थापयेत् तज्जलेन तु।। ४५।।
सौभाग्यं महदाप्नोति स्नानपानान्न संशयः। पीतं चक्रं यजेत् पूर्वे स्तम्भयेत् सर्ववादिनः।।४६।।
सिन्दूरलिखितं चक्रमुत्तरे लोकवश्यकृत्। पश्चिमे पूजितं चक्रं गौरिकालिखितं ततः[६]।। ४७।।
मन्त्रिणो देवता वश्याः किं पुनर्योषितः प्रिये। तथैव दक्षिणास्यस्तु कृष्णं चक्रं समर्चयेत्।।४८।।
साध्यस्य मन्त्रहानिः स्यान्मरणं च विशेषतः। क्रमाद्दिगन्तरास्यः सन् वह्निकोणादिषु क्रमात्।।४९।।
स्तम्भं विद्वेषणं व्याधिमुच्चाटं कुरुते नरः। दुग्धे वश्यकरं क्षिप्तं रोचनालिखितं हठात्।। ५०।।
दग्धं तद्वह्निमध्यस्थं सर्वशत्रून् विनाशयेत्। गोमूत्रमध्यगं चैतद्भवेदुच्चाटनं रिपोः।। ५१।।
विद्वेषणं भवेच्चक्रे तेनैव परमेश्वरि । सिन्दूरेण लिखेच्चक्रं निर्जने तु चतुष्पथे।। ५२।।
सर्वां बाह्यत आरभ्य मध्यान्तं मातृकां लिखेत्। कुलाचारक्रमेणैव रात्रौ सम्पूजयेत् क्रमम्[७]।।५३।।
साधकः खेचरो देवि जायते नात्र संशयः। चतुर्दश्यां निशि स्वस्थो रुद्रभूमौ प्रपूजयेत्।।५४।।
षण्मासंख्यजातेन साक्षाद्रुद्र इवापरः । अञ्जनं विवरं सिद्धिं गुटिकां पादुकाञ्जनम्।। ५५।।
खड्गं वेतालसौभाग्यं यक्षिणीं चेटकादिकम्। सकलं सिद्धिजजनं मन्त्री प्राप्नोति नान्यथा।।५६।।

१. 'त्' क. पाठः। २. 'तैरपि' क. पाठः। ३. 'यथा तथैव' ग. पाठः। ४. 'पुर' क. पाठः। ५. 'यस्य' क. पाठः।
६. 'हठात्' ग. पाठः। ७. 'मात्' ग. पाठः।

चतुर्दश्यां चतुर्दश्यां प्रत्यष्टम्यां समाहितः। एकविंशतिरात्रं तु निशि प्रेतस्थितो जले।। ५७।।
श्रीचक्रं पूजयेत् तद्वत् सुरपूज्यस्तु साधकः। पाशाङ्कुशधनुर्बाणैः पौरुषेयैर्महेश्वरि।। ५८।।
कामो भूत्वा सर्वभूश्च(स्वर्गभूमि)पातालतलयोषिताम्। हर्ता कर्ता स्वयं चैव महदाकर्षणं भवेत्।।५९।।
तत्तत्कामेश्वरीशस्त्रैर्देव्यात्मा भुवनत्रये। पुरुषाकर्षणं चैतद्राजानः किङ्कराः प्रिये।। ६०।।
एतत्कामकलाध्यानं कथितं बीजभेदतः। वाग्भवाराधने देवि ज्ञानं सारस्वतं भवेत्।। ६१।।
श्वेताभरणवस्त्राभ्यां श्वेतपुष्पैः समर्चयेत्। अनेन विधिना देवि वाग्भवाराधनं भवेत्।। ६२।।
अथ कामकलानाम सामर्थ्यं शृणु पार्वति। काममन्मथकन्दर्पा मकरध्वज एवं च।। ६३।।
महाकामश्च पूर्वोक्ताः पञ्च कामाः क्रमेण तु। कामं मन्मथमध्यस्थं देवि कन्दर्पवेश्मगम्।। ६४।।
तत्पुटस्थं मीनकेतुं महाकामेशमस्तकम्। अनेन कामतत्त्वेन मोहयेज्जगतीमिमाम्।। ६५।।
मूलादिसृष्टिसंहारबिसतन्तुतनीयसीम्। तस्मात् कुण्डलिनी शक्तिः शक्तिकूटे महेश्वरि।।६६।।
त्रिकूटा त्रिपुरा देवी सर्वसिद्धिप्रदा भवेत्। चतुषष्टिर्यतः कोट्यो योगिनीनां महौजसाम्।।६७।।
चक्रमेतत्समाश्रित्य सता[1] सिद्धिप्रदाः सदा। इति।

अथ नानावैदिकमन्त्रमिश्रिताः श्रीविद्यामन्त्रा उद्ध्रियन्ते। स्वच्छन्दसङ्ग्रहे—

प्रणवं कमला माया कामपिण्डं च गाणपम्। ततो वाग्भवकूटं च यद्ध्यकच्च वृत्रहन्।। १।।
कामराजं महाकूटमुदगा अभिसूर्य च। शक्तिकूटं समालिख्य सर्वं तदिन्द्र ते वशे।। २।।
ङेऽन्तं गणपतिं पश्चाद्वरान्ते वरदेति च। ततः सर्वजनं मेऽन्ते वशमानय ठद्वयम्।। ३।।
गणराजेश्वरो मन्त्रः सर्वैश्वर्यफलप्रदः। सर्ववश्यकरः पुंसामायुरारोग्यसिद्धिदः ।। ४।।
महागणपतेर्मन्त्रं त्रैष्टुभं जातवेदसम्। अर्धं संवादसूक्तस्य पुनरर्धं क्रमाल्लिखेत्।। ५।।
चतुःखण्डानि चोक्तानि त्रिकूटैर्गर्भितानि च। प्रत्यहं जपतः पुंसो यथाशक्ति विशेषतः।।६।।
जगत्सम्मोहनं वश्यं कान्तिसौभाग्यपुष्टिदम्। इति।

अस्यार्थः— ॐश्रींह्रींक्लींग्लौंगं कएईलह्रीं यद्ध्यकच्च वृत्रहन् हसकहलह्रीं उदगा अभिसूर्य सकलह्रीं सर्वं तदिन्द्र ते वशे गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा।। कएईलह्रीं "जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः" हसकहलह्रीं "संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ इळस्पदे समिध्यते स नो वसून्याभर,। सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्। देवा भागं यथापूर्वे सञ्जानाना उपासते" सकलह्रीं।। समानो मन्त्रः समितिः समानी समानं मनः सहचित्तमेषाम्। समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि।।" समानी व आकृतिः समाना हृदयानि वः। समानमस्तु वो मनो यथा वः सुसहासति।।" इत्युद्धारः।।

भद्रन्नो अभिमन्त्रस्य गर्भस्थां सुन्दरीं जपेत्। कुबेर इव वित्ताढ्यो जायते भुवि मानवः।। १।। इति। अस्यार्थः— "भद्रं नो अभिवातय मनः कएईलह्रीं मरुतामोजसे स्वाहा हसकहलह्रीं इन्द्रो विश्वस्य राजति सकलह्रीं शन्नो भव द्विपदे शं चतुष्पदे"।। इति।।

१. 'स्थिता' क. ग. पाठः।

यद्वाग्देवीं च चत्वारि ससर्परीयुगं ततः। ऋक्पञ्चकं समाख्यातं महासारस्वतप्रदम्।। १।। इति।

अस्यार्थः— "यद्वाग्वदन्त्यविचेतनानि कएईलह्रीं राष्ट्री देवानां निषसाद मन्द्रा हसकहलह्रीं चतस्र ऊर्जं दुदुहे पयांसि सकलह्रीं क्वस्विदस्याः परमं जगाम"।। १।। "देवीं वाचमजनयन्त देवाः कएईलह्रीं तां विश्वरूपाः पशवो वदन्ति हसकहलह्रीं सा नो मन्द्रेषमूर्जं दुहाना सकलह्रीं धेनुर्वागस्मानुपसुष्टुतैतु"।।२।। "चत्वारि वाक्परिमिता पदानि कएईलह्रीं तानि विदुर्ब्राह्मणा ये मनीषिणः हसकहलह्रीं गुहा त्रीणि निहिता नेङ्गयन्ति सकलह्रीं तुरीयं वाचो मनुष्या वदन्ति"।।३।। "ससर्परमतिं बाधमाना कएईलह्रीं बृहन्मिमाय जमदग्निदत्ता हसकहलह्रीं आसूर्यस्य दुहिता ततान सकलह्रीं श्रवो देवेष्वमृतमजुर्यम्"।।४।। "ससर्परीरभन्तूयमेभ्यः कएईलह्रीं अधिश्रवः पाञ्चजन्यासु कृष्टिषु हसकहलह्रीं सा पक्ष्यानव्यमायुर्दधाना सकलह्रीं या मे पलस्तिजमदग्नयो ददुः।।५।। इति पञ्चमन्त्राः।। तथा—

यच्छन्दसा शरीरं मे यो देवानामिति त्रयम्। सुन्दरीं गर्भगं जप्यात् पृथक् पृथगतन्द्रितः।। १।।
मेधावी श्रुतिधारी च नीरोगी च प्रियंवदः। बहुश्रुतः शास्त्रकर्ता श्रुतान् वेदागमानपि ।। २।।
न विस्मरति मर्त्योऽसौ सर्वज्ञो भवति ध्रुवम्। इति।

अस्यार्थः— "यच्छन्दसामृषयो विश्वरूपः कएईलह्रीं छन्दोभ्योऽध्यमृतात्संबभूव हसकहलह्रीं स मेन्द्रो मेधया स्पृणोतु सकलह्रीं अमृतस्य देव धारणो भूयासम्"।। १।। "शरीरं मे विचर्षणं कएईलह्रीं जिह्वा मे मधुमत्तमा हसकहलह्रीं मनसः काममाकूतिं सकलह्रीं वाचः सत्यमशीमहि"।।२।। "यो देवानां प्रथमं पुरस्तात् कएईलह्रीं विश्वाधिपो रुद्रो महर्षिभिः हसकहलह्रीं हिरण्यगर्भो पश्यत जायमानं सकलह्रीं स नो देवः शुभया स्मृत्या संयुनक्तु"।।३।। इति त्रयो मन्त्राः।। तथा—

एवापित्रे यूयमस्मानेवेन्द्राग्नी त्रयं भवेत्। चतुर्थी त्वं सोम प्रचेति पञ्चमी तु प्रजापते।। १।।
एतत्पञ्चर्चगर्भस्थां सुन्दरीं प्रजपेत् पृथक्। यो नरस्तस्य नियतं धनधान्यधरासुतैः।। २।।
गोगजाश्वाविमहिषशस्यभूषादिसङ्कुलम् । लक्ष्मीं समावहेद्रम्यां पुत्रपौत्रादिगामिनीम्।।३।।

इति। अस्यार्थः— "एवा पित्रे विश्वेदेवाय वृष्णे कएईलह्रीं यज्ञैर्विधेम नमसा हविर्भिः हसकहलह्रीं बृहस्पते सुप्रजा वीरवन्तः सकलह्रीं वयं स्याम पतयो रयीणाम्"।। १।। यूयमस्मान्नयत वस्यो अच्छा कएईलह्रीं निरंहतिभ्यो मरुतो गृणानाः हसकहलह्रीं जुषध्वं नो हव्यदातिं यजत्रा सकलह्रीं वयं स्याम पतयो रयीणाम्"।।२।। "एवेन्द्राग्नी पपिवांसा सुतस्य कएईलह्रीं विश्वास्मभ्यं सञ्जयतं धनानि हसकहलह्रीं तन्नो मित्रो वरुणो मामहन्तां सकलह्रीं अदितिः सिन्धुः पृथिवी उत द्यौः"।।३।। "त्वं सोम प्रचिकितो मनीषा कएईलह्रीं त्वं रजिष्ठमनुनेषि पन्थाम् हसकहलह्रीं तव प्रणीति पितरो न इन्दो सकलह्रीं देवेषु रत्नमभजन्त धीराः"।।४।। "प्रजापते न त्वदेतान्यन्यः कएईलह्रीं विश्वा जातानि परिता बभूव हसकहलह्रीं यत्कामास्ते जुहुमस्तन्नो अस्तु सकलह्रीं वयं स्याम पतयो रयीणाम्"।। ५।। इति पञ्चमन्त्राः।। तथा—

अथ या लक्ष्म्यश्वदायिगर्भस्थां[1] सुन्दरीं यजेत्। धनैर्धान्यैश्च विभवैरन्यैश्चाश्वगवादिभिः।। १।।
आपूरयन्ती सततं तत्रैव रमते रमा।।

इति। अस्यार्थः— "या लक्ष्मीः सिन्धुसम्भवा कएईलह्रीं भूतिर्धेनुपरूवसूः हसकहलह्रीं पद्मा विश्वावसुर्देवी सकलह्रीं सदा नो जुषतां गृहम्"।। "अश्वदायि गोदायि कएईलह्रीं धनधायि महाधने हसकहलह्रीं धनं मे जुषतां देवी सकलह्रीं सर्वकामार्थसिद्धये[2]"।। इति मन्त्रद्वयम्।।

१. 'यीं' क. पाठः। २. 'अश्वदायी गोदायी धनदायीमहाधने। धनं मे जुषतां देवी सर्वान्कामांश्च देहि मे' इति ऋग्वेदे पाठः।

कलातिथ्यृचसूक्तस्थमन्त्रपादचतुष्टयैः। सम्पुटीकृत्य जपतां फलान्याचक्ष्महे स्फुटम्।। १।।

इति। अस्यार्थः— कलाऋचसूक्तं पुरुषसूक्तं "सहस्रशीर्षे" त्यादि यजुर्वेदे प्रसिद्धम्। तिथ्यृचसूक्तं श्रीसूक्तं "हिरण्यवर्णामित्यादि ऋग्वेदे प्रसिद्धम्। सम्पुटीकरणं तु— "सहस्रशीर्षः पुरुषः कएईलह्रीं सहस्राक्षः सहस्रपात् हसकहलह्रीं स भूमिं विश्वतो वृत्वा सकलह्रीं अत्यतिष्ठद्दशाङ्गुलम्"।। पुरुष एवेदं सर्वं कएईलह्रीं यद्भूतं यच्च भव्यम् हसकहलह्रीं उतामृतत्वस्येशानो सकलह्रीं यदन्नेनातिरोहति।। एतावानस्य महिमा कएईलह्रीं अतो ज्यायांश्च पुरुषः हसकहलह्रीं पादोऽस्य विश्वा भूतानि सकलह्रीं त्रिपादस्यामृतं दिवि।। त्रिपादूर्ध्व उदैत्पुरुषः कएईलह्रीं पादोऽस्येहाभवत्पुनः हसकहलह्रीं ततो विश्वं व्यक्रमत् सकलह्रीं साशनानशने अभि।। तस्माद्विराडजायत कएईलह्रीं विराजो अधि पुरुषः हसकहलह्रीं स जातो अतिरिच्यत सकलह्रीं पश्चाद्भूमिमथो पुरः।। यत्पुरुषेण हविषा कएईलह्रीं देवा यज्ञमतन्वत हसकहलह्रीं वसन्तोऽस्यासीदाज्यं सकलह्रीं ग्रीष्म इध्मः शरद्धविः।।" इत्यादिक्रमेण षोडशमन्त्राणां पादैः सम्पुटं कृत्वा जपेत्।। पुरुषसूक्तमन्त्र— पादैर्लोपायाः सम्पुटं श्रीसूक्तमन्त्रपादैः कामराजविद्यायाः सम्पुटमिति ज्ञेयम्।। तदुक्तं कुलार्णवे—

लोपाम्बा[1] सम्पुटीकृत्य पौरुषैश्च जपेद् बुधः। श्रीसूक्तैः कामराजाख्यां प्रजपेद्यत्नतो बुधः।। १।।

इति। पौरुषैः पुरुषसूक्तस्थमन्त्रपादैः श्रीसूक्तैः श्रीसूक्तमन्त्रपादैः। एवं "हिरण्यवर्णां हरिणीं कएईलह्रीं सुवर्णरजतस्रजम् हसकहलह्रीं चन्द्रां हिरण्मयीं लक्ष्मीं सकलह्रीं जातवेदो ममावह"।। एवं क्रमेण प्रत्येकं जपेत्।। तथा—

प्रथमेन सुतावाप्तिर्द्वितीया जीवसूर्भवेत्। तृतीयेन चतुर्थेन वन्ध्यादोषविनाशनम्।। २।।
पञ्चमेनाथ षष्ठेन पुत्रं दीर्घायुषं लभेत्। सप्तमेन तु गर्भस्य स्थिरता ह्यष्टमेन तु।। ३।।
सुखप्रसूतिर्नवमाद् गर्भदोषान् विनाशयेत्। दशमेन परेणापि पुष्पदोषान् विनाशयेत्।।४।।
द्वादशेन तु कन्यायाः सूतिदोषमपास्य च। पुमपत्यं भवत्येव चतुर्भिस्तत्परैर्ध्रुवम्।।५।।
सर्वे दोषा विनश्यन्ति गर्भजा नात्र संशयः। इति।

अथ श्रीसूक्तफलानि —

प्रथमे सम्पदां प्राप्तिर्द्वितीयेन पशून् वहेत्। तृतीयेन भवेद्धान्यं चतुर्थेन महीं लभेत्।। १।।
भृत्यान् पञ्चममन्त्रेण षष्ठेन तु महद्यशः। सप्तमाद्राजसम्मानमष्टमेन धृतिः स्थिरा।। २।।
नवमेन तुरङ्गाप्तिर्दशमेन गजाँल्लभेत्। एकादशेन वस्त्राणि द्वादशेन सुताँल्लभेत्।। ३।।
त्रयोदशेन रत्नानि चतुर्दशमहामनोः। पृथिवीं शस्यसम्पन्नां[2] श्रियं पञ्चदशेन तु।। ४।।
रुद्रमन्त्रैस्तथा कृत्वा[3] तत्तत्कर्माणि साधयेत्। श्रीविद्यावृन्दनिवहस्त्वेवं सम्पुटितो यदि।। ५।।
पञ्चाशच्च सहस्राणि दशलक्षमितानि च। जायन्ते तत्क्रमं ज्ञात्वा गुरुतः शास्त्रतोऽपि वा।। ६।।
विनियुञ्ज्यात् प्रयोगेषु तत्तत्कर्मण्यतन्द्रितः। दीक्षा तु षोडशार्णायाः(षड्दर्शनविधा भवेत्।। ७।।
तत्रादौ शाक्तदीक्षायाः[4])क्रमं वक्ष्ये यथाविधि। चतुर्विंशतिहस्तं तु मण्डपं कारयेद् बुधः।। ८।।
नव कुण्डानि कुर्वीत चतुरस्राणि वै क्रमात्। योनिकुण्डानि वा कुर्यादर्धचन्द्रनिभानि वा।। ९।।

---

१. 'लोपाख्यां' ख. पाठः। २. 'सम्पूर्णां' ग. पाठः। ३. 'कृत्या' क. पाठः। ४. बन्धचिह्नान्तर्गतं क. पुस्तके नास्ति।

त्रिकोणानि च वृत्तानि षट्कोणान्यम्बुजानि वा। अष्टास्राण्यथवाचार्य्यकुण्डमीशे[१]न्द्रमध्यतः।।१०।।
सार्धहस्तद्वयं त्यक्त्वा वेदिकान्तः प्रकल्पयेत्। हस्तमात्रं परित्यज्य कुण्डान्यन्यानि कल्पयेत्।।११।।
इति।। कुण्डलक्षणं त्वग्रे वक्ष्यामः। श्रीकुलार्णवे—
शृणु देवि प्रवक्ष्यामि वैष्णवानां विशेषतः। दीक्षायां षोडशार्णायां जपहोमेषु ऋत्विजाम्।। १।।
मन्त्रान् वक्ष्ये शृणु प्राज्ञे कुण्डेष्वष्टसु वै क्रमात्। नारायणं वासुदेवं वाराहं वैष्णवं तथा।। २।।
श्रीकण्ठं नारसिंहं च गोपालं कार्ष्णमेव च। पञ्चदश्यां समायोज्य जपे होमे च पार्वति।। ३।।
वैदिके तु विशेषेण गायत्रीं वेदमातरम् । जातवेदसपञ्चर्चं देवीलक्ष्म्योस्तु सूक्तके ।। ४।।
शैवे तु शिवपञ्चार्णमघोरं शरभं तथा । प्रासादं वा पाशुपातं दक्षिणामूर्तिसंज्ञकम्।। ५।।
मृत्युञ्जयं दशार्णं च क्रमेण परमेश्वरि । सौरे तु घृणिमन्त्रं च षडर्णं वेदवर्णकम्।। ६।।
त्र्यक्षरं षोडशार्णं च द्वादशार्णं षडर्णकम्। अजपाख्यं तु शाक्ते तु बालामन्त्रश्च भैरवी।। ७।।
त्रिपुरा वासिनी सिद्धा मालिनी त्रिपुरादिका। भैरवी त्रिपुराम्बा च बौद्धे पद्मावती तथा।। ८।।
उग्रताराप्येकजटा तारा नीलसरस्वती । मातङ्गी सुमुखी चैव चण्डमातङ्गिनी तथा।। ९।।
ऊर्ध्वाम्नायक्रमेणैव द्वे द्वे विद्ये तथैव च। मूलविद्याः षोडशैव दीक्षायां श्रीगुरोर्मनोः।। १०।।
शुक्लं मिश्रं च रक्तं च विश्रान्तिचरणत्रयम् । शम्भोश्चरणविद्ये द्वे पराप्रासादसंज्ञके।। ११।।
पञ्च ब्रह्मात्मका मन्त्रा अष्टात्रिंशत्कलास्त्रिधा। एकार्णं गाणपत्ये तु महागणपतिं तथा।। १२।।
क्षिप्रसंज्ञं गणेशं च वक्रतुण्डं तथैव च । लक्ष्मीगणपतिं चैव हेरम्बगणपं तथा।। १३।।
विर्याख्यगणपं चैव तथा शक्तिगणेश्वरम्। दक्षिणाकालिकायास्तु एकार्णं त्र्यर्णमेव च।। १४।।
सिद्धकाली षडर्णा च मुनवस्वर्णकौ तथा । दशाक्षरद्वयं चैव तारायां षोडशाक्षरी ।।१५।।
आद्यहीनाश्चाष्ट तारा भुवनेश्या गुणार्णकम्। श्रीवाक्कामपरारुद्धा त्रिविधा त्रिपुटा तथा।। १६।।
पञ्चदश्या विशेषेण त्रिचतुष्पञ्चकूटकाः । षट्कूटा सप्तकूटा स्यादष्टकूटा तु पञ्चमी।। १७।।
नित्यापञ्चदशीनां अङ्गाङ्गित्वं परस्परम्। पीताम्बराष्टवाराह्यो दीक्षायां तु परस्परम्।। १८।।
दुर्गाया महिषार्दिन्या शूलिनी वनदुर्गिका। जयाख्या च नवार्णा च शान्त्यग्निलवणात्मिका।।१९।।
अतिदुर्गा च सम्प्रोक्ता गायत्र्यास्तदनन्तरम्। पञ्चायतनभेदैस्तु सौरे शाक्ते च वैष्णवे।। २०।।
शैवे च गाणपत्ये च प्रागुक्ता मन्त्रनायकाः। वैष्णवाष्टकमध्ये तु हित्वा स्वाष्टदशाक्षरम्।।२१।।
तुरीया वेदमाता च संयोज्या परमेश्वरि । शैवं पाशुपतं हित्वा तत्र त्रैयम्बकं क्षिपेत्।। ३२।।
सौरेऽप्यष्टाक्षरं हित्वा उद्यन्मन्त्रं नियोजयेत्। गाणपत्ये गणानां त्वा हित्वोच्छिष्टं गणेश्वरम्।।२३।।
शाक्ते प्रागवच्च संयोज्य दीक्षाहोमजपादिषु। एतदायतनानां चाप्यङ्गाङ्गित्वं परस्परम् ।। २४।।
शाक्ते सम्यक् प्रवक्ष्यामि चक्रेश्वर्यः प्रकीर्तिताः। षट्शाम्भवोपदेशे तु ह्यङ्गाङ्गित्वं परस्परम्।।२५।।

१. 'शेन' क. पाठः।

त्र्यक्षरं चतुरर्णं चाप्येकाक्षरमतः परम् । सिद्धलक्ष्मी राज्यलक्ष्मीर्वान्यद्भेदत्रयं पुनः।। २६।।
पुनरन्यन्मिलित्वात्र चाङ्गाङ्गित्वं परस्परम्। अन्यविद्यासु मन्त्रेषु तत्तद्भेदैः परस्परम्।। २७।।
अङ्गाङ्गित्वं प्रकर्तव्यं तत्तत्कर्मणि निश्चयात्। पञ्चायतनदीक्षायां पूजायां च विशेषतः।।२८।।
अङ्गाङ्गित्वं प्रवक्ष्यामि शृणु देवि समाहितः। महागणेशमन्त्रेण घृणिमन्त्रेण संयुता।। २९।।
पराप्रासादमन्त्रेण लक्ष्मीनारायणेन च। संयोज्य षोडशार्णां तु दीक्षायां जपपूजनात्[१]।। ३०।।
दक्षिणाकालिकायास्तु तथैव परिकीर्तितः। तारायाश्छिन्नमस्ताया विशेषोऽत्र निगद्यते।।३१।।
मार्तण्डभैरवश्चैव मञ्जुघोषस्तथैव च । उच्छिष्टगणनाथश्च मुकुन्दो बाल एव च।। ३२।।
भुवनेश्या महादेव्या यावन्तो वैष्णवाः प्रिये। गाणपत्याश्च सौराश्च शैवाश्चापि विशेषतः।।३३।।
भैरवी बगला चण्डा मातङ्गी चापराजिता । दीक्षायां जपहोमे च पूजने च विशेषतः।। ३४।।
पञ्चायतनतन्त्रेषु[२] तारावत् परिकीर्तिता । दुर्गा च भुवनेशीव[३]न्महालक्ष्मीस्तथैव च।। ३५।।
अन्यास्तु सम्प्रदायेन प्रयोज्या देशिकोत्तमैः। इति।।

तथा च कादिमते श्रीतन्त्रराजे—

षडष्टद्वादशार्णानां वैष्णवानामशेषतः । मन्त्राणां परतत्त्वार्थवाचकत्वादभदेता ।।१।।
ललिताविद्यया तद्वत् प्रासादस्य त्रयात्मनः। तथैव च परायाश्च गायत्र्याश्चोक्तरूपतः।।२।।
व्याहृतीनां महावाक्यपरमात्माजपात्मनाम्। प्रणवस्य च ताद्रूप्ययोगात् स्यात्तत्तदात्मता।।३।।(२६/४६)

इति।। अथ सम्प्रदायाम्नायक्रमस्तं त्वग्रे वदिष्यामः।। अथ (श्रीविद्यायाः[४] श्रीचक्र आवरणपूजायां नारायणादि) प्रोक्तमन्त्राणां ऋष्यादिन्यासध्यानानि यथा तन्त्रान्तरेषु—ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि साध्यनारायणाय ऋषये नमः, मुखे देव्यै गायत्र्यै छन्दसे नमः, हृदये श्रीपरमात्मने देवतायै नमः, इति विन्यस्य ममेष्टार्थे विनियोगः, इति कृताञ्जलिरुक्त्वा मूलेन व्यापकं करयोर्विन्यस्य क्रुद्धोल्काय स्वाहा हृदयाय नमः, महोल्काय स्वाहा शिरसे स्वाहा, वीरोल्काय स्वाहा शिखायै वषट्, द्युल्काय स्वाहा कवचाय हुं, सहस्रोल्काय स्वाहा अस्त्राय फट्, इति मन्त्रानङ्गुलीषु हृदयादिषु विन्यस्य ध्यायेत्।

हस्तैश्चक्रदरौ गदासरसिजे बिभ्राणमर्कोल्लासत्—
कान्तिं श्रीधरणीविभूषितलसत्पार्श्वं किरीटान्वितम्।
श्रीवत्साङ्कसकौस्तुभोरुपदकं केयूरहारोज्ज्वलं
राजत्कुण्डलमण्डितं हृदि भजे पीताम्बरं शार्ङ्गिणम्।।१।।

इति ध्यात्वा "ओं नमो नारायणाय" इत्यष्टाक्षरं जपेत्।।

अथ वासुदेवमन्त्रस्य—ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि प्रजापतिऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीवासुदेवदेवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा मूलेन करयोर्व्यापकं कृत्वा, ओं हृदयाय नमः, नमो शिरसे स्वाहा, भगवते शिखायै वषट्,

१. नें' ग. पाठः। २. 'मन्त्रे तु' ग. पाठः। ३. शी च' ग. पाठः। ४. बन्धचिह्नान्तर्गतं क. पुस्तके नास्ति।

वासुदेवाय कवचाय हुं, नमो भगवते वासुदेवाय अस्त्राय फट्।

ततः समाहितो भूत्वा वासुदेवं हृदि स्मरेत्। मध्ये दुग्धाम्बुधिद्वीपे दिव्ययोषानिषेविते॥ १॥
तत्र सञ्चिन्त्य विपिनमखिलर्तुनिषेवितम् । तन्मध्ये कल्पवृक्षं च दिव्यमद्भुतदर्शनम्॥ २॥
तस्याधस्ताद्रत्नमञ्चकमलं[1] विमलप्रभम् । शरत्पूर्णेन्दुविलसत्प्रभापटलराजितम् ॥ ३॥
तत्र सञ्चिन्तयेद्देवं वासुदेवं स्मिताननम् । कुन्देन्द्वाभं गदाचक्रपद्मशङ्खलसत्करम् ॥ ४॥
चन्द्रायुतलसत्कान्त्या मोहयन्तं जगत्त्रयम्। केयूराङ्गदसंराजद्दोर्दण्डं रत्नभूषणम् ॥ ५॥
श्रीवत्साङ्कं लसद्रत्नमुकुटं कौस्तुभान्वितम् । अरविन्ददलाताम्रसुरम्यायतलोचनम्[2] ॥ ६॥
कुण्डलप्रोल्लसद्गण्डमण्डलं पीतवाससम्। ग्रैवेयहारसंशोभिकम्बुकण्ठं सुकङ्कणम्॥ ७॥
विशालवक्षःसंराजत्प्रफुल्लवनमालकम् । सनकादिमुनीन्द्रैश्च तत्त्वनिर्णयकाङ्क्षया॥ ८॥
निषेवितं दित्यदितिजातगन्धर्वसञ्चयैः । सिद्धविद्याधराद्यैश्च सेवितं च महोरगैः ॥ ९॥

इति ध्यात्वा जपादिकं विदध्यात्॥

अथ वराहमन्त्रस्य—ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि भार्गवाय ऋषये नमः, मुखेऽनुष्टुप्छन्दसे नमः, हृदये श्रीवराहदेवतायै नमः, इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, एकशृङ्गाय हृदयाय नमः, व्योमोल्काय शिरसे स्वाहा, तेजोऽधिपतये शिखायै वषट्, विश्वरूपाय कवचाय हुं, महादंष्ट्रायास्त्राय फट्, इति पञ्चाङ्गमन्त्रान् विन्यस्य ध्यायेत्। ध्यानम्—

जानोः पदावधि सुवर्णनिभं च नाभेराजानु चन्द्रधवलं च गलाद्धृदन्तम्।
वह्निप्रभं शशिनिभं शिरसो गलान्तं मौलिस्थलाद्वियत[3] एन्दुनिभं च कान्तम्॥ १॥
संबिभ्रतं करतलैररिशङ्खखड्गान् खेटं गदां तदनु शक्तिवराभयानि।
सर्वंसहाधरणशोभिसदेकदंष्ट्रमाद्यं वराहमनिशं प्रभजे स्वचित्ते॥ २॥

इति ध्यात्वा "ॐ नमो भगवते वराहरूपाय भूर्भुवःस्वर्पतये भूपतित्वं मे देहि ददापय स्वाहा" अयं मन्त्रो योज्यः॥

अथ विष्णोः— ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि कपिलाय ऋषये नमः, मुखे गायत्र्यै छन्दसे नमः, हृदये श्रीभोगवामनाय देवतायै नमः, इति विन्यस्य मम सर्वाभीष्टावाप्तये विनियोगः, इति कृताञ्जलिरुक्त्वा ओं नमो हृदयाय नमः, भगवते शिरसे स्वाहा, विष्णवे शिखायै वषट्, सुरपतये कवचाय हुं, महाबलाय नेत्राभ्यां वौषट्, स्वाहास्त्राय फट्, इति षडङ्गमन्त्रानिविन्यस्य ध्यायेत्। ध्यानम्—

नीलवर्णश्चतुर्बाहुः शङ्खचक्रगदाब्जधृक्। सर्वान् भोगान् ददात्येष भक्तानां भोगवामनः॥ १॥

इति ध्यात्वा "ॐ नमो भगवते विष्णवे सुरपतये महाबलाय स्वाहा" इति॥

अथ श्रीकरमन्त्रस्य— ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि वामदेवाय ऋषये नमः, मुखे पङ्क्तिच्छन्दसे नमः, हृदये श्रीकराय देवतायै नमः, इति विन्यस्य मम सर्वाभीष्टाप्तये विनियोग,

१. 'मञ्चं कमलवि' क. पाठः। २. 'सरसा' ग. पाठः। ३. 'द्विपदमन्द' क. ग. पाठः।

इति कृताञ्जलिरुक्त्वा, उं भीषय २ हुं हृदयाय नमः, इति, त्तिं त्रासय २ हुं शिरसे स्वाहा, ष्ठं मर्दय २ हुं शिखायै वषट्, श्रीं प्रध्वंसय २ हुं कवचाय हुं, कं रक्षय २ हुं अस्त्राय फट्। ततः नेत्रयोः रं, उदरे स्वां, पृष्ठे हां इति विन्यस्य ध्यायेत्।

ततः सञ्चिन्तयेद्विष्णुं श्रीकरं हृदयाम्बुजे। लोलकल्लोलजालेन फेनिले सोर्मिमालके।। १।।
दुग्धाम्बुधावत्र मध्ये द्वीपं शुक्लमयं शुभम्। हेमस्थलीसमाकीर्णं नानामणिगणैः शुभम्।।२।।
वनं सञ्चिन्त्यतेत्तत्र सकलर्तुनिषेवितम्। कल्पद्रुमसमूहैश्च वारितातपमुत्तमम्।। ३।।
षट्पदालीकलारावसङ्कुलं लोलपल्लवम्। पुष्पव्रजपरागौघतुषारपरिपूरितम्।। ४।।
हिरण्मयानां वृक्षाणां मणिपुष्पेषु चञ्चलम्। इन्दिन्दिरालिक्रमणशीलशक्रमणीरुचम्।। ५।।
अङ्गीकरोति यत्रापि रमन्तेऽप्सरसः सुरैः। औदार्यशोभनैश्वर्यसौभाग्यादिगुणैर्युतैः।। ६।।
रूपाभिराममधुराकृतिभिः सुकुमारकैः। मन्दस्मितलसद्दन्तमरीचिद्योतिताननाः।। ७।।
मनोज्ञा जितचन्द्राभा मदस्फुरितलोचनाः। जल्पाकपुंस्कोकिलोद्यद्देववृन्दं निरन्तरम्।। ८।।
उन्निद्रितोद्यन्मदनाः पीनस्तनघटालसाः। सुश्रोणिभरादत्यर्थमन्दगामिन्य उत्तमाः।। ९।।
एवं भूताश्चाप्सरसः क्रीडन्ते यत्र चामरैः। मारसेनापतिरिव वनलक्ष्म्या गृहं यथा।। १०।।
जन्मस्थानमृतूनां च कल्पवृक्षतरोरधः[२]। इन्दिरायाः सोदरस्य नवरत्नमयस्य च।। ११।।
शिखावलिसमुद्द्योतिशीतलस्य तले शुभे। स्वर्णकुट्टिमसंशोभिमहारत्नमनोरमे।। १२।।
उद्यदर्कप्रभाभास्वत्पीठसन्निहितस्य च। प्रसिद्धविक्रमौघस्य पक्षिराजस्य चोपरि।। १३।।
उपविष्टं गालिताच्छशुचिहाटकसन्निभम्। रत्नोद्यन्मकराकारचारुकुण्डलमण्डितम्।। १४।।
किरीटमणिसंदीप्तदिक्चक्रं चारुभूषणम्। शशिखण्डलसच्छुभ्रक्लृप्तामलविशेषकम्।। १५।।
अतिचञ्चलसच्चिल्लिं मुकुटोज्ज्वलगण्डकम्। स्मितसंशोभिवक्त्रेन्दुकपोलफलकोज्ज्वलम्।।१६।।
दशनावलिरश्म्योघविराजितशुभाधरम्। पक्वबिम्बाधरं रम्यरक्तपद्मपलाशवत्।। १७।।
आयतारुणनेत्रं च सम्यक् पक्ष्मविराजितम्। उरुहारमणिव्रातदीधितिप्रोल्लसद्गलम्।। १८।।
दिव्यरत्नाङ्गदद्योतिबाहुजालधरं हरिम्। गदाकमलशङ्खारिधारिणं बाहुदण्डकैः।। १९।।
कपाटविपुलेनाथ कमलानिलयेन च। लसत्कौस्तुभदीप्त्योघविद्योतिततलेन च।। २०।।
वक्षसा सुविराजन्तं त्रैलोक्यनिलयेन च। त्रिवलीशोभिना सम्यग्रोमराजिलसद्रुचा।। २१।।
उदरेण विराजन्तं रम्यं कटितटेन च। पीतपट्टांशुकरुचा विलसन्मणिमेखलम्।। २२।।
शरतूणसदृक्पीनरम्योरुपरिभूषितम्। केकिकण्ठलसत्कान्तिजङ्घायुगमनोहरम्।। २३।।
रक्तोत्पलाभचरणं पादाग्रजितकच्छपम्। शशरक्तसदृक्कान्तिध्वजाब्जाङ्कितपत्तलम्।।२४।।
करसद्रक्तकमलरमयालिङ्गितं सदा। क्षमया चोपगूढं च नवमाणिक्यशोभितम्।। २५।।
नवयौवनकान्त्योघसंशोभिसकलाङ्गकम्। सुरासुरर्षिप्रमुखैः सेवितं चाप्सरोगणैः।। २६।।

---

१. 'युताः' ग. पाठः। २. 'क्षं स्मरेब्धुः' ग. पाठः।

पूर्णेन्दुबिम्बसदृशवितानसमलङ्कृतम्। सुरयोषाकराब्जालिलसच्चामरराजितम्।। २७।।
विद्युल्लतासंविलोलवैजयन्तीसुशोभितम्। यक्षविद्याधरव्यूहचारणादिनिषेवितम्।। २८।।

इत्येवं ध्यात्वा, "उत्तिष्ठ श्रीकर स्वाहा"। अयं मन्त्रो (षोडशार्णायां) योज्यः।।

अथ नृसिंहमन्त्रः— ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि ब्रह्मणे ऋषये नमः, मुखेऽनुष्टुप्छन्दसे नमः, हृदये श्रीनृसिंहदेवतायै नमः, इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, उग्रं वीरं हृदयाय नमः, महाविष्णुं शिरसे स्वाहा, ज्वलन्तं सर्वतो मुखं शिखायै वषट्, नृसिंह भीषणं कवचाय हुं, भद्रं मृत्युमृत्युं नेत्रत्रयाय वौषट्, नमाम्यहं अस्त्राय फट्, इति विन्यस्य ध्यायेत्—

नृसिंहं भजे जानुविन्यस्तबाहुं त्रिनेत्रं भुजप्रोल्लसच्चक्रशङ्खम्।
कृशानूपमज्योतिषा ग्रस्तदैत्यं शिरःशोभिदंष्ट्रासुदीप्तद्विजिह्वम्।। १।।

इति ध्यात्वा, "उग्रं वीरं महाविष्णुं ज्वलन्तं विश्वतोमुखम्। नृसिहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्" इति मन्त्रो योज्यः।।

अथ गोपालमन्त्रः— ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि नारदाय ऋषये नमः, मुखे विराट्छन्दसे नमः, हृदये श्रीकृष्णाय देवतायै नमः, गुह्ये क्लीं बीजाय नमः, पादयोः स्वाहाशक्तये नमः, सर्वाङ्गे कृष्णाय प्रकृतये नमः, हृदि श्रीदुर्गायै अधिष्ठात्र्यै देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा मूलेन करयोर्व्यापकं कृत्वा, आचक्राय स्वाहा हृदयाय नमः, विचक्राय स्वहा शिरसे स्वाहा, सुचक्राय स्वाहा शिखायै वषट्, त्रैलोक्यरक्षणचक्राय स्वाहा कवचाय हुं, असुरान्तचक्राय स्वाहा अस्त्राय फट् इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

दरारिचापसद्बाणगुणांशुकककराम्बुजम्। वेणुमादाय हस्ताभ्यां वादयन्तं मुदान्वितम्।। १।।
रविमण्डलगं कृष्णं ध्यायेदिष्टफलाप्तये।

इति ध्यात्वा "क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा" इति मन्त्रो योज्यः।।

अथ कृष्णमन्त्रः— ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि नारदऋषये नमः, मुखे गायत्रीच्छन्दसे नमः, हृदये श्रीकृष्णदेवतायै नमः, गुह्ये क्लींबीजाय नमः, इत्यादि विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, पूर्णज्ञानात्मने हृदयाय नमः, पूर्णैश्वर्यात्मने शिरसे स्वाहा, पूर्णप्रभात्मने शिखायै वषट्, पूर्णानन्दात्मने कवचाय हुं, पूर्णतेज आत्मने नेत्राभ्यां वौषट्, पूर्णशक्त्यात्मने अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं सौन्दर्यसारमरिशङ्खवराभयानि।
दोर्भिर्दधानमजितं सरमं च भैष्मीसत्यासमेतमखिलप्रदमिन्दिरेशम्।। १।।

इति ध्यात्वा "क्लीं कृष्णाय नमः" इति मन्त्रो योज्यः।। योगस्तु— "ॐ हसकलह्रीं नमो हसकहलह्रीं नारायणाय सकलह्रीं"।। १।। "ॐ हसकलह्रीं नमो हसकहलह्रीं भगवते सकलह्रीं वासुदेवाय"।। २।। "ॐ नमो भगवते हसकलह्रीं वराहरूपाय हसकहलह्रीं भूर्भुवःस्वर्पतये सकलह्रीं भूपतित्वं मे देहि ददापय स्वाहा"।।३।। "ॐ नमो भगवते हसकलह्रीं विष्णवे हसकहलह्रीं सुरपतये सकलह्रीं महाबलाय स्वाहा"।।४।। "उत्तिष्ठ हसकलह्रीं श्रीकर हसकहलह्रीं स्वाहा सकलह्रीं"।। ५।। "उग्रं वीरं महाविष्णुं हसकलह्रीं ज्वलन्तं सर्वतो मुखं हसकहलह्रीं नृसिंहभीषणं भद्रं सकलह्रीं मृत्युमृत्युं नमाम्यहम्"।।६।। "क्लींकृष्णाय हसकलह्रीं गोविन्दाय हसकहलह्रीं गोपीजनवल्लभाय

सकलह्रीं स्वाहा''।। ७।। ''क्लीं हसकलह्रीं कृष्णाय हसकहलह्रीं नमः सकलह्रीं''।। ८।। एवं योग इत्यर्थः।।

वैदिकदर्शने तु मन्त्रानाह— ततःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा अस्य श्रीगायत्रीमन्त्रस्य शिरसि विश्वामित्राय ऋषये नमः, मुखे गायत्र्यै च्छन्दसे नमः, हृदये श्रीपरमात्मने देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, तत्सवितुर्ब्रह्मात्मने हृदयाय नमः, वरेण्यं विष्णवात्मने शिरसे स्वाहा, भर्गोदेवस्य रुद्रात्मने शिखायै वषट्, धीमहि ईश्वरात्मने कवचाय हुं, धियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट्, प्रचोदयात् परमात्मने अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम्।
गायत्रीं वरदाभयाङ्कुशकरां शूलं[1] कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे।।१।।

इति ध्यात्वा, ''तत्सवितुवरेण्यं हसकलह्री भर्गो देवस्य धीमहि हसकहलह्री धियो यो न सकलह्री प्रचोदयात्''।।

अथ जातवेदसे मन्त्रस्य—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा अस्य जातवेदमन्त्रस्य शिरसि मारीचपुत्रकश्यपाय[2] ऋषये नमः, मुखे त्रिष्टुप्छन्दसे नमः, हृदये श्रीजातवेदाग्नये दुर्गायै देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, जातवेदसे सुनवाम हृदयाय नमः, सोममरातीयतो शिरसे स्वाहा, निदहाति वेदः शिखायै वषट्, स नः पर्षदति कवचाय हुं, दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट्, सिन्धुं दुरितात्यग्निः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम्।
हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरेत्।।१।।

इति ध्यात्वा, ''जातवेदसे सुनवाम सोमं हसकलह्री आरातीयतो निदहाति वेदः हसकहलह्री स नः पर्षदति दुर्गाणि विश्वा नावेव सकलह्रीं सिन्धुं दुरितात्यग्निः।।''

अथ तामग्निवर्णामिति मन्त्रस्य— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा ऋष्यादीन् प्राग्वद्विन्यस्य ममाभष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ह्रां हृदयाय नमः, ह्रीं शिरसे स्वाहा ह्रूं शिखायै वषट्, ह्रैं कवचाय हुं, ह्रौं नेत्रत्रयाय वौषट्, ह्रः अस्त्राय फट्, इति विन्यस्य प्राग्वद् ध्यात्वा, ''तामग्निवर्णां तपसा ज्वलन्तीं, हसकलह्री वैरोचनीं कर्मफलेषु जुष्टां हसकहलह्रीं दुर्गां देवीं शरणमहं प्रपद्ये सकलह्रीं सुतरसि तरसे नमः''।। इति जपेत्।।

अथाग्ने इत्यस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते ऋष्यादिषडङ्गन्यासं ध्यानं च प्राग्वत् विधाय ''अग्ने त्वं पारया नव्यो अस्मान् हसकलह्री स्वस्तिभिरति दुर्गाणि विश्वा हसकहलह्री पूश्च पृथिवी बहुला न उर्वी

---

१. 'शम्भं' ख. शुभ्रं' क. पाठः। २. 'मरीचि' ग. पाठः।

सकलह्रीं भवा तोकाय तनयाय शंयोः''।। इति जपेत्।।

अथ विश्वानि न इत्यस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलमन्त्रेण प्राणायामत्रयं कृत्वा ऋष्यादिकरषडङ्गन्यासध्यानानि प्राग्वद्विधाय, ''विश्वानि नो दुर्गहा जातवेदः हसकलह्रीं सिन्धुं न नावा दुरितातिपर्षि हसकहलह्रीं अग्ने अत्रिवन्नमसा गृणानो सकलह्रीं अस्माकं बोध्यविता तनूनाम्''।। इति जपेत्।।

अथ पृतनाजितमित्यस्य प्रयोगः— तत्र प्रातःकृत्यादिध्यानान्तं विधाय ''पृतनाजितं सहमानमुग्रं सकलह्रीं अग्निं हुवेम परमात्सधस्तात् हसकहलह्रीं स नः पर्षदति दुर्गाणि विश्वा सकलह्रीं क्षामद्देवो दुरितात्यग्निः''।। ततः[1] श्रीसूक्तदेवीसूक्ते ऋग्वेदे प्रसिद्धे।।

अथ शैवे प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि वामदेवाय ऋषये नमः, मुखे पङ्क्त्यै च्छन्दसे नमः, हृदये श्रीसदाशिवाय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, सर्वज्ञाय हृदयाय नमः, नित्यतृप्ताय शिरसे स्वाहा, अनादिबोधाय शिखायै वषट्, स्वतन्त्राय कवचाय हुं, नित्यमलुप्तशक्तये नेत्रत्रयाय वौषट्, नित्यमनन्तशक्तये अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

गोक्षीरफेनधवलं रजताद्रिसमप्रभम् । चारुचन्द्रकलाराजज्जटामुकुटमण्डितम्।। १ ।।
पञ्चवक्त्रधरं शम्भुं प्रतिवक्त्रं त्रिलोचनम्। शार्दूलचर्मवसनं रत्नाभरणभूषितम्।। २ ।।

इति ध्यात्वा, ''हसकलह्रीं ॐ हसकहलह्रीं नमः सकलह्रीं शिवाय'' इति मन्त्रं जपेत्।।

अथाघोरास्त्रस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि अघोराय ऋषये नमः, मुखे त्रिष्टुप्छन्दसे नमः, हृदये श्रीअघोररुद्राय देवतायै नमः, गुह्ये ह्रींबीजाय नमः, पादयोः हूंशक्तये नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा ह्रीं स्फुर स्फुर हृदयाय नमः, प्रस्फुर प्रस्फुर शिरसे स्वाहा, घोर घोरतर तनुरूप शिखायै वषट्, चटचट प्रचट प्रचट कवचाय हुं, कहकह वमवम नेत्रत्रयाय वौषट्, बन्ध बन्ध घातय घातय हुं फट् अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

एवं न्यस्ततनुर्मन्त्री ध्यायेद्देवमनन्यधीः। कालमेघनिभं देवं भीमदंष्ट्रं त्रिलोचनम्।। १ ।।
भुजङ्गभूषणं रक्तवसनालेपसंयुतम् । परशुं करवालं च बाणांस्त्रिशिखमेव च।। २ ।।
दधानं दक्षिणैर्हस्तैरूर्ध्वादिक्रमतः परैः। डमरुं खेटकं चापं नृकपालं च पार्वति।। ३ ।।
काम्यकर्मसु रक्ताभमसितं चाभिचारके। निग्रहे ग्रहभूतादिमुक्त्यै मुक्तानिभं स्मरेत्।।४।।

इति। एवं ध्यात्वा, ''ॐह्रींस्फुरस्फुर प्रस्फुरप्रस्फुर घोर घोरतर तनुरूप हसकलह्रीं चटचट प्रचटप्रचट कहकह हसकहलह्रीं वमवम बन्धबन्ध सकलह्रीं घातयघातय हुंफट्'' इति मन्त्रं जपेत्।।

अथ शरभप्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि ब्रह्मणे ऋषये: नमः, मुखे पङ्क्त्यै छन्दसे नमः, हृदये शरभशाल्वाय पक्षिराजाय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ॐनमो भगवते हृदयाय नमः, शरभशाल्वाय शिरसे स्वाहा, पक्षिराजाय शिखायै वषट्, मम शत्रून्नाशय नाशय कवचाय हुं, हुं फट् नेत्रत्रयाय वौषट् स्वाहा, अस्त्राय फट्। ध्यानम्—

---

१. ' एवं ' ख. पाठः।

अष्टापदं पक्षतिमूलराजद्वज्राङ्कुरं हाटकपक्षकूटम्।
हेमाङ्गमङ्गीकृतपद्मरागं चञ्चूपुटोल्लासिमुखारविन्दरम्।। १।।
सूर्यानलेन्दुद्युतिराजमाननेत्रत्रयोल्लासितपद्मरागम्' ।
नीलाश्मदीप्ताखिलरोमसङ्घं शीतांशुखण्डोज्ज्वलितोत्तमाङ्गम्।। २।।
विप्राहिद्वन्द्वबद्धोत्तमकपिलजटाभारसञ्चारिगङ्गा-
सङ्गाक्रान्तोत्तमाङ्गात् क्रमगलितपृषत्सङ्घहाराभिरामम्।
अग्रोद्यन्नागबन्धक्रमघटितसटाग्रन्थिपञ्चाङ्गुलोद्य-
त्पुच्छस्थग्रन्थिबाहूद्भवभुजयुगलोल्लासिमालाभिरामम्।। ३।।
कक्ष्यासम्बद्धवैश्याहिपयुगललसच्चन्द्रतीव्रांशुलीला-
घण्टाटोपाकुलाशादशकपतिकुलं वैरिसङ्घैककालम्।
पाशाकारांसलोलद्वृषलकुलभवाशीर्विशाधीशभोग-
स्फूर्जत्फुत्कारघोरं खुरपुटनिकरक्षुणसर्वंसहं तम्।। ४।।
भक्षयन्तं पक्षिरूपं भक्तानां वैरिसञ्चयम्। शरभं शाल्वरूपं च ध्यायेदेकाग्रमानसः।। ५।।

इति शरभरूपं शिवं ध्यात्वा "ॐनमो भगवते शरभशाल्वाय हसकलह्रीं पक्षिराजाय हसकहलह्रीं मम शत्रून् नाशय नाशय सकलह्रीं घघे[2]हुंफट् स्वाहा" इति मन्त्रं जपेत्।।

अथ प्रासादमन्त्रस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि वामदेवाय ऋषये नमः, मुखे पङ्क्तिच्छन्दसे नमः, हृदये श्रीसदाशिवाय देवतायै नमः, गुह्ये हं बीजाय नमः, पादयोः औं शक्तये नमः, इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, हां हृदयाय नमः, हीं शिरसे स्वाहा, हूं शिखायै वषट्, हैं कवचाय हुम्, हौं नेत्रत्रयाय वौषट्, हः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

ध्यायेद्देवं ततो वत्स हृदि चैकाग्रमानसः। सिन्दूरपुञ्जशोणाङ्गं स्मेरवक्त्रं त्रिलोचनम्।। १।।
मणिमौलिलसच्चन्द्रकलालङ्कृतमस्तकम्। दक्षिणोर्ध्वकरे टङ्कं दधानं तदधो वरम्।। २।।
वामोर्ध्वहस्ते हरिणं तदधोऽभयमादरात्। पीनवृत्तघनोत्तुङ्गस्तनाग्रे विनिवेश्य च।। ३।।
वामाङ्के सन्निविष्टायाः प्रियाया रक्तपङ्कजे। दधत्या दक्षिणे हस्ते चासीनं रक्तपङ्कजे।। ४।।
नानाभरणसन्दीप्तं दिव्यगन्धस्रगम्बरम्।

इति ध्यात्वा "ॐहौं हसकलह्रीं ह्रीं हसकहलह्रीं नमः सकलह्रीं शिवाय" इति मन्त्रं जपेत्।।

अथ पाशुपतास्त्रस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि वामदेवाय ऋषये नमः, मुखे पङ्क्तिच्छन्दसे नमः, हृदये श्रीपशुपतये देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ओं हुंफट् हृदयाय नमः, श्लीं हुंफट् शिरसे स्वाहा, प हुंफट् शिखायै वषट्, शु हुंफट् कवचाय हुं, हुं हुंफट् नेत्रत्रयाय वौषट्, फट् हुं फट् अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

---

१. 'सिमुखारविन्दम्' ग. पाठः। २. 'घंघं' ग. पाठः।

ध्यायेत् पशुपतिं सम्यङ्मन्त्री चैकाग्रमानसः। पञ्चवक्त्रं दशभुजं प्रतिवक्त्रं त्रिलोचनम्॥ १॥
अग्निज्वालानिभश्मश्रुसंयुतं भीमदंष्ट्रकम्। खड्ग बाणानक्षसूत्रं शक्तिं परशुमेव च॥ २॥
दधानं दक्षिणैर्हस्तैरूर्ध्वादिक्रमतो गुरुम्। खेटचापौ कुण्डिकां च त्रिशूलं ब्रह्मदण्डयुक्॥ ३॥
वामहस्तैश्च बिभ्राणं मध्याह्नार्कसमप्रभम्। नानाभरणसन्दीप्तं पन्नगेन्द्रैरलङ्कृतम् ॥ ४॥
स्फटिकौघनिभं शान्तं सर्वरक्षाकरं स्मरेत्।

इति। एवं ध्यात्वा "ॐम्लीं हसकलह्रीं पशु हसकहलह्रीं हुं सकलह्रीं फट्" इति मन्त्रं जपेत्॥

अथ दक्षिणामूर्तिमन्त्रस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि शुकाय ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीदक्षिणामूर्तये देवतायै नमः, गुह्ये ओं बीजाय नमः, पादयोः ह्रीं शक्त्ये नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा मूलमन्त्रेण करशुद्धिं विधाय, ओंह्रां दक्षिणामूर्तये ह्रां हृदयाय नमः, ओंह्रींतुभ्यंह्रीं शिरसे स्वाहा, ओंह्रीं वटमूलनिवासिने ह्रूं शिखायै वषट्, ओंह्रीं ध्यानैकनिरताङ्गाय ह्रैं कवचाय हुं, ओंह्रीं नमो रुद्राय ह्रौं नेत्रत्रयाय वौषट्, ओंह्रीं सम्भवे ह्रः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

वटविटपिसमीपे भूमिभागे निषण्णं सकलमुनिजनानां ज्ञानदातारमारात्।
त्रिभुवनगुरुमीशं दक्षिणामूर्तिरूपं जननमरणदुःखच्छेददक्षं नमामि॥ १॥

इति ध्यात्वा, "ॐह्रीं दक्षिणामूर्तये तुभ्यं हसकलह्रीं वटमूलनिवासिने हसकहलह्रीं ध्यानैकनिरताङ्गाय सकलह्रीं नमो रुद्राय शम्भवे ह्रींओं" इति मन्त्रं जपेत्॥

अथ मृत्युञ्जयस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि कहोलाय ऋषये नमः, मुखे निचृद्गायत्रीच्छन्दसे नमः, हृदये श्रीमृत्युञ्जयाय देवतायै नमः, गुह्ये ॐबीजाय नमः, पादयोः सः शक्तये नमः, नाभौ जूं कीलकाय नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा मूलमन्त्रेण करशुद्धिं विधाय, सां हृदयाय नमः, सीं शिरसे स्वाहा, सूं शिखायै वषट्, सैं कवचाय हुं, सौं नेत्रत्रयाय वौषट्, सः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

ध्यायेद्देवं ततो वत्स समाहितमनाश्चिरम्। शुद्धस्फटिकसङ्काशं शुभ्रपद्मासनस्थितम्॥ १॥
कपर्दमौलिविलसच्चन्द्रखण्डच्युतामृतैः । अभिषिक्तसमस्ताङ्गमर्केन्द्वनललोचनम् ॥ २॥
दक्षिणोर्ध्वकरे मुद्रां ज्ञानाख्यां तदधःकरे। अक्षमालां च वामोर्ध्वे पाशं वेदमधःकरे।।३॥
दधानं चिन्तयेद्देवं मृत्युरोगभयापहम्।

इति ध्यात्वा, "ॐ हसकलह्रीं जूं हसकहलह्रीं सः सकलह्रीं" इति मन्त्रं जपेत्॥

अथ दशाक्षरस्य प्रयोगः— ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि ब्रह्मणे ऋषये नमः, मुखे विराट्छन्दसे नमः, हृदये सदाशिवाय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा ओं हृदयाय नमः, नमः शिरसे स्वाहा, भगवते शिखायै वषट्, रुद्राय कवचाय हुं, ॐनमो भगवते नेत्रत्रयाय वौषट्, रुद्राय अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

आकीर्णं दिव्यभोगैरमरदितिसुतैरर्चितं शैलकन्या-
देहार्धं धारयन्तं स्फटिकमणिनिभं व्याघ्रचर्मोत्तरीयम्।
द्वैर्पीं कृत्तिं वसानं हिमकिरणकलाशेखरं नीलकण्ठं
हृष्टं व्याप्तं कलाभिर्धृतकपिलजटं भावयेऽहं महेशम्।। १।।

इति ध्यात्वा "ओं हसकलह्रीं नमो हसकहलह्रीं भगवते सकलह्रीं रुद्राय" इति जपेत्।।

अथ सौरदर्शनविधानम्। तत्रादौ घृणिमन्त्रस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि देवभागाय ऋषये नमः, मुखे गायत्रीच्छन्दसे नमः, हृदये श्रीसूर्याय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये जपे विनियोगः, इति कृताञ्जलिरुक्त्वा सत्यतेजोज्वालामणि हुंफट् स्वाहा हृदयाय नमः, ब्रह्मतेजोज्वालामणि हुंफट् स्वाहा शिरसे स्वाहा, विष्णुतेजोज्वालामणि हुंफट् स्वाहा शिखायै वषट्, रुद्रतेजोज्वालामणि हुंफट् स्वाहा कवचाय हुं, अग्नितेजोज्वालामणि हुंफट् स्वाहा नेत्रत्रयाय वौषट्, सर्वतेजोज्वालामणि हुंफट् स्वाहा अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

रक्ताब्जयुग्माभयदानहस्तं केयूरहाराङ्गदकुण्डलाढ्यम् ।
माणिक्यमौलिं दिननाथमीडे बन्धूककान्तिं विलसत्त्रिनेत्रम्।। १।।

इति ध्यात्वा "घृणिः हसकलह्रीं सूर्य हसकहलह्रीं आदित्य सकलह्रीं ओं" इति मन्त्रं जपेत्।।

अथ षडर्णस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते शिरसि ब्रह्मणे ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीसवित्रे देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, सूक्ष्मरूपाय स्वाहा हृदयाय नमः, सूक्ष्मतेजसे स्वाहा शिरसे स्वाहा, सूक्ष्माकाराय स्वाहा शिखायै वषट्, सूक्ष्मबालाय स्वाहा कवचाय हुं, सूक्ष्मकायाय स्वाहा नेत्रत्रयाय वौषट्, मूलमन्त्रमुच्चार्य अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

रक्तपद्मद्वयं हस्तैर्बिभ्राणं वरदाभये। बन्धूकाभं त्रिनेत्रं च रविं ध्यायेत् सुभूषितम्।। १।।

इति ध्यात्वा "ख हसकलह्रीं खो हसकहलह्रीं ल्काय सकलह्रीं स्वाहा" इति मन्त्रं जपेत्।।

अथ चतुर्णस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि ब्रह्मणे ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीसूर्यरूपिण्यै भुवनेश्वर्यै देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा ओं हृदयाय नमः, ह्रीं शिरसे स्वाहा, ओं शिरसे स्वाहा, ओं शिखायै वषट्, ह्रीं कवचाय हुं, ओं नेत्रत्रयाय वौषट् ह्रीं अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

भास्वद्रत्नसहस्रमौलिविलसच्चन्द्रार्धमुद्योत—
द्धस्ताब्जैर्दधदङ्कुशं गुणवराभीतीः सुतुङ्गस्तनम्।
पायाद्गालितकाञ्चनाम्बुजजपाविद्युज्ज्वलत्कान्तिभि—
र्विश्वं द्योतयदार्कमाश्वशिशिरं विश्वेशिकाया वपुः।। १।।

इति ध्यात्वा "ओं हसकलह्री ह्रीं हसकहलह्री हं सकलह्रीं सः" इति मन्त्रं जपेत्।।

अथ त्र्यक्षरस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि अजाय ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीसूर्याय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा गुह्यादिपादपर्यन्तं हां नमः, कण्ठाद् गुह्यपर्यन्तं ह्रीं नमः, मूर्धादिकण्ठान्तं सः नमः, इति विन्यस्य

ह्रांह्रींह्रूंह्रैंह्रौंह्रः इति करषडङ्गन्यासान् विधाय ध्यायेत्—

अरुणकमलसंस्थं त्रीक्षणं भूरिभूषं ह्यरुणकमलयुग्माभीष्टदाभीतिहस्तम्।
अरुणतरशरीरं भावयामो दिनेशं ह्यरुणकरसुसेव्यं सर्वदेवौघवन्द्यम्॥ १॥

इति ध्यात्वा "ह्रां हसकलह्रीं ह्रीं हसकहलह्रीं सः सकलह्रीं" इति मन्त्रं जपेत्॥

अथ षोडशार्णप्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि ब्रह्मणे ऋषये नमः, मुखे जगतीच्छन्दसे नमः, हृदये श्रीभास्कराय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ओं ऐं हृदयाय नमः, क्लांक्लींक्लूं शिरसे स्वाहा, ह्रांह्रींह्रूं शिखायै वषट्, सः कवचाय हुं, श्रीभास्कराय नेत्रत्रयाय वौषट्, स्वाहा अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

माणिक्याढ्यरथारूढं मणिकुण्डलधारिणम्। हस्तैश्चाभीष्टदं शङ्खचक्रपद्मधरं विभुम्॥ १॥
किरीटिनं मेखलिनं कवचिं सुशरीरिणम्। नानारत्नसमोपेतं ऋषिसंख्याश्वशोभितम्॥ २॥
नक्षत्रग्रहराश्याद्यैः सेवितं मुनिमण्डलैः। सावित्र्या चैव गायत्र्या सरस्वत्या च शोभितम्॥ ३॥
नानादेवसमायुक्तं भास्करं चिन्तयेद् बुधः।

एवं ध्यात्वा "ओं ऐं हसकलह्रीं क्लांक्लींक्लूं हसकहलह्रीं ह्रांह्रींह्रूंसः सकलह्रीं श्रीभास्कराय स्वाहा" इति मन्त्रं जपेत्॥

अथ द्वादशाक्षरस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि देवभागाय ऋषये नमः, मुखे विराट्छन्दसे नमः, हृदये श्रीआदित्याय देवतायै नमः, इति विन्यस्य ममाभीष्याप्तये विनियोगः, इति कृताञ्जलिरुक्त्वा ह्रांह्रींह्रूंह्रैंह्रौंह्रः इति षडङ्गमन्त्रान् विन्यस्य प्राग्वद् ध्यात्वा "ओंआं हसकलह्रीं ह्रींश्रींघृणिः हसकलह्रीं सूरिय सकलह्रीं आदित्य ओं" इति मन्त्रं जपेत्॥

अथ षडक्षरस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि ब्रह्मणे ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीआदित्याय देवतायै नमः, इति विन्यस्य ममाभीष्टावाप्तये विनियोगः, इति कृताञ्जलिरुक्त्वा, ओं हृदयाय नमः, श्रीं शिरसे स्वाहा, ह्रीं शिखायै वषट्, क्लीं कवचाय हुं, ग्लौं नेत्रत्रयाय वौषट्, ह्रां अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य प्राग्व द्ध्यायेत्— "ओंश्रीं हसकलह्रीं ह्रींक्लीं हसकहलह्रीं ग्लौं सकलह्रीं ह्रां" इति मन्त्रं जपेत्।

अथात्माष्टाक्षरस्य प्रयोगः— तस्य न्यासध्यानादिकं प्रागेव प्रपञ्चयागमातृकाविधानेऽभिहितम्, "ओंह्रीं हसकलह्रीं हंसः हसकहलह्रीं सोऽहं सकलह्रीं स्वाहा" इति मन्त्रं जपेत्॥

अथ शाक्तदर्शनविधानम्॥ तत्रादौ बालामन्त्रस्य प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलमन्त्रेण प्राणायामत्रयं कृत्वा, शिरसि दक्षिणामूर्तये ऋषये नमः, मुखे पङ्क्तिच्छन्दसे नमः, हृदये श्रीबालायै देवतायै नमः, गुह्ये ऐं बीजाय नमः, पादयोः सौः शक्तये नमः, नाभौ क्लीं कीलकाय नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ऐं हृदयाय नमः, क्लीं शिरसे स्वाहा, सौः शिखायै वषट्, ऐं कवचाय हुं, क्लीं नेत्रत्रयाय वौषट्, सौः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

भ्रमद्भ्रमरनीलाभधम्मिल्लामलपुष्पिकाम्। ब्रह्मरन्ध्रस्फुरद्भिन्नमुक्तालेखाविराजिताम्॥ १॥

मुक्तालेखारत्नलग्नतिलकाञ्चितभालिकाम्। विशुद्धमुक्ताबिन्द्वाढ्यचन्द्ररेखाकिरीटिनीम्॥२॥
भ्रमद्भ्रमरनीलाभनयनत्रयराजिताम्।। सूर्यभास्वन्महारत्नकुण्डलालङ्कृतां पराम् ॥ ३॥
शुक्राकारस्फुरन्मुक्ताहारभूषणभूषिताम्। कङ्कणादिलसद्भूषामणिबन्धलसत्प्रभाम् ॥ ४॥
प्रवाललतिकारपाणिपल्लवशोभिताम्। वज्रवैडूर्यमुक्तालिमेखलां विमलप्रभाम् ॥ ५॥
रक्तोत्पलदलाकारपादपल्लवशोभिताम् । नक्षत्रमालासङ्काशमुक्तामञ्जीरमण्डिताम् ॥ ६॥
वामेन पाणिनैकेन पुस्तकं चापरेण तु। अभयं च प्रयच्छन्तीं साधकाय वरानने ॥ ७॥
अक्षमालां च वरदं दक्षपाणिद्वयेन तु। दधतीं चिन्तयेद्देवीं वश्यसौभाग्यवाक्प्रदाम्॥ ८॥
क्षीरकुन्देन्दुधवलां प्रसन्नां संस्मरेत् प्रिये।

इति ध्यात्वा "ऐं हसकलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं" इति मन्त्रं जपेत्॥

अथ भैरव्याः प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि दक्षिणामूर्तये ऋषये नमः, मुखे पङ्क्तिच्छन्दसे नमः, हृदये श्रीत्रिपुरभैरव्यै देवतायै नमः, गुह्ये वाग्भवकूटबीजाय नमः, पादयोः शक्तिकूटशक्तये नमः, नाभौ कामराजकूटकीलकाय नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, बीजत्रयद्विरावृत्त्या षडङ्गादि विन्यस्य ध्यायेत्—

हृदयस्थारुणाम्भोजकर्णिकामध्यसंस्थिताम्। जपाकुसुमसङ्काशामरुणाम्बरभूषणाम्॥ १॥
स्मितधौतमहामोहां त्रिनेत्रां चन्द्रशेखराम्। विश्वसौन्दर्यसर्वस्वविश्वसागररूपिणीम्॥ २॥
आनन्दमधुरां देवीं मदघूर्णितलोचनाम्। ब्रह्माब्जनेत्ररुद्रेशशिवाख्यैर्मुण्डसंज्ञकैः॥ ३॥
मण्डिताङ्गीं महादेवीं मुक्ताजपवटीधराम्। पुस्तकालङ्कृतकरां वरदाभयधारिणीम्॥४॥
रक्ताङ्गरागसुभगां ध्यायेत् त्रिपुरभैरवीम्।

एवं ध्यात्वा "हसकलरैं हसकलह्रीं हसकलरीं हसकहलह्रीं हसौः सकलह्रीं" इति जपेत्॥

अथ चैतन्यभैरव्याः प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा ऋष्यादिकरषडङ्गन्यासान्प्रागुक्तवद्विधाय ध्यायेत्—

उद्यद्भानुसहस्राभां नानालङ्कारभूषिताम्। मुकुटोर्ध्वलसच्चन्द्ररेखां रक्ताम्बराञ्चिताम्॥ १॥
पाशाङ्कुशधरां नित्यवामहस्तकपालिनीम्। वरदाभयहस्ताढ्यां पीनोन्नतघनस्तनीम्॥ २॥
एवं ध्यात्वा यजेद् देवीं पूर्वसिंहासनस्थिताम्[1]।

इति ध्यात्वा "सहैं हसकलह्रीं सकलह्रीं हसकहलह्रीं सहौः सकलह्रीं" इति जपेत्॥

अथ कामेश्वरीभैरव्याः प्रयोगः—तत्र प्रातःकृत्यादिध्यानान्तं प्राग्वद्विधाय "सहैं हसकलह्रीं सकलह्रीं हसकहलह्रीं नित्यक्लिन्ने मदद्रवे सकलह्रीं सहौः" इति जपेत्॥

अथ भैरव्याः प्रयोगः— तत्र प्रातःकृत्यादिषडङ्गन्यासान्तं पूर्ववद्विधाय ध्यायेत्—

उद्यत्सूर्यसहस्राभां चन्द्रचूडां त्रिलोचनाम्। नानालङ्कारसुभगां सर्ववैरिनिकृन्तनीम् ॥ १॥
स्रवद्रुधिरमुण्डालिकलितां रक्तवाससम्। त्रिशूलं डमरुं खड्गं तथा खेटकमेव च॥ २॥

---

१. 'प्रेत' क. पाठः।

पिनाकं च शरान्देवि पाशाङ्कुशयुगं क्रमात्। पुस्तकं चाक्षमालां च शवसिंहासनस्थिताम्॥३॥

एवं ध्यात्वा "हसखफ्रें हसकलह्रीं हसकलरीं हसकहलह्रीं हसौं सकलह्रीं" इति जपेत्॥ इति नित्याभैरवी॥

अथ भुवनेश्वरीभैरव्याः प्रयोगः—तत्र प्रातःकृत्यादिषडङ्गन्यासान्तं प्राग्वद्विधाय ध्यायेत्—

................ध्यायेद् देवीं चतुर्भुजाम्। जपाकुसुमसङ्काशां दाडिमीकुसुमप्रभाम्॥ १॥

चन्द्ररेखाजटाजूटां त्रिनेत्रां रक्तवाससम्। नानालङ्कारसुभगां पीनोन्नतघनस्तनीम्॥ २॥

प्रेतासनसमासीनां मुण्डमालाविभूषिताम्। पाशाङ्कुशवराभीतीर्दधानां च शिवां श्रये॥ ३॥

इति ध्यात्वा "हस्रैं हसकलह्रीं हसकलह्रीं हसकहलह्रीं ह्सौः सकलह्रीं" इति जपेत्॥ इयमेव सकलपूर्वा विधेया भुवनेश्वरीभैरवीभेदः। सम्पत्प्रदा सकाराद्या चेत्कौलेशभैरवी, सम्पत्प्रदाया आद्यन्ते रेफं हित्वा सकलसिद्धिदा भैरवी। एतासां विद्यानामृष्यादिकं प्राग्वत्॥

अथ बौद्धदर्शनाधिदेवतामन्त्राः। तत्रादौ पद्मावतीप्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्रणायामत्रयं कृत्वा, शिरसि ब्रह्मणे ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीपद्मावत्यै देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा ह्रांह्रींमित्यादिना षडङ्गन्यासं कृत्वा ध्यायेत्॥

पद्मासनस्थां नवकुङ्कुमाभां रक्तोत्पले संदधतीं त्रिनेत्राम्।

आबिभ्रातीमाभरणानि रक्तां पद्मावतीं पद्ममुखीं नमामि॥ १॥

इति ध्यात्वा "ह्रीं हसकलह्रीं पद्मावती हसकहलह्रीं स्वाहा सकलह्रीं" इति मन्त्रं जपेत्॥ "उग्रताराप्येकजटा तारा नीलसरस्वती" इत्युक्तत्वात्। एतासां मन्त्रास्तु—"ऐंह्रींश्रींक्लींसौः हुं उग्रतारे हुंफट्" इत्युग्रतारा। "त्रींहुंह्रींहुंफट्" इत्येकजटा। ऊँह्रींस्त्रींहूंफट्" इति तारा। "ह्रींस्त्रींहूं" इति नीलसरस्वती। एतासां चतसृणां जपे तु बीजान्तरित पञ्चदशीं[१] कूटत्रयं[२] प्रत्येकप्रत्येकं संयोज्य जपेत्॥ प्रयोगस्तु—प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि अक्षोभ्याय ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये अमुकतारायै देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये जपे विनियोगः, इति कृताञ्जलिरुक्त्वा, ओंह्रां अखिलवाग्रूपिण्यै हृदयाय नमः, ओंह्रीं अखण्डवाग्रूपिण्यै शिरसे स्वाहा, ओंह्रूं ब्रह्मवाग्रूपिण्यै शिखायै नमः, ओंह्रैं विष्णुवाग्रूपिण्यै कवचाय हुं, ओंह्रौं रुद्रवाग्रूपिण्यै नेत्रत्रयाय वौषट्, ओंह्रः सर्ववाग्रूपिण्यै अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

विश्वव्यापकवारिमध्यविलसच्छ्वेताम्बुजन्मस्थितां
कर्त्रीखड्गकपालनीलनलिनै राजत्करां नीलभाम्।
काञ्चीकुण्डलहारकङ्कणलसत्केयूरमञ्जीरता—
मात्पैर्नागवरैर्विभूषिततनुमारक्तनेत्रत्रयाम्॥ १॥

पिङ्गोग्रैकजटां लसत्सुरसनां दंष्ट्राकरालाननां
व्याघ्रत्वक्परिधानशोभितकटिं श्वेतास्थिपट्टालिकाम्।
अक्षोभ्येण विराजमानशिरसं स्मेराननाम्भोरुहां
तारां शावहृदासनां दृढकुचामम्बां त्रिलोक्याः स्मरेत्॥ १॥

---

१. 'तां' ख. पाठः। २. 'शीं' ख. पाठः।

इति ध्यायेत्।।

अथ मातङ्गीप्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि दक्षिणामूर्तये ऋषये नमः, मुखे गायत्रीच्छन्दसे नमः, हृदये श्रीमातङ्गिन्यै देवतायै नमः, मम सर्वाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ऐंह्रींश्रींओं नमो भगवति श्रीमातङ्गीश्वरि सर्वजनमनोहारि हृदयाय नमः, सर्वमुखराजिसर्वमुखरञ्जिनि शिरसे स्वाहा, सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि शिखायै वषट्, सर्वदुष्टमृगवशंकरि सर्वसत्त्ववशंकरि कवचाय हुं, सर्वलोकममुकं मे वशमानय नेत्रत्रयाय वौषट्, स्वाहा अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

एवं न्यस्तशरीरोऽसौ चिन्तयेन्मन्त्रदेवताम्। अमृतोदधिमध्यस्थे रत्नद्वीपे मनोरमे।। १।।
स्वर्णप्राकारसंवीते मण्डपे रत्ननिर्मिते । कदम्बबिल्वकद्वारि कल्पवृक्षोपशोभिते।। २।।
वेदिमध्ये सुखास्तीर्णे रत्नसिंहासने प्रभो। अष्टपत्रं महापद्मं केसरान्तःसकर्णिकम्।। ३।।
तन्मध्ये च त्रिकोणं स्यादष्टपत्रे ततो बहिः। पुनः षोडशपत्रं स्यात्तद्बाह्ये स्याच्चतुर्दलम्।। ४।।
वेदास्रं च चतुर्द्वारं मण्डलं प्रोक्तमुत्तमम्। तस्य मध्ये सुखासीनां श्यामवर्णां शुचिस्मिताम्।।५।।
कदम्बमालाभरणां पूजितां च सुरासुरैः । प्रलम्बालकसंयुक्तां चन्द्ररेखावतंसिताम्।। ६।।
ललाटे तिलकोपेतामीषत्प्रहसिताननाम्। किञ्चित्स्वेदाम्बुमधुरललाटफलकोज्ज्वलाम्।। ७।।
वलीतरङ्गमध्यान्तारोमराजिविराजिताम् । सर्वाभरणसंयुक्तां मुक्ताहारविभूषिताम् ।। ८।।
नानामणिगणोन्नद्धकटिसूत्रैरलङ्कृताम् । वलयै रत्नखचितैः केयूरैर्मणिभूषितैः ।। ९।।
भूषितां द्विभुजां बालां मदघूर्णितलोचनाम्। आपीनमण्डलाभोगसमुन्नतपयोधराम् ।। १०।।
प्रलम्बकर्णाभरणां कर्णोत्तंसविराजिताम्। तमालनीलां तरुणीं मधुमत्तां मतङ्गिनीम् ।। ११।।
चतुष्षष्टिकलारूपपार्श्वस्थशुकसारिकाम्। कोटिबालार्कसङ्काशां जपाकुसुमसन्निभाम् ।। १२।।
एवं वा पीतवर्णां च ध्यायेन्मातङ्गिनी पराम्।

एवं ध्यात्वा "ऐंह्रींश्रींओं नमो भगवति श्रीमातङ्गीश्वरि सर्वजनमनोहारि सर्वमुखराजि सर्वमुखरञ्जिनि हसकलह्रीं सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि हसकहलह्रीं सर्वदुष्टमृगवशंकरि सकलह्रीं सर्वलोकममुकं मे वशमानय स्वाहा" एवं जपेत्।।

अथ सुमुखीप्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि तुम्बुरवे ऋषये नमः, मुखे गायत्रीच्छन्दसे नमः, हृदये श्रीसुमुख्यै देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ऐंह्रींश्रीं हृदयाय नमः, उच्छिष्ट शिरसे स्वाहा, चण्डालि शिखायै वषट्, मातङ्गि कवचाय हुं, सर्ववशंकरि नेत्रत्रयाय वौषट्, नमः स्वाहा अस्त्रायं फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

स्मरेत् प्रथमपुष्पिणीं रुधिरबिन्दुनीलाम्बरां
गृहीतमधुपात्रिकां मदविघूर्णनेत्रत्रयाम्।
घनस्तनभरालसां गलितचूर्णिकां बालिकां
करस्फुरितवल्लकीं विमलशङ्खताटङ्किनीम्।।१।।

इति ध्यात्वा।। "ऐंह्रींश्रीं हसकलह्रीं उच्छिष्टचण्डालिमातङ्गि हसकहलह्रीं सर्ववशंकरि सकलह्रीं नमः स्वाहा" इति जपेत्।।

अथ चण्डमातङ्गिनीप्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि दक्षिणामूर्तये ऋषये नमः, मुखे गायत्रीच्छन्दसे नमः, हृदये श्रीचण्डमातङ्गिन्यै देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः— इति कृताञ्जलिरुक्त्वा, मायया षड्दीर्घया षडङ्गानि विन्यस्य ध्यायेत्—

मातङ्गीं नवयावकार्द्रचरणामुल्लासिकृष्णांशुकां
वीणोल्लासिकरां समुन्नतकुचां मुक्ताप्रवालावलीम्।
हृद्याङ्गीं सितशङ्खकुण्डलधरां बिम्बाधरां सस्मिता-
माकीर्णालकवेणिमब्जनयनां ध्यायेच्छुकश्यामलाम्।। १ ।।

इति ध्यात्वा "ह्रींनमः हसकलह्रीं हिलिहिलि हसकहलह्रीं चण्डमातङ्गिनी सकलह्रीं स्वाहा" इति जपेत्।।

अथ गाणपत्यदर्शनाधिदेवतामन्त्राः। आदावेकाक्षरगणपतिमन्त्रप्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि गणकाय ऋषये नमः, मुखे निचृच्छन्दसे नमः, हृदये श्रीविघ्नेश्वराय देवतायै नमः, इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ओंगणञ्जयाय[1] स्वाहा हृदयाय नमः, एकदंष्ट्राय हुंफट् शिरसे स्वाहा, अचलकर्णिने नमः शिखायै वषट्, गजवक्त्राय नमो नमः कवचाय हुं, महोदराय नेत्रत्रयाय वौषट्, चण्डाय हुं फट् अस्त्राय फट्। अथवा गाङ्गीमित्यादिना षडङ्गानि विधाय ध्यायेत्—

रक्ताभः शशिमौलिरङ्कुशगुणौ दन्तं वरं धारयन्
हस्ताब्जैर्द्विरदाननस्त्रिनयनो रक्ताङ्गरागावृतः।
बीजापूरबृहत्करोरुजठरो दानार्द्रगण्डस्थलो
विघ्नेशः[2] फणिभूषणो गणपतिर्भूयाद्भवद्भूतये।। १ ।।

इति ध्यात्वा "गं हसकलह्रीं गं हसकहलह्रीं गं सकलह्रीं" इति जपेत्।।

अथ महागणपतेः प्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणयामत्रयं कृत्वा शिरसि गणकाय ऋषये नमः, मुखे निचृद्गायत्रीच्छन्दसे नमः, हृदये श्रीगणपतये देवतायै नमः, गुह्ये गं बीजाय नमः, पादयोः ह्रीं शक्तये नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ओं गां हृदयाय नमः, श्रीं गीं शिरसे स्वाहा, ह्रीं गूं शिखायै वषट्, क्लीं गैं कवचाय हुं, ग्लौं गौं नेत्रत्रयाय वौषट्, गं गः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

चक्राब्जत्रिशिखान् गुणैक्षवधून् रक्तोत्पलं सद्गदां
व्रीह्यग्रान्वितबीजपूररदनं कुम्भं करैर्बिभ्रतम्।
पद्मोद्यत्करया निजप्रमदयाश्लिष्टं जपासन्निभं
सार्धेन्दुं प्रभजे महागणपतिं नेत्रत्रयोद्भासितम्।। १ ।।

एवं ध्यात्वा "ओंश्रींह्रींक्लींग्लौंगं हसकलह्रीं गणपतये वरवरद हसकहलह्रीं सर्वजनं मे वशमानय सकलह्रीं स्वाहा" इति जपेत्।।

---

१. 'ञ्जयाय' ग. पाठः। २. 'लोकेशः' ग. पाठः।

अथ क्षिप्रगणपतिप्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि गणकाय ऋषये नमः, मुखे विराट्छन्दसे नमः, हृदि क्षिप्रप्रसादनाय गणपतये देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, गांगीमित्यादिना करषडङ्गन्यासं विधाय ध्यायेत्—

सिन्दूराभमिभाननं त्रिनयनं हस्तेषु पाशाङ्कुशौ
बिभ्राणं मधुमत्कपालमनिशं सार्धेन्दुमौलिं भजे।
पुष्ट्याश्लिष्टतनुं ध्वजाग्रकरया पद्मोल्लसद्धस्तया
तद्योन्याहितपाणिमात्तवसुमत्पात्रोल्लसत्पुष्करम्।। १ ।।

एवं ध्यात्वा "गं हसकलह्रीं क्षिप्रप्रसादनाय हसकहलह्रीं नमः सकलह्रीं" इति मन्त्रं जपेत्।।

अथ वक्रतुण्डप्रयोगः— तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि भार्गवऋषये नमः, मुखेऽनुष्टुप्छन्दसे नमः, हृदये श्रीवक्रतुण्डाय देवतायै नमः, इति विन्यस्य ममाभीष्टाप्तये विनियोगः, इति कृताञ्जलिरुक्त्वा, व[1]हृदयाय नमः, क्र शिरसे स्वाहा, तु शिखायै वषट्, ण्डा कवचाय हुं, य नेत्रत्रयाय वौषट्, हूं अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—

रम्योद्भिन्नारुणतरमणिव्रातसंशोभिकान्तिं
सम्बिभ्राणं करकिसलयैः पाशमप्यङ्कुशाङ्गम्।
साभीतीष्टं त्रिनयनयुतं रत्नमाल्यांशुकाढ्य-
मम्भोजोद्यत्पुटगतममुं संस्मरेद्वक्रतुण्डम्।। १ ।।

इति ध्यात्वा "हसकलह्रीं वक्रतुण्डाय हसकहलह्रीं हूँ सकलह्रीं" इति मन्त्रं जपेत्।।

अथ लक्ष्मीगणेशप्रयोगः— तत्र प्रातः कृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि अन्तर्यामिऋषये नमः, मुखे निचृद्गायत्रीच्छन्दसे नमः, हृदये श्रीलक्ष्मीगणेशाय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, श्रां गां इत्यादिना षडङ्गानि विन्यस्य ध्यायेत्—

हेमाभः पीतवस्त्रः करकमलतलैः सन्दधच्चक्रशङ्खौ
दन्ताभीती च नासाधृतकनकघटः पद्मसंस्थस्त्रिनेत्रः।
वामाङ्ग[2]विष्टलक्ष्म्या विधृतकमलया प्रोल्लसद्दक्षदोष्णा
श्लिष्टः सौवर्णकान्त्या गणप इह महाश्रीकरो वः श्रियेऽस्तु।। १ ।।

इति ध्यात्वा "श्रींगं सौम्याय हसकलह्रीं महागणपतये वरवरद हसकहलह्रीं सर्वजनं मे वशमानय सकलह्रीं स्वाहा" इति जपेत्।।

अथ हेरम्बस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि गणकाय ऋषये नमः, मुखे गायत्रीच्छन्दसे नमः, हृदये श्रीहेरम्बाय देवतायै नम इति विन्यस्य ममाभीष्टाप्तये विनियोगः, इति कृताञ्जलिरुक्त्वा गांगीं इत्यादिना षडङ्गानि विन्यस्य ध्यायेत्—

१. 'वमित्यादिबिन्दुयुक्तः' ग. पाठः। २. 'वामाङ्क' ग. पाठः।

मुक्ताविद्युत्पयोदामृतघुसृणनिभैः पञ्चभिर्नागवक्त्रै–
हेरम्बो भावनीयः शशिधरमुकुटो दृप्तसिंहाधिरूढः।
हस्तैर्बिभ्रत् त्रिशूलाङ्कुशकजपवटीमुद्गरान् पुंस्कपालं
टङ्काङ्को मोदक[1]स्याद्रदलसदभये दानमर्कौघदीप्तिः॥ १॥

एवं ध्यात्वा "ओं हसकलह्रीं गूं हसकहलह्रीं नमः सकलह्रीं" इति जपेत्॥

अथ विरिगणेशमन्त्रप्रयोगः– प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि ममाभीष्टसिद्धये जपे विनियोगः, इति कृताञ्जलिरुक्त्वा, विरिविरि हृदयाय नमः, गणपति शिरसे स्वाहा, वरवरद शिखायै वषट्, सर्वलोकं मे कवचाय हुं, वशमानय नेत्रत्रयाय वौषट, स्वाहा अस्त्राय फट् इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत् "सिन्दूराभमिभाननमिति प्राग्वत्।" "ह्रीं विरिविरि हसकलह्रीं गणपति वरवरद हसकहलह्रीं सर्वलोकं मे वशमानय सकलह्रीं स्वाहा" इति जपेत्॥

अथ शक्तिगणेशस्य प्रयोगः–तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि गणकाय ऋषये नमः, मुखे निचृद्गायत्रीच्छन्दसे नमः, हृदये शक्तिश्रीगणेशाय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ह्रीं हृदयाय नमः, गं शिरसे स्वाहा, ह्रीं शिखायै वषट्, महागणपतये कवचाय हुं, स्वाहा नेत्रत्रयाय वौषट्, ह्रींगंह्रीं महागणपतये स्वाहा अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य प्राग्वद्ध्यात्वा–"ह्रींगंह्रीं हसकलह्रीं महागणपतये हसकहलह्रीं स्वाहा सकलह्रीं" इति जपेत्॥

अथोर्ध्वाम्नायक्रमेण श्रीविद्याषोडशार्णाया उपदेशे षोडशमूलविद्यास्वैकैकस्य द्वे द्वे विद्ये प्रयोज्ये। ता विद्यास्तु–"ओंऐंह्रींसहखफ्रें सहौः सहक्षमलवरयीं हौंह्रींहंसः सोऽहं स्वाहा" इत्येकादश बीजानि सर्वत्र विद्यादौ योज्यानि॥ ११ स्वप्रकाश[2] परिपूर्णपरापरमहाकुल[3] सिद्धविद्यामहाकुलयोगिनीह्रीं; इति कुलयोगिनीमूलविद्या॥२॥ ११ ऐंब्लूंक्लिन्ने क्लेदिनि क्लिन्नद्रवे[4] क्लेदय क्लेदय क्लींक्लीं महामद मोहयमोहय क्लीं नमः स्वाहाः इति रहस्ययोगिनीमूलविद्या॥ ३॥ ११ स्वच्छानन्द[5]परमहंसपरमात्मने स्वाहा हसक्षौं; इति शाम्भवीयोगिनीमूलविद्या॥ ४॥ ११ ह्रीं नित्यस्फुरत्तानन्दमयीं[6] महाबिन्दुव्यापकमातृस्वरूपिणी ह्रीं; इति हृल्लेखायोगिनीमूलविद्या॥ ५॥ ११ स्वच्छप्रकाशात्मिके ह्रीं कुलमहामालिनी[7] ह्रीं; इति समयविमलायोगिनी– मूलविद्या॥६॥ ११ हंसः नित्यप्रकाशात्मिके कुलकुण्डलिनी आज्ञासिद्धिमहाभैरवी आत्मानं बोधय बोधय अम्बे भगवति ह्रींहुं, इति परबोधिनीयोगिनीमूलविद्या॥७॥ ११ ओं मोक्षं कुरु; इति पञ्चाक्षरी योगिनीमूलविद्या ॥८॥ हसैं हसकलह्रीं हसौः; इति लोपामुद्राचैतन्यत्रिपुरायोगिनीमूलविद्या॥९॥ ऐं शुद्धसूक्ष्मनिराकारनिर्विकल्प परब्रह्मस्वरूपिणि क्लीं परानन्दमयीशक्तिः[8] सौः; इत्यनुत्तरकौलिनीयोगिनीमूलविद्या॥ १०॥ ११ स्वच्छनन्दपरमहंसपरमात्मने स्वाहा हस्ख्फ्रूं; इति गुरुत्तमविमर्शिनीयोगिनीमूलविद्या॥ ११॥ ११ अनाभासाव्योमातीता परापर व्योमातीता व्योमेश्वरी ह्रीं; इति

---

१. 'कास्या' ख. पाठः। २. 'स्वच्छ' ३. 'परपरमहासिद्धविद्याकुलयोगिनी' ४. 'महामदद्रवे क्लेदय २ क्लीं२ मोहय२' ५. 'नन्दनाथ' ६. 'त्ताचैतन्यानन्द' ७. 'ऐं कुलगर्भमातृके ह्रीं समयविमलेश्रीं' ८. 'नन्दशक्ति'।

अनाभासायोगिनीमूलविद्या[1]।। १२।। ११ ऐंईईऊं; इति सङ्केतसारविद्यायोगिनीमूलविद्या।। १३।। ११ ह्रीं विच्चे भगवति वाग्वादिनि महाह्रदे महामाया मतङ्गिनि ऐंब्लूंरंस्त्रीं; इत्यनुत्तरवाग्वादिनीयोगिनीमूलविद्या।। १४।। ११ हस्रैंहस्क्लींहस्रौः इत्यनुत्तरविद्यायोगिनीमूलविद्या।। १५।। ११ ह्रीं सर्वानन्दमये महाचक्रे बैन्दवे परब्रह्मस्वरूपिणी परामृतशक्तिः सर्वमन्त्रेश्वरी सर्वतन्त्रेश्वरी सर्वयोगीश्वरी सर्वज्ञानेश्वरी सर्वपीठेश्वरी जगदुत्पत्तिमातृकाह्रीं; इति तुरीयायोगिनीमूलविद्या ।। १६।। ☞तथोत्तरतन्त्रे–

पञ्चमाम्नायदीक्षायां चतुराम्नायदेवताः । अङ्गत्वेन समाख्याता द्वेद्वे विद्ये समभ्यसेत्।। १।।
सुरेन्द्रानलयोरैन्द्रौ याम्ये वै याम्यकोणयोः। वारुण्यौ पाशिमरुतोस्तत्परे सौम्यदिग्भवे।। २।।

इति। अस्यार्थः– पञ्चमाम्नाय ऊर्ध्वाम्नायस्तत्र दीक्षायां चतुराम्नायदेवताः पूर्वदक्षिणपश्चिमोत्तराम्नायदेवता इत्यर्थः। द्वेद्वे विद्ये एकैकस्याम्नायस्य[2] समभ्यसेत् योजयेत्। दिग्विभागमाह– सुरेन्द्रेति। प्राक्कुण्डाग्नेय कुण्डयोरैन्द्र्यौ पूर्वाम्नायविद्ये, याम्यकोणयोर्याम्यनैर्ऋतयोर्याम्ये दक्षिणाम्नायविद्ये, पाशिमरुतोः पश्चिमवायव्ययोर्वारुण्यौ पश्चिमाम्नायविद्ये, तत्परे उत्तरेशानकुण्डयोः सौम्यदिग्भवे उत्तरदिङ्मुखसम्भूते उत्तराम्नायविद्ये इत्यर्थः।। श्रीकुलार्णवे–

प्राक्कुण्डे भैरवी प्रोक्ता ह्याग्नेये भुवनेश्वरी। पीताम्बरा भोगिनी वा याम्यकुण्डे प्रशस्यते।। १।।
वाराही नैर्ऋते कुण्डे पश्चिमे चापराजिता । भवानी वायुकोणे तु श्यामा तारा तु तत्परे।। २।।

इति। तत्रैव–

पञ्चकुण्डात्मके पक्षे चतुःसमयदेवताः। चतुराम्नायविद्या वा प्रयोज्याः परमेश्वरि।। १।।

इति।। अथ श्रीगुरुविद्यादीक्षायां त्वङ्गत्वेन चरणादिविद्याः प्रयोज्याः, पराप्रासाददीक्षायां तु पञ्चब्रह्ममन्त्राः पञ्चानां त्रयाणां विभागमाह–अष्टात्रिंशत्कलास्त्रिधेति+। पञ्चब्रह्ममन्त्राणामष्टात्रिंशत्कलाः षोडश द्वादश दश क्रमेण प्रयोज्या इत्यर्थः। प्रसङ्गतोऽन्यासां विद्यानां दीक्षायां क्रममाह–दक्षिणेति आद्यहीनेति स्पष्टोऽर्थः।

---

☞षोडशमूलविद्यानां अष्टमश्वासोक्तोद्धारानुसारतोऽयं पाठः साधीयान्। तथा हि–(१) ओंऐंह्रींश्रीं स्वच्छप्रकाशपरिपूर्णपरापरमहासिद्धविद्याकुलयोगिनिह्रीं इति कुलयोगिनीमूलविद्या०। (२) ४ हसौः स्वात्मानं बोधय २ स्हौः इति श्रीप्रासादपराम्बामूलविद्या०। (३) ओंऐंह्रींश्रीं ऐंब्लूं क्लिन्ने क्लेदिनि महामदद्रवे क्लींक्लीं मोहय २ क्लींनमः स्वाहा, इति अतिरहस्यातियोगिनीमूलविद्या०। (४) ओंऐंह्रींश्रीं हंसः स्वच्छानन्द परमहंसपरमात्मने स्वाहा सहक्ष्मौं इति शाम्भवीयोगिनीमूलविद्या०। (५) ओंऐंह्रींश्रीं ह्रीं नित्युस्फुरत्तात्मचैतन्यानन्दमयमहाबिन्दुव्यापकमातृस्वरूपिणि ओंऐंह्रींश्रींह्रीं इति ह्रल्लेखायोगिनीमूलविद्या०। (६) ४ स्वच्छप्रकाशात्मिके ह्रीं कुलमहामालिनि वाक्कुलगर्भमातृके ह्रीं समयविमलेश्रीं इति समयविमलायोगिनीमूलविद्या०। (७) ४ हंसः नित्यप्रकाशात्मिके कुलकुण्डलिनि आज्ञासिद्धे महाभैरवि आत्मानं बोधय २ अम्बे भगवति ह्रींहुं, इति परबोधिनीयोगिनीमूलविद्या०। (८) ४ ओं मोक्षं कुरु इति कुलपञ्चाक्षरीयोगिनीमूलविद्या०। (९) हसकलह्रीं हसकहलह्रीं सकलह्रीं इति चैतन्यत्रिपुरायोगिनीमूलविद्या०। (१०) ४ ऐं शुद्धसूक्ष्मनिराकारनिर्विकल्पपरब्रह्मस्वरूपिणि क्लीं परानन्दशक्तिसौः इति शांभवानन्दनाथानुत्तरकौलिनीयोगिनी–मूलविद्या०। (११) ४ हंसः सोहं स्वच्छानन्दपरमहंसपरमात्मने स्वाहा इति गुरूत्तमविमर्शिनीयोगिनीमूलविद्या०। (१२) ४ अनामाख्यव्योमातीतनाथपरापरव्योमातीतव्योमेश्वर्यम्बा, इति अनामाख्यायोगिनीमूलविद्या०। (१३) ४ ऐंइंईउं इति सङ्केतसाराख्ययोगिनीमूलविद्या०। (१४) ४ ह्रीं भगवति विच्चे वाग्वादिनि क्लीं महाह्रदमहामातङ्गिनि ऐं क्लिन्ने ब्लूंस्त्रीं, इति अनुत्तरवाग्वादिनीयोगिनीमूलविद्या०। (१५) ४ हसौः हसखफ्रें हसकलरीं हसौः इति अनुत्तरशाङ्करीयोगिनीमूलविद्या०। (१५) तुरीयविद्यामुच्चार्य सर्वानन्दमये महाचक्रे बैन्दवे परब्रह्मस्वरूपिणी परामृतशक्तिः सर्वमन्त्रेश्वरी सकलजगदुत्पत्तिमातृकाशून्या–शून्यविवर्जितशक्तिश्रीत्रिपुरसुन्दरीमूलविद्याश्रीपा०।।

---

१. 'अनामाख्या' २. १. 'एकैकस्यै कस्य' क. ग. पाठः। + इदं (११ शे श्वासे २४५ पत्रे १२ श्लोके) द्रष्टव्यम्।

भुवनेश्वर्यास्तु गुणार्णकं पाशाङ्कुशभुवनेश्वरी। श्रीः श्रियाभिषिक्तभुवनेश्वरी,वाक् वाग्भवरुद्धा भुवनेश्वरी, कामराजरुद्धा पराबीजरुद्धा। त्रिविधा त्रिपुटेति श्रीबीजादिका, कामबीजादिका, मायाबीजादिकेत्यर्थः। पञ्चदश्या इति—अत्र जाग्रत्स्वप्नसुषुप्तितुरीयातीतेति पञ्चविधाः। जाग्रद्विद्यायाः (जाग्रद्विद्या, स्वप्नविद्यायाः) स्वप्नविद्या, सुषुप्तिविद्यायाः सुषुप्तिविद्या, तुरीयविद्यायाः तुरीयविद्या, तुरीयातीतायास्तुरीयातीतविद्या एवं प्रयोज्या इत्यर्थः। श्रीकुलार्णवे—

पराप्रासादमन्त्रश्च लक्ष्मीनारायणस्तथा। चिदम्बरमहामन्त्रः पक्षिरूपश्च शारभः॥ १॥
षडेव शाम्भवाश्चैव महामृत्युञ्जयस्तथा। लक्ष्मीजनार्दनो लक्ष्मीवासुदेवस्तथैव च॥ २॥
राजराजेश्वरश्चैव पञ्चवक्त्रश्च मारुतिः। मार्तण्डभैरवश्चैव महागणपतिस्तथा॥ ३॥
उच्छिष्टगणनाथश्च वक्रतुण्डस्तथैव च। गाणपत्याः श्रिया युक्ताः सीतारामस्तथैव च॥ ४॥
नृसिंहानुष्टुभं चैव पञ्चबाणास्तथैव च। पञ्चकामाश्च देवेशि जैना बौद्धास्तथैव च॥ ५॥
शम्भोरूर्ध्वमुखादेव निर्गता बीरवन्दिते। शिवपञ्चाक्षरीभेदाः प्रासादाख्याः शिवास्तथा॥ ६॥
विष्णोरष्टाक्षरीभेदा वासुदेवाह्वयास्तथा। गाणपत्ये तथैकार्णभेदा घृणिमनुस्तथा॥ ७॥
पूर्वाम्नायास्तु कथिता वराहस्तुम्बुरुस्तथा। हरिद्रागणपश्चैव वटुकाः क्षेत्रपालकाः॥ ८॥
शास्तृमन्त्रा नृसिंहाख्यास्तथा हरिहरात्मकाः। श्रीकृष्णमन्त्रभेदाश्च दधिवामनसंज्ञकाः॥ ९॥
दक्षिणाम्नायविख्यातास्तथोच्छिष्टाणुभेदकाः। पुरुषोत्तमसंज्ञाश्च मालामन्त्रास्तथैव च॥ १०॥
अघोररुद्रभेदाश्च येऽपि बौद्धप्रभेदकाः। पश्चिमाम्नायविख्याता दक्षिणामूर्तिरेव च॥ ११॥
ग्रहाणां लोकपालानां मन्त्राश्चण्डेश्वरस्य तु। वेतालाश्चेटकाश्चैव ये वै हरिहरात्मकाः॥ १२॥
वीरभद्राश्च सुब्रह्मण्यादयो मातृपुत्रकाः। उत्तराम्नायविख्याताः शीघ्रकालफलप्रदाः॥ १३॥
अथेष्टदेवताप्रीत्यै यजेदायतनान्यपि।

आयतनानि चतुरायतनानि। तानि तु मध्यस्थस्वेष्टदेवताया अङ्गभूतानि। तत्स्थापनक्रममाह तत्रैव—

तत्राथ पञ्चायतनस्य वक्ष्ये संस्थापनं भक्तिविभेदभिन्नम्।
भास्वद्गणश्रीपतिपार्वतीशा विघ्नेश्वरार्काद्रिसुता हरिश्च॥ १॥
कृष्णैकदन्तेननगेन्द्रजेशा मायेश्वरेभाननभास्कराजाः।
ईशेनविघ्नाधिपशक्तिकृष्णा मध्याग्निकोणक्रमतस्तु पूज्याः॥ २॥

इति। रत्नसागरे—

रविर्विनायको देवी विष्णुः शङ्करपूजने। गणेशार्काम्बिकेशानास्तथा नारायणार्चने॥ १॥
शिवो विघ्नो हरिः कात्यायनी सूर्यार्चने क्रमात्। देव्यर्चने शिवो विघ्नः सूर्यो विष्णुस्तथैव च॥२॥
शिवो रविर्भवानी च विष्णुर्विघ्नेश्वरार्चने। आग्नेयादिषु कोणेषु स्थाप्या अङ्गाङ्गिभावतः॥ ३॥
पूज्याश्चैव महेशानि व्यस्ताः स्युर्दुःखदाः सदा।

इति। अत्र सर्वत्र देवपूजायां तत्तत्पूजारूपं चक्रमुद्धृत्य तत्तत्कल्पोक्तविधिना तत्तत्पीठपूजापूर्वकं पञ्चायतन—

देवताः पूजयेत्। अन्यथा पूजाया नैष्फल्यं स्यात्। तदुक्तं कुलार्णवे—

देवस्य यन्त्ररूपस्य यन्त्रव्याप्तिमजानता। कृतार्चनादिकं सर्वं व्यर्थं भवति शाम्भवि॥ १॥
यन्त्रं मन्त्रमयं प्रोक्तं देवता मन्त्ररूपिणी। यन्त्रे सम्पूजिता देवी सहसैव प्रसीदति॥ २॥
कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात्। यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः॥ ३॥
शरीरमिव जीवस्य दीपस्य स्नेहवत्प्रिये। सर्वेषामेव देवानां तथा यन्त्रं प्रतिष्ठितम्॥ ४॥
तस्माद्यन्त्रं लिखित्वा वा ध्यात्वा वा भजते शिवे। ज्ञात्वा गुरुमुखात् सर्वं पूजयेद्विधिना शिवे॥५॥
एकपीठे पृथक्पूजां विना यन्त्रं करोति यः। अङ्गाङ्गित्वमपि त्यक्त्वा देवताशापमाप्नुयात्॥६॥
एकपीठे सुरेशानि स्वे स्वे यन्त्रे पृथक् पृथक्। यजेदावरणोपेतान् देवाँस्तत्तद्विधानतः॥ ७॥
आवाह्य देवतामन्यामर्चयेच्चान्यदेवताः। उभाभ्यां लभते शापं मन्त्री चञ्चलमानसः॥ ८॥

इति। कुलप्रकाशतन्त्रे—

खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते। व्यङ्गेऽनर्हपशुस्पृष्टे पतिते दुष्टभूमिषु ॥ १॥
अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते। दशस्वपि च नो कुर्युः सन्निधानं दिवौकसः ॥ २॥

इति। अत्र पञ्चायतनपूजायामपि सम्प्रदायात् पूज्यपूजकयोर्मध्ये पूर्वदिशं प्रकल्प्य[1] तदनुसारेणाग्नेय्यादिकं परिकल्प्य चतुरायतनदेवताः पूजयेत्। धर्मादिपूजायामुक्तयुक्तेस्तुल्यन्यायात्। अत्र केचित्— प्रधानदेवतावाहनानन्तरमेव तदावरणपूजार्थं देवताग्रे प्राचीकल्पना, तत्पूर्वमेव चतुरायतनदेवतानां पूजायाः कार्यत्वात्कल्पनमयुक्तमिति यथास्थिताग्नेयादिदिक्षु चतुरायतनदेवताः पूजनीयाः, इत्याहुस्तन्न। काम्यपूजासु—

पूर्वाशाभिमुखो भूत्वा वश्यकर्मणि पूजयेत्। दक्षिणाशामुखो भूत्वा मारणे पूजयेत्प्रिये॥ १॥
पश्चिमाभिमुखो भूत्वा पूजयेद् धनसिद्धये । उत्तराभिमुखो भूत्वा शान्तिकर्मणि पूजयेत्॥ २॥

इति ब्रह्मयामलवचनात्। "अग्निराक्षसवायव्यशम्भुकोणमुखोऽर्चयेत्।" इति कुलमूलावतारवचनादन्यत्राप्येवमनेकतन्त्रेषु दर्शनाच्च यथास्थितदिक्क्रमेण पूजायामीशानकोणस्थितायाः कदाचित्प्रधानदेवताया वामभागे कदाचिद्दक्षिणे कदाचिदग्रे कदाचित्पृष्ठे चेति स्थित्यनैयत्यप्रसङ्गात् यथास्थिताग्नेयादिषु स्थापनासम्भवात् प्रधानदेवतायाः पीठपूजानन्तरमेव चतुरायतनदेवतापूजनात् पीठपूजायामपि धर्मादिपूजने कल्पितप्राच्यनुसारेणैवाग्नेयादिकल्पनात् चतुरायतनदेवतानामङ्गत्वात् प्रधानदेवतामूर्तेः कल्पितत्वाच्च तदग्रे प्राचीकल्पनस्यैवोचितत्वादिति॥ अन्ये तु तान्त्रिकदीक्षावद्भिः—

शाम्भौ मध्यगते हरीनहरभूदेव्यो, हरौ शङ्करे-
भास्येनागसुता, रवौ हरगणेशाजाम्बिकाः स्थापिताः।
देव्यां विष्णुहरैकदन्तरवयो, लम्बोदरेऽजेश्वरे-
नार्याः शङ्करमार्गतो हि सुखदा व्यस्तास्तु ते दुःखदाः॥ १॥

इति नारायणीयोक्तरीत्या कल्पितप्राच्यनुसारेण मध्येशानादिकोणेष्विष्टदेवतादिकाः पञ्च देवताः स्थाप्याः। तान्त्रिकदीक्षाहीनैस्तु भविष्यपुराणवचनेन पञ्चायतनदेवतायजनस्यावश्यकत्वं मत्वा वैदिकस्मार्तपौराणिकान्य-

---

१. 'परि' क. पाठः।

तमविधिना पञ्चायतनयजनं कुर्वद्भिर्यथास्थितेशानादिकोणेषु मध्ये च पञ्चायतनदेवताः स्थाप्या इत्याहुः; तदत्यन्तमसङ्गतं, तेषां पञ्चानां मध्ये एकस्यापीष्टदेवतात्वाभावनयाङ्गित्वाभावात् कस्यापि मध्ये स्थापनासम्भवात् "रविर्विनायको विष्णुश्चण्डिकेशश्च पञ्चमः। अनुक्रमेण पूज्यास्ते व्युत्क्रमेण भयावहाः"।। इति पुराणसारसमुच्चये तेषां पञ्चायतनदेवतानां यजनक्रमस्योक्तत्वाच्चेति। अत्र पञ्चायतनपूजायां गणेशव्यतिरिक्तचतुर्देवतोपासकैः प्रोक्तक्रमेण देवताः संस्थाप्य गणेशमारभ्य प्रादक्षिण्यक्रमप्राप्तदेवताचतुष्टयं सम्पूज्य मध्ये स्वेष्टदेवतां पूजयेत्। गणेशोपासकैस्तु सूर्यमारभ्य प्रादक्षिण्यक्रमप्राप्तदेवताचतुष्टयं सम्पूज्य गणेशं पूजयेदित्यागमसिद्धान्तः।। अत्र केचित्— पञ्चायतनपूजायां देव्याराधकः सूर्यगणेशशिवविष्णूनभ्यर्च्यान्ते देवीं पूजयेदिति स्मृत्युक्तम्—इति वदन्ति, तदसङ्गतम्, अप्रादक्षिण्यापत्तेः (अ) क्रमस्याप्यलाभतयास्तव्यस्तक्रमापत्तेश्च। वस्तुतस्तु "गणेशसूर्यविष्ण्वीशदुर्गां आवाह्य पूजयेत्"। इति योगिनीतन्त्रे देवीपूजायां पञ्चायतनपूजाक्रमदर्शनात्। "आदौ गणपतिं देवं सूर्यं विष्णुमुमापतिम्। दुर्गां च पूजयेद्विद्वान्" इति भैरवीतन्त्रेऽपि पञ्चायतनपूजाक्रमदर्शनाच्चायमेव तान्त्रिकसिद्धान्तः सत्सम्प्रदायसिद्धश्च। अन्यदेवतापासकैरपि तथैव गणेशादिक्रम एव कार्यः। एकत्रदृष्टन्यायादियं पञ्चायतनपूजा त्वावश्यंकार्या "शिवं भास्करमग्निं च केशवं कौशिकीमपि। मनसा नार्चय न्याति स्वर्गलोकादधोगतिम्।।" इति भविष्यपुराणे तदकरणे प्रत्यवायश्रवणात्। मनसाप्यनर्चयन्नित्यर्थः। अग्निर्गणेशः। "यो ब्रह्मा स हरिः प्रोक्तो यो हरिः स महेश्वरः। महेश्वरः स्मृतः सूर्यः सूर्यः पावक उच्यते। पावकः कार्तिकेयोऽसौ कार्तिकेयो विनायकः।" इति भविष्योत्तरपुराणवचनात्।।

अथ मध्यस्थापितमूर्तौ स्वेष्टदेवतामावाह्य पूजयेत्। तत्र मूर्तिस्तु तत्तद्ध्यानोक्तरूपा, तत्र तु[1] शिवलिङ्गशालग्रामादावपि भावनीया, शिवलिङ्गानां सर्वदैवतपूजाधिकरणत्वात्, तेषु सर्वाश्च देवताः पूज्याः "तेषां लिङ्गमणौ कुम्भे मण्डले च प्रपूजनम्। शालग्रामे च तद्बुध्या यन्त्रादौ च प्रपूजयेत्।। भूमावेव कृता पूजा पुत्रायुर्धननाशिनी" इति रुद्रयामलवचनात्। "शालग्रामशिलायां तु तत्तद्बुद्ध्या समर्चयेत्"। इति सोमशम्भुवचनात्। "लिङ्गस्थण्डिलयोर्वह्नौ सूर्यकुड्यपटेषु च। मण्डले फलके मूर्ध्नि हृदये दश कीर्तिताः।। एषु स्थानेषु देवेशि यजन्ति परमं शिवम्"। इति कुलार्णववचनाच्च, शिवमित्युपलक्षणम्। तेषामित्युक्तेः तेषां पञ्चायतनदेवतानां, यन्त्रादावित्यादिपदं प्रतिमादिपरम्।। "शालग्रामे मणौ यन्त्रे स्थण्डिले प्रतिमासु च। हरेः पूजा तु कर्तव्या केवले न तु भूतले"।। इति त्रैलोक्यसम्मोहनतन्त्रवचनात्तत्तद्ध्यानोक्तरूपा प्रतिमा कार्या। सा तु— "मात्राङ्गुलप्रमाणेन दशपञ्चदशाङ्गुला। गृहे तु प्रतिमा पूज्या नाधिका तु प्रशस्यते"।। इति कपिलपाञ्चरात्रोक्तरूपा प्रतिमा कार्या दशाङ्गुलमिता पञ्चदशाङ्गुलमिता वेत्यर्थः। "दशाङ्गुलप्रमाणा सा तिथ्यङ्गुलमिताथवा। अभ्यर्च्या प्रतिमा विष्णोर्गृहेषु गृहमेधिभिः"।। इति हयग्रीव[2]पञ्चरात्रवचनात्। अत्रापि वेत्यनेन दशाङ्गुलमारभ्य पञ्चदशाङ्गुलपर्यन्तोच्चा प्रतिमा कार्येत्युक्तमिति साम्प्रदायिकाः। पूर्वश्लोकस्याप्ययमेवार्थः, इति वदन्ति। मात्राङ्गुलप्रमाणं तु मण्डपनिर्माणप्रकरणे बोद्धव्यम्। शिवलिङ्गनिर्माणप्रकारस्तु शिल्पिशास्त्रे—

लिङ्गमस्तकमध्यात्तु सूत्रं स्यादाप्रणालकम्। लिङ्गप्रणालिपुष्टत्वं[3] तावदेव प्रकीर्तितम्।। १।।
उच्चत्वे च तथा पीठे पञ्चसूत्रं प्रचक्षते। पञ्चसूत्रसमायुक्तं शिवलिङ्गं प्रपूजयेत् ।। २।।
भुक्तिदं मुक्तिदं चैव धनारोग्यसुखप्रदम्। इति।

---

१. 'सा तु' ग. पाठः। २. 'शीर्ष' ख. पाठः। ३. 'तुष्टत्वं' क. पाठः।

अथ

# श्रीविद्यार्णवतन्त्रे

## द्वादशः श्वासः



अथ श्रीचक्रनिर्माणप्रकारः। श्रीरुद्रयामले—

ततः कुङ्कुमसिन्दूरैः कार्यं यन्त्रं तु योगिना। सौवर्णे राजसे ताम्रे स्फाटिके वैद्रुमे तथा।। १।।
चक्रे यथोक्तविधिना पूज्या देवी नरोत्तमैः। इति।

तन्त्रराजे—

रत्ने हेमनि रूप्ये वा ताम्रे दृषदि च क्रमात्। कृत्वा चक्रस्य निर्माणं स्थापयेत् पूजयेदपि।। २।।
लक्ष्मीकान्तियशःपुत्रधनारोग्यादिसिद्धये।

दृषदि गण्डकीशिलायाम्। ''गण्डकीभवपाषाणे स्वर्णे रजतताम्रयो''रिति दक्षिणमूर्तिसंहितावचनात्।।

अथ धातुविशेषे पूज्यकालसंख्याविशेषमाह रत्नसागरे—

याजज्जीवं सुवर्णे स्याद्रूप्ये द्वाविंशतिः प्रिये। ताम्रे द्वादशकं वर्षं तदर्धं भूर्जपत्रके।। १।। इति।

तन्त्रान्तरे—

ताम्रे द्वादशकं वर्षं स्फाटिकादौ तु सर्वदा। तेषां मध्ये स्फ़ाटिके तु सर्वसिद्धिप्रदं भवेत्।। १।। इति।

लक्षसागरे—

भूमौ सिन्दूररजसा रचितं सर्वकामदम्। सुवर्णरचितं यन्त्रं सर्वराजवशङ्करम्।। १।।
रजतेन कृतं यन्त्रमायुरारोग्यकान्तिदम्। ताम्रैस्तु[१] रचितं यन्त्रं सर्वैश्वर्यप्रदं मतम्।। २।।
यन्त्रं हि स्फाटिके देवि मनोऽभिलषितप्रदम्। माणिक्यलि(ख्य?खि)तं यन्त्रं राज्यदं भुक्तिदं मतम्।।३।।
गोमेदरचितं यन्त्रं सर्वैश्वर्यप्रदायकम्। क्लृप्तं मरकते यन्त्रं सर्वशत्रुविनाशनम्।। ४।।
लोहत्रयोद्भवं यन्त्रं सर्वसिद्धिकरं मतम्। इति।।

देव्युवाच—

लोहत्रयोद्भवं यन्त्रं कथं कार्यं महेश्वर। तन्मे वदस्व कृपया[२] यद्यहं तव वल्लभा।। १।।

ईश्वर उवाच—

भागा दश सुवर्णस्य रजतस्य च षोडश। ताम्रस्य रविभागेन पीठं कुर्यान्मनोहरम्।। १।।
तस्मिन् पीठे तु निर्माणं श्रीचक्रस्य तु कारयेत्। शान्तिदं पुष्टिदं प्रोक्तं सर्वशत्रुनिवर्हणम्।। २।।
आयुरारोग्यजनकं कान्तिदं पुष्टिदं मतम्।। इति।

अथ चक्रस्य प्रस्तारभेदेन त्रैविध्यं च तत्रैव—

---

१. 'ताम्रे तु' क. पाठः। २. 'वदस्व कृपया देव' ग. पाठः।

त्रैविध्यं तस्य चक्रस्य भूप्रस्तारोऽर्धमेरुकम्। पातालवासिनां देवि प्रस्तारो निम्नरेखकः[१]।। १।।
ऊर्ध्वरेखो महेशानि मर्त्यलोकनिवासिनाम्। स्वर्गलोकादिवासानां यन्त्रराण्मेरुसंज्ञकः।। २।।
भूपुरं तु समारभ्य बैन्दवान्तं महेश्वरि। क्रमात्समुन्नतं सर्वं मेरुरूपं मयोदितम्।। ३।।
समोर्ध्वरेखा[२]नवकमूर्ध्वरेखं प्रकीर्तितम्। निम्नरेखासमायोगाद्भूप्रस्तारो मयोदितः।। ४।।
यन्त्रराजस्वरूपं ते मया स्नेहात् प्रकाशितम्। गोपितव्यं त्वया भद्रे स्वगुह्यमिव सन्ततम्।।५।। इति।

अथैतत्प्रस्तारत्रयस्य फलानि प्रस्तारान्तरं च श्रीतन्त्रराजे—

चतुरस्रं समारभ्य नवचक्राण्यनुक्रमात्। उन्नतोन्नतमामध्याच्चक्रं स्यान्निधनं धनम्।। १।।
सिद्धि[३]क्रमादुन्नतं तदप्रजत्वं श्रियं लभेत्। एकद्विषट्क्रमोन्नामं श्रियै कीर्त्यै च कल्पते[४]।। २।।
नवानि समरूपाणि सर्वाभीष्टार्थसिद्धये।। इति।

तथा कुलमूलावतारे—

उच्छ्रितं क्रमशो देवि वित्तप्राप्तिस्ततो मृतिः। भूचक्रं षोडशारं चाप्यष्टारं च समं भवेत्।। १।।
शेषमुन्नतमीशानि चार्थाप्त्यप्रजदं भवेत्। चतुरस्रं समं देवि षोडशारादिबिन्दुकम्।। २।।
मिथः समुन्नतं देवि श्रियै कीर्त्यै च कल्पते[६]। चतुरस्रं समारभ्य बिन्द्वन्तं समरेखकम्।। ३।।
तथा श्रीः कीर्तिरारोग्यममृतायोपकल्पते।। इति।

अथ श्रीचक्राधिकरणे निषिद्धधातूनन्यानि निषिद्धाधिकरणानि चाह तन्त्रराजे—

सीसकांस्यादिषु पुनः पूर्वोक्तविपरीतकृत्। फलकायां पटे भित्तौ स्थापयेन्न कदाचन।। १।।
स्थापितं यदि मोहेन लोभेनाज्ञानतोऽपि वा। कुलं वित्तमपत्यं च निर्मूलयति सर्वदा।। २।।इति।

कुलमूलावतारे—

अग्निरङ्गुलविस्तारं प्राक्प्रत्यग्दक्षिणोत्तरम्। पलप्रमाणं कर्तव्यमर्चापीठं मनोहरम्।। १।।
यवार्धोच्चं प्रकुर्वीत चतुरस्रं समन्ततः। तस्मिन् पीठे च निर्माणं श्रीचक्रस्य तु कारयेत्।। २।।

इति। सौत्रामणीतन्त्रे—

ऋजुरेखा भवेल्लक्ष्मीर्वक्ररेखा दरिद्रता। अग्निरङ्गुलविस्तारो यवार्धेनोच्छितिर्भवेत्।। १।। इति।।

लक्षसागरे— "अग्निरङ्गुलि हेमस्य" (?) इत्यादि प्रागुक्तश्रीचक्रनिर्माणप्रस्तावे सृष्ट्यादिप्रपञ्चो न प्रपञ्चितोऽधुना विशेषमाह उत्तरतन्त्रे—

सृष्टिक्रमेण पूजा हि सृष्टिचक्रेऽभिधीयते। स्थितिक्रमेण पूजा स्यात् स्थितिचक्रे महेश्वरि।। १।।
संहारक्रमयोगेन पूजा संहारचक्रके। इति।

अथ श्रीचक्रं त्रिविधं सृष्टिस्थितिसंहारभेदात्। तदुक्तं मातृकासर्वस्वे—

श्रीचक्रं त्रिविधं प्रोक्तं सृष्टिस्थितिलयात्मकम्। प्रत्येकं त्रिविधं ज्ञेयं तत्साङ्कर्यात् प्रयत्नतः।। १।।
मूलभेदा नवैव स्युस्तत्त[७]द्भेदा ह्यनेकधा।।

---

१. 'रोर्ध्व' क. पाठः। २. 'कम्' क. पाठः। ३. 'खं' क. ग. पाठः। ४. 'त्रित्रि' ग. पाठः। ५. 'कल्प्यते' क. पाठः। ६. 'कल्प्यते' ख. पाठः। ७. 'तत्प्रभेदा' क. पाठः।

अत्र सृष्टिसृष्ट्यात्मकं स्थितिस्थित्यात्मकं लयलयात्मकं चेति त्रिविधम्। सृष्टिस्थित्यात्मकं स्थितिसृष्ट्यात्मकं सृष्टिलयात्मकं लयसृष्ट्यात्मकं स्थितिलयात्मकं लयस्थित्यात्मकम्, एते नव भेदाः। एवं सर्वे द्वादश भेदाः। अथ विवेकस्तु तत्रैव—

सृष्टिचक्रं समाख्यातं नवचक्राण्यनुक्रमात्। उन्नतोन्नतमामध्यं विज्ञेयं देशिकोत्तमैः॥ १॥
श्रीचक्रं सृष्टिसृष्ट्याख्यं प्रतिरेखं ततोऽन्नतम्[1]। समोर्ध्वरेखानवकं समे पीठे च यद्भवेत्॥ २॥
स्थितिचक्रं तदेवोक्तं स्थूलरेखं महेश्वरि। सूक्ष्मरेखं भवेत्तत्र स्थितिस्थित्यात्मकं शिवे॥ ३॥
लयात्मकं निम्नरेखं स्थूलं लयलयात्मकम्।

सूक्ष्मं पातालरेखं लयात्मकं, स्थूले पातालरेखं लयलयात्मकमित्यर्थः। ''सृष्टिस्थित्यात्मकं चे''ति सृष्टिस्थित्यात्मकं त्वित्यर्थः।

अर्धमेर्वात्मकं यन्त्रं द्विधा ख्यातं महेश्वरि। अर्धं क्रमादुन्नतं यच्चतुरस्रादितस्ततः॥ १॥
तदूर्ध्वं समरेखं स्यात्सृष्टिस्थित्यात्मकं शिवे। वैपरीत्येन चैतस्य स्थितिसृष्ट्यात्मता भवेत्॥ २॥
चतुरस्रं समारभ्य चक्रत्रयमपीश्वरि। क्रमोन्नतं तदूर्ध्वं तु समं स्यान्निम्नरेखकम्॥ ३॥
सृष्टिसंहाररूपं स्याद्वैपरीत्येन तस्य तु। लयसृष्ट्यात्मकत्वं तु प्रोक्तं ज्ञेयं मनीषिभिः॥ ४॥
अर्धं पातालरेखं तु तदूर्ध्वं चोर्ध्वरेखकम्। लयस्थित्यात्मकं प्रोक्तं वैपरीत्येन तस्य तु॥ ५॥
स्थितिसंहाररूपं तु विज्ञेयं देशिकोत्तमैः। स्थितिस्थित्यात्मकं चक्रं प्रशस्तं गृहमेधिनाम्॥ ६॥
आयुःकीर्तिधनारोग्यपुत्रपौत्रविवर्धनम्। सृष्टिस्थित्यात्मकं चक्रमप्रजत्वं श्रियं लभेत्॥ ७॥
पञ्चाशद्वर्षतश्चोर्ध्वं पुत्रपौत्रप्रदं भवेत्। स्थितिसृष्ट्यात्मकं यन्त्रं पुत्रायुर्धनवृद्धिदम्॥ ८॥
पञ्चाशद्वर्षतश्चोर्ध्वमपत्यध्वंसकृद्भवेत्। अन्ये प्रोक्तास्तु ये भेदाः श्रीचक्रस्य महेश्वरि॥ ९॥
यतिवैखानसानां तु विशेषो वर्णिनामिति।

उत्तरतन्त्रे —

कूर्मपृष्ठे[2] तु यद्यन्त्रं न पूज्यं श्रेय इच्छता। तस्मात् सर्वप्रयत्नेन परीक्ष्यैव समाचरेत्॥ १॥
सृष्टिचक्रे महेशानि पूजा सृष्ट्यन्तता भवेत्। स्थितिचक्रे तु स्थित्यन्ता संहारे तु लयान्तता॥ २॥
गुरुपारम्पर्यतो वा पितृभ्रातृक्रमाच्च वा। प्राप्तं श्रीगुरुणा दत्तं गुरुज्येष्ठकनिष्ठकैः॥ ३॥
दत्तं भाग्यवशाद् देवि लभ्यते यदि साधकः। पूजां तत्र प्रकुर्वीत स्थित्यन्तां परमेश्वरि॥ ४॥
दुष्टयन्त्रमपि प्रोक्तं फलदं नान्यथा शिवे। इति।

पितृपितामहक्रमतो गुरुपारम्पर्यक्रमतश्च कालवशाद्भाग्यवशाद् दुष्टयन्त्रं प्राप्यते चेत्तस्मिन् यन्त्रे पूजा तु प्रथमतः संहारक्रमेण ततः सृष्टिक्रमेण ततः स्थितिक्रमेण विधेया, शुभफलदं भवतीत्यर्थः॥

अथ दीक्षापूर्णाभिषेकाङ्गकुण्डमण्डपविधिः। दीक्षाङ्गभूतमण्डपरचनार्थं प्राचीपरिज्ञानस्यावश्यकत्वात् तत्परिज्ञानप्रकारः प्रदर्श्यते। तत्र दिव्यसारस्वततन्त्रे—

निर्मले दिवसे वृक्षप्रासादादिविवर्जिते। स्थाने समतले श्लक्ष्णं कृत्वा हंसपदं सुधीः॥ १॥

---

१. 'ततोन्नतम्' क. पाठः। २. 'ष्ठं' क. पाठः।

तदवष्टम्भतः कुर्याद् द्वादशाङ्गुलमानतः। वृत्तं तु परितो भ्रान्त्या तन्मध्ये स्थापयेद् बुधः।। २।।
सूच्यग्रं सरलं शङ्कुं वर्तुलं द्वादशाङ्गुलम्। षडङ्गुलपरीणाहमूलं शिल्पिवरेण तु।। ३।।
रचितं यत्नतस्तस्मिन् वृत्ते पूर्वापराह्णयोः। शङ्क्वग्रच्छायासम्पातस्थानयोश्चिह्नयुग्मकम्।। ४।।
कृत्वा चिह्नद्वय[१]प्राप्ति सूत्रं प्राक्प्रत्यगायतम्। दत्त्वा वृत्तायतार्धेन सूत्रेणेच्छाधिकेन वा।। ५।।
पूर्वपश्चिमयोर्वृत्तद्वयं श्लिष्टं परस्परम्। विधाय च तयोः सन्धिद्वयप्रापि प्रसारयेत्।। ६।।
मध्यचिह्नस्पृष्टमध्यं तत्सूत्रं दक्षिणोत्तरम्। एतस्यार्धांशमानेन कृत्वा कोणेषु लाञ्छनम्।। ७।।
तेषु सूत्राष्टकन्यासाच्चतुरस्रं समं भवेत्। इति।

अथैतद्रचनाप्रकारः— अत्र मेघाद्यनावृतसूर्ये निर्मलनभोमण्डले दिवसे वृक्षप्रासादाद्यनावृते भूप्रदेशे समे स्थाने क्व[२]चिद्बिन्दुं कृत्वा, तदवष्टम्भतः प्रतिदिशं द्वादशाङ्गुलमानेन वृत्तं निष्पाद्य, तत्र षडङ्गुलमानपरिणाहमूल-मुत्तरोत्तरपरिणाहापचयेन सूचीमात्रकृताग्रपरिणाहमृज्वाकृतिं द्वादशाङ्गुलोच्छ्रायोपेतं वृत्ताकारं शिल्पिवरेण निर्मितं शङ्कुं वृत्तमध्यस्थबिन्दु- मध्यशङ्कुमूलपरिणाहमध्यं यथा भवति तथा संस्थाप्य, तच्छङ्कुच्छायाग्रस्य पूर्वाह्णे तद्वृत्तरेखापश्चिमभागे यत्र सम्पातस्तत्र चिह्नं कृत्वा, अपराह्णेऽपि शङ्कुच्छायाग्रस्य तद्वृत्तरेखापूर्वभागे यत्र सम्पातो भवति तत्र च चिह्नं विधाय, तच्चिह्नद्वयप्रापि सूत्रं विधाय पूर्वपश्चिमं परिकल्प्य, तच्चिह्नद्वयावष्टम्भेन तच्चिह्नान्तरालस्थमानस्य स्वेष्टाधिकार्ध- मानेनान्योन्यं संश्लिष्टं पूर्वापरं वृत्तद्वयं विधाय, वृत्तरेखादक्षिणोत्तरसन्धिद्वयप्रापि प्राक्पश्चिमसूत्रमध्यगत्या तिर्यग्रूपेण यत्सूत्रं तद् दक्षिणोत्तरं परिकल्प्य पूर्वपश्चिमदक्षिणोत्तरसूत्रद्वयाग्रचतुष्कसम्पाताद्वक्ष्यमाणमानेन तुल्यरूपकल्पितसूत्राग्रैस्तेषां मण्डपकुण्डादीनां प्राक्प्रत्यग्दक्षिणोत्तरात्मकदिक्चतुष्टयं परिकल्पयेदिति स्थूलदृष्ट्या प्राचीसाधनविधिः प्रदर्शितः।। सूक्ष्मप्रकारस्तु तन्त्रान्तरे— "सुसमे भूतले कृत्वे"त्यारभ्योक्तप्रकारेण पूर्वदिनकृत्यमुक्त्वा,

दिनान्तरेऽपि देवेशि प्राग्वच्चिह्नद्वयं सुधीः। कृत्वा वृत्ते तु यत्र स्याच्छायायाः परमेश्वरि।। १।।
प्रवेशो निर्गमश्चैव तत्र पूर्वदिने यदा। प्रविष्टनिर्गता च्छाया यदा तन्मध्यनाडिकाः।। २।।
छायादिना तु विज्ञाय च्छायापगमचिह्नयोः। अन्तरं दिनयोरिष्टैश्चतुराद्यैर्विभागतः।। ३।।
विभज्य तत्र चिह्नानि कृत्वा ताभिः सुरेश्वरि। नाडीभिः कल्पिता भागा गुणनीयाः प्रयत्नतः।। ४।।
षष्ट्या हृतं तु लब्धांशैः पूर्वेद्युर्यत्कृतं भवेत्। प्राचीसूत्रं पूर्वभागे उत्तरे तूत्तरायणे।। ५।।
अयने दक्षिणे चैव दक्षिणस्यां दिशि ध्रुवम्। चाल्यते चेत् स्फुटा सा स्यात्प्राची तु परमेश्वरि।। ६।।

इति प्राचीसाधनं विधाय,

व्यासद्विगुणरज्ज्वान्तौ पाशौ कृत्वाङ्कयेदिमाम्। व्यासार्धमाने शङ्क्वर्धं सार्धेऽस्मिन् कर्षणाय च।। १।।
प्राच्यन्तशङ्कोस्तत्पाशौ कृत्वा चाकर्षकर्षणे। शङ्क्वङ्केऽर्वाक्श्रोणिरेवमुद्ग्व्यत्यस्य चांसकौ।। २।।

इति शिल्पिशास्त्रोक्तरीत्या मण्डपक्षेत्रमुद्दिष्टमानादधिकविस्तारायामसमचतुरस्रं कल्पयेत्।। अस्यार्थः— कुण्डमण्डपादेर्व्यासो यावानिष्टस्तावद्द्विगुणरज्जुमुभयतः पाशं कृत्वा, तामेकतः पाशाद् व्यासार्धमात्रे शङ्क्वर्धे चिह्नयेत्। ततः शङ्क्वङ्कादग्रतो व्यासार्धमानेन चिह्नापकर्षणतः कुण्डमण्डपादौ प्राचीसूत्रं प्रमाणेन दत्त्वा, तदन्तयोः शङ्कुं

---

१. 'यं' क. पाठः। २. 'किञ्चित्' क. पाठः।

निखन्य, तयोस्तद्रज्जुपाशौ कुर्याद्यथा व्यासार्धदङ्के यतः कृतः स पाशः प्रतीच्यां स्यात् कर्षचिह्नदक्षिणत आकृष्य व्यासार्धचिह्ने दक्षिणश्रोणिशङ्कुं दत्वा तस्यैवोत्तरदिक्श्रोण्यां च शङ्कुं दद्यात्। ततः पाशौ व्यत्यस्यैवमंसौ साध्याविति। एवं समचतुरस्रं क्षेत्रं कृत्वा बाहुमात्रोदिष्टमानाभ्यधिकां चतुरस्रां भुवं बाहुमात्रखननादिस्तुषाङ्गारादिलोष्ठादिकं निरस्य शुद्धमृद्भिरापूर्य दृढीकृत्य,

कीलेनैकीकृते मूले पृथक्सूक्ष्मसमाग्रयोः। दण्डयोरग्रनैकट्येऽन्यस्तिर्यङ्मध्यचिह्नतः॥ १॥
कीलादिना योजनीये दण्डः समतया द्वयोः। मूलदेशे लम्बसूत्रमस्पृशन्द्धारवद्धुवम्॥ २॥
भूस्थेऽग्रयुग्मे मध्याङ्कात् तिर्यग्दण्डगताद्यतः। स्खलेत्तत्पूरयेदन्यन्निम्नयेद्वापि युक्तितः॥ ३॥
अङ्के यावत् सूत्रमेति भूरेवं समतां व्रजेत्। इति।

अयमर्थः[1]:— समस्थौल्यदीर्घरज्ज्वोः कीलेन प्रोतमूलयोर्दण्डयोरग्रनिकटे तादृशं तिर्यगदण्डं तदर्धदीर्घे कीलेन योजयित्वा तन्मध्ये चिह्नं कृत्वा दण्डत्रयेण दीर्घत्रिकोणाकारं विधाय, दीर्घदण्डयोर्मूलाल्लम्बमानं सूत्रमग्रे लघुपाषाणादिबद्धं तिर्यगदण्डस्य मध्यचिह्नोपरि भूमिं यथा न स्पृशति तथा विधाय भूमिं स्पृष्ट्वाग्रयोस्तयोर्मूलं धृत्वा शनैराकृष्टे तिर्यग्दण्ड-मध्याङ्काद्यत्र सूत्रं चलति तत्र निम्ना भूस्तां पूरयेत्। अन्यत्र खनित्वा वा यथा मध्यचिह्ने सूत्रमेति तथा सर्वत्र कुर्यादिति शिल्पिशास्त्रोक्तप्रकारेण[2] भूमिं समीकृत्य तत्रोत्तममध्यमकनिष्ठाद्यन्यतमं मण्डपं कुर्यात्॥ मण्डपलक्षणं तु तन्त्रान्तरे—

राज्ञां होमाभिषेकेषु दीक्षादानव्रतादिषु[3]। भानोर्गत्या दिशो ज्ञात्वा पुण्याहं वाचयेत् सुधीः॥ १॥
ततः पञ्चनिनादेन मण्डपं रचयेच्छुभम्। ज्येष्ठमध्याधमत्वेन तन्मानं त्रिविधं मतम्॥ २॥
षोडशाष्टादशमितैर्हस्तैर्मानमिहोत्तमम्। हस्तैर्विंशतिभिः केचिन्मानमुत्तममूचिरे॥ ३॥
मध्यमं द्वादशकरैश्चतुर्दशकरैर्मितम्। अधमं दशभिर्हस्तैर्मितमाहुर्मनीषिणः॥ ४॥
केचित्तु नवभिस्तद्वत् सप्तभिर्वाथ पञ्चभिः। हस्तैर्मितं वदन्त्येवं विस्तारायामसंयुतम्॥ ५॥
स्तम्भैः षोडशभिर्युक्तं चतुर्द्वारं सुशोभनम्। दिक्षु द्वाराणि चत्वारि साष्टाङ्गुलकरद्वयात्॥ ६॥
साध्याङ्गुलकरद्वन्द्वाद्विदधीत करद्वयात्। ततो मण्डपसूत्रं तु त्रिगुणं परिकल्पयेत्॥ ७॥
पूर्वादिषु[4] क्रमात्तस्य मध्यभागस्तु वेदिका। इष्टकाभिर्मृदा वा सा कार्या दर्पणसन्निभा॥ ८॥
वेदीकोणेषु विन्यस्याः स्तम्भा देवस्वरूपकाः। ते चोत्तमे तदर्धोच्चा मध्यमाधमयोः पुनः॥ ९॥
अष्टहस्तोन्नतिभृतस्ततो द्वादश शोभनाः। ऋजवः पञ्चहस्तास्ते सशिखास्तु समन्ततः॥ १०॥
चतुष्कोणेषु चत्वारश्चाष्टौ ते सूत्रकोटिषु। समान्तरालाः सर्वे ते स्थाप्याः षोडश देशिकैः॥ ११॥
पञ्चमां[5]शोन्मितांस्तांश्च निखनेद् भुवि देशिकः। मध्यस्तम्भचतुष्काग्रादेकीभूताग्रकं पुनः॥ १२॥
कृत्वा काष्ठचतुष्कं तु तदग्रे कलशं शुभम्। शोभितं कलशेनाथ मुखस्थेन सुदारुजम्॥ १३॥
निर्मितं शिल्पिभिः सम्यक्स्थापयेद् देशिकोत्तमः। आच्छादयेत्ततो वंशैः कटैः[6]करदलैश्च तम्॥ १४॥
मण्डपद्वारबाह्ये च युग्मं युग्मं दिशां क्रमात्। अश्वत्थोदुम्बरप्लक्षवटोत्थं तोरणं न्यसेत्॥ १५॥
सप्तषट्पञ्चककरं निखनेद्भुवि पूर्ववत्। विशालता च तस्याथ दशभिस्त्वङ्गुलैर्मता॥ १६॥

१.'अस्यार्थः' क.पाठः। २.'प्रमाणेन' क.पाठः। ३.'प्रसादि' क. पाठः। ४. 'दिप्रक्रमा' क. पाठः ५. 'पञ्चविंशो' क. पाठः। ६. 'कटः' क. पाठः।

पञ्चाङ्गुल[1]मितस्थौल्यं विषमं चतुरस्रकम्। मध्यभागे तोरणयोस्तिर्यक् काष्ठं प्रविन्यसेत्।। १७।।
सार्धहस्तद्वयात् (पाद) हस्तयुग्घस्तयुग्मतः। अग्निमीळीति मन्त्रेण विन्यसेत्पूर्वतोरणम्।। १८।।
इषे त्वेत्यादिमन्त्रेण दक्षिणं तोरणं न्यसेत्। अग्न आयेति मन्त्रेण पश्चिमस्य निवेशनम्।। १९।।
शन्नो देवीति मन्त्रेण दद्यादुत्तरतोरणम्। ऊर्ध्वे ध्वजं च बध्नीयात् घण्टाचामरभूषितम्।। २०।।
पञ्चहस्तो ध्वजः प्रोक्तो दण्डस्तु दशहस्तकः। ततस्तु लोकपालानां पताका बाहुसम्मिताः।। २१।।
द्वादशाङ्गुलवितारास्तत्तन्मूर्त्या च लाञ्छिताः। पीतारक्तश्यामधूम्राश्वेतधूम्रासितार्जुनाः।। २२।।
आयुधाङ्काः पताकाः स्युः पुष्पगन्धसमन्विताः। यथायोग्यं दण्डयुतास्तत्तन्मन्त्रेण तान्न्यसेत्।।२३।।
चन्द्रमण्डलगौरेण वितानेन विभूषितम्। दुकूलवेष्टितस्तम्भं नानादीपाद्यलङ्कृतम्।। २४।।
आम्रपल्लवमालाभिः शोभितं द्वारमुत्तमम्। वेष्टितं दर्भरज्ज्वा च विदध्यान्मण्डपं शुभम्।। २५।।

इति।। उत्तरतन्त्रे—

विंशत्यूर्ध्वशतैर्हस्तैर्मण्डपश्चोत्तमो मतः। अष्टोत्तरशतैर्हस्तैः शत[2]हस्तैरथापि वा।। १।।
एकाशीतिमितैर्हस्तैर्द्वासप्ततिकरैरपि। षष्टिहस्तैरष्टचत्वारिंशद्भिर्हस्तकैः क्रमात्।। २।।
षट्त्रिंशद्भिश्च त्रिंशद्भिः सप्तविंशतिहस्तकैः। चतुर्विंशतिहस्तैर्वा मण्डपं कारयेद् बुधः।। ३।।
चतुरस्रं तथा वृत्तं षट्कोणं चाष्टकोणकम्। त्रिकोणमष्टपत्राभं नवकोणं द्विकोणकम्।। ४।।
पञ्चकोणं सप्तकोणं रुद्रकोणं तथैव च। द्वादशं षोडशं चाष्टादशविंशतिकोणकम्।। ५।।
चतुर्विंशतिकोणं च सप्तविंशतिकोणकम्। द्वात्रिंशत्कोणकं चैव षट्त्रिंशत्कोणकं तथा।। ६।।
अष्टत्वारिंशदस्रं मत्स्याकारो ध्वजाकृतिः। शूर्पकुन्तासिशृङ्गाटधनुर्मद्दरकाकृतिः।। ७।।
मण्डपास्तत्र कर्तव्याः कुण्डान्यपि विशेषतः। पूर्णाभिषेके दीक्षायामभिषेकादिशान्तिषु।। ८।।
तत्तत्काम्यप्रयोगेषु तत्तत्कुण्डानि देशिकैः। कर्तव्यानि विशेषेण तत्तत्कर्मण्यतन्द्रितैः।। ९।। इति।

अत्र यावन्तो मण्डपभेदा उक्तास्तावन्तः कुण्डभेदा अपि ज्ञेयाः।। अथैतन्मण्डपरचनाप्रकारः—अत्र पूर्णाभिषेकादिषु चतुर्विंशतिहस्तपरिमिताः कुण्डमण्डपा ये उक्तास्ते कर्तव्याः। चतुर्विंशतिविंशति–अष्टादशषोडशहस्तैर्वोत्तमो मण्डपः चतुर्धा। चतुर्दशहस्तैर्द्वादशहस्तैर्वा मध्यमो द्विविधः। दशहस्तैर्नवहस्तैः सप्तहस्तैः पञ्चहस्तैश्च समायामविस्तारैश्च कनिष्ठश्चतुर्विधः। अत्र पक्षे त्रिविधे यथावकाशं ऋत्विक्सदस्यसामाजिकाद्युपवेशादेः सौकर्ययुक्तं मण्डपं कुर्यात्।। हस्तस्तु चतुर्विंशाङ्गुलदैर्घ्यः। अङ्गुलमानं तु महाकपिलपञ्चरात्रे—

वातायनपथं प्राप्य ये भान्ति रविरश्मयः। तेषु सूक्ष्मा विसर्पन्ते रेणुका[3]स्त्रसरेणवः।। १।।
परमाणोरष्टगुणस्त्रसरेणुरुदाहृतः । तेऽष्टौ केशाह्वयास्तेऽष्टौ लिक्षा यूकास्तदष्टकम्।। २।।
तदष्टकं यवस्तेऽष्टावङ्गुलिः समुदाहृता। सा तूत्तमाङ्गुलिः सप्तयवा सैव तु मध्यमा।। ३।।
षट्यवा साधमा प्रोक्ता मानाङ्गुलमितीरितम्। विन्यस्तैस्तिर्यगष्टाभिर्यवैर्मानान्तराङ्गुलम्।। ४।।
शालिभिर्वा ऋजुन्यस्तैस्त्रिभिर्मानान्तरं भवेत्। आचार्यदक्षिणकरे मध्यमाङ्गुलिमध्यगम्।। ५।।

---

१. 'लार्पित' ग. पाठः। २. 'शतैर्ह' ग. पाठः। ३. 'नवः' क. पाठः।

पर्वणोरन्तरं दीर्घं मानाङ्गुलमुदाहृतम्। विनाङ्गुष्ठेन शेषाभिर्मुष्टिमङ्गुलिभिः कृतम्॥ ६॥
चतुर्धा विभजेदेको भागो मुष्ट्यङ्गुलः स्मृतः। यं कश्चित्पौरुषायामं विभज्य दशधा पुनः॥ ७॥
एकं द्वादशधा भागं कृत्वा तेष्वेकमङ्गुलम्। देहलब्धाङ्गुलं नाम जानीयात् तस्य तत्पुनः॥८॥
उच्छ्रायः प्रतिमायाः स्यान्महामानाङ्गुलाश्रयः। महामानाङ्गुलिरिति मात्राङ्गुलिरिहोच्यते॥ ९॥
प्रासादादींश्च तेनैव कुर्यान्मानान्तरेण वै। वेदिकापीठशिविकारथादीनां विधिः पुनः॥ १०॥
मानान्तराङ्गुलेनैव भवेन्नान्येन केनचित्। यागोपकरणानां[1] च कुर्यान्मानाङ्गुलेन वै॥ ११॥
होमाङ्गादिस्रुवादीनि कुण्डं मुष्ट्यङ्गुलाश्रयम्। देहलब्धाङ्गुलेनैव प्रतिमाङ्गानि कल्पयेत्॥ १२॥
चतुर्विंशतिसंख्याभिर्हस्तस्त्वङ्गुलिभिर्भवेत्। इति॥

अत्राचार्यो यजमानः। "एतावदुक्तं यन्मानं यजमानस्य तद्भवे"दिति तन्त्रान्तरे, "कर्तुर्दक्षिणहस्तस्ये"ति शारदावचनात्॥ उत्तरतन्त्रे विशेषः —

नवैकादश कुण्डानि कुर्यादुत्तममण्डपे। चतुष्कुण्डी मध्यमे स्यात्कनिष्ठेऽप्येककुण्डकम्॥ १॥

इत्येवमुक्तप्रकारमात्राङ्गुलात्मकाङ्गुलादिर्भिर्हस्तादि परिकल्प्य प्रोक्तं मण्डपं कुर्यात्। तत्र प्रोक्तविधिना समीकृते भूतले पञ्चवाद्यघोषपुरःसरं ब्राह्मणैः स्वस्ति वाचयित्वा यथोद्दिष्टमानहस्तविस्तारं समचतुरस्रं कोणचतुष्टयनिखातशङ्कुचतुष्टयं विधाय पूर्वापरायतं दक्षिणोरायतं च मध्यसूत्रं दूरीकृत्य, तच्चतुरस्रक्षेत्रं पुनर्नवधा विभज्य परितः कोणचतुष्टये स्तम्भचतुष्टयं दिक्चतुष्टयगतपूर्वापरायतदक्षिणोत्तरायतचतुष्ककोट्यष्टकगतस्तम्भाष्टकमिति सम्भूय द्वादश स्तम्भानतिस्थूलान्नातिकृशानवक्रानव्रणानेकजातीयान् सुवृत्तान् पञ्चहस्तसमुच्छ्रायान् खातप्रविष्टस्वस्वपञ्चमांशान् प्रमाणाद्बहिर्हस्तस्थौल्यतृतीयांशान् स्थूलवितस्त्युन्नतिशिखायुक्तान् मध्यविभक्ते कोणचतुष्टये स्तम्भचतुष्टयं पूर्वस्तम्भसजातीयं पूर्वतः[2] किञ्चित्स्थूलमुत्तममण्डपे तन्मानस्यार्धमानोच्चमन्यमण्डपेऽष्टहस्तोच्चं पूर्ववत् सशिखं पञ्चमांशेन प्रविष्टभूतलमिति सम्भूय षोडश स्तम्भान्निखाय, तेषामुपरि सजातीयानि ऋजून्यव्रणानि शिखाप्रवेशयोग्यवेधयुक्तकोटिद्वयवत्[3] तिर्यक्काष्ठानि शिल्पिभिः परिकल्पितानि द्वादशस्तम्भाग्रेषु मध्यस्तम्भचतुष्टयाग्रेषु च चतुरस्राकारेण समारोप्य, मध्यस्तम्भचतुष्टय-शिखाग्रप्रविष्टमूलवेधयुक्तमेकीकृताग्रकाष्ठचतुष्टयनिविष्टसजातीयकाष्ठकलशं कमलाकृतिशोभिताग्रं दिग्विदिक्स्थ-द्वादशस्तम्भशिखाग्रपोतमूलमध्यस्तम्भचतुष्टयाग्रस्पृष्टाग्रमध्यतिर्यक्काष्ठचतुष्टयमध्यगताग्रम् ऋज्वाकृति यथा-योग्यदीर्घस्थौल्ययुतप्रसारितद्वादशकाष्ठयुतमन्यैरपि काष्ठैर्यथायोग्यं दृढीकृतं नारिकेलदलैर्वंशकटैर्वा सम्यगाच्छादितं तैरेव निःशेषपिहितकोणचतुष्टयं चुतर्दिक्षूत्तममध्यमकनिष्ठेषु साष्टाङ्गुलहस्तद्वय-सचतुरङ्गुलहस्तद्वय-द्विहस्तविस्तारयुतशाखद्वारचतुष्टयोपेतं मण्डपं विरच्य, मण्डपस्य पूर्वद्वाराद्बहिर्हस्तमात्रं परित्यज्याश्वत्थवृक्षस्योत्तम-मध्यमकनिष्ठेषु सप्तषट्पञ्चहस्तोच्छ्रितं दशाङ्गुलविस्तृतं पञ्चाङ्गुस्थूलविस्तारस्य दशाङ्गुलत्वात् स्थौल्यस्य पञ्चाङ्गुलत्वाद् वैषम्यं बोद्धव्यम्। विषमचतुरस्रं प्रमाणातिरिक्तवितस्त्युन्नतशिखं द्वारस्योभयपार्श्वयोरुत्तममध्यमकनिष्ठेषु सार्धहस्तद्वयसपादहस्तद्वय-हस्तद्वयान्तरालं यथापूर्वं पञ्चमांशेन प्रविष्टभूतलफलकद्वयं "अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्" इति मन्त्रेण निखाय, तत्सजातीयकाष्ठेन समानविस्तारस्थौल्यं विषमचतुरस्रं

१. 'योगो' ग. पाठः। २. 'पूर्ववत्' ग. पाठः। ३. 'द्वयवृत्तीनि' ग. पाठः।

कोटिद्वयेऽपि शिखाप्रवेशयोग्यवेधयुतं तिर्यक्तिर्यक्फलकं समारोप्य, दर्भमालां च बध्नीयात्। एवं दक्षिणद्वार उदुम्बरतरुमयं तोरणं "इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे।।" इति मन्त्रेण न्यसेत्। ततः पश्चिमद्वारे प्लक्षमयं तोरणं प्राग्वन्निर्मितं "अग्न आ याहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि" इति मन्त्रेण न्यसेत्। ततः उत्तरद्वारे वटवृक्षमयं तोरणं प्राग्वन्निर्मितं "शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः" इति न्यसेत्। ततस्तेषामुपरिगततिर्यक्फलकेषु मध्यतः सुषिरं विधाय, तेषु तोरणसजातीयकाष्ठेन निर्मितमुत्तममध्यमकनिष्ठेषु त्रयोदशैकादशनवाङ्गुलमात्रदैर्घ्यं तच्चतुर्थांशविस्तारं, शैवे त्रिशूलाकारं, वैष्णवे चक्राकारं, तोरणोपरिगततिर्यक्फलकस्य द्वादशांशमात्रदीर्घं प्रागादिक्रमेण शङ्खचक्रगदापद्मलाञ्छितं प्रतितोरणमेकैकं कीलमारोपयेत्।।

तत्र त्रिशूलनिर्माणप्रकारस्तु पिङ्गलामते—

शूलेन निर्मिताः कुर्याद् द्वारशाखास्तु मस्तके। शूलं नवाङ्गुलं दैर्घ्यं तुरीयांशेन विस्तृतिः।। १ ।।
ऋजुर्वै मध्यशृङ्गः स्यात् किञ्चिद्वक्रं च पार्श्वयोः। हीने चैवं समाख्यातं द्व्यङ्गुलं रोपयेत्तथा।। २ ।।
शेषाणां द्व्यङ्गुला वृद्धिर्विंशश्चाङ्गुलवृद्धितः[1]। इति।

हीने कनिष्ठमण्डपे। शेषाणां मध्यमोत्तमानां विशः प्रवेशः।। वास्तुशास्त्रे—

मस्तके द्वादशांशेन शङ्खचक्रगदाम्बुजम्। प्रागादिक्रमयोगेन न्यसेत्तेषां स्वदारुजम्।। १ ।। इति।

द्वादशांशं तिर्यक्फलकस्य स्वदारुजं तत्तत्तोरणसजातीयकाष्ठसम्भवं, तेन कनिष्ठमण्डपे चतुरङ्गुलोच्चं, मध्यमे सार्धचतुरङ्गुलमुत्तमे पञ्चाङ्गुलमिति।। केचित्तु— "तत्र हस्तोन्मिताः कीलाः संस्थाप्या वैष्णवे तथा। शङ्खचक्रगदापद्मलाञ्छिताः, शूलसन्निभाः।। शैवे" इति तन्त्रान्तरवचनाद्धस्तमात्रं कीलं वदन्ति। तत्र तिर्यक्फलकेषु तदा तु हस्तमात्रेषु कीलेषूक्तमानेनैवाग्रदेशेषु शङ्खचक्राकारं वा त्रिशूलाकारं वा कार्यं बिलप्रवेशश्च तथैव कार्यः, उर्वरितं तु तेषां दण्डवद्दृश्यत इति। ततो मण्डपाग्रे दशहस्तदैर्घ्यवंशदण्डावलम्बितं हस्तमात्रविस्तृतं पञ्चहस्तदैर्घ्यं दातव्यम्। मन्त्रदेवता[2]वाहनमूर्त्यङ्कितघण्टादिभूषिताग्रं सुश्वेतं च तथैव तत्तद्दैवतवर्णानुरूपवर्णं वा ध्वजमारोप्य दशदिक्षु बाहुमात्रदीर्घा यथायोग्यमानदण्डावलम्बितास्तत्तल्लोकपालवर्णानुरूपवर्णास्तत्तल्लोकपालवाहनमूर्त्यङ्किताः द्वादशाङ्गुलविस्तृता लोकपालानां वेदोक्ततत्तन्मन्त्रेण पताकाश्च बध्नीयात्। तत्रेन्द्रस्य पीतवर्णा, वह्नेः पिङ्गलवर्णा, यमस्य कृष्णवर्णा, निर्ऋतेः श्यामवर्णा, वरुणस्य श्वेतवर्णा, वायोर्धूम्रवर्णाः, सोमस्यामलवर्णा, ईशानस्य श्वेतवर्णा, ब्रह्मणो रक्तवर्णा, अनन्तस्य श्वेतवर्णाः, इति पताकाभिरलङ्कृत्य, मण्डपाभ्यन्तरं सुश्वेतवितानपुष्पमालाभिरलङ्कृत्या-म्राश्वत्थदलग्रथितदर्भरज्जुरूपवन्दनमालया मण्डपमन्तर्बहिश्च परिवेष्ट्य, स्तम्भान् दुकूलेन संवेष्ट्य, तन्मध्यस्तम्भ-चतुष्टयमध्यगते चतुरस्ररूपे मध्यखण्डेऽपक्वेष्टकादिभिः स्निग्धमृद्भिर्वा चतुरस्रां दर्पणोदरनिभपार्श्वचतुष्टयमध्यप्रदेशां समतलां[3] वेद्यायामस्यैकादशांशेन नवमांशेन सप्तमांशेन पञ्चमांशेन चतुर्थांशेन तृतीयांशेन वा समुन्नतां हस्तमात्रोन्नतां वा वेदीं विदध्यात्। तदुक्तं तन्त्रान्तरे— "उच्छ्रायोऽस्या ईशनवसप्तेष्वब्धित्रिभागकै"रिति।। कपिलपञ्चरात्रे—

चतुर्थांशोच्छ्रितस्तस्यास्त्रिपञ्चसप्तमोऽपि वा। नवैकादशभागैस्तामिष्टकाभिः प्रकल्पयेत्।। १ ।। इति।

तन्त्रराजे— 'विदध्यान्मध्यतो वेदीं करमात्रसमुन्नताम्" इति। शारदायाम्—

१. 'द्विदः' क. पाठः। २. 'दैवता' क. पाठः। ३. 'तरां' क. पाठः।

नक्षत्रग्रहवाराणामनुकूले शुभेऽहनि। ततो भूमितले शुद्धे तुषाङ्गारविवर्जिते ॥ १॥
पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम्। पञ्चभिः सप्तभिर्हस्तैर्नवभिर्वा मितान्तरम्॥ २॥
षोडशस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः। अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशाभितः॥ ३॥
पञ्चहस्तप्रमाणास्ते निश्छिद्रा ऋजवः शुभाः। तत्पञ्चमांशं निखनेन्मेदिन्यां तन्त्रवित्तमः॥ ४॥
नारिकेलदलैर्वंशैश्छादयेत् तत्समन्ततः। द्वारेषु तोरणानि स्युः क्रमात् क्षीरमहीरुहाम्॥ ५॥
स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक्। दशाङ्गुलप्रमाणेन तत्परीणाह ईरितः॥ ६॥
तिर्यक्फलकमानं स्यात् स्तम्भानां मध्यमानतः[1]। शूलानि कल्पयेन्मध्ये तोरणे हस्तमानतः॥७॥
दिक्षु ध्वजान्निबध्नीयाल्लोकपालसमप्रभान्। वितानदर्भमालाद्यैरलङ्कुर्वीत मण्डपम्॥ ८॥
तत्त्रिभागमिते क्षेत्रेऽरत्निमात्रसमुन्नताम्। चतुरस्रां ततो वेदीं मण्डलाय प्रकल्पयेत्॥ ९॥

इति मण्डपनिर्माणविधिः॥ अत्र कनिष्ठमण्डपेषु दशहस्तमण्डपेऽपि मध्यत्र्यंशाधिकरायता देवी, कुण्डवेद्योरन्तरालमुभयतः पदद्वयमात्रं तद्बहिरुभयतः कण्ठमेखलासहितकुण्डद्वयव्याप्तभूमिश्चतुर्हस्तमिता, तद्बहिःपार्श्वद्वयेऽपि कुम्भस्थापनार्थं हस्तद्वयमिति समस्तमण्डपभूमिर्व्याप्ता। अतः परमाचार्यऋत्विक्सदस्याद्युपवेशनस्थानमपि न लभ्यते, इति नायं पक्षः समीचीनः। तस्मादयं पक्षस्त्वेकैककुण्डैकमेखलादिसङ्क्षेपचिकीर्षायामेतावता चारितार्थ्यात्तद्विषय इति ज्ञेयः। इत्थं मण्डपं विधाय तस्मिन् मण्डपे पूर्वाद्यष्टदिक्षु चतुरस्रयोन्यर्धचन्द्रत्रिकोणवृत्तषट्कोणपद्माष्टास्राख्यान्यष्टौ कुण्डानि कुर्यात्॥

तत्रादौ चतुरस्रकुण्डनिर्माणप्रकारमाह शारदायाम्—

प्राक्प्रोक्ते मण्डपे विद्वान् वेदिकाया बहिस्त्रिधा। क्षेत्रं विभज्य मध्येंऽशे[2] पूर्वादि परिकल्पयेत्॥१॥
अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमात्। चतुरस्रं योनिमर्धचन्द्रं त्र्यस्रं च वर्तुलम्॥ २॥
षडस्रं पङ्कजाकारमष्टास्रं तानि नामतः। आचार्यकुण्डं मध्ये स्याद् गौरीपतिमहेन्द्रयोः॥ ३॥
हस्तामान[3]मितां भूमिं पूर्ववत्परिसूत्रयेत्[4]। समन्तात् कुण्डमेतत् स्याच्चतुरस्रं शुभावहम्॥ ४॥
चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः। चतुरस्रीकृतं क्षेत्रं पञ्चधा विभजेत् सुधीः॥ ५॥
न्यसेत् पुरस्तादेकांशं कोणार्धार्धप्रमाणतः। भ्रामयेत् कोणमानेन तदान्यदपि मन्त्रवित्॥ ६॥
सूत्रयुग्मं ततो दद्यात् कुण्डं योनिनिभं भवेत्। चतुरस्रीकृतं क्षेत्रं दशधा विभजेत् पुनः[5]॥ ७॥
एकमेकं त्यजेदंशमध ऊर्ध्वं च तन्त्रवित्। ज्यासूत्रं पातयेदग्रे तन्मानाद्भ्रामयेत् ततः॥ ८॥
अर्धचन्द्रनिभं कुण्डं रमणीयमिदं भवेत्। चतुर्धा भेदिते क्षेत्रे न्यसेदुभयपार्श्वयोः॥ ९॥
एकैकमंशं तन्मानादग्रतो लाञ्छयेत्ततः। सूत्रत्रयमधः[6] कुर्यात् त्र्यक्षं कुण्डमुदाहृतम्॥ १०॥
अष्टादशांशे क्षेत्रेंऽशे[7] न्यसेदेकं बहिर्बुधः। भ्रामयेत्तेन मानेन वृत्तं कुण्डमनुत्तमम्॥ ११॥
अष्टधा विभजेत् क्षेत्रं मध्यसूत्रस्य पार्श्वयोः। भागं न्यसेदेकमेकं [8]मानेनानेन मध्यतः॥ १२॥

१. 'नामर्धमानतः' ख. पाठः। २. 'मध्यांशे' ख. पाठः। ३. 'मात्र' ख. पाठः। ४. 'परिकल्पयेत्' ख. पाठः।
५. 'सुधी' ग. पाठः। ६. 'सूत्रयुग्मं ततः' ख. पाठः। ७. 'त्रे च' ख. पाठः। ८. 'भागेना' ख. पाठः।

कुर्यात् पार्श्वयुगे मत्स्यचतुष्कं तन्त्रवित्तमः। सूत्रषट्कं ततो दद्यात् षडश्रं कुण्डमुत्तमम्॥ १३॥
चतुरस्रीकृतं क्षेत्रं विभज्याष्टादशांशतः। एकभागं बहिर्न्यस्य भ्रामयेत्तेन वर्तुलम्॥ १४॥
वृत्तादि कर्णिकादीनां बहिस्त्रीणि प्रकल्पयेत्। पद्मकुण्डमिदं प्रोक्तं विलोचनमनोहरम्॥ १५॥
पूर्वोक्तं विभजेत् क्षेत्रं चतुर्विंशतिभागतः। भागमेकं बहिर्न्यस्य चतुरस्रं प्रकल्पयेत्॥ १६॥
अंसयोश्चतुरश्रस्य[1] कोणार्धार्धप्रमाणतः। बाह्यस्य चतुरस्रस्य कोणाभ्यां परिलाञ्छयेत्॥ १७॥
दिशं प्रति यथान्यायमष्टौ सूत्राणि पातयेत्। अष्टाश्रं कुण्डमेतद्धि तन्त्रविद्भिरुदीरितम्।।१८। इति।

श्रीतन्त्रराजे– (२९ पृ० २३ श्लो०)

प्राक्प्रत्यक्सूत्रमास्फाल्य तन्मध्ये चिह्नकल्पनम्। कृत्वा तत्पूर्वतः पश्चाद्द्वादशाङ्गुलमानतः॥ १॥
ततस्तदग्रा[2]ण्यालम्ब्य मध्यचिह्नस्य मानतः। कुर्याद्धंसपदं कोष्ठान्यभितस्तेषु पातयेत्॥ २॥
परं प्रमृज्य तत्रापि विदध्याच्चिह्नयुग्मकम्। प्राक्प्रत्यक्चिह्नमानेन तयोरेवावलम्बतः॥ ३॥
दक्षिणोत्तरतो हंसपदे कृत्वा तयोस्ततः। प्रसार्य सूत्रं तस्यापि[3] मार्जयित्वोक्तमानतः॥ ४॥
चतुष्टयं तु सूत्राणां चतुरस्रं भवेत्समम्। इति।

अथैतत्कुण्डरचनाप्रकारः–तत्र वेद्याः पूर्वभागे मुष्ट्यङ्गुलमानेन हस्तमात्रां भुवं परित्यज्य, प्राक्कल्पितदिक्क्रमेण प्राक्प्रत्यगायतं सूत्रमास्फाल्य, तन्मध्ये चिह्नं कृत्वा तच्चिह्नात्पूर्वतः पश्चिमतश्च मुष्ट्यङ्गुलै[4]र्द्वादशमानेन चिह्नं कृत्वा, तत्तदधिकांशं मार्जयित्वा, तच्चिह्नद्वयावष्टम्भेन तत्सूत्रार्धात् किञ्चिदधिकमानभ्रमेण पूर्वापरतः किञ्चिदन्योन्यसंश्लिष्टं वृत्तद्वयं विधाय, तयोर्दक्षिणोत्तरसंदंशरूपहंसपदद्वयप्रापि प्राक्प्रत्यक्ब्रह्मसूत्रमध्यगतहंसपदभेदं दक्षिणोत्तरं सूत्रमास्फाल्य, तत्रापि मध्यचिह्नाद्द्वादशाङ्गुलमानेन दक्षिणोत्तरं चिह्नद्वयं विधाय तत्तदधिकांशं मार्जयित्वा, तत्सूत्राग्रचतुष्टयावलम्बेन द्वादशाङ्गुलमानेन चतुर्ष्वपि कोणेषु हंसपदं विधाय, तत्तदग्रात्तत्तद्धंसपदप्रापिप्राक्सूत्रद्वयं दक्षिणोत्तरं सूत्रद्वयं च सम्भूय सूत्रचतुष्टयमास्फाल्य चतुश्रं कुर्यात्। ततस्तत्प्राक्प्रत्यगायतब्रह्मसूत्रमाननिम्नं समचतुरस्रं तत्र खातं कृत्वा, तत्परितः कुण्डमानस्य चतुर्विंशांशमितां भुवं परित्यज्य, तद्बहिर्द्वादशाङ्गुलविस्तारां चतुरङ्गुलोत्सेधां मेखलां कृत्वा, तदुपरि बाह्ये परितश्चतुरङ्गुलमानं त्यक्त्वाष्टाङ्गुलविस्तारां चतुरङ्गुलोन्नतां द्वितीयां मेखलां कृत्वा, तदुपरि बाह्ये चतुरङ्गुलं त्यक्त्वा विस्तारोत्सेधाभ्यां चतुरङ्गुलमितां तृतीया मेखलां कुर्यात्। एवं कृते प्रथमा मेखला द्वादशाङ्गुलोन्नता चतुरङ्गुलविस्तृता, द्वितीयाष्टाङ्गुलोन्नता चतुरङ्गुलविस्तृता, तृतीया चतुरङ्गुलोन्नता चतुरङ्गुलविस्तृता च भवतीति। अत्र केचित्– प्रथमा मेखला चतुरङ्गुलविस्तृता नवाङ्गुलोन्नता, द्वितीया तु त्र्यङ्गुलविस्तृता पञ्चाङ्गुलोन्नता, तृतीया तु द्व्यङ्गुलविस्तृता द्व्यङ्गुलोन्नतेति मेखलामानमाहुः। एतन्मेखलया सह हस्तमात्रखातपक्षे ज्ञेयम्, तत्र पञ्चदशाङ्गुलनिम्नखातस्यैव विश्वकर्मणोक्तत्वात्, तदूर्ध्वे नवाङ्गुलोच्छ्रायस्यैवावश्यकत्वात्। हस्तमात्रखातपक्षे तु– "सर्वेषां मेखलामानं वितस्त्यष्टतदर्धकैः। विस्तारोत्सेधयोः कुर्यात्" इति तन्त्रराजवचनात्।

सत्त्वपूर्वकगुणान्विताः क्रमाद् द्वादशाष्टचतुरङ्गुलोच्छ्रिताः।
सर्वतोऽङ्गुलचतुष्कविस्तृता मेखलाः सकलसिद्धिदा मताः॥ १॥ (५–३३)

---

१. 'अंशयोः' ग. पाठः। 'अन्तस्थ' ख. पाठः। २. 'तदस्रा' क. पाठः। ३. 'तच्चापि' ख. पाठः। ४. 'ले द्वा' क. पाठः।

इति प्रपञ्चसारवचनाच्च पूर्वोक्त एव पक्षः समीचीन इति।। ततः सर्वबाह्यस्थमेखलाया बहिश्चतुरङ्गुलायामविस्तारोत्सेधं चतुरश्रं पीठं मृदा कृत्वा, तदुपरि निहितमूलद्वादशाङ्गुलदीर्घोत्तरोत्तरहीनपरिणाहमध्यमेखलासंलग्नरन्ध्रनालयुतां मूले कुम्भद्वययुक्तां मध्ये सगर्भामुपरितनमेखलोपरिगतामष्टाङ्गुलमानमूलां तत्प्रदेशादुभयपार्श्वतः क्रमेण सङ्कुचितामेकाङ्गुलविस्ताराग्रां द्वादशाङ्गुलमानायामामेकाङ्गुलोत्सेधमेखलायुक्तामश्वत्थपत्राकारां मूलात्किञ्चित् क्रमान्निम्नामीषत्कुण्डप्रविष्टाग्रां योनिं कुर्यात्। अथ कुण्डमध्यस्थहंसपदावलम्बेन प्रतिदिशं चतुरङ्गुलमानेन वृत्तं निष्पाद्य, तद्बहिः पुनः षडङ्गुलमानेन च वृत्तं कृत्वा तद्वृत्तं कर्णिकां च परिकल्प्य, वृत्तद्वयान्तरालवीथ्यामष्टदलानि कृत्वा षडङ्गुलोच्चनाभिं कुर्यात्।। इति चतुरस्रकुण्डनिर्माणविधिः।।

अथ योनिकुण्डमाह तन्त्रराजे—

तन्मध्यपञ्चमांशेन विकास्य ब्रह्मसूत्रकम्। पूर्वतः पश्चिमद्वन्द्वकोष्ठयोर्मध्यदेशतः ।। १।।
तत्कोणमानेन तथा भ्रामयेत्पश्चिमाग्रकात्। उत्तराग्रावधि तथा दक्षिणाग्रावधि प्रिये।। २।।
तन्मध्यतिर्यक्सूत्राग्रद्वयावष्टम्भतस्तथा । विकासितब्रह्मसूत्रावधि सूत्रद्वयं भवेत् ।। ३।।
योनिकुण्डमिदं भद्रे स्याच्चतुर्षूभयात्मसु। तस्मिन्नेवान्यकुण्डानि वदामि सम[1]मानतः।। ४।।
चतुरस्राभितो या तु त्याज्या भूः सान्यतः स्थिता। लभ्यते सर्वकुण्डेषु तेन सर्वाणि सर्वतः।। ५।।
तत्समान्येव जायन्ते षण्णवत्यङ्गुलात्मना।। इति।

अथैतत्कुण्डरचनाप्रकारः— तत्र प्राग्वत् चतुरस्रं निर्माय चतुष्कोष्ठयुतस्य ब्रह्मसूत्रस्य तन्मानपञ्चमांशेन पूर्वस्यां दिशि वर्द्धयित्वा तत्कोष्ठचतुष्टयात्मकचतुरस्रस्य पश्चिमभागस्थदक्षिणोत्तरकोष्ठयोर्निर्ऋत्यादीशानान्तमाग्नेयादिवायव्यान्तं चतुष्कोणसूत्रद्वयास्फालनेन लक्षितसूत्रद्वयसम्पातनविदितमध्यदेशावष्टम्भतस्तत्कोणावधिमानेनोत्तरकोष्ठे प्राक्प्रत्यग्ब्रह्मसूत्रपश्चिमाग्रादिदक्षिणोत्तरतिर्यक्सूत्रोत्तराग्रावधि तद्दक्षिणकोष्ठे तत्सूत्रपश्चिमाग्रादि तत्तिर्यक्सूत्रदक्षिणाग्रावधि भ्रमादर्धचन्द्रद्वयमुत्पाद्य, तन्मध्यतिर्यक्सूत्राग्रमारभ्य प्राक्प्रसारितब्रह्मसूत्राग्रावधि सूत्रद्वयास्फालनेन योन्याकारं क्षेत्रं परिकल्प्य, तद्बहिश्च कण्ठमेखलयोर्यथोक्तमानेनोक्तयुक्त्या योनिमण्डलद्वयं निष्पाद्य, प्राग्वत् खातं कृत्वा योन्याकारमेव कण्ठमेखलादि कल्पयेदिति ''कुण्डानां यादृशं रूपं मेखलानां च तादृशम्। कुर्यात्सर्वेषु कुण्डेषु'' इति कुलप्रकाशवचनात्।।

अथार्धचन्द्राकारकुण्डमाह तन्त्रराजे—

तन्मध्यदशमांशं तु परित्यज्याध ऊर्ध्वतः। शेषांशांशकमानेन तन्मध्याद् भ्रामयेत् तथा।। १।।
अर्धचन्द्रकृतिर्येन भवेत् कुण्डं तदीरितम्। इति।

अथैतत्कुण्डरचनाप्रकारः— तत्र प्राग्वत् चतुरस्रं निर्माय तद्विष्कम्भमानं दशधा विभज्य तेष्वेकैकांशं प्राक्पश्चिमयोः परित्यज्य चिह्नद्वयं कृत्वा, तत्पश्चिमचिह्नात् दक्षिणोत्तरायतं तिर्यक्सूत्रं तच्चतुरस्राद्बहिरप्यंशत्रयमानेन दक्षिणोत्तरयोर्वर्द्धयित्वा तदग्रद्वयावधि तत्कल्पितपश्चिमब्रह्मसूत्रसन्धिमध्यावलम्बनेन वार्धचन्द्रनिभं मण्डलद्वयं कृत्वा प्राग्रेखामध्यगतब्रह्मसूत्रसन्धिमारभ्याष्टांशमानसूत्रभ्रमादर्धचन्द्राकारं कुण्डं भवेत्। इत्यर्धचन्द्राकारं कुण्डं निर्माय तद्बहिरप्युक्तयुक्त्या एकाङ्गुलमानेन द्वादशाङ्गुलमानेन वार्धचन्द्रनिभं मण्डलद्वयं कृत्वा प्रथमकृतमण्डलमध्ये हस्तमात्रं निम्नं खातं कृत्वा बहिः कण्ठस्थानं परित्यज्य प्राग्वन्मेखलादिकं कुर्यादिति।।

---

१. 'तव' ख. पाठः।

अथ त्रिकोणकुण्डमाह तत्रैव—

तस्यैव[१] षष्ठमंशं तु पार्श्वयोस्तु विकासयेत्। प्रत्येकं पश्चिमं सूत्रं तन्मानेनाथ सूत्रयोः।। १।।

विन्यासाद्[२]ब्रह्मसूत्रान्तं तद्द्वयाग्रावलम्बनात्। कुण्डं त्रिकोणमुदितम्। इति।

अथैतत्कुण्डरचनाप्रकारः— तत्र प्राग्वच्चतुरस्रं कृत्वा तद्ब्रह्मसूत्रस्य प्रागग्रं बहिर्गत्या प्रसार्य तच्चतुरस्रविष्कम्भमानं षोढा विभज्य, तेष्वेकैकांशेन पश्चिमतिर्यक्सूत्राग्रद्वयं पार्श्वद्वयेऽपि बहिः प्रसार्य, तदग्रद्वयात् तत्सूत्रमानोपेतसूत्रद्वयस्य प्राक्प्रसारितब्रह्मसूत्रस्य च यत्र सम्पातस्तदवध्यास्फाल्य त्रिकोणकुण्डं परिकल्प्य, तद्बहिरेकांशमानेन तद्बहिर्द्वादशांश-मानेनोक्तयुक्त्या त्रिकोणद्वयं निष्पाद्य खातकण्ठमेखलादि प्राग्वत्कल्पयेदिति।।

अथ वृत्तकुण्डमाह तत्रैव—

तन्मध्याष्टादशशांशेन प्राक्सूत्राग्रं विकासयेत्। तिर्यक्सूत्राद्बहिस्तेन मानेन भ्रमयेत्तथा।। १।।

मध्यचिह्नावलम्बेन तद्भवेद्वृत्तमण्डलम्[३]। इति।

अथैतत्कुण्डरचनाप्रकारः— तत्र प्राग्वत् चतुरस्रं क्षेत्रं साधयित्वा, तन्मध्ये विष्कम्भमानमष्टादशधा विभज्य, तेष्वेकांशमानतश्चतुरस्राद्बहिर्ब्रह्मसूत्रस्थप्रागग्रं विस्तार्य[४], मध्यचिह्नमवलम्ब्य विस्तारितब्रह्मसूत्राग्रमानेन परितो भ्रमेण वृत्तं निष्पाद्य, तद्बहिः पुनश्चतुरस्रस्य चतुर्विंशमानेन कण्ठार्थं वृत्तं कृत्वा, तद्बहिः पुनर्द्वादशाङ्गुलमानेन वृत्तान्तरं निष्पाद्य, प्रथमकृतवृत्तमध्ये हस्तमात्रं निम्नं खातं कृत्वा कण्ठवृत्ताद्बहिर्द्वादशाङ्गुलान्तरालं वीथ्यां प्राग्वन्मेखलात्रयं योन्यादिकं रचयेदिति।। अत्र वृत्तकुण्डे योनिर्नास्तीति कश्चित्[५], तन्न योनिकुण्डे योनिः, पद्मकुण्डे नाभिश्च नास्तीति तान्त्रिकसिद्धान्तः।।

अथ षडस्रकुण्डमाह तत्रैव—

तन्मध्यषोडशांशेन विकास्य ब्रह्मसूत्रकम्। तेन मानेन च तथा कृत्वा वृत्तमतिस्फुटम्।। १।।

तद्वृत्ते वृत्तमध्यस्य कुर्यादर्धेन लाञ्छनम्। तत्र षट्सूत्रपातेन भवेत् कुण्डं षडस्रकम्।। २।।

इति।। अथैतत्कुण्डरचनाप्रकारः— तत्र प्राग्वच्चतुरस्रं विधाय, तन्मध्यामानं षोडशधा विभज्य, तेष्वेकांशमानेन ब्रह्मसूत्रस्य प्रागग्रं विकाश्य, तन्मानेन चतुरस्रमध्यस्थहंसपदमध्यावलम्बेन भ्रमाद्वृत्तं निष्पाद्य, तन्मध्यविष्कम्भमानार्धेन तन्मध्यतिर्यक्सूत्रदक्षिणाग्रादिपरितो वृत्ते चिह्नषट्कं विधाय, तत्र चिह्नात् चिह्नं ज्यारूपं सूत्रषट्कमास्फाल्य, तत्तच्चापरूपवृत्तखण्डमार्जनेन षट्कोणकुण्डक्षेत्रं निष्पाद्य, तद्बहिरेकांशतो द्वादशांशतश्चोक्तयुक्त्या षट्कोणद्वयं निष्पाद्य खातादीनि प्राग्वत् कल्पयेदिति।।

अथ पद्मकुण्डमाह लक्षणसङ्ग्रहे—

चतुरस्रीकृतं क्षेत्रं विभजेदष्टधाम्बिके। अष्टमांशप्रमाणेन कर्कटेन तु मध्यतः।। १।।

वर्तुलं भ्रामयेत्सेयं कर्णिका केसराः पुनः। अष्टमांशद्वयेनैव मध्यतो वर्तुलं भवेत्।। २।।

तृतीयेनाष्टमांशेन पत्राणां मध्यभूर्मता। चतुर्थं तु भवेत् क्षेत्रं व्यासतुल्येन च भ्रमात्।। ३।।

चतुर्विंशतिधा भक्त्वा ब्रह्मसूत्रं वरानने। तस्यैकं भागमादाय भक्त्वा[६] षोडशधा पुनः।। ४।।

पञ्चभिः षोडशैर्भागैर्न्यूनं पञ्चकमष्टकम्। भागमादाय तद्बाह्ये पञ्चमं मण्डलं शिवे।। ५।।

---

१. 'तत्रैव' क. पाठः। २. 'विन्यसेद् ब्रह्मसूत्रं तु द्वयाग्रावधिलम्बनात्' क. ग. पाठः। ३. 'तत्कुण्डकं' ख. पाठः।
४. 'निःसार्य' ख. पाठः। ५. 'केचित्' ग. पाठः। ६. 'भङ्क्त्वा' ग. पाठः।

**नौकासिंहासनारूढां शाक्यदर्शनदेवताम्।**
**जलापच्छमनीं वन्दे तारां वारिदमेचकाम्।।**

'अच्युताय नमः, अनन्ताय नमः, गोविन्दाय नमः, (इति महाव्याधिनाशिनी नामत्रयी विद्या, द्वादशान्ते)।१०।।

(नामत्रयमन्त्रस्य काश्यपात्रिभरद्वाजा ऋषयः, अनुष्टुप् छन्दः, श्रीमहाविष्णुर्देवता, तत्प्रीत्यर्थे जपे विनियोगः)। ध्यानम् —

**समस्तदुस्तरव्याधिसङ्घध्वंसपटीयसे ।**
**अच्युतानन्तगोविन्दनाम्ने धाम्ने नमो नमः।।**

(एतद्रश्मिपञ्चकं मूलधारादिपरिकरतया ज्ञेयम्)।

'ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा' (इति महागणपतिविद्या प्रत्यूहशमनी, मूलाधारे) ।। ११ ।।

महागणपतिमन्त्रस्य गणक ऋषिः, निचृद्गायत्री छन्दः, श्रीमहागणपतिर्देवता, तत्प्रीत्यर्थे जपे विनियोगः।

ध्यानम्— **बीजापूरगदेक्षुकार्मुकरुजा चक्राब्जपाशोत्पल–**
**व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः।**
**ध्येयो वल्लभया सपद्मकरया शिलष्टोज्ज्वलद्भूषया**
**विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश्वरोऽभीष्टदः[1]।।**

'ॐ नमः शिवायै, ॐ नमः शिवाय' (इति द्वादशार्णा शिवतत्त्वविमर्शिनी विद्या, हृदये)।१२।।

(शिवशक्त्यात्मकपञ्चाक्षरमन्त्रस्य वामदेव ऋषिः, पङ्क्तिश्छन्दः, उमामहेश्वरो देवता, तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्—

वामांसन्यस्तवामेतरकरकमलायास्तथा वामहस्तन्यस्तारक्तोत्पलायाः स्तनभरविलसद्वामहस्तः प्रियायाः ।
सर्वाकल्पाभिरामः श्रितपरशुमृगेष्टः करैः काञ्चनाभः ध्येयः पद्मासनस्थः स्मरललितवपुः सम्पदे पार्वतीशः।।)

'ॐ जुं सः मां पालय–पालय' (इति दशार्णा मृत्योरपि मृत्युरेषा विद्या, फाले)।। १३।।

(अमृतमृत्युञ्जयस्य कहोल ऋषिः, विराट्छन्दः अमृतमृत्युञ्जयसदाशिवो देवता। तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम् —

**स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखास्रवदमृतरसार्द्रं चन्द्रवह्न्यर्कनेत्रम्।**
**स्वकरलसितमुद्रापाशवेदाक्षमालं स्फटिकरजतमुक्तागौरमीशं नमामि।।**

'ॐ नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ॐ (इति श्रुतधारिणी विद्या ब्रह्मरन्ध्रे) ।। १४।।

(श्रुतधारिणीमन्त्रस्य भार्गव ऋषिः, अनुष्टुप् छन्दः, ब्रह्मादेवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्-

**चतुराननमम्भोजनिषण्णं भारतीसखम्।**
**अक्षमालावराभीतिकमण्डलुधरं भजे।।)**

"अं आं..............अः कं खं..........ळं क्षं" (इति सबिन्दुरकारादिक्षकारान्तवर्णमालिकामातृका सर्वज्ञताकरी द्वादशान्ते) ।। १५।।

१. 'विघ्नेश इष्टार्थदः' इत्यपि क्वचित्।

(मातृकामन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः, मातृकासरस्वती देवता तत्प्रीत्यर्थे जपे विनियोगः।

ध्यानम्— पञ्चाशता मातृकया ह्यारब्धाखिलदेहया ।
समस्तविद्यारूपिण्या धन्योऽहं मातृकाम्बया।।)

(पञ्चेमाः रश्मयो मूलादिरक्षात्मकतया द्रष्टव्याः)।।

हसकलह्रीं, हसकहलह्रीं सकलह्रीं' (इति लोपामुद्राविद्या स्वस्वरूपविमर्शिनी, मूलाधारे)।। १६।।

(श्रीहादिलोपामुद्रामन्त्रस्य दक्षिणामूर्त्तिः ऋषिः, पङ्क्तिच्छन्दः, श्रीमहात्रिपुरसुन्दरी देवता, हं ५ बीजम्, हं ६ शक्तिः सं ४ कीलकम्, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। बालया षडङ्गम्।

ध्यानम्— श्रीदेवीभूषितोत्सङ्गं सान्द्रसिन्दूररोचिषम्।
हकारादिमनोर्वाच्यं वन्दे कामेश्वरं हरम्।।)

'क्लीं हैं ह्सौः स्हौः हैं क्लीं (इति षट्कूटा सम्पत्करी विद्या हृदये)।। १७।।

(सम्पत्करीमन्त्रस्य कण्व ऋषिः, गायत्रीच्छन्दः, सम्पत्सरस्वती देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः।

ध्यानम् — अनेककोटिमातङ्गतुरङ्गरथपत्तिभिः ।
सेवितामरुणाकारां वन्दे सम्पत्सरस्वतीम्।।

'सं सृष्टिनित्ये स्वाहा, हं स्थितिपूर्णे नमः, रं महासंहारिणि कृशे चण्डकालि फट्, रं ह्स्ख्फ्रें महानाख्ये अनन्तभास्करि महाचण्डकालि फट्, रं महासंहारिणि कृशे चण्डकालि फट्, हं स्थितिपूर्णे नमः, सं सृष्टिनित्ये स्वाहा, ह्स्ख्फ्रें महाचण्डयोगेश्वरि' (इति विद्यापञ्चकरूपिणी कालसङ्कर्षणी परमायुःप्रदा, फाले) १८।

(चण्डोयोगेश्वरीमन्त्रस्य ईश्वर ऋषिः, नानाच्छन्दांसि, चण्डयोगीश्वरी देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् — सृष्टिस्थितिभ्यां संहृत्यनाख्यया भासया श्रिताम्।
कुलङ्कषकपालाढ्यां चण्डयोगीश्वरीं भजे।।

ऐं ह्रीं श्रीं ह्स्ख्फ्रें ह्सौः अहमहं अहमहं ह्सौः ह्स्ख्फ्रें श्रीं ह्रीं ऐं' (इति शुद्धज्ञानदा शाम्भवी विद्या ब्रह्मरन्ध्रे) ।। १९।।

(परशम्भुनाथमन्त्रस्य वामदेव ऋषिः, पङ्क्तिच्छन्दः, परशम्भुनाथो देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् — पूर्णाहन्तास्वरूपाय तस्मै परमशम्भवे।
आनन्दताण्डवोद्दण्डपण्डिताय नमो नमः।।)

'सौः' (इयं परा विद्या द्वादशान्ते) ।। २०।।

(परामन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, परासरस्वती देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्—
अकलङ्कशशाङ्काभा त्र्यक्षा चन्द्रकलावती।
मुद्रापुस्तलसद्बाहा पातु मां परमा कला।।)

(एताः पञ्च रश्मयो मूलाद्यधिष्ठानतया कलनीयाः)।

'ऐं क्लीं सौः, सौः क्लीं ऐं, ऐं क्लीं सौः' (इति नवाक्षरी श्रीदेव्यङ्गभूता बाला)।। २१।।

(बालामन्त्रस्य दक्षिणामूर्ति ऋषिः, गायत्रीच्छन्दः बालात्रिपुरसुन्दरी देवता। तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्—
अरुणकिरणजालै रञ्जिताशावकाशा विधृतजपवटीका पुस्तकाभीतिहस्ता।
इतरकरवराढ्या फुल्लकह्लारसंस्था निवसतु हृदि बाला नित्यकल्याणशीला।।)

'श्रीं ह्रीं क्लीं ॐ नमो भगवति अन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा' इति श्रीदेव्या उपाङ्गभूता अन्नपूर्णा।। २२।।

(अन्नपूर्णेश्वरीमन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, अन्नपूर्णेश्वरी देवता। तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्—

आदाय दक्षिणकरेण सुवर्णदर्वीं दुग्धान्नपूर्णमितरेण च रत्नपात्रम्।
अन्नप्रदाननिरतां नवहेमवर्णामम्बां भजे कनकभूषणमाल्यशोभाम्।।)

'ॐ आं ह्रीं क्रों एहि परमेश्वरि स्वाहा' (इयं श्रीदेवीप्रत्यङ्गभूता अश्वारूढा) ।। २३।।

(अश्वारूढामन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, अश्वारूढा देवता तत्प्रसादसिद्ध्यर्थे जपे विनियोगः।

ध्यानम्— बद्ध्वा पाशेनाङ्कुशेन कृष्यमाणां स्वसाध्यकम्।
घ्नन्तीं वेत्रेण फालस्त्वक्पाणिमश्वासनां भजे।।)

ध्यानम्— अश्वारूढा कराग्रे नवकनकमयीं वेत्रयष्टिं दधाना
दक्षेऽन्ये धारयन्ती स्फुरिततनुलता पाशहस्ता सुसाध्या।।
देवी नित्यप्रसन्ना शशिशकललसत्केशपाशा त्रिनेत्रा
दद्यादद्यानवद्यां श्रियमखिलसुखप्राप्तिहृद्यां श्रियै नः।।

(श्रीविद्यागुरुपादुकामन्त्रस्तु—आह्निकप्रकरण एवोक्त इह पठितव्यः)। तद्यथा—

'ऐं ह्रीं श्रीं ह्स्ख्फ्रें ह स क्ष म ल व र यूं स ह क्ष म ल व र यीं ह्सौः, स्हौः अमुकानन्दनाथ श्रीगुरुपादुकां पूजयामि नमः।। २४।।

(श्रीविद्यागुरुपादुकामन्त्रस्य दक्षिणामूर्तिः ऋषिः, पंक्तिच्छन्दः, श्रीविद्यागुरुपादुका देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् —

तेजोमयमहाविद्यां शेखराश्रितमस्तकाम्।
रक्तां चतुर्भुजां वन्दे श्रीविद्यागुरुपादुकाम्।।)

(अथ मूलविद्या—सा च गुरुमुखादवगता कादिनाम्नी)—

'कएईलह्रीं हसकहलह्रीं सकलह्रीं' ।।२५।।

(बाला अन्नपूर्णा अश्वारूढा श्रीपादुका चेत्येताभिश्चतसृभिर्युक्ता मूलविद्या साम्राज्ञी मूलाधारे विलोकनीया)।।

(ऋषिच्छन्दोदेवतादिकं गुरुपरम्परातः प्राप्तमवगन्तव्यम्।)

'ऐं नमः उच्छिष्टचण्डालि मातङ्गि सर्ववशङ्करि स्वाहा'

(इति श्यामाङ्गभूता लघुश्यामा) ।।२६।।

(लघुश्यामामन्त्रस्य मतङ्ग ऋषिः विराट्छन्दः, श्रीलघुश्यामाम्बा देवता तत्प्रसादसिद्ध्यर्थे जपे विनियोगः।

ध्यानम् — स्मरेत् प्रथमपुष्पिणीं रुधिरबिन्दुशोणाम्बरां
गृहीतमधुपत्रिकां मदविघूर्णनेत्राञ्चलाम्।
घनस्तनभरालसां गलितचूलिकां श्यामलां
करस्फुरितवल्लकीविमलशङ्खताटङ्किनीम्।।

माणिक्यवीणामुपलालयन्तीं
मदालसां मञ्जुलवाग्विलासाम्।
माहेन्द्रनीलद्युतिकोमलाङ्गीं
मातङ्गकन्यां मनसा स्मरामि।। (इति वा)।।

(वागीश्वरीमन्त्रस्य कण्व ऋषिः, विराट्छन्दः, वागीश्वरी देवता तत्प्रसादसिद्ध्यर्थे जपे विनियोगः।

ध्यानम्— अमलकमलसंस्था लेखनीपुस्तकोद्यत्-
करयुगलसरोजा कुन्दमन्दारगौरा।
धृतशशधरखण्डोल्लासिकोटीरपीठा
भवतु भवभयानां भङ्गिनी भारती नः।।)

ॐ ओष्ठपिधाना नकुली दन्तैः परिवृता पविः।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत्।।

(इयं श्यामाप्रत्यङ्गभूता नकुलीविद्या) ।। २८।।

(नकुलीवागीश्वरीमन्त्रस्य कहोल ऋषिः, गायत्रीच्छन्दः, नकुलीवागीश्वरी देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् —

नकुली वज्रदन्ताली साध्यजिह्वाहिदंशिनी।
भक्तवक्तृत्वजननी भावनीया सरस्वती।।)

श्रीविद्यागुरुपादुकैव प्रथमबीजत्रयस्थाने बालासहिता श्यामागुरुपादुका भवति। यथा—

'ऐं क्लीं सौः ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरीयीं ह्सौः स्हौः अमुकानन्दनाथश्रीगुरुपादुकां पूजयामि नमः'।। २९।।

(श्यामागुरुपादुकामन्त्रस्य मतङ्ग ऋषिः, पंक्तिच्छन्दः, श्यामागुरुपादुका देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्

वन्दे गुर्वङ्घ्रिमुकुटां श्यामलां शुकपाणिनीम्।
समस्तसिद्धिजननीं श्यामलागुरुपादुकाम्।।)

'ऐं ह्रीं श्रीं ऐ क्लीं सौः ॐ नमो भगवति श्रीमातङ्गीश्वरि सर्वजनमनोहारि सर्वमुखरञ्जिनि, क्लीं ह्रीं श्रीं सर्वराजवशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वसत्त्ववशङ्करि सर्वलोकवशङ्करि (त्रैलोक्यं) अमुकं मे वशमानय स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं' (इत्यष्टनवतिवर्णा राजश्यामला पूर्वोक्ताभिरङ्गो-पाङ्गपादुकेत्येताभिश्चतसृभिर्विद्याभिस्सहिता हृच्चक्रे यष्टव्या)।। ३०।।

(ऋष्यादिकं गुरुपरम्परातोऽवगन्तव्यम्)

'लूं वाराहि लूं उन्मत्तभैरवि पादुकाभ्यां नमः'

(इयं वार्ताल्यङ्गभूता लघुवार्ताली) ।। ३१।।

(लघुवाराहीमन्त्रस्य नारद ऋषिः, पङ्क्तिश्छन्दः, लघुवाराही देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः।

ध्यानम् — महार्णवे निपतितामुद्धरन्तीं वसुन्धराम्।
महादंष्ट्रां महाकायां नमाम्युन्मत्तभैरवीम्।।)

'ॐ ह्रीं नमो वाराहि घोरे स्वप्नं ठः ठः स्वाहा'

(इयं स्वप्ने शुभाशुभवक्त्री वार्ताल्या उपाङ्गभूता स्वप्नवाराही) ॥ ३२॥

(स्वप्नवाराहीमन्त्रस्य अग्निर्ऋषिः, गायत्रीच्छन्दः, स्वप्नवाराही देवता। तत्प्रसादसिद्ध्यर्थे जपे विनियोगः।

ध्यानम् — स्वप्ने शुभाशुभं भावि शासन्तीं भक्तकार्ययोः।
दुःस्वप्नहारिणीं वन्दे वाराहीं स्वप्ननायिकाम्।।)

ॐ नमो भगवति तिरस्करिणि महामाये महानिद्रे सकल पशुजनमनश्चक्षुःश्रोत्रतिरस्करणं कुरु कुरु स्वाहा।। ३३।।

(तिरस्करिणीमन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, तिरस्करिणी देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः।

ध्यानम्— मुक्तकेशीं विवसनां सर्वाभरणभूषिताम्।
स्वयोनिदर्शनान्मुह्यत्पशुवर्गां नमाम्यहम्।।)

ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः'। (एषा वार्तालीगुरुपादुका)।। ३४।।

(वाराहीगुरुपादुकामन्त्रस्य ब्रह्मा ऋषिः गायत्रीच्छन्दः, वाराहीगुरुपादुका देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्— देशिकाङ्घ्रिलसन्मौलिं खड्गिनीञ्च कपालिनीम्।
भावयामि घनच्छायां पञ्चमीगुरुपादुकाम् ।।)

ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः। रुन्धे रुन्धिनि नमः। जम्भे जम्भिनि नमः। मोहे मोहिनि नमः। स्तम्भे स्तम्भिनि नमः। सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं ऐं ग्लौं ठः ठः ठः ठः हुं अस्त्राय फट् (इति द्वादशोत्तरशताक्षरो महावाराहीमन्त्रः)।। ३५।।

(पूर्वोक्ताभिश्चतसृभिर्युक्तेयं महावाराही आज्ञाचक्रे परिपूज्या।)

प्रथमद्वितीयकूटयोः हल्लेखावर्जं पञ्चदश्येव त्रयोदशाक्षरी श्रीपूर्तिविद्या ब्रह्मरन्ध्रे यष्टव्या।

तद्यथा— 'क ए ई ल ह स क ह ल स क ल ह्रीं' (इयं कादिपूर्तिविद्या)
'ह स क ल ह स क ह ल स क ल ह्रीं' (इयं हादिपूर्तिविद्या)।।३६।।

(श्रीपूर्तिविद्यामन्त्रस्य दक्षिणामूर्तिः ऋषिः, पङ्क्तिश्छन्दः, श्रीपूर्तिविद्या देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः)

प्रथमत्रिकस्थाने त्रितारी कुमारी वाक् ग्लौं इत्यष्टबीजपूर्वा श्रीगुरुपादुकैव महापादुका सर्वमन्त्र-समष्टिरूपिणी स्वैक्यविमर्शिनी महासिद्धिप्रदायिनी द्वादशान्ते वरिवस्या।। यथा—

'ऐं ह्रीं श्रीं ऐ क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः अमुकानन्दनाथश्रीगुरुपादुकां पूजयामि नमः।। ३७।।

(महापादुकामन्त्रस्य दक्षिणामूर्तिः ऋषिः, पङ्क्तिच्छन्दः, श्रीमहापादुका देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्— सर्वविद्यामयीं सर्वशक्तिपीठस्वरूपिणीम्।
कराग्रे हृदये मूले देशिकाङ्घ्रियुगत्रयम्।।
दधतीं दीप्तभूषाढ्यां श्रीमहापादुकां नमः।)

(इति ऋष्यादिसहितरश्मिमाला)। रश्मिमालामन्त्रा आहत्य सप्तत्रिंशतिः। एते ब्राह्मे मुहूर्ते सकृदावर्तनीयाः सर्व एवेमे मन्त्राः श्रीगुरुमुखादवगत्यैव पठिताः महते श्रेयसे, नान्यथेति शिवशासनम्।

पुस्तके लिखितान् मन्त्रानवलोक्य जपेत्तु यः।
स जीवन्नेव चाण्डालो मृतः श्वा चाभिजायते॥

इति सांख्यायनतन्त्रवचनेन गुरुमुखागमं विना जपस्य निषेधात्॥

प्रातःकृत्यम्

॥ भूप्रार्थनादिमुखक्षालनान्तम्॥

प्रातः प्रभृति सायान्तं सायादिप्रातरन्ततः। यत्करोमि जगद्योने तदस्तु तव पूजनम्॥
मञ्जुसिञ्जितमञ्जीरं वाममर्द्धं महेशितुः। आश्रयामि जगन्मूलं यन्मूलं सचराचरम्॥

प्रातः स्मरामि ललितावदनारविन्दं बिम्बाधरं पृथुलमौक्तिकशोभिनासम्।
आकर्णदीर्घनयनं मणिकुण्डलाढ्यं मन्दस्मितं मृगमदोज्ज्वलभालदेशम्॥ १॥
प्रातर्भजामि ललिताभुजकल्पवल्लीं रक्ताङ्गुलीयलसदङ्गुलिपल्लवाढ्याम्।
माणिक्यहेमवलयाङ्गदशोभमानां पुण्ड्रेक्षुचापकुसुमेषुसृणीर्दधानाम् ॥ २॥
प्रातर्नमामि ललिताचरणारविन्दं भक्तेष्टदाननिरतं भवसिन्धुपोतम्।
पद्मासनादिसुरनायकपूजनीयं पद्माङ्कुशध्वजसुदर्शनलाञ्छनाढ्यम् ॥ ३॥
प्रातः स्तुवे परशिवां ललितां भवानीं त्रय्यन्तवेद्यविभवां करुणानवद्याम्।
विश्वस्य सृष्टिविलयस्थितिहेतुभूतां विद्येश्वरीं निगमवाङ्मनसातिदूराम्॥ ४॥
प्रातर्वदामि ललिते तव पुण्यनाम कामेश्वरीति कमलेति महेश्वरीति।
श्रीशाम्भवीति जगतां जननी परेति वाग्देवतेति वचसा त्रिपुरेश्वरीति॥ ५॥
यः श्लोकपञ्चकमिदं ललिताम्बिकायाः सौभाग्यदं सुललितं पठति प्रभाते।
तस्मै ददाति ललिता झटिति प्रसन्ना विद्यां श्रियं विपुलसौख्यमनन्तकीर्तिम्॥ ६॥

॥ भूप्रार्थना॥

समुद्र वसने देवि पर्वतस्तनमण्डिते।
विष्णुपत्नि नमस्तुभ्यं पादचारं क्षमस्व मे॥

इति भूमिं सम्प्रार्थ्य, धरणीतलन्यस्तवहन्नाडीपार्श्वपादमुत्थाय ग्रामाद्बहिः स्मार्तेन विधिना निर्वर्तितशौचक्रमः।

॥ दन्तधावनम्॥

आयुर्बलं यशो वर्चः प्रजा पशुवसूनि च।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वं नो देहि वनस्पते॥

इति मन्त्रेण दन्तधावनकाष्ठमभिमन्त्र्य 'ऐंह्रींश्रीं, 'क्लीं कामदेवाय सर्वजनप्रियाय नमः' (इति मन्त्रेण दन्तधावनम्)। ऐंह्रींश्रीं ह्ल्लेखया जिह्वोल्लेखनं च विधाय कफविमोचननासाशोधनदूषिकानिरसनपूर्वकं विहितविंशतिगण्डूषः। ऐंह्रींश्रीं, 'श्रीं'। ऐं ह्रीं श्रीं 'ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः'। ऐंह्रींश्रीं, 'श्रीं ह्रीं क्लीं'। ऐंह्रींश्रीं, 'श्रींसहकलह्रीं श्रीं' इति मन्त्रचतुष्टयेन मुखं प्रक्षाल्य यथा स्मृत्याचमेत्।

॥ स्नानविधिः॥

ततो नद्यादौ वैदिकस्नानोत्तरं श्रीललिताप्रीत्यर्थं तान्त्रिकस्नानं करिष्ये, इति सङ्कल्प्य, जले पुरतो हस्तमात्रं चतुरस्रमण्डलं परिगृह्य तत्र—

ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे।
तेन सत्येन मे देव तीर्थं देहि दिवाकर॥

इति सूर्यमभ्यर्च्य,

आवाहयामि त्वां देवि स्नानार्थमिह सुन्दरि।
एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते॥

(इति गङ्गामर्थयित्वा) ऐंह्रींश्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः क्रों, इत्युङ्कुशमुद्रया सूर्यमण्डलं भित्वा गङ्गादिसर्वतीर्थावाहनोत्तरं "वं" इति सलिलबीजेन सप्तवारमभिमन्त्र्य मुहुर्मुहुरावर्तयन् मूर्ध्नि त्रीनुदकाञ्जलीन् दत्वा त्रींश्च पीत्वा, मूलपूर्वं श्रीललितां तर्पयामीति त्रिस्तर्पणं त्रि:प्रोक्षणञ्चात्मनो योनिमुद्रया विदध्यात्। (गृहे तु विना तर्पणम्। अशक्तौ च स्मार्तेन पथा मन्त्रभस्मनोरन्यतरन्निर्वर्त्यं मूलेन। त्रिराचमनप्रोक्षणे केवलं कुर्यात्)।

॥ सन्ध्याविधिः॥

अथ धौते वाससी परिधाय विधृतत्रिपुण्ड्रः वैदिकीं सन्ध्यामभिवन्द्य तान्त्रिकीमाचरेत्। यथा—मूलेन त्रिराचम्य द्विः परिमृज्य सकृदुपस्पृश्य चक्षुषी नासिके श्रोत्रे अंसौ नाभिं हृदयं शिरश्चाभिमृशेत्। एवं त्रिराचम्य पूर्ववत्प्राणानायम्य त्रिरात्मानञ्च प्रोक्ष्य अञ्जलिना सलिलमादाय —'ऐं ह्रीं श्रीं ह्रां ह्रीं ह्रूं सः मार्तण्डभैरवाय प्रकाशशक्तिसहिताय स्वाहा' इति मन्त्रेण उदयते विवस्वते त्रिरर्घ्यं दत्वा तन्मण्डले श्रीचक्रमनुचिन्त्य तत्र ध्यायेत् —

ध्यायेत्कामेश्वराङ्कस्थां कुरुविन्दमणिप्रभाम्।
शोणाम्बरस्त्रगालेपां सर्वाङ्गीणविभूषणाम्॥
सौन्दर्यशेवधिं सेषुचापपाशाङ्कुशोज्ज्वलाम्।
स्वभाभिरणिमाद्याभिः सेव्यां सर्वनियामिकाम्॥
सच्चिदानन्दवपुषं सदयापाङ्गविभ्रमाम्।
सर्वलोकैकजननीं स्मेरास्यां ललिताम्बिकाम्॥

(अत्रायुधानां क्रमः स्वरूपञ्च सपर्याप्रकरणे वक्ष्यते)

ततः — 'ऐं ह्रीं श्रीं क ए ई ल ह्रीं त्रिपुरसुन्दरि विद्महे, 'ऐं ह्रीं श्रीं
ह स क ह ल ह्रीं पीठकामनि धीमहि,
स क ल ह्रीं तन्नः क्लिन्नः प्रचोदयात्'

(इति मन्त्रेण महेश्यै त्रिरर्घ्यं दत्वा मूलेन त्रिस्सन्तर्प्य, मूलेन पूर्ववदाचम्य जपप्रकरणे वक्ष्यमाणान् ऋष्यादीन् न्यस्य मूलमष्टोत्तरशतवारमावर्तयेत्)। ततः पुनः कराङ्गन्यासादिकं कृत्वा जपं वक्ष्यमाणमन्त्रेण श्रीदेव्यै समर्प्याचम्य मण्डलस्थं तीर्थं विसर्जनमुद्रया सूर्ये विसृजेत्।

अथ सपर्यासाधनानि सम्पाद्य ब्रह्मयज्ञादि निर्वर्तयेद्। इति शिवम्।

। प्रथममाह्निकप्रकरणं सम्पूर्ण।

॥ इस प्रकार श्री अनन्तानन्दनाथ-शिष्य उमानन्दनाथ-शिष्य षोडशानन्दनाथ-शिष्य दत्तात्रेयानन्दनाथ विरचित श्रीविद्यार्णवतन्त्र की पञ्चम श्वास भावविवृति पूर्ण हुई॥

# श्रीविद्यार्णवतन्त्र

## षष्ठ श्वास

## ।। भावविवृति।।

**मातृकान्यास** – **''ततो देहस्य सन्नाहं सम्यक् न्यासं समाचरेत्''** इस वचन के अनुसार भूतशुद्धि के अनन्तर मातृकान्यास का विधान है।

(१) अन्तर्मातृका (२) बहिर्मातृका (३) कलामातृका, (४) श्रीकण्ठमातृका (५) केशवमातृका (६) लज्जा (ह्रीं) मातृका (७) रमा (श्रीं) मातृका (८) काम (क्लीं) मातृका, (९) लज्जारमाकाम (सम्मोहिनी मातृका) (१०) प्रपञ्चयाग मातृका, इन दश प्रकार की मातृकाओं का न्यास करने का विधान है।

(१,२)अन्तमार्तृका और बहिर्मातृका का न्यासविधान मूल में यथावत् वर्णित है एवं समस्त पद्धतियों में प्रकाशित है।

**सृष्टिमातृका** न्यास विसर्ग सहित किया जाता है। विसर्ग बिन्दु सहित स्थितिमातृका का डकार से प्रारम्भ करके ठकार तक न्यास किया जाता है। **स्थितिमातृका न्यास** ब्रह्मचारी को करना चाहिए, और **विलोममातृका ''क्षं नमः'' हं नमः** से **संहारमातृका न्यास** वानप्रस्थ को करने का विधान है। इनका ध्यान मूल में निर्दिष्ट है।

(३) **कलामातृका**– प्रणव और कलायुक्त मातृकान्यास का विधान है, निवृत्ति आदि पचास कलाओं का तृतीय श्वास में उल्लेख है, (मूल देखें) इसका विधान **''ओं अं निवृत्तिकलायै नमः''** इत्यादि क्षं पर्यन्त, न्यास करने से मन्त्र वीर्यवान् हो जाता है, इसके ऋषि, छन्द, देवता, और न्यास, ध्यान मूल में स्पष्ट हैं। यह अष्टम श्वास में पूर्ण न्यास विधि निहित है।

(४) **सशक्तिक श्रीकण्ठमातृका** – ''हसौं अं श्रीकण्ठाय पूर्णोदर्यै नमः'' इस प्रकार पञ्चाशत् मातृकावर्णों का न्यास करने का विधान है। इसके ऋषि, देवता, छन्द, ध्यानादि मूल में स्पष्ट हैं। श्रीकण्ठ पूर्णोदरी पञ्चाशत् नाम श्रीविद्याधिकार तृतीय श्वास में द्रष्टव्य है।

(५) **सशक्तिक केशवमातृका** – ''क्लीं श्रीं अं केशवाय कीर्त्यै नमः'' इस प्रकार पञ्चाशत् मातृकाओं के न्यास, केशव कीर्ति आदि नाम मूल में हैं। ऋषि, छन्द, देवता ध्यानादि भी मूल में द्रष्टव्य हैं।

(६) **शक्तिमातृका** – ''ह्रीं अं नमः'' इत्यादि क्षं पर्यन्त पञ्चाशत् वर्णों का न्यास होता है। इसे भुवनेश्वरीमातृका भी कहते हैं। इसके भी ऋषि, छन्द, देवता, ध्यानादि मूल में स्पष्ट हैं।

(७) **रमामातृका** – ''श्रीं अं नमः'' इत्यादि न्यास को रमामातृका कहते हैं। इसके भी ऋषि, छन्द, देवता, ध्यानादि मूल में स्पष्ट हैं।

(८) **काममातृका** – ''क्लीं अं नमः'' इत्यादि पञ्चाशत् वर्णों का न्यास होता है। इसके भी ऋषि, छन्द, देवता ध्यानादि मूल में स्पष्ट हैं।

---

**विशेष** :– उपरोक्त सभी न्यास की पूर्ण विधि अष्टम श्वास में मुद्रित है।

(९) **सम्मोहनीमातृका** — "ह्रीं श्रीं क्लीं अं नमः" इत्यादि पञ्चाशत् मातृकाओं के न्यास को सम्मोहनमातृका न्यास कहते हैं। इसके ऋषि, छन्द, देवता, ध्यानादि मूल में स्पष्ट हैं।

(१०) **प्रपञ्चयागमातृका** — "प्रपञ्चयागमातृका न्यास चतुर्थ श्वास में प्रोक्त है। यह न्यास महाषोढ़ा के प्रपञ्चन्यास की तरह होता है।

सामान्यतः सर्वत्र इन दश मातृकाओं का विधान है। दुर्वासा मुनि के त्रिपुरामहिम्न के दो श्लोकों में विशेष रूप से बालामन्त्र से सम्पुटित मातृकान्यास। परामातृकान्यास, मूलमन्त्रमातृकान्यास, हंसमातृका, परमहंसमातृका, आदि न्यासों के विधान वर्णित हैं। यथा—

**बालामन्त्रसम्पुटित मातृकान्यास** — "ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः अं सौः क्लीं ऐं" इस प्रकार पञ्चाशत् अक्षरों से बालामन्त्रसम्पुटित मातृकान्यास का विधान है।

**परामातृका न्यास**—"ओं ऐं ह्रीं श्रीं सौः अं सौः" परामन्त्र सम्पुटित मातृका न्यास को परामातृकान्यास कहते हैं।

**श्रीविद्यामातृका न्यास** — ओं ऐ ह्रीं श्रीं (मूल मन्त्र पञ्चदशी या षोडशी) शिरसि— अं नमः, इस प्रकार श्रीविद्यामातृका न्यास है।

**हंसमातृका न्यास** — ओं ऐं ह्रीं श्रीं हंसः अं नमः- शिरसि- इस प्रकार पञ्चाशत् वर्णों के न्यास को हंस मातृका न्यास कहते हैं।

**परमहंसमातृका न्यास**— ओं ऐं ह्रीं श्रीं सोहं क्षं नमः। इस प्रकार विलोममातृकावर्णन्यास को परमहंस मातृका कहते हैं। ऋषि, छन्द, देवता, न्यास, ध्यानादि मूल में द्रष्टव्य है।

**कलान्यास** — कलान्यास पाँच प्रकार का होता है— प्रणवसहित, कामकला, सोमकला, त्रिमूर्तिकला, अष्टात्रिंशत् कला। अष्टात्रिंशत्कला–न्यास दो प्रकार का है—

(१) ज्योतिरष्टात्रिंशत्, (२) शिवाष्टात्रिंशत् कलान्यास।

इसमें तारोत्थप्रणव कलान्यास तो पूर्व में वर्णित है। स्वरकला, कचवर्ग कला, टतवर्ग कला, पय वर्ग कला, षवर्ग कला, ये पाँच प्रकार के कलान्यास हैं। शिवाष्टात्रिंशत् कला न्यास को तृतीय श्वास में तारोत्थकला नाम से प्रतिपादित किया है।

**ज्योतिरष्टात्रिंशत्कलान्यास**[1] :—

ओं ऐं ह्रीं श्रीं अं अमृतायै नमः — शिरसि- इस प्रकार अमृतादि सोलह कलाओं का न्यास करे। दाहिने हाथ, सन्धि और अग्रभाग भाग में "ओं कं भं तापिन्यै नमः" इत्यादि। 'ङं नं ज्वालिन्यै नमः' तक

---

१. ज्योतिरष्टात्रिंशत्कलान्यास— १६ सोमकला, १२ सूर्यकला, १० अग्निकला (३८) एवं तारोत्थ ३८ कला, इनका विशेषार्घ्य के अभिमन्त्रण में उपयोग होता है।

न्यास करके वामहस्त सन्धि और अग्रभाग में "चं धं रुच्यै नमः" से "ञं णं बोधिन्यै नमः" तक न्यास करके दक्षहस्त सन्धि और अग्रभाग "टं धं धारिण्यै नमः" से "लं ज्वालिन्यै नमः" तक न्यास करें। तदनन्तर वामपाद सन्धि और अग्रभाग 'वं ज्वालिन्यै नमः' से "हं कपिलायै नमः" तक न्यास करें। शेष दो कलाओं, कं क्षं से व्यापक न्यास करें। प्रणव, त्रितारी (ओं ऐं ह्रीं श्रीं) योग करके न्यास करें।

अष्टात्रिंशत् तेजःकलान्यास एवं अन्य कलान्यास आगे कहे जायेंगे। उसके बाद प्रपञ्चयाग जो प्रागुक्त है, करना चाहिए।

॥ षट्त्रिंशत्तत्त्वन्यास॥

१. ओं ऐं ह्रीं श्रीं क्षं पृथिवीतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — पादयोः
२. ओं ऐं ह्रीं श्रीं ळं अप्तत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — लिङ्गे
३. ओं ऐं ह्रीं श्रीं हं तेजस्तत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
४. ओं ऐं ह्रीं श्रीं सं वायुतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — मुखे
५. ओं ऐं ह्रीं श्रीं षं आकाशतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — शिरसि
६. ओं ऐं ह्रीं श्रीं शं गन्धतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — पादयोः
७. ओं ऐं ह्रीं श्रीं वं रसतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — लिङ्गे
८. ओं ऐं ह्रीं श्रीं लं रूपतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
९. ओं ऐं ह्रीं श्रीं रं स्पर्शतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — मुखे
१०. ओं ऐं ह्रीं श्रीं यं शब्दतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — शिरसि
११. ओं ऐं ह्रीं श्रीं मं उपस्थतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — लिङ्गे
१२. ओं ऐं ह्रीं श्रीं भं पायुतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — पायौ (गुदा)
१३. ओं ऐं ह्रीं श्रीं बं पादतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — पादयोः
१४. ओं ऐं ह्रीं श्रीं फं पाणितत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हस्तयोः
१५. ओं ऐं ह्रीं श्रीं पं वाक्तत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — मुखे
१६. ओं ऐं ह्रीं श्रीं नं घ्राणतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — घ्राणयोः
१७. ओं ऐ ह्री श्रीं धं जिह्वातत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — जिह्वायाम्
१८. ओं ऐं ह्रीं श्रीं दं चक्षुस्तत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — चक्षुषोः
१९. ओं ऐं ह्रीं श्रीं थं त्वक्तत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — सर्वाङ्गे
२०. ओं ऐं ह्रीं श्रीं तं श्रोत्रतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — कर्णयोः

२१. ओं ऐं ह्रीं श्रीं णं मनस्तत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
२२. ओं ऐं ह्रीं श्रीं ढं बुद्धितत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
२३. ओं ऐं ह्रीं श्रीं डं अहंकारतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
२४. ओं ऐं ह्रीं श्रीं ठं प्रकृतितत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — सर्वगात्रे
२५. ओं ऐं ह्रीं श्रीं टं पुरुषतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — सर्वगात्रे
२६. ओं ऐं ह्रीं श्रीं ञं नियतितत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
२७. ओं ऐं ह्रीं श्रीं झं कालतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
२८. ओं ऐं ह्रीं श्रीं जं रागतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
२९. ओं ऐं ह्रीं श्रीं छं अविद्यातत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — सर्वगात्रे
३०. ओं ऐं ह्रीं श्रीं चं कालतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — सर्वगात्रे
३१. ओं ऐं ह्रीं श्रीं ङं मायातत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
३२. ओं ऐं ह्रीं श्रीं घं शुद्धविद्यातत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
३३. ओं ऐं ह्रीं श्रीं गं ईश्वरतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — हृदि
३४. ओं ऐं ह्रीं श्रीं खं सदाशिवतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — ग्रीवायाम्।
३५. ओं ऐं ह्रीं श्रीं कं शक्तितत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — मूलाधारे
३६. ओं ऐं ह्रीं श्रीं अं शिवतत्त्वव्यापिकायै श्रीमहात्रिपुरसुन्दर्यै नमः — सहस्रारे

इस प्रकार न्यास करने पर पराम्बा त्रिपुरसुन्दरी के मन्त्रजप का अधिकार हो जाता है। तदनन्तर प्राणयाम करना चाहिए।

**॥ प्राणायाम विधि ॥**

त्रिपुरासार समुच्चय में न्यासों की विधियाँ शेष में संलग्न हैं। न्यास करने से स्थूल शरीर का दोष दूर हो जाता है, तब जप का अधिकारी होता है। यह शरीर अपनी अङ्गुलियों के प्रमाण से ९६ अङ्गुलि का होता है और इसमें प्राणसंज्ञक वायु १२ अंङ्गुल ज्यादा है। साधक को अभ्यास के द्वारा इस बारह अङ्गुल को शनैः शनैः कम करना चाहिए। जब वायु सम हो जाती है, तो इस भूलोक के योगियों में पूज्य होता है और विद्वानों में उत्तम।

प्राणयाम के तीन अङ्ग— पूरक, कुम्भक, रेचक। इसमें कुम्भक ही मुख्य है। रेचक, पूरक इसके उपकारक हैं।

## 'ज्ञानार्णवतन्त्र' के अनुसार

**ज्ञानार्णवतन्त्र–** दक्षिण हस्त की कनिष्ठिका, अनामिका और अङ्गुष्ठ से नासापुट को धारण करने को प्राणायाम कहते हैं। इसमें तर्जनी और मध्यमा का स्पर्श नहीं होना चाहिए। योगशास्त्र एवं प्रपञ्चसार के मतानुसार वामनासिका से पूरक करना चाहिए और दक्षिण से रेचक। वायु को रोक लेना (प्राणों को रोक लेना) कुम्भक कहलाता है। नासिका के वामभाग में इडा नाड़ी, दक्षिण में पिङ्गला, मध्य में सुषम्ना नाड़ी तत्त्व है। **प्रपञ्चसार ग्रन्थ** के मतानुसार सोलह मात्रा से पूरक, उससे चारगुण चौसठ मात्रा से कुम्भक और ३२ मात्रा से रेचक करना चाहिए।

**वामकेश्वरतन्त्र–** पूरक, कुम्भक, रेचक तीन प्रकार के प्राणायाम होते हैं। मूलाधार में ध्यान करके शनैः–शनैः पूरक करें, फिर कुम्भक करें। कुम्भक में मूलविद्या का चिन्तन करें। तदनन्तर रेचक करना चाहिए, जिसमें स्वभाव से ही वायु का रेचन होता है। रेचक करते समय यह चिन्तन करना चाहिए कि तमोगुण शरीर के बाहर निकल रहा है। वाम से पूरक, फिर कुम्भक (वायु को रोक लेना) दक्षिण नासिका से रेचक करना चाहिए। पुनः दक्षिण नासिका से ही पूरक तथा वाम नासिका से रेचक करना चाहिए। यह एक प्राणायाम होता है। इसमें कुम्भक की प्रधानता है, जिससे सिद्धियाँ प्राप्त होती हैं। अभ्यास करने वाला साधक अपनी इच्छा के अनुसार मात्रा से पूरक, कुम्भक, रेचक करे। यथाशक्ति कुम्भक तथा यथाशक्ति रेचक करे, तो सिद्धियाँ प्राप्त होने लग जाती हैं। दक्षिणामूर्तिसंहिता के मतानुसार इष्ट मन्त्र (जिसकी दीक्षा प्राप्त हुई, उसे मूल मन्त्र या इष्ट मन्त्र कहते हैं) एकबार मानसिक उच्चारण करके पूरक करके चार बार मानसिक उच्चारण से कुम्भक करें। दो बार उच्चारण से रेचक करें। ज्ञानार्णव और तन्त्रराजतन्त्र का भी यही मत है।

**गोरक्षशतक–** युक्तियुक्त – पूरक, कुम्भक, रेचक करें। जैसे– सिंह, गज, व्याघ्र आदि भयंकर हिंसक प्राणियों को वश में लाया जाता है, उसी प्रकार वायु को भी प्राणायाम द्वारा वश में करना चाहिए।

युक्तियुक्त प्राणायाम से सब रोगों का नाश हो जाता है, तथा अयुक्त अभ्यास से हिक्का, श्वास, कास, सिर, कर्ण, नासिका, आँख आदि में वेदना एवं विविध प्रकार के रोग उत्पन्न हो जाते हैं। अतः शास्त्रोक्त मार्ग से ही प्राणायाम का अभ्यास करना चाहिए। दक्ष गुरु का निर्देश नितान्त आवश्यक है।

### ।। योगशास्त्रमतवर्णन।।

पहले आसन का अभ्यास करना चाहिए, पुनः इन्द्रियों पर विजय प्राप्त करने का अभ्यास करना चाहिए। गुरूपदिष्टमार्ग से प्राणायाम का अभ्यास करना चाहिए। वायु चञ्चल है, तो चित्त भी चञ्चल रहता है, अतः वायु को निश्चल करने के लिए अभ्यास करना चाहिए। जब तक प्राणवायु शरीर में है, तब तक जीवन है, प्राण के निकल जाने से मृत्यु हो जाती है। इसलिए वायु का नियमन करना चाहिए।

शरीर में हजारों नाड़ियाँ हैं, जो मलों से दूषित हो रही हैं, तो तन्मयीभाव या समाधि अवस्था कैसे हो सकती है? जब नाड़ियों का मल शुद्ध हो जाता है, तभी योगी प्राण का नियमन करने में समर्थ होता है। अतः सात्त्विक भाव से प्राणायाम का अभ्यास करना चाहिए। सुषुम्ना नाड़ी के विकास से सभी मल तथा दोष दूर हो जाते हैं। बद्धपद्मासन में योगी को वाम नासिका से पूरक (वायु को पूर्ण) करना चाहिए, पुनः कुम्भक में यथाशक्ति वायु को रोकना चाहिए, उसे दक्षिण स्वर से रेचक करना चाहिए। दक्षिण से वायु का पूरण करे। पूरण का तात्पर्य है कि उदर कुम्भ की तरह फूल जाय। इस प्रकार पुनः पूरक कुम्भक, रेचक करने से प्राणायाम सिद्ध हो जाता है। इस प्रकार तीन मास तक प्राणायाम करने से सभी नाड़ियाँ शुद्ध हो जाती हैं। यही **त्रिपुरासार समुच्चय** में भी लिखा है।

पूर्व में जो **प्रपञ्चसारतन्त्र** में प्राणायाम करने के लिए मात्रा का वर्णन किया गया, उसका प्रमाण बता रहे हैं —

अपने हाथ को जानु (घुटने) पर एक बार घुमाने से जितना समय लगता है, उसको एक मात्रा कहते हैं। फेत्कारिणीतन्त्र और कात्यायनीतन्त्र में भी लिखा है कि मध्यमा और अङ्गुष्ठ के सम्पर्क से जो चुटकी बजायी जाती है, उसे एक मात्रा कहते हैं। इस प्रकार गौतमीयतन्त्र में ३२ मात्रा तक वायु को रोकने का विधान है।

**दक्षिणामूर्ति कल्प** में निर्दिष्ट है कि प्राण और अपान वायु को समान करके कुम्भक में, हृदयकमल पर विराजमान अपने ईष्ट देवता का ध्यान करे। **अगस्त्यसंहिता** में कहा है— जितनी देर प्राण को रोक सके, उतने समय में मन्त्र का जप करे। **वामकेश्वर तन्त्र** में लिखा है कि कुम्भक में ही श्रीविद्या के मन्त्र का चिन्तन करना चाहिए। प्राणायाम सगर्भ और निगर्भ दो प्रकार के होते हैं। सगर्भ में मन्त्र या प्रणव का जिनको अधिकार है, वे प्रणव से करें और जिनको प्रणव का अधिकार नहीं है, वह चतुर्दश स्वर 'औं' से प्राणायाम करे।

**तन्त्रराजतन्त्र** में बत्तीस मात्रा के द्वारा पूरक, चौसठ मात्रा से कुम्भक सोलह मात्रा से रेचक का विधान है। इसका तात्पर्य है— एक, चार और दो के क्रम से अपने मंत्र का जप करे। पूरक में एक बार मन्त्र का उच्चारण, कुम्भक में चार बार और रेचक में दो बार करे। इस प्रकार शनैः—शनैः मन्त्रों की संख्या में वृद्धि करे, फिर कुम्भक का अभ्यास करे। योगशास्त्र के मतानुसार **''सा: जृम्भते केवलकुम्भकश्रीः''** कुम्भक सिद्ध होने के बाद कोई वस्तु दुर्लभ नहीं रहती है। इसी से राजयोग पद प्राप्त होता है। हठयोग के बिना राजयोग नहीं और राजयोग के बिना हठयोग सिद्ध नहीं होता। इस प्रकार दोनों का एक साथ अभ्यास करने से कुम्भक प्राणायाम से कुण्डलिनी का जागरण होता है। कुण्डलिनी जागरण से सुषुम्ना का विकास होता है, तब हठसिद्धि प्राप्त हो जाती है। **हठ शब्द का अर्थ है— हकार अर्थात् सूर्य, ठकार अर्थात् चन्द्र अर्थात् दक्षिण—वाम, इड़ा—पिङ्गला से प्राणवायु को मूलाधार से ब्रह्मरन्ध्र पर्यन्त ले जाना।** इसीसे षट्चक्रों का भेदन होकर शिवशक्तिसामरस्य की सिद्धि प्राप्त होती है।

**॥ तन्त्रराजतन्त्र में उत्तम, मध्यम और अधम तीन प्रकार का प्राणायाम॥**

उत्तम प्राणायाम में पद्मासन उठ जाता है, भूमि के ऊपर हो जाता है, मध्यम प्राणायाम में सम्पूर्ण शरीर में पसीना आ जाता है और अधम में कम्पन होता है। प्रातः सायं प्राणायाम करना चाहिए। **त्रिपुरासार के मतानुसार—** जो सोलह प्राणायाम प्रतिदिन सायं-प्रातः करता है, वह भ्रूणहत्या के दोष से भी मुक्त हो जाता है। एकमास तक प्राणायाम करने से सब पाप नष्ट हो जाते हैं और ६ महीने तक करने से जन्मजन्मान्तरों के पापपुञ्ज भी नष्ट हो जाते हैं, एक वर्ष में ब्रह्मपद की प्राप्ति हो जाती है।

योगशास्त्र के अनुसार प्रातः, मध्याह्न, सायं और रात्रि, चारों समय में प्राणायाम करना चाहिए। लघुप्राणायाम में स्पन्द होता है, मध्यम में कम्प होता है, उत्तम में आसन उठ जाता है। प्राणायाम करने से जो स्वेद (पसीना) आता है, उसको अपने पूरे शरीर में मर्दन करना चाहिए, जिससे दृढ़ता और लघुता शरीर में आ जाती है। अभ्यासकाल के प्रारम्भ में दुग्ध—ओदन का भोजन करना चाहिए। अभ्यास स्थिर हो जाने पर यह नियम करना आवश्यक नहीं है। अनेक तन्त्रों एवं योगशास्त्र में लिखी हुई प्राणायामविधि का वर्णन होने पर भी गुरु—उपदिष्ट मार्ग से ही अभ्यास करना कल्याणकारी होता है, अन्यथा विपरीत फल भी हो सकता है।

**अगस्त्यसंहिता** में भी लिखा है कि प्राणायाम के बिना जो भी कर्म किया जाता है, वह निरर्थक होता है, अतः प्रयत्नपूर्वक प्राणायाम करना चाहिए। इसीसे मङ्गल और शुभ होता है। प्राणायाम की विधि मधुमती और मालिनी दोनों मतों में समान है।

**॥ योगपीठन्यास॥**

प्राणायाम के अनन्तर योगपीठन्यास करना चाहिए, योगपीठ का तात्पर्य है कि भगवती को विराजमान करने के लिए अपने शरीर को एक प्रकार की सर्वदेवतामय पीठ के रूप में रचना करे। इसका विधान मूल में १२० से १२२ पृ. तक वर्णित है। इसे गुरुमुख से अवगत करना चाहिए। इसमें लिखा है **"इति देहमये पीठे चिन्तयेत् परदेवताम्।"**

**शारदातिलक** तन्त्र के मतानुसार संहार और सृष्टि क्रम से मातृका न्यास करके देवताभावसिद्धि के लिए अपने इष्ट मन्त्र का भी न्यास करना चाहिए। **वैशम्पायन संहिता** के अनुसार, सिद्धि की इच्छा रखने वाले साधक को ऋषि, छन्द, देवता आदि षडङ्ग न्यास न करने से, सिद्धमन्त्र द्वारा किये हुए जप, तर्पण, होम, पूजा आदि भी फलप्रद नहीं होते हैं। अतः समस्त न्यासों का शरीर में न्यास करने से त्रैलोक्य वशीभूत हो जाता है, सभी पाप नष्ट हो जाते हैं और उससे भूत, प्रेत, पिशाच आदि सब त्रस्त होते हैं। अतः प्रथम ऋष्यादि न्यास, कराङ्गन्यास, मन्त्राक्षरन्यास, पुनः पदन्यास एवं तत्–तत् कल्पोक्त विशेष न्यासों को भी करना चाहिए। इसीप्रकार मन्त्रसम्पुटित बिन्दु सहित मातृका के वर्णों के न्यास का भी विधान है। मन्त्रज्ञ शास्त्रोपदिष्ट मार्ग से ऋषि, कर, षडङ्ग न्यास करके मुद्राओं का प्रदर्शन भी करे। यह क्रम है।

**श्रीविद्या अधिकार** में भी लिखा है सृष्टि, स्थिति, संहार क्रम से मातृका, कला सम्पुटित न्यास, श्रीकण्ठादि न्यास और प्रपञ्चयाग, लघुषोढान्यास, कामरति न्यास, श्रीचक्रन्यास, महाषोढ़ान्यास आदि चतुर्विध न्यास करने का विधान है। **योगिनीहृदय** में भी लिखा है कि ये चार प्रकार के न्यास, जप, पूजा आदि समय में यथाकाल विनियोग करके करना चाहिए। फिर **योगिनीहृदय** में लिखा है— पूर्वषोढ़ा न्यास जिसे लघुषोढ़ा न्यास भी कहते हैं, पहले उसे करना चाहिए। इसमें ६ प्रकार के न्यास हैं — (१) गणेश (२) ग्रह (३) नक्षत्र (४) योगिनी (५) राशि (६) पीठ; इन ६ का न्यास होता है, विधि इसमें वर्णित है। अन्यान्य साधनापद्धतियों में भी इनका प्रकार मिलता है। हमारे **श्रीविद्यारत्नाकर** एवं **श्रीविद्यावरिवस्या** में भी इसकी सुगम और सरल विधि उल्लिखित है। ये सब शेष में संलग्न है।

सम्प्रदायक्रम से कुछ भिन्नता है, परन्तु मौलिकता में कोई भेद नहीं है। अत: स्वसम्प्रदायानुसार गुरुमुख से ज्ञात करके न्यास करने से समग्र सिद्धियाँ प्राप्त होती हैं। लघुषोढ़ा न्यास का मूल में १२३ से १२७ पृष्ठ तक वर्णन है। अन्य पद्धतियों में विधान प्राप्त होता है, अत: विस्तारभय से इसकी विधि नहीं लिख रहे हैं। तदनन्तर कामरतिन्यास का विधान है। इसके बाद श्रीचक्रन्यास करने का विधान है। अत: ग्रन्थकार ने **श्रीचक्रन्यास** कवच का उल्लेख किया है, जो **रुद्रयामल** में शिवपार्वती संवाद में प्रकट हुआ है। इस ग्रन्थ में १२७ पृ. से प्रारम्भ होकर १३१ पृ. तक न्यास वर्णन समाप्त हुआ है। इसे **संहारक्रम श्रीचक्रन्यास** कहते हैं। अन्य पद्धतियों में भी इसी प्रकार वर्णन है। **योगिनीहृदय** में प्रतिपादित क्रमानुसार सृष्टिचक्रन्यास का वर्णन है। **संहारन्यास का तात्पर्य है कि अणिमादि न्यास से प्रारम्भ करके बिन्दु तक जाना अर्थात् संसार से ब्रह्म की ओर जाना। सृष्टिन्यास का तात्पर्य है— ब्रह्म (बिन्दु) से भूपुर तक न्यास करना, यह सृष्टि क्रम है।** **योगिनीहृदय** में जो क्रम प्रतिपादित किया गया है, इसकी व्याख्या करते हुए ग्रन्थकार ने स्वयं इस विधि का वर्णन किया है। (मूल में १३१ पृष्ठ से १३३ पृष्ठ में उसकी समाप्ति हुई है।) तदनन्तर **योगिनीहृदय** में निरूपित स्थितिश्रीचक्रन्यास का विधान वर्णित है, जो योगिनीहृदय के क्रमानुसार स्थिति श्रीचक्रन्यास १३१ पृष्ठ से १३३ पृष्ठ में समाप्त होता है, इसमें ग्रन्थकार श्रीविद्यारण्ययति ने कई टिप्पणियाँ लिखी हैं, वे भी द्रष्टव्य हैं।

**योगिनीहृदय में स्थितिक्रम न्यास**— स्थिति चक्रन्यास का निरूपण योगिनीहृदय के अनुसार लिखा है, जो १३३ पृष्ठ से प्रारम्भ होकर १३५ पृष्ठ में परिसमाप्त होता है, इसका सार अधोलिखित प्रकार है।

**"अकुले विषुसंज्ञे च शाक्ते वह्नौ तथा पुनः।**
**नाभावनाहते शुद्धौ लम्बिकाग्रे भ्रुवोन्तरे॥"**

इस श्लोक का तात्पर्य है कि नवचक्रों में नौ आवरणों का न्यास करें। क्रम इस प्रकार है— मूलाधार के नीचे अधः सहस्रार है, उसमें षट्कोण संलग्न है। कई आचार्यों ने इसे अलग माना है, परन्तु

मूल में विषुसंज्ञ अकुल में षड्दल सहित सहस्रार में त्रैलोक्यमोहनचक्र के आवरण देवता सहित चक्रेश्वरी त्रिपुरा का न्यास करे। इसीप्रकार मूलाधार में सर्वाशापरिपूरक चक्र आवरणदेवता सहित त्रिपुरेशी चक्रेश्वरियों का न्यास करे। स्वाधिष्ठान में सर्वसंक्षोभणचक्र में आवरणदेवता सहित त्रिपुरसुन्दरी चक्रेश्वरी का न्यास करे। मणिपूरक में सर्वसौभाग्यदायक चक्र आवरण सहित त्रिपुरवासिनी चक्रेश्वरी का न्यास करे। हृदय स्थित अनाहत चक्र में सर्वार्थसाधक चक्र के आवरण देवता सहित त्रिपुराश्रीचक्रेश्वरी का न्यास करे। कण्ठ स्थित विशुद्धि चक्र में सर्वरक्षाकर चक्र के आवरणदेवताओं सहित त्रिपुरमालिनी चक्रेश्वरी का न्यास करे। लम्बिकाग्र में सर्वरोगहर चक्र के आवरण देवताओं सहित त्रिपुरासिद्धा चक्रेश्वरी का न्यास करना चाहिए। भ्रूमध्य में सर्वसिद्धिप्रदचक्र के आवरण देवताओं सहित त्रिपुराम्बा चक्रेश्वरी का न्यास करें। मस्तक पर ब्रह्मरन्ध्र में ऊर्ध्व, सहस्रदल में सर्वानन्दमय चक्र में महात्रिपुरसुन्दरी एवं चक्रेश्वरी का न्यास करें।

इस प्रकार इसको स्थितिचक्र न्यास कहा जाता है। योगिनी हृदय में प्रोक्त क्रम की ऊहापोह युक्त व्याख्या करते हुए ग्रन्थकार ने इसका स्पष्टीकरण किया है। स्वच्छन्द संग्रह में भी अधः सहस्रार आदि चक्रों का वर्णन करते हुए नव चक्रों की सुषुम्ना नाड़ी में स्थिति का वर्णन किया है। इसमें सब चक्रों की स्थिति का भी यथास्थान विस्तृत वर्णन किया गया है, जो मूल में १३५ पृ. से १३६ में निरूपित है।

इसमें स्वच्छन्द संग्रह के मत का भी संग्रह किया है, जो द्रष्टव्य है। इसमें अधःसहस्रार से ऊर्ध्व सहस्रार तक के चक्रों का और सुषुम्ना नाड़ी का भी वर्णन है, जो मूल में स्पष्ट है।

इस प्रकार श्रीचक्र के संहार, सृष्टि, स्थिति न्यास का वर्णन किया गया है। अपने सम्प्रदायानुसार गुरुमुख से ज्ञात करके क्रम निर्वतित करना चाहिए।

ग्रन्थकार ने शिवप्रोक्त तन्त्रों के प्रमाणों से न्यासविधि का मौलिक सिद्धान्त पक्ष प्रस्तुत करके सूत्र रूप में क्रम एवं प्रयोग का वर्णन भी किया है। इससे निर्भ्रान्त न्यासविधि का पथ प्रशस्त और श्रीसाधकों का परम उपकार हुआ है। सिद्धान्त पक्ष ग्रन्थकार ने प्रतिपादित किया है। इसीके अनुसार प्रायोगिक पक्ष प्रस्तुत करना आवश्यक है, अतः— सर्वसाधारणसुलभ विधि प्रस्तुत की जा रही है। मधुमती एवं मालिनी मत में प्रस्तुत विधि मतद्वय सम्मत है।

श्रीविद्यार्णव में विविध तन्त्रान्तरों के मतानुसार मातृकान्यास, लघुषोढ़ा, श्रीचक्रन्यास एवं महाषोढ़ा आदि न्यासों का वर्णन करते हुए उक्त न्यासों को उभयसम्मत माना है। श्रीविद्यारत्नाकर में भी इसी मत का अनुसरण करते हुए सरल सुगम प्रकार से प्रायोगिक न्यासविधि प्रस्तुत की गयी है। अतः साधकों के सौकर्य के लिए न्यास, क्रम से संकलित किये जा रहे हैं।

## ॥ मातृकान्यास ॥

अस्य श्रीमातृकासरस्वतीन्यासमहामन्त्रस्य ब्रह्मणे ऋषये नमः शिरसि, गायत्री छन्दसे नमः मुखे, श्रीमातृकासरस्वतीदेवतायै नमः हृदि, हल्भ्यो बीजेभ्यो नमः गुह्ये, स्वरेभ्यः शक्तिभ्यो नमः पादयोः,

बिन्दुभ्यः कीलकेभ्यो नमः नाभौ, मम श्रीविद्याङ्गत्वेन न्यासे विनियोगाय नमः करसम्पुटे।।

सर्वमातृकया सर्वाङ्गे अञ्जलिना त्रिर्व्यापकं कुर्यात्।।

| | | | |
|---|---|---|---|
| ६ | अं कं खं गं घं ङं आं | अङ्गुष्ठाभ्यां | नमः |
| ६ | इं चं छं जं झं ञं ईं | तर्जनीभ्यां | नमः |
| ६ | उं टं ठं डं ढं णं ऊं | मध्यमाभ्यां | नमः |
| ६ | एं तं थं दं धं नं ऐं | अनामिकाभ्यां | नमः |
| ६ | ओं पं फं बं भं मं औं | कनिष्ठिकाभ्यां | नमः |
| ६ | अं यं रं लं वं शं षं हं ळं क्षं अः | करतलकरपृष्ठाभ्यां | नमः |

एवं हृदयादिन्यासः। भूर्भुवस्स्वरोम् इति दिग्बन्धः।।

## ध्यानम्

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षोदेशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणामब्जसंस्थामच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि।।

लमित्यादि पञ्चपूजां कृत्वा। मातृकाः त्रितारीबालापूर्विकाः स्वाङ्गेषु न्यसेत्। तद्यथा

## अन्तर्मातृका

६ अं नमः, आं नमः ++ अः नमः।।
कण्ठे विशुद्धिचक्रे षोडशदलकमले।।

६ कं नमः, खं नमः ++ ठं नमः।।
हृदये अनाहते द्वादशदलकमले।।

६ डं नमः, ढं नमः ++ फं नमः।।
नाभौ मणिपूरे दशदलकमले।।

६ बं नमः, भं नमः ++ लं नमः।।
लिङ्गमूले स्वाधिष्ठाने षड्दलकमले।।

६ वं नमः, शं नमः षं नमः सं नमः।।
गुदोपरि मूलाधारे चतुर्दलकमले।।

६ हं नमः, क्षं नमः।। भ्रुवोर्मध्ये आज्ञाचक्रे द्विदले।।

६ अं नमः, आं नमः ++ क्षं नमः।।
(५० वर्णाः) मूर्ध्नि सहस्रारे।।

## ॥ बहिर्मातृका ॥

ऐं ह्रीं श्रीं ऐं क्लीं सौः

अं नमः (शिरसि)
६ आं नमः (मुखवृत्ते)
६ इं नमः (दक्षनेत्रे)
६ ईं नमः (वामनेत्रे)
६ उं नमः (दक्षकर्णे)
६ ऊं नमः (वामकर्णे)
६ ऋं नमः (दक्षनासापुटे)
६ ॠं नमः (वामनासापुटे)
६ ऌं नमः (दक्षकपोले)
६ ॡं नमः (वामकपोले)
६ एं नमः (ऊर्ध्वोष्ठे)
६ ऐं नमः (अधरोष्ठे)
६ ओं नमः (ऊर्ध्वदन्तपंक्तौ)
६ औं नमः (अधोदन्तपंक्तौ)
६ अं नमः (जिह्वाग्रे)
६ अः नमः (कण्ठे)
६ कं नमः (दक्षबाहुमूले)
६ खं नमः (दक्षकूर्परे)
६ गं नमः (दक्षमणिबन्धे)
६ घं नमः (दक्षकराङ्गुलिमूले)
६ ङं नमः (दक्षकराङ्गुल्यग्रे)
६ चं नमः (वामबाहुमूले)
६ छं नमः (वामकूर्परे)
६ जं नमः (वाममणिबन्धे)
६ झं नमः (वामकराङ्गुलिमूले)
६ ञं नमः (वामकराङ्गुल्यग्रे)
६ टं नमः (दक्षोरुमूले)
६ ठं नमः (दक्षजानुनि)
६ डं नमः (दक्षगुल्फे)
६ ढं नमः (दक्षपादाङ्गुलिमूले)
६ णं नमः (दक्षपादाङ्गुल्यग्रे)
६ तं नमः (वामोरुमूले)
६ थं नमः (वामजानुनि)
६ दं नमः (वामगुल्फे)
६ धं नमः(वामपादाङ्गुलिमूले)
६ नं नमः (वामपादाङ्गुल्यग्रे)
६ पं नमः (दक्षपार्श्वे)
६ फं नमः (वामपार्श्वे)
६ बं नमः (पृष्ठे)
६ भं नमः (नाभौ)
६ मं नमः (जठरे)
६ यं नमः (हृदये)
६ रं नमः (दक्षकक्षे)
६ लं नमः (गलपृष्ठे)
६ वं नमः (वामकक्षे)
६ शं नमः (हृदयादिदक्षकराङ्गुल्यन्तं)
६ षं नमः (हृदयादिवामकराङ्गुल्यन्तं)
६ सं नमः (हृदयादिदक्षपादाङ्गुल्यन्तं)
६ हं नमः (हृदयादिवामपादाङ्गुल्यन्तं)
६ ळं नमः (कट्यादिपादाङ्गुल्यन्तं)
६ क्षं नमः (कट्यादिब्रह्मरन्ध्रान्तं)

## ॥ करशुद्धिन्यास:॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ऐं ह्रीं श्रीं | अं | नम: | (दक्षकरतले) | ३ | अं | नम: | (मध्यमयो:) |
| ३ | आं | नम: | (तत्पृष्ठे) | ३ | आं | नम: | (अनामिकयो:) |
| ३ | सौ: | नम: | (तत्पार्श्वयो:) | ३ | सौ: | नम: | (कनिष्ठिकयो:) |
| ३ | अं | नम: | (वामकरतले) | ३ | अं | नम: | (अङ्गुष्ठयो:) |
| ३ | आं | नम: | (तत्पृष्ठे) | ३ | आं | नम: | (तर्जन्यो:) |
| ३ | सौ: | नम: | (तत्पार्श्वयो:) | ३ | सौ: | नम: | (करतलकरपृष्ठयो:) |

## ॥ आत्मरक्षान्यास:॥

३ ऐंक्लींसौ: श्रीमहात्रिपुरसुन्दरि आत्मानं रक्ष रक्ष (इत्यञ्जलिं हृदये दद्यात्)॥

## ॥ बालाषडङ्गन्यास:॥

| | | | |
|---|---|---|---|
| ३ | ऐं हृदयाय नम: | ३ | ऐं कवचाय हुं |
| ३ | क्लीं शिरसे स्वाहा | ३ | क्लीं नेत्रत्रयाय वौषट् |
| ३ | सौ: शिखायै वषट् | ३ | सौ: अस्त्राय फट् |

## ॥ चतुरासनन्यास:॥

| | | | |
|---|---|---|---|
| ३ | ह्रीं क्लीं सौ: देव्यात्मासनाय | नम: | (पादयो:) |
| ३ | हैं ह्क्लीं ह्सौ: श्रीचक्रासनाय | नम: | (जान्वो:) |
| ३ | ह्सैं ह्स्क्लीं ह्स्सौ: सर्वमन्त्रासनाय | नम: | (ऊरुमूले) |
| ३ | ह्रीं क्लीं ब्लें साध्यसिद्धासनाय | नम: | (मूलाधारे) |

## ॥ वाग्देवतान्यास:॥

| | | | |
|---|---|---|---|
| ३ | अं आं + + अ: ब्लूँ वशिनीवाग्देवतायै | नम: | (शिरसि) |
| ३ | कं खं गं घं ङं क्ल्हीं कामेश्वरीवाग्देवतायै | नम: | (ललाटे) |
| ३ | चं छं जं झं ञं न्व्लीं मोदिनीवाग्देवतायै | नम: | (भ्रूमध्ये) |
| ३ | टं ठं डं ढं णं य्लूं विमलावाग्देवतायै | नम: | (कण्ठे) |
| ३ | तं थं दं धं नं ज्म्रीं अरुणावाग्देवतायै | नम: | (हृदये) |
| ३ | पं फं बं भं मं ह्स्ल्व्यूं जयिनीवाग्देवतायै | नम: | (नाभौ) |
| ३ | यं रं लं वं झ्म्र्यूं सर्वेश्वरीवाग्देवतायै | नम: | (गुह्ये) |
| ३ | शं षं सं हं ळं क्षं क्ष्म्रीं कौलिनीवाग्देवतायै | नम: | (मूलाधारे) |

## ॥ बहिश्चक्रन्यास:॥

३ अं आं सौ: चतुरस्त्रत्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै – अणिमाद्यष्टाविंशतिशक्तिसहितप्रकटयोगिनीरूपायै त्रिपुरादेव्यै नम: (पादयो:)

३ ऐं क्लीं सौ: षोडशदलपद्मात्मकसर्वाशापरिपूरकचक्राधिष्ठात्र्यै कामाकर्षि-

ण्यादिषोडशशक्तिसहितगुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः (जान्वोः)

३ ह्रीं क्लीं सौः अष्टदलपद्मात्मकसर्वसंक्षोभणचक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्टशक्तिसहित-गुप्ततरयोगिनीरूपायै त्रिपुरसुन्दरीदेव्यै नमः (ऊरुमूलयोः)

३ हैं ह्क्लीं ह्सौः चतुर्दशारात्मकसर्वसौभाग्यदायकचक्राधिष्ठात्र्यै सर्वसंक्षोभिण्यादिचतुर्दश-शक्तिसहितसम्प्रदाययोगिनीरूपायै त्रिपुरवासिनीदेव्यै नमः (नाभौ)

३ ह्सैं ह्स्क्लीं ह्स्सौः बहिर्दशारात्मकसर्वार्थसाधकचक्राधिष्ठात्र्यै सर्वसिद्धिप्रदादिदशशक्ति-सहितकुलोत्तीर्णयोगिनीरूपायै त्रिपुराश्रीदेव्यै नमः (हृदये)

३ ह्रीं क्लीं ब्लें अन्तर्दशारात्मकसर्वरक्षाकरचक्राधिष्ठात्र्यै सर्वज्ञादिदशशक्तिसहित-निगर्भयोगिनीरूपायै त्रिपुरमालिनीदेव्यै नमः (कण्ठे)

३. ह्रीं श्रीं सौः अष्टारात्मकसर्वरोगहरचक्राधिष्ठात्र्यै वशिन्याद्यष्टशक्तिसहित-रहस्ययोगिनीरूपायै त्रिपुरासिद्धादेव्यै नमः (मुखे)

३ ह्स्रैं ह्स्क्ल्रीं ह्स्रौः त्रिकोणात्मकसर्वसिद्धिप्रदचक्राधिष्ठात्र्यै कामेश्वर्यादित्रिशक्तिसहितातिरहस्ययोगिनीरूपायै त्रिपुराम्बादेव्यै नमः (नेत्रयोः)

३ (पञ्चदशी) बिन्द्वात्मकसर्वानन्दमयचक्राधिष्ठात्र्यै षडङ्गायुधदशशक्तिसहित-परापरातिरहस्ययोगिनीरूपायै महात्रिपुरसुन्दरीदेव्यै नमः (मूर्ध्नि)॥

॥ अन्तश्चक्रन्यासः॥

३ अं आं सौः चतुरस्रत्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशतिशक्ति-सहितप्रकटयोगिनीरूपायै त्रिपुरादेव्यै नमः (अधः सहस्रारे)

३ ऐं क्लीं सौः षोडशदलपद्मात्मकसर्वाशापरिपूरकचक्राधिष्ठात्र्यै कामाकर्षिण्यादिषोडश-शक्तिसहितगुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः (मूलाधारे)

३ ह्रीं क्लीं सौः अष्टदलपद्मात्मकसर्वसंक्षोभणचक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्टशक्तिसहित-गुप्ततरयोगिनीरूपायै त्रिपुरसुन्दरीदेव्यै नमः (स्वाधिष्ठाने)

३. हैं ह्क्लीं ह्सौः चतुर्दशारात्मकसर्वसौभाग्यदायकचक्राधिष्ठात्र्यै सर्वसंक्षोभिण्यादिचतुर्दश-शक्तिसहितसम्प्रदाययोगिनीरूपायै त्रिपुरवासिनीदेव्यै नमः (मणिपुरे)

३ ह्सैं ह्स्क्लीं ह्स्सौः बहिर्दशारात्मकसर्वार्थसाधकचक्राधिष्ठात्र्यै सर्वसिद्धिप्रदादिदश-शक्तिसहितकुलोत्तीर्णयोगिनीरूपायै त्रिपुराश्रीदेव्यै नमः (अनाहते)

३ ह्रीं क्लीं ब्लें अन्तर्दशारात्मकसर्वरक्षाकरचक्राधिष्ठात्र्यै सर्वज्ञादिदशशक्तिसहित-निगर्भयोगिनीरूपायै त्रिपुरमालिनीदेव्यै नमः (विशुद्धौ)

३ ह्रीं श्रीं सौः अष्टारात्मकसर्वरोगहरचक्राधिष्ठात्र्यै वशिन्याद्यष्टशक्तिसहित-

रहस्ययोगिनीरूपायै त्रिपुरासिद्धादेव्यै नमः (लम्बिकाग्रे)

३ ह्स्रैं ह्स्क्ल्रीं ह्स्रौः त्रिकोणात्मकसर्वसिद्धिप्रदचक्राधिष्ठात्र्यै कामेश्वर्यादित्रिशक्तिसहितातिरहस्ययोगिनीरूपायै त्रिपुराम्बादेव्यै नमः (आज्ञाचक्रे)

३ (पञ्चदशी) बिन्द्वात्मकसर्वानन्दमयचक्राधिष्ठात्र्यै षडङ्गायुधदशशक्तिसहितपरापरातिरहस्ययोगिनीरूपायै महात्रिपुरसुन्दरीदेव्यै नमः (सहस्रारे)

पुनः आज्ञाचक्रस्य एकैकाङ्गुलोपरि देशे

अं आं सौः नमः (बिन्दौ)
ऐं क्लीं सौः नमः (अर्धचन्द्रे)
ह्रीं क्लीं सौः नमः (रोधिन्यां)
हैं ह्क्लीं ह्सैः नमः (नादे)
ह्सैं ह्स्क्लीं ह्स्सौः नमः(नादान्ते)
ह्रीं क्लीं ब्लें नमः (शक्तौ)
ह्रीं श्रीं सौः नमः (व्यापिकायां)
ह्स्रैं ह्स्क्ल्रीं नमः (समनायां)
(पञ्चदशी) नमः (उन्मनायां)
(षोडशी) नमः (ब्रह्मरन्ध्रे महाबिन्दौ)

॥ कामेश्वर्यादिन्यासः॥

३ ऐं कएईलह्रीं अग्निचक्रे कामगिरिपीठे मित्रेशनाथ-नव-योनिचक्रात्मकात्मतत्वसृष्टिकृत्यजाग्रद्दशाधिष्ठायकेच्छाशक्ति-वाग्भवात्मक-वागीश्वरीस्वरूप-ब्रह्मात्मशक्तिश्रीपादुकां पूजयामि नमः(मूलाधारे)

३ क्लीं हसकहलह्रीं सूर्यचक्रे जालन्धरपीठे षष्ठीशनाथ-दशारद्वय-चतुर्दशारचक्रात्मक-विद्यातत्वस्थितिकृत्य-स्वप्नदशाधिष्ठायक-ज्ञानशक्ति-कामराजात्मक-कामकलास्वरूप-महावज्रेश्वरीविष्ण्वात्मशक्तिश्रीपादुकां पूजयामि नमः। (अनाहते)

३ सौः सकलह्रीं सोमचक्रे पूर्णगिरिपीठे उड्डीशनाथ-अष्टदल-षोडशदल-चतुरस्रचक्रात्मकशिवतत्त्व-संहारकृत्य-सुषुप्ति-दशाधिष्ठायक-क्रियाशक्ति-शक्तिबीजात्मक-परापरशक्ति-स्वरूपमहाभगमालिनीरुद्रात्मशक्तिश्रीपादुकां पूजयामि नमः। (आज्ञायां)

३ ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं परब्रह्मचक्रे महोड्याणपीठे चर्यानन्दनाथ समस्तचक्रात्मक-सपरिवार-परमतत्त्व-सृष्टिस्थिति-संहारकृत्य-तुरीयदशाधिष्ठायकेच्छा-ज्ञानक्रियाशान्ताशक्तिवाग्भवकामराजशक्तिबीजात्मक-परमशक्तिस्वरूप-श्रीमहात्रिपुरसुन्दरी-परब्रह्मात्मशक्तिश्रीपादुकां पूजयामि नमः। (ब्रह्मरन्ध्रे)

## मूलविद्यान्यासः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ऐं ह्रीं श्रीं | कं | नमः | (शिरसि) | ऐं ह्रीं श्रीं | हं | नमः | (मुखे) |
| ३ | एं | नमः | (मूलाधारे) | ३ | लं | नमः | (दक्षभुजे) |
| ३ | ईं | नमः | (हृदि) | ३ | ह्रीं | नमः | (वामभुजे) |
| ३ | लं | नमः | (दक्षनेत्रे) | ३ | सं | नमः | (पृष्ठे) |
| ३ | ह्रीं | नमः | (वामनेत्रे) | ३ | कं | नमः | (दक्षजानुनि) |
| ३ | हं | नमः | (भ्रूमध्ये) | ३ | लं | नमः | (वामजानुनि) |
| ३ | सं | नमः | (दक्षश्रोत्रे) | ३ | ह्रीं | नमः | (नाभौ) |
| ३ | कं | नमः | (वामश्रोत्रे) | | | | |

अथ ऋष्यादिषडङ्गन्यासं यथोपदेशं कुर्यात्॥

## षोडश्युपासकानां विशेषन्यासाः

### ॥ श्रीषोडशाक्षरीन्यासः॥

३ 'मूलं' नमः। दशमध्यमानामिकाभ्यां शिरसि न्यसेत्।
तत्र तां दीपाभां स्रवत्सुधारसां महासौभाग्यदां ध्यात्वा–

३ 'मूलं' नमः महासौभाग्यं मे देहि परसौभाग्यं दण्डयामि। (सौभाग्यदण्डिन्या मुद्रया वामकर्णसंवेष्टनपूर्वकं आमस्तकचरणं वामाङ्गे न्यसेत्)॥

३ 'मूलं' नमः मम शत्रून्निगृह्णामि। (रिपुजिह्वाग्रया मुद्रया वामपादाधो न्यसेत्)॥

३ 'मूलं' नमः त्रैलोक्यस्याहं कर्ता। (त्रिखण्डया मुद्रया फाले न्यसेत्)॥

३ 'मूलं' नमः। (त्रिखण्डया मुद्रया मुखवेष्टनत्वेन न्यसेत्)॥

३ 'मूलं' नमः। (त्रिखण्डया मुद्रया दक्षकर्णादिवामकर्णान्तं मुखवेष्टनत्वेन न्यसेत्)॥

३ 'ॐ मूलं' नमः। (त्रिखण्डया गलोर्ध्वमामस्तकं न्यसेत्)॥

३ 'ॐ मूलं' नमः। (त्रिखण्डया मुद्रया मस्तकात् पादपर्यन्तं पादादामस्तकञ्च न्यसेत्)॥

३ 'मूलं' नमः। (योनिमुद्रया मुखे न्यसेत्)॥

३ 'मूलं' नमः। (योनिमुद्रया ललाटे न्यसेत्)॥

### ॥ सम्मोहनन्यासः॥

३ 'मूलं'। मूलविद्यां स्मृत्वा तत्प्रभया जगदरुणं विभावयन् अनामिकां मूर्ध्नि त्रिः परिभ्राम्य–

३ 'मूलं'। (ब्रह्मरन्ध्रे अङ्गुष्ठानामिके न्यसेत्)

३ 'मूलं'। (मणिबन्धद्वये) ,,

३ 'मूलं'। (फाले) ,,

३ 'मूलं'। (शक्तितिलकं धारयेत्)॥

## श्रीमहाषोडशी–अक्षरन्यास –

### ।। संहारन्यासः।।

अथ त्रितारीनमस्सम्पुटितान् मूलविद्याषोडशार्णान् क्रमेण पादयोः जङ्घयोः जान्वोः कटिभागद्वये पृष्ठे लिङ्गे नाभौ पार्श्वयोः स्तनयोरंसयोः कर्णयोः मूर्ध्नि मुखे नेत्रयोः कर्णयुगलसन्निधौ कर्णवेष्टनयोश्च न्यसेत्। (अत्र कूटत्रयस्य वर्णत्रयत्वेन षोडशार्णत्वव्यपदेशः)। पादादिषु प्रथमं दक्षः ततो वाम इति बोध्यम्। यथा–

ॐ ऐं ह्रीं श्रीं, श्रीं नमः पादयोः, ह्रीं नमः जङ्घयोः, क्लीं नमः जान्वोः, ऐं नमः कटिभागद्वये, सौः नमः पृष्ठे, ॐ नमः लिङ्गे, ह्रीं नमः नाभौ, श्रीं नमः पार्श्वयोः, क ए ई ल ह्रीं नमः स्तनयोः, हसकहलह्रीं नमः अंसयोः, सकलह्रीं नमः कर्णयोः, सौः नमः मूर्ध्नि, ऐं नमः मुखे, क्लीं नमः नेत्रयोः, ह्रीं नमः कर्णयुगसन्निधौ, श्रीं नमः कर्णवेष्टनयोः।

### ।। सृष्टिन्यासः।।

पुनस्तथैव मूलविद्यार्णान् क्रमेण ब्रह्मरन्ध्रे भाले दृशोः कर्णयोः घ्राणपुटयोः गण्डयोः दन्तपंक्त्योः ऊर्ध्वाधरोष्ठयोः जिह्वायां चोरकूपे पृष्ठे सर्वाङ्गे हृदि स्तनयोरुदरे लिङ्गे च न्यस्य मूलेन व्यापकं कुर्यात्। यथा–

ॐ ऐं ह्रीं, श्रीं नमः ब्रह्मरन्ध्रे, ह्रीं नमः फाले, क्लीं नमः नेत्रयोः, ऐं नमः कर्णयोः, सौः नमः नासापुटयोः, ॐ नमः गण्डयोः, ह्रीं नमः दन्तपंक्तौ, श्रीं नमः ओष्ठयोः, क ए ई ल ह्रीं नमः जिह्वायाम्, हसकहलह्रीं नमः कण्ठे, सकलह्रीं नमः पृष्ठे, सौः नमः सर्वाङ्गे, ऐं नमः हृदि, क्लीं नमः स्तनयोः, ह्रीं नमः उदरे, श्रीं नमः लिङ्गे। व्यापकम्।

### ।। स्थितिन्यासः।।

अथ पूर्वक्रमेणैवाङ्गुष्ठादिकनिष्ठिकान्तकराङ्गुलिषु मूर्ध्नि मुखे हृदि आनाभेः पादद्वयावधि, कण्ठादानाभि मूर्ध्नि आकण्ठं पूर्ववत्पादाङ्गुलिषु च न्यसेत्। (अत्र दक्षवामकरचरणाङ्गुलिषु द्वयोर्द्वयोरेकैकमक्षरम्)। तथा हि–

ॐ ऐंह्रींश्रीं, श्रीं नमः अङ्गुष्ठयोः, ह्रीं नमः तर्जन्योः, क्लीं नमः मध्यमयोः, ऐं नमः अनामिकयोः, सौः नमः कनिष्ठिकयोः, ॐ नमः मूर्ध्नि, ह्रीं नमः मुखे, श्रीं नमः हृदिः, क ए ई ल ह्रीं नमः नाभौः, हसकहलह्रीं नमः कण्ठादिनाभ्यन्तम्, सकलह्रीं नमः मूर्धादिकण्ठान्तम्, सौः नमः पादाङ्गुष्ठयोः, ऐं नमः पादतर्जन्योः, क्लीं नमः पादमध्यमयोः, ह्रीं नमः पादानामिकयोः, श्रीं नमः पादकनिष्ठिकयोः।

एते पञ्चैव ज्ञानार्णवमते। तन्त्रान्तरेषु तु अन्येऽपि पञ्चोपलभ्यन्ते।

**एते पूर्वोक्तन्यासाः कर्तव्या एव, अन्येषामकरणे न प्रत्यवायः–करणे त्वभ्युदय एव।**

### ।। लघुषोढान्यासः।।

अस्य श्रीलघुषोढान्यासस्य दक्षिणामूर्तये ऋषये नमः, (शिरसि) गायत्र्यै छन्दसे नमः, (मुखे) गणेशग्रहनक्षत्रयोगिनीराशिपीठरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः (हृदये) श्रीविद्याङ्गत्वेन न्यासे विनियोगाय नमः (करसम्पुटे)।

ऐं ह्रीं श्रीं, अं कं खं गं घं ङं आं ऐं – अङ्गुष्ठाभ्यां नमः।

ऐं ह्रीं श्रीं, इं चं छं जं झं ञं ईं क्लीं – तर्जनीभ्यां नमः।

ऐं ह्रीं श्रीं, उं टं ठं डं ढं णं ऊं सौः — मध्यमाभ्यां नमः

ऐं ह्रीं श्रीं, एं तं थं दं धं नं ऐं ऐं — अनामिकाभ्यां नमः

ऐं ह्रीं श्रीं, ओं पं फं बं भं मं औं क्लीं — कनिष्ठिकाभ्यां नमः

ऐं ह्रीं श्रीं, अं यं रं लं वं शं षं सं हं ळं क्षं अः सौः करतलकरपृष्ठाभ्यां नमः।

एवमेव हृदयादिन्यासः। ध्यानम्—

उद्यत्सूर्यसहस्राभां पीनोन्नतपयोधराम्।
रक्तमाल्याम्बरालेपां रक्तभूषणभूषिताम्।।
पाशाङ्कुशधनुर्बाणभास्वत्पाणिचतुष्टयाम्।
लसन्नेत्रत्रयां स्वर्णमुकुटोद्भासिमस्तकाम्।।
गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम्।
देवीं पीठमयीं ध्यायेन्मातृकां सुन्दरीं पराम्।।

इति श्रीदेवीं समष्टिरूपेण ध्यात्वा गणेशादिव्यष्टिरूपेण च ध्यायेत्।

**।। गणेशन्यासः।।**

तरुणादित्यसङ्काशान् गजवक्त्रांस्त्रिलोचनान्।
पाशाङ्कुशवराभीतिकरान् शक्तिसमन्वितान्।।
ते तु सिन्दूरवर्णाभाः सर्वालङ्कारभूषिताः।
एकहस्तधृताम्भोजा इतरालिङ्गितप्रियाः।।

वामोर्ध्वकरमारभ्य वामाधःकरपर्यन्तं गणेशानां पाशादिध्यानम्। शक्तीनान्तु वामकरे कमलं दक्षिणे च प्रियाश्लेष इति ध्यात्वा, मातृकास्थानेषु त्रितारीमातृकापूर्वकं गणेशान् न्यसेत्। यथा—

ऐं ह्रीं श्रीं, अं श्रीयुक्ताय विघ्नेशाय नमः, शिरसि,
३ आं ह्रींयुक्ताय विघ्नराजाय नमः, मुखवृत्ते,
३ इं तुष्टियुक्ताय विनायकाय नमः, दक्षनेत्रे,
३ ईं शान्तियुक्ताय शिवोत्तमाय नमः, वामनेत्रे,
३ उं पुष्टियुक्ताय विघ्नहृते नमः, दक्षकर्णे,
३ ऊं सरस्वतीयुक्ताय विघ्नकर्त्रे नमः, वामकर्णे,
३ ॠं रतियुक्तायं विघ्नराजे नमः, दक्षनासापुटे,
३ ऌं कान्तियुक्ताय एकदन्ताय नमः, दक्षगण्डे,
३ ॡं कामिनीयुक्ताय द्विदन्ताय नमः, वामगण्डे,
३ एं मोहिनीयुक्ताय गजवक्त्राय नमः, ऊर्ध्वोष्ठे
३ ऐं जटायुक्ताय निरञ्जनाय नमः, अधरोष्ठे,

